परिमल संस्कृत ग्रन्थमाला संख्या—४

भरतमुनिप्रणीत

# नाट्यशास्त्रम्

श्रीमदभिनवगुप्ताचार्यविरचितया अभिनवभारती—
संस्कृतव्याख्यया समुद्भासितम्

चतुर्थो भागः
अध्यायाः २८—३७

प्रधानसम्पादक
डा० रविशङ्कर नागर
संस्कृत विभाग, दिल्ली विश्वविद्यालय

सम्पादक
कन्हैयालाल जोशी
एम० ए० वेदालंकार

परिमल पब्लिकेशन्स
दिल्ली—अहमदाबाद

Parimal Sanskrit Series No —

# NATYASASTRA

## OF

## BHARATAMUNI

WITH THE COMMENTARY ABHINAVABHARATI

*By*

ABHINAVAGUPTACHARYA

VOL IV.

CHAPTERS 28—37

*General Editor*

**Dr R S NAGAR**

*Edited by*

K. L JOSHI

M A Vedalankar


**Parimal Publications**

DELHI—AHMEDABAD

# विषय सूची

## अष्टाविंशोऽध्याय


| विषय | श्लोक संख्या | पृष्ठ |
|---|---|---|
| जतिविकल्पनम् | १-१४१ | १-६४ |
| चतुर्विधमातोद्य सलक्षणम | १ | १ |
| तस्य त्रिविध प्रयोग | ३ | ३ |
| ततावनद्धनाट्यविधिषु कुतपविन्यास | ५-६ | ३ |
| गान्धर्वस्य लक्षण योनिस्त्रैविध्य च | ८-२० | ५ |
| स्वरा | १९ | १० |
| मूर्च्छना | २७-३६ | १९ |
| जातय | ३७-१४१ | ३३ |


## एकोनत्रिंशोऽध्याय


| विषय | श्लोक संख्या | पृष्ठ |
|---|---|---|
| ततातोद्यविधानम् | १-११२ | ६५-१२१ |
| रससश्रया जातय | १-१३ | ६७ |
| वर्णालङ्कारलक्षणम् | १४-४३ | ७७ |
| गीतय सलक्षण | ४४-४९ | ९० |
| धातवश्चत्वार | ५०-७० | ९२ |
| तिस्रो वृत्तय | ७१-७५ | ९८ |
| वाद्यविधेस्त्रैविध्यम | ७६ | १०० |
| निर्गीतविधानम् | ७९ | १०१ |
| आश्रावणा | ८० | १०२ |
| आरम्भ | ९० | १०६ |
| वक्त्रपाणि | ९६ | १०९ |
| सङ्घोटना | १०२ | १११ |
| परिघट्टना | १०६ | ११२ |
| विपञ्चीवाद्ययुक्तानि | ११२ | ११६ |
| एकोनत्रिंशोऽध्यायो भिन्नपाठक्रम | १-१४७ | १२२ |

त्रिंशोऽध्याय

| | श्लोक संख्या |
|---|---|
| सुषिरातोद्यलक्षणम् | १-१२ |
| सुषिरे वेणो विधिः | १० |
| वंशगताः स्वराः | २-१२ |

एकत्रिंशोऽध्याय.

| | |
|---|---|
| तालाध्यायः | |
| कला | १ |
| लयस्तद्भेदाश्च | ५ |
| तालो द्विविधः | ७ |
| चच्चत्पुट: | ८ |
| चाचपुटः | ९ |
| पञ्चपाणिः | १७ |
| सम्पक्वेष्टक | २१ |
| उद्घट्टः | २२ |
| तालप्रकारा | २६ |
| हस्ताङ्गुलिविन्यसनम् | ३२ |
| आसारितविधिः | ५५ |
| वर्धमानविधि | ६९ |
| उपोहनानि | १३२ |
| कण्डिकाना प्रयोगः | १४२ |
| गीताङ्गानि | १६० |
| लास्यस्य लक्षण प्रयोगश्च | ३३१ |
| ध्रुवाध्यायः | |
| ध्रुवालक्षणम् | १ |
| ध्रुवाणा पञ्च भेदा | ६ |
| ध्रुवाजातयः | ३५ |
| श्री. | ४७ |

| | | |
|---|---|---|
| | ०६ | ३०४ |
| विद्युत् | ५१ | ३०४ |
| धृति | ५३ | ३०४ |
| त्रियामा | ५७ | ३०४ |
| प्रतिष्ठा | ५८ | ३०५ |
| सुप्रतिष्ठा | ५९ | ३०५ |
| मत्तालि | ६१ | ३०५ |
| जया | ६३ | ३०५ |
| विजया | ६५ | ३०५ |
| विस्मया | ६७ | ६ |
| भूतलतन्वी | ६९ | ३०६ |
| पद्मिनी | ७१ | ३०६ |
| वागुरा | ७३ | ३०६ |
| शिखा | ७५ | ३०६ |
| घनपङ्क्तिका | ७८ | ३०७ |
| तनुमध्या | ८० | ३०७ |
| मालिनी | ८२ | ३०७ |
| मकरवशीर्षा | ८४ | ३०७ |
| विमला | ८६ | ३०७ |
| वीथिका | ८८ | ३०७ |
| गिरा | ९० | ३०८ |
| जसा | ९२ | ३०८ |
| सुनन्दा | ९४ | ३०८ |
| विद्योतिका | ९६ | ३०८ |
| नलिनी | ९७ | ३०९ |
| पङ्क्ति | ९८ | ३०९ |
| नीला | १०१ | ३०९ |
| द्रुतगति | १०३ | ३०९ |
| तनु | १०६ | ३१० |
| शिखा | | |

| | |
|---|---|
| षट्पदिका | १०८ |
| भोगवती | ११० |
| मधुकरिका | ११२ |
| मनोज्ञा | ११४ |
| मत्ता | ११६ |
| कुसुमवती | ११७ |
| मुदिता | ११८ |
| मनोज्ञा | १२० |
| प्रकाशिनी | १२० |
| विलम्बिता | १२२ |
| दीप्ता | १२४ |
| चञ्चलगतिः | १२६ |
| विमलजला | १२९ |
| ललिता | १३१ |
| मही | १३३ |
| मधुकरिका | १३५ |
| नलिनी | १३७ |
| नदी | १३९ |
| रुचिरा | १४२ |
| प्रमिता | १४४ |
| विशोका | १४६ |
| विश्लोका | १४८ |
| ललितम् | १५० |
| मनोवती | १५२ |
| विक्रान्ता | १६१ |
| मदनवती | १६३ |
| विमलगति | १६५ |
| तन्वी | १६५ |
| कुसुमवती | १६७ |

| | | |
|---|---|---|
| सुकुमारा | १६७ | ३२१ |
| माला | १६९ | ३२१ |
| स्खलितविक्रमा | १७२ | ३२२ |
| चपला | १७४ | ३२२ |
| मुखचपला | १७६ | ३२३ |
| कनकलता | १८२ | ३२५ |
| आक्षिप्तिका | १८२ | ३२५ |
| शशिलेखा | १८४ | ३२६ |
| अविचलिता | १८६ | ३२६ |
| मणिकृत् | १८८ | ३२६ |
| सिंहकान्ता | १९० | ३२६ |
| सुरदयिता | १९३ | ३२७ |
| कुमुदिनी | १९५ | ३२७ |
| दोधकम् | १९७ | ३२७ |
| कृतोद्धता | १९४ | ३२७ |
| पङ्क्ति | २०१ | ३२८ |
| विपुलभुजा | २०३ | ३२८ |
| चपलगति | २०६ | ३२८ |
| कमलदलाक्षी | २०८ | ३२९ |
| द्रुतपादगति | २१० | ३२९ |
| मुखचपला | २११ | ३२९ |
| विमला | २१२ | ३२९ |
| रुचिरा | २१४ | ३३० |
| अपरवक्त्रम् | २१६ | ३३० |
| कमललोचना | २१८ | ३३० |
| अतिचपला | २२० | ३३१ |
| मदकलिता | २२२ | ३३१ |
| प्रतिष्ठा | २२५ | ३३२ |
| सुप्रतिष्ठा | २२७ | ३३३ |

| | |
|---|---|
| गायत्री | २२८ |
| उष्णिक् | २२९ |
| अनुष्टुप् | २३१ |
| बृहती | २३२ |
| पङ्क्ति | २३३ |
| त्रिष्टुप् | २३४ |
| जगती | २३८ |
| श्येनी | २४५ |
| चपला | २४७ |
| क्रौञ्चम् | २४९ |
| पुष्पसमृद्धा | २६१ |
| सम्भ्रान्ता | २६३ |
| स्खलितम् | २६६ |
| मत्ताक्रीडा | २६८ |
| वेगवती | २७० |
| रथोत्तरम् | २७५ |
| बुद्बुदकम् | २७७ |
| उद्गतम् | २८० |
| वशापत्रपतितम् | २८२ |
| प्रमिताक्षरा | २८४ |
| ध्वजिनी | २८६ |
| हसास्यम् | २८८ |
| तोटकम् | २८८ |
| हसास्यम् | २९० |
| प्रमोदवम् | २९५ |
| भाविनी | २९७ |
| मत्तवेष्टितम् | २९९ |
| गान पञ्चविधम् | ३१० |

| | | |
|---|---|---|
| ध्रुवाप्रयोग. | ४०३ | ३७६ |
| भाण्डग्रहविकल्पनम् | ४१४ | ३८७ |

त्रयस्त्रिंशोऽध्याय

| | | |
|---|---|---|
| गुणदोषविचार. | १-२३ | ३८९-३९४ |
| गातृवादकयोर्गुणदोषविचारः | १-२३ | ३८९ |

चतुस्त्रिंशोऽध्याय

| | | |
|---|---|---|
| पुष्कराध्यायः | १-३०४ | ३९५-४५० |
| अवनद्धवाद्योत्पत्ति. | १ | ३९५ |
| अवनद्धभेदाः | २४ | ४०० |
| त्रिपुष्करविधिः | २७ | ४०० |
| मार्गास्वचाराः | ४८ | ४०१ |
| पुष्कराणां त्रिविधः प्रचार | ६१ | ४१२ |
| करणजातलक्षणम् | १०५ | ४१९ |
| अष्टादश जातय | १५४ | ४२७ |
| वाद्यसंश्रयाः प्रकारा. | १९० | ४३३ |
| तेषां प्रयोगः | २१६ | ४३७ |
| अन्तरवाद्यानि | २४६ | ४४३ |
| आतोद्यलक्षण | २५३ | ४४४ |
| चर्मलक्षणम् | २६२ | ४४५ |
| वादकगुणा. | ३०३ | ४५० |
| चतुस्त्रिंशोऽध्यायो भिन्नपाठक्रमः | ४५१ | ४५१-४७४ |

पञ्चत्रिंशोऽध्याय

| | | |
|---|---|---|
| भूमिकाविकल्प | १-४१ | ४७५-४८० |
| भूमिकाविन्यासः | १ | ४९४ |
| भरतानां विकल्पनम् | २२ | ४७८ |


———

षट्त्रिंशोऽध्याय

| | श्लोक संख्या |
|---|---|
| नाट्यशाप | १-५० |
| मुनीना प्रश्न | १ |
| पूर्वरेङ्गविधानकथा | १२ |
| मुनीना शाप. | ३५ |

सप्तत्रिंशोऽध्याय

| | |
|---|---|
| गुह्यतत्त्वकथनम् | १-३१ |
| नाट्यावतार | ४ |
| नाट्यशास्त्रमाहात्म्य | २५ |

———

श्रीरस्तु ।

भरतमुनिप्रणीतं

# नाट्यशास्त्रम्

अष्टाविंशोऽध्यायः

आतोद्यविधिर्नामाध्यायः ।

ततं चैवावनद्धं च घनं सुषिरमेव च ।
चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् ॥ १ ॥

---

अभिनवभारती—अष्टाविंशोऽध्यायः ।

॥ अतः परं गेयाधिकारः ॥

मध्यमस्वरमुशन्ति षड्जषान्नादषट्कमुदितं श्रुतिक्रमात् ।
सोऽपि यद्विलसितं कलात्मकं तं नमामि शिशिरांशुमण्डनम् ।

आतोद्यानां विकल्पनमित्युक्तं पूर्वाध्यायसमाप्तौ, तेन सङ्गतिं कर्तुं षष्ठाध्यायपठितमपि श्लोकं पुनः पठति—ततं चैवेत्यादि । ननूद्देशे (६-१०) "सिद्धिः स्वरास्तथातोद्यं गानं रङ्गश्च संग्रहः" इत्युक्तम् । ततश्च (ततांशो) नटानां रागादिविशेषरूपतया आङ्गममानानां तन्मयीभावप्रत्यूहभूताशयनिवारणाय 'नाथो वन विशति' इत्यादिना, तालांशोऽपि प्रयोगं सूत्रकल्पतया समीकुर्वन् स्वरं लयं च स्वप्रेक्षकहृदयं तत्रैवानुस्यूतं तिरोधत्सामर्थ्यं च रागनिबन्धनं विदधदस्य प्रति परममङ्गलम् । तत्र स्वरांशे ततसुषिरयोरुपयोगः । तौ हि स्वरस्य परमार्थं रक्तिलक्षणं वितरतः । गातृणां हि वातशारुष्यादिदोषशतोपहतानां स्वरस्तन्त्रीवेणुस्वरेण सुस्वरतां नीयते, स्वभावत एव तन्माधुर्यात् । वाङ्माधुर्यं यावद्दीन तदाहार्यं मधुरं माधुर्यं मभ्यासाद्याहरेयुः । तदनुबद्धत्वात्स्वरस्य न न्यूनाधिकभावाशङ्का काचित्, तत्र मूर्च्छिताया वीणायामशिक्षितेनाप्यभिहन्यमानेन स्वरस्योपलम्भः । नत्वेवं वंश इति ततातोद्यस्यैव प्राधान्यम् । अत एव वीणा शारीरिकी चैवाचार्यैर्निर्दिष्टा "दारवी गात्रवीणा च" इति । तथा च प्रतिबिम्बं वीणेति व्यवहारः इहापि पूर्वं वैणा एव स्वरा उद्दिश्यन्ते द्व्यधिष्ठानाः स्वरा वैणाः शारीराश्चेति । गान्धर्वेऽपि (हि ?) प्रयोक्तृ फलमिति

ततं तन्त्रीकृतं ज्ञेयमवनद्धं तु पौष्करम्।
घनं तालस्तु विज्ञेयः सुषिरो वंश उच्यते[1] ॥२॥

---

तदनुसारेण शारीरप्राधान्यं फले दर्शितम्, गाने तु श्रोतृफलरक्तिप्रधानतेति गानस्य (गान्धर्वं) उपकरणीकृतो मुनिना। तालभागे तु घनावनद्धयोर्निवेशपदार्थे ध्रुवाध्याय-स्योपयोगः। न चैतद्गान्धर्वसाराभिष्यन्दत्वमनेन निमितम्। सामभ्यो गीतमिति हि पारम्पर्येण सामवेदोद्भूतं न ब्रह्मणीतप्रभवत्वाद्गीतस्य साधकरणत्वमुक्तम्। तेन प्रथमं जात्यादिलक्षणं निरूपितम्। अतस्ततातोद्यस्यैव प्रथममभिधानं, स्वराणा-मिति तत्रैव स्वरलाभ इत्युक्तम्। तेषां तु पृथगुद्देशे प्रयोजनमन्तरायोपसंग्रहो नाम काव्याध्याय एवा पूर्वमुदितानामेव। किं च।

..तूरमित्यातोद्यस्यैव स्वरूपं वाद्यमिति न कदाचिदसंगतिः लक्षणान्वितमिति तदन्यस्य निरामाद्यनुचितस्यापि वाद्यान्तरस्य तस्माल्लक्षणं न कृतमित्याह। यस्मादिदमेव विज्ञेयं—एतन्मध्य एव सर्वमन्तर्भवति, तदेतद्ध्रस्व किंचिद्याति, किंचित्पुनरन्यस्मिन् सति तदुपयोगि। तथाहि पटादिपुष्करवाद्यस्यैवाङ्गादन्यत्र डोम्बीभ्राटुकादीनां नास्ति। अन्यन्नाट्योपयोगि मार्जनामार्गानुयात स्वरवर्णसंबोधे-नात्यन्तव्यञ्जकत्वायोगात्झल्लरीपट्टफलकवाद्यादपे... ......यमाज्यमय सर्वं हि चतुर्विधस्यैवैवोक्तस्य किंचिदंशमनुसरेदेतत्प्रकृत्येभ्यो वेति मन्तव्यम् ॥१॥

चातुर्विध्यं पूर्वोक्तमेव स्मारयति ततं तन्त्रीकृतमित्यादि। तन्त्रीणां (कृतं ततम्) चर्मनद्धत्वादवनद्धम्। मूर्तिकाठिन्येन घनं तदनुसारेण रसभावोपयोगि विशिष्टवर्णद्वारेण च नोपयुज्यत इति साम्यमात्रोपयोगित्वात्ताल इत्युक्तम्। घनं सुषिरमिति पाठे चातोद्यापेक्षं नपुंसकं, विशेषापेक्षया तल्लिङ्गेन केचित्पठन्ति।

सुषिरस्य स्वरात्मकत्वेऽपि तदनन्तरं तस्यानभिधानमिति चेन्न, वीणाया एव स्वरभागे प्राधान्यं तु चातुर्विध्येन शुष्कप्रकृतिकत्वाच्चावनद्धस्य तन्मानोपकारित्वाच्च घनस्य, वीणेव सुषिरस्य तत्र एवानुप्रवेशः। ततस्तु वंशः तत्र चतुर्विधातोद्यमुपरञ्ज-कम्। उपरञ्जनीयाश्चाभिनयः इति तयोरेकसन्निवेशात्मकः समूहः कर्तव्यः। तत्र चतुर्विधमप्यातोद्यं स्वरतालप्राधान्याद्द्विविधं कृतं ततमवनद्धं चेति सुषिरघनयोः क्रमेण तदङ्गत्वात्। अभिनयेन च पात्रवर्गः प्राक्षिप्त इति त्रय समूहाः कुतपशब्द-वाच्याः। कुतं शब्दं पाति, कुं च रङ्गं तपत्युज्ज्वलयति (वा) ॥२॥

तदेतदाह प्रयोगस्त्रिविधो ह्येषामिति। एषां चतुर्णामातोद्यानां नाटकाश्रयो नाटकगतपात्रवर्गसहितस्त्रिप्रकारः प्रकर्षेण योगः समूहीभावः, यत्र स्वर्वे द्वौ समूहौ नाट्योपयोगी पात्रवर्गात्मा च तृतीयः। तदाह—नाट्यकृतोऽपर इति। यद्यपि ततनाव-

---

१. NS गव च।

प्रयोगस्त्रिविधो ह्येषां विज्ञेयो नाटकाश्रयः ।
ततं चैवावनद्धं च तथा नाट्यकृतोऽपरः[1] ॥३॥

[2]ततः कुतपविन्यासो गायनः सपरिग्रहः ।
वैपञ्चिको वैणिकश्च वंशवादस्तथैव च[3] ॥४॥

मार्दङ्गिकः पाणविकस्तथा दार्दुरिकोऽपरः[4] ।
अवनद्धविधावेष कुतपः समुदाहृतः ॥५॥

उत्तमाधममध्याभिस्तथा प्रकृतिभिर्युतः ।
कुतपो नाट्ययोगे तु नानादेशसमाश्रयः[5] ॥६॥

---

हननसौषिर्यनिबद्धत्वेन सकोणत्वादि । तथाप्येकोपयोगकृताव्यपदेशः । तननेन हि स्वरप्राधान्यं, तच्च न पुष्करादवहननेन वर्णानुस्वारः सम(न)न्तरत्यादौ । एवमन्यत्रापि वाच्यम् । तत्र तताभिधानं कुतपं कियता समूह इत्याह—ततः कुतपविन्यास इत्यादि । परिग्रहो गायकस्य (भार्या) । तद्यथा गायकः कांस्यतालिकाहस्ताद्विपञ्ची सपूर्णतन्त्रीका कोणवादनीया वीणात्वेकविंशतितन्त्रीका । चकारादभ्यासो वीणानां सग्रहः ।

तथैव चेति सपरसुषिरपरिग्रहः । अथावनद्धराशिमाह—मार्दङ्गिक इत्यादि मृदङ्गानीति पुष्कराणि पणवोऽल्पतन्त्रीको हुडुक्काकारः । दर्दुरो महाघटाकारः । तथैव चेति वचनात्मर्दलकरटादिसंग्रहः । कांस्यतालिकास्तु गीतवाद्यो साम्यापादनार्था, तत्कुतप एव युक्ता ॥ ३-५ ॥

अथ नाट्यकुतपमाह—उत्तमाधममध्याभिरिति । उत्तमादिप्रयोक्तव्योचितपात्रसमूह इत्यर्थः । पूर्वयोर्विशेषः ततावनद्धयोः कुतपयोर्नियतदेशता पुष्कराध्याये वक्ष्यते नाट्यकुतपस्य तु प्रयोगे माभूदव्यवस्था (दव्य) बहिरिति सन्निविमानमुपयोगि न तु देशनियमः । तदाह नानादेशेति प्रत्युपयोगोऽनेन कथित इत्यपरे ॥ ६ ॥

नन्वेते त्रयः समूहाः किं परस्परमनपेक्षा एव, नेत्याह—एवं गानं च वाद्यं चेति । त्रयोऽप्येते समूहा एकीभावं नेया इति यावत् न पुनरेको गायको मार्दङ्गिक उत्तमपात्रमित्यादिना पृथगेव दर्शिता ।

---

१ KSS, NS कृतश्च य ।
२ KSS, NS तते ।
३ KSS, वंशवादक एव च ।
४ KSS, NS दार्दुरिको बुधैः ।
५ GOS समुद्भव ।

एवं [1]गानं च वाद्यं च नाट्यं च विविधाश्रयम् ।
अलातचक्रप्रतिमं कर्तव्यं नाट्ययोक्तृभिः ॥७॥

ननु गानादीन्याशङ्कयाह विविधा आश्रया यस्येति । नहि प्रयोक्त्रनपेक्षितत्व गानादीना वदति । उक्तं च......यत्नमिति सपादमिति यावत् । तस्मादत्र यत्न इत्येतदेवाह् । यस्माद्द्विविधाश्रय भिन्नेन्द्रियग्राह्यत्रिविधक्रियारूप, तस्माद्यत्नेनास्यैकता तत्सपाद्या, येनैकबुद्धिविषयता सामाजिकस्य गच्छेत् । अलाततेज कणो हि न वस्तुतो युगपदनेकदेशसम्बन्धी, लाघवयत्नेन तु तथात्वा साम्यमापादितम् । एव प्रयोगोऽपि तथापि नैकक्रियात्मा साम्यापादनाय.. ...
त्नेन तु तथा सम्पादित इत्येतदाह—अलातचक्रप्रतिममिति ।

ननु सामान्याभिनयेऽध्याये एतदुक्त, सत्य, तत्त्वभिनयविषय, इद तु गीतवाद्य-नाट्यानां परस्परस्य विषयम् । ननु कस्मात्त्रयो राशय कृता इत्याशङ्कमानेन नैवाप-सारमति एव गानं चेति नाट्य तावदुपरञ्जनीयम् । सामान्याभिनयेऽभिनयबलादेकत्व गीत एको राशिरिति । नात्र विवाद । स्वरगतिराशिश्चान्योन्यसमिलितोऽलात-चक्रवत्काय । विविधाश्रयोऽपि कोणावशाग्रगतोऽपि वाद्यविधिरेकीभाव नेय इति त्रयाणामप्यथ ग्रासीकरणमिति युक्तम् ।

नन्वेव राशित्रयेऽस्मिन्नेकीभूते प्रयोगसम्यक्त्वापतितलक्षणासिद्धिर्भवति, तथा च गीतवाद्यदोषा अपि सिद्धिविघातका उक्ता । ततश्च सिद्धिस्वरूप गेयाधिकारस्य पश्चाद्वक्तव्यम् । अत एव हि गीतवाद्यनाट्यकृतासिद्धिरित्युक्तेति किं प्रधान किमङ्गमिति मार्गे सज्ञायते । पूर्वमेव तु सिद्धिनिरूपणे एतावता प्रयोगत्वमिति परिमातम् । नस्योपरञ्जनीयतोक्ता भवति, मध्यावस्थितेन च सिद्धिनिरूपणे साकाङ्क्षवदुपरञ्जकवर्गोऽपि स्पष्ट एव भवति ।

अन्ये तु मन्यन्ते—गीतातोद्यविहीनादपि प्रयोगात्पठ्यमानादपि दशरूपकाद् भवति सिद्धिरित्यनेन सूचितमिति । तत्तु न सम्यगिव, तावती ह्यपरिपूर्णता नाट्यस्य, परिपूर्णं च सर्वानुग्राहि नाट्यस्वरूपमभिधित्सित मुने । तत्र च गीतवाद्ययोरेव प्राधान्यमित्यवोचाम ।

किं चैवं सति सिद्ध्यध्याये गीतवाद्यवैषम्यादि किमर्थमुच्यते, प्राक्तन एव समाधानमार्गो युक्त । उपरञ्जकोपकृतस्य नाट्यस्य नाट्यतेति भेद्यत्वात्तत्पश्चादु-क्तम् । गान त्वादौ तत्क्षेपभूत तु मध्ये वाद्यमिति क्रम नाट्यानुसारेण त्र्यश्रचतुर-श्रविनिर्णय, अपि तु गानानुसारेणेति गानमुपरञ्जकमपि सन्नाट्य व्यवस्थापयदेवो-

१. KSS , NS गीत ।

यत्तु तन्त्रीकृतं प्रोक्तं नानातोद्यसमाश्रयम्।
गान्धर्वमिति तज्ज्ञेयं स्वरतालपदात्मकम्[1] ॥८॥

---

परञ्जयतीति युक्त एष एव रञ्ज इति टीकाकार.। तदेतन्न विद्मः। नहि नाट्यमनाश्रित्य किंचिदपि प्रवर्तते। गानस्यापि नाट्यानुसारेणोपयोगादिति गत्यध्यायदिशैव स्पष्टादिव्यवस्था भेदादित्यास्ताम् ॥७॥

तत्र ततातोद्यस्वरूप प्रधानवदभिधातु पीठबन्ध करोति यत्तु तन्त्रीकृत प्रोक्तमिति। विपञ्ची वीणादिभेदाना नातोद्यतेति टीकाकार। तदयुक्तम। सामान्येन तन्त्रीकृतत्वेन सर्वसग्रहे तदनुक्तसमस्तवाद्यस्यार्थस्य तस्मादेवमित्यस्मत्सम्प्रदाय। नानातोद्यनिरूपणसमाश्रय यस्य, तानि हि तद्गत रूपमुपकारतया श्राश्रयन्ते, तेन तदेव प्रधान तन्त्रगान्धर्वमिति। गान्धर्वो मितिर्मान वर्तनमन्तर्भावो यस्य गान्धर्वे तदन्तर्लीनमिति यावत्। क्रम इत्याह स्वरतालपदलक्षण हि तद्गान्धर्वम्, एव भूतक्रममेव स्वराद्यात्मम्। एव ततमध्य एव गायको गणित सपरिग्रह। इह चैतदर्थमेव तन्त्रीकृतमित्युक्त तन्त्रीप्रधानमित्यर्थ। गान्धर्वशास्त्र च प्रमाणमस्येति गान्धर्वमिति ॥८॥

सामभ्यो गीतमिति कथित सामानि चात्र कारणाकारणानि। गान्धर्व हि सामभ्यस्तस्माद्भूतं गान न तुल्ये स्वराद्यात्मकत्वे गान गान्धर्वेऽन्तर्भूतमिति का भाषा। विपर्ययोऽपि कस्मान्न भवति, तादात्म्यमेव वा कथ न स्यादित्याशङ्का शमयितुमाह अत्यर्थमिष्टं देवानामिति। अनेनादित्व सूचितम्। देवा हि कथमिष्ट विजह्यु। तथेति तेन देवतापरितोषद्वारेण प्रीति ददातीत्यदृष्टफलत्व दर्शितम्।

यस्मात् यद्रूपान्च देवानामीश्वराणामिन्द्रियमनस्तवेदनप्रभृतीना, श्रातोद्यमानत्वेन व्यवहारेण गन्धतानेनेति देवताना, अत्यर्थमर्यातिक्रमेण वा ब्राह्मणादिविषयोल्लंघनेन... ..मिष्टमिच्छायजनं च परतविस्मयतिलाभलक्षणमुपलक्षणम्, तथा तेन प्रकारेण प्रतीतेरपवर्गोचितानन्दस्वभावविशेषेणार्जितमित्यपवर्गफलत्व दर्शितम्। तथातिक्रान्तं धनादिनिरपेक्ष चेद देवाना यजन यथा पुराणयोगादिभ्योऽधिका प्रीतिर्गन्धर्वाभ्युदकरस्येति। गन्धर्वाणामिति प्रयोक्तृपलक्षण, तेन ह्यस्यन्त सवित्प्रवेशलाभेन तु गातृ फलयोगो गन्धत्वात्। तदाह—

"सकृत्प्रयुक्तापि हि नन्दयन्ती यथाविधि ब्राह्मण पुनाति" प्रयोक्तृगतमत्र मुख्य फलम्।

ननु गान इव मुख्यतया श्रोतृनिष्ठ तेन गन्धर्वाणां प्रीतिवर्धनमिति सम्बन्धः। तथापि च श्रूयमाणे प्रीतिवर्धनमित्येवमनादित्वाद्दृष्टादृष्टफलत्वाच्च प्रधान गान्धर्व

---

१. KSS, NS पदाश्रयम्।

अत्यर्थमिष्टं देवानां तथा प्रीतिकरं पुनः ।
गन्धर्वाणां च यस्माद्धि तस्माद्गान्धर्वमुच्यते ॥९॥

अस्य योनिर्भवेद्गानं वीणा वंशस्तथैव च ।
एतेषां चैव वक्ष्यामि विधिं स्वरसमुत्थितम् ॥१०॥

---

गन्धर्वाणां प्रयोज्यमिति व्युत्पत्त्या, एवं देवानामिष्टं प्रीतिकृद्गन्धर्वाणां गान्धर्वमिति सम्बन्ध । तस्माच्च प्रीतिमेव विशेषेण वर्धयति यत्तद्गानमित्यध्याहारः । गानं हि केवलं प्रीतिकार्ये वर्तते । तेन तादात्म्यं तावदयुक्तम् । नवमहाफलस्थानादेः स्वतः फले कल्पिते तदनर्थमिति इति विपर्ययोऽपि निरस्तः । स चायं गान्धर्वविवेको प्रुवाध्याये नृत्तेऽस्माभिदर्शयिष्यते । इह इव तु दर्शितो यावोयुक्त्यनभिज्ञानमणुनैव हि समोहे हेतुः स्यादिति ।

अत्यर्थमिष्टं देवानामित्यनेन का वाचं धारयतीति गान्धर्वं, गन्धर्वाणामिदमिति च । यथाहु विशाखिलाचार्यः—"पुरा स्वर्गं प्रनष्टा (वाच) देवेभ्य" इति तन्निदर्शनेनैव दर्शितम् । प्रीतिवर्धनमिति च नारदीयनिर्वचनं सूचितम् । 'गेति गेयं विदुः धेति धातु प्रवादकमिति, धावयस्य तस्येति, रेफस्तु वाद्यस्योपलक्षणं काकुप्रवादनमिति वा' तदेव निर्वाचनात्पर्यायेण श्लोक इति टीकाकारः । अत्र तु न करोतु व्याख्यात एव । तस्माद्वाध्यायैरित्युक्तम्—नन्विदं गान्धर्वं कुत उद्भूतं गानस्य च सामहेतुकत्वात्कथं पूर्वमुक्तम् । किं च गानस्यैवोपयोगाल्लक्षणं वक्तव्यं न तु गान्धर्वस्येति शङ्कां शमयितुमाह—अस्य योनिर्भवेद्गानमित्यादि । अस्य गान्धर्वस्य । गानमिति सामयोनिगीतिषु समाख्या । वीणेति महाव्रतोपयोगिनी औदुम्बरी, वंश इति नारदादिगुरुसनानानुयायीति गान्धर्वस्य प्रभवः । किं च, गानवीणावंशादयोऽस्य तत्कृतप्रभेदो वचनव्यवस्थेनोपक्रान्तः स एवास्य गान्धर्वस्य योनिर्हेतुः, इहाभिधास्यमानस्य इति शेषः । तत्कृतपोपयोगित्वादिह गान्धर्वमभिधास्यत इति यावत् । ब्रह्मगीते लोकप्रवाहसिद्धं प्रगीतं गातृगेयमेव प्रसूतिहेतुरिति श्लोकार्थस्य तात्पर्यमित्यन्ये । टीकाकृत्तु गानं प्रधानं तदुपकारको वीणावंशाविति । गुणप्रधानतानिर्णयोऽस्य तात्पर्यं व्याख्यानादयन्तरं गायत्रीमत्र गायन्तीत्येतत्समर्थने तु यो महान् संरम्भः टीकाकारेण कृतः स प्रकृतोपयोगवैकल्यादनेकार्थत्वेन गायते उपचाराश्रयेण सुसमर्थत्वात्सिकताचर्वणप्रायः । रथन्तरमिति यदि यदा निरूपाणि तदा स्वरसनिवेशेन.. .. नयतीत्ययमर्थः । अथ गीतिरेव तदा सामान्यविशेषमात्र स्वरानिति स्वाधारभूतपदव्यवच्छेदकं वचनम् 'स्वे प्रतिष्ठ गगन" मितिवत् । मन्दस्य नलत्वेऽपि तत्रामित स्वरशाचकत्वं तद्गीत्याधारे निष्ठत्वं चेति तत्राप्यदोषः । न चानेन प्रकृतं किंचिदुक्तमित्यलम् ॥९-१०॥

ननु यदुक्तं गान्धर्वं कथं तस्य गानादावुपयोग इत्याह एतेषां चेति । चोऽप्यर्थे ।

[1]गान्धर्वं त्रिविधं विद्यात्स्वरतालपदात्मकम् ।
त्रिविधस्यापि वक्ष्यामि लक्षणं कर्म चैव हि ॥११॥
द्व्यधिष्ठानाः स्वरा वैणाः शारीराश्च प्रकीर्तिताः ।
[2]एतेषां सम्प्रवक्ष्यामि विधानं लक्षणान्वितम्[3] ॥१२॥

---

तथेति पूर्वाद्ध्याहारेणाभ्युपगम्यते । तेन हि गान्धर्वप्रकारेणैषा भावादीना स्वरसमुत्थित स्वरविषयमेव विधि वक्ष्ये न त्वन्यम् ॥१०॥

ननु कोऽन्योऽस्तीत्याशङ्क्याह—गान्धर्वं त्रिविधं विद्यादिति । त्रिभ्य स्वरादिभ्यो विधा विधानं यस्य । प्राश्रितधाची विधाशब्द इति विरम्गता । न त्वत्र विधाशब्द प्रकारार्थं । एवं हि सति पृथक्पृथग्गान्धर्वव्यवहारो भवेत् । न चैव, तथा च विशाखिलाचार्यं "स्वरपदतालसमवाये तु गान्धर्वम्" इति । आत्मग्रहणेनैषा मिश्रीभाव । पद स्यात्कारणमवधानं सूचयति । एतदेवमुक्त, नहि स्वरतालपदतुल्यतया, इद भागानिविष्टमवधानं भाति, येन समूहमध्ये गण्येत । इति कर्तव्योपयोगि हि तत्तत्र मिश्रीभाव प्रधानगुणभावे नैव भवति । तत्र पूर्वनिपातादेव प्राधान्य सूचयति । तेन स्वरा प्रधानं, तालोनामात्मा तत्साम्येनोपकारक , "तत प्रतिष्ठाकरणे ' इति तत्र एवैतदाह । ततोऽपि दूर पद पदस्थानेनैव तत्स्वाधारनालाभ । तदुक्तं दत्तिलाचार्येण— "पदस्य स्वरसंघातस्तालेन सुमित " (१-३) इति तेन पदतान्त यादृशा गान्धर्वेण तादृशा गान स्वरत एव तु भूयसा तत्रोपयोगीति तात्पर्यम् । अवधानं योगरूप तच्चात्र नोपयोगि । परिवर्तकेष्ववनद्धे—पूर्वरङ्गे, तत्र हि देवतापरितोषादेव सिद्धिः । तदेतदुक्तं—

गीतिज्ञो यदि योगेन नाप्नोति परमं पदम् ।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥ इति केचित् ।

तस्यार्थस्य अशब्दत्वादवधानाद्विना कुत्रापि सिद्धेरयोगात् । लक्षणं पुनः श्रुत्यादिस्वरूपम् कर्मेति योजनात्मिका क्रिया ग्रहांशादिरूपतया, यतो आरम्भादि योगोऽनुवर्तते, तत्कुतपस्य सारमकरत्वेऽपि रङ्गभाषस्य गानवृत्तान्तत्व मद्वीणाशरीरवर्णानामारोहणमवरोहण च । प्राणाभिहननेनैव हि तीव्रातीव्रेण शरीरद्वय वशेऽपि स्वरनिष्पत्तिः । वीणायामनु प्रादर्शं वामदक्षिणविपर्यासवत्तारमन्द्रविपर्यास इत्याशयेनाह—द्व्यधिष्ठाना स्वरा वैणा शारीराश्चेति । वैणाना प्राधान्यात्पूर्वमुद्देश । दर्शित च तद्विधानमिति सपादनम् । लक्षणेन गान्धर्वलक्षणेनानुगतम् ॥११-१२॥

तत्र वैणाना स्वराणा प्रकारानुद्दिशति स्वरा ग्रामावित्यादि । संक्षिप्यावमो

---

1 KS reads it after the verse द्व्यधिष्ठाना ··etc
2 KSS , NS उभाभ्यामपि वक्ष्यामि ।
3. KSS विधि स्वरसमुत्थितम् ।

[1]स्वरा ग्रामौ मूर्च्छनाश्च ताना[2] स्थानानि वृत्तयः ।
[3]शुष्कं साधारणे वर्णा ह्यलङ्काराश्च[4] धातवः ॥१३॥

श्रुतयो [5]यतयश्चैव नित्यं स्वरगतात्मकाः ।
दारव्यां समवायस्तु[6] वीणायां समुदाहृतः ॥१४॥

स्वरा ग्रामस्त्वलङ्कारा वर्णाः स्थानानि जातयः ।
साधारणे च शारीर्यां वीणायामेव संग्रहः ॥१५॥

---

यत इति समवाय उद्देशः । स च स्वरगतं, स्वरविषय आत्मा यस्य व्यस्तसमस्ताभिरूपं हि स्वराणामेवेष्टमुद्दिष्टम् । दारुणोऽप्यस्य वीणा वाग्रूपा भगवतीति दारवी । येन तत्र न... प्रत्यय । "दारुणो ह्यसौ जाता वाक् एत.. स्म । या प्रनष्टा' मित्यादिना विशाखिलाचार्यं प्राहीत्यत् । तदाधारत्वाच्च काष्ठमयोऽपि सन्निवेशो वीणेत्युच्यते । एवं शरीरे वीणा वाग्रूपा हि सरस्वती वीणा शब्देनोच्यते । मूर्छना—

शारीर्यां दारव्यां च तुल्या मूर्च्छना । तान तु शारीर्यां सम्भवदपि न प्रयोगार्हमसुखावहत्वात् । अभ्यासार्थं च तत्प्रयोगेऽप्यन्यूनाधिकवैणस्वरवद्येनैव तत्सिद्धे । अत एव शारीरस्वरप्रयोगाशक्तोऽपि हृदयापरिगृहीतं स्वरविशेषं शक्नोति वैणस्वरान् प्रयोक्तुम् । वृत्तयश्च धातूनाम् । शुष्कस्य चानुग्राहकं साधारं, धातुशुष्कप्रयोगस्य वीणायामेव सुखावहं । ततो (धातुभि शारीरस्वर) उपजीव्यते । (तत्) अलङ्कारजातमिति वक्ष्यते । श्रुतयश्च वीणायामेवोपयोगिन्यः, शारीरायास्त व्युत्पंग्यस्य सम्मूलत्वाच्च । तथा च वीणेऽप्यव ति सङ्ख्यालाभे प्रमाणत्वेन वक्ष्यते । अत एव वैणेनैव समस्तस्य स्वरगतस्य प्रकारस्याभ्यासे प्रयोगे चोपयोगिनस्तत्र सङ्क्रान्तस्य चारुत्वात्स्वत शब्दात्मकं पदमपि । तत्स्थमित्यभिप्रायेण ॥१३-१५॥

एवं विशिष्टं स्वरतालेन मेय इत्याशयेन च पदगतमुद्दिशति । तालगतं प्रथक्कृत्य व्यञ्जनानीत्यादि । व्यञ्जनानि—अज्मन्त्ररूपाणि उपादेयत्वेनात्र ज्ञेयानि । पदपाठेन स्वरप्रयोगो व्यवसीयेताक्षरधर्मत्वात्स्वरस्य ।

---

१ KSS reads as स्वराश्च श्रुतयो ग्रामा मूर्च्छना स्थानसंयुता ।
२ NS नाना ।
३ NS स्वन ।
४. NS सधातव ।
५ NS जातयश्चैव विविधस्वरसमाश्रया ।
६ NS धर्म ।

व्यञ्जनानि स्वरा वर्णाः सन्धयोऽथ विभक्तयः ।
नामाख्यातोपसर्गाश्च निपातास्तद्धिताः कृतः ॥१६॥

[1]छन्दोविधिरलङ्कारा ज्ञेयः पदगतो विधिः ।
[2]निबद्धं चानिबद्धं च द्विविधं तत्पदं स्मृतम्[3] ॥१७॥

[4]ध्रुवस्त्वावापनिष्क्रामौ विक्षेपोऽथ प्रवेशनम् ।
शम्या तालः सन्निपातः परिवर्तः सवस्तुकः ॥१८॥

मात्रा [5]प्रकरणाङ्गानि विदारी यतयो लयाः[6] ।
गीतयोऽवयवा मार्गाः [7]पादमार्गाः सपाणयः ॥१९॥

[8]इत्येकविंशतिविधं ज्ञेयं तालगतं बुधैः ।
गान्धर्वसंग्रहो ह्येष विस्तरं तु[9] निबोधत ॥२०॥

---

अन्ये त्वाहु—व्यञ्जनानीति द्योतकानि निपाता गृह्यन्ते कन्दुमित्यादि । अकारादयस्तु षाड्जिकासुरक्तगान्धारादिजातिषु च दृश्यमाना स्वराः अथः वर्णाः अज्झल्समुदायाः, सन्धयः संहिताकार्याणि । विभक्तयः सुप्तिङ्, उपसर्गाश्च प्रादयः निपाताः...हेयाः परुषप्रायाः । अन्ये तूपादेयविभागेन ज्ञेयाः, अलंकारा उपमादयः । अनिबद्धमिति गद्य पृथगर्थं वा तद्विपरीत निबद्धम् । एतच्च स्मृतं वाचिकाभिनय एवास्य व्यञ्जनादिभेदस्योक्तत्वादिति भाव । यदनुक्त कुल वा स्मरत्वं वा विभाव इत्यादि च तद्यथावसर वक्ष्यते । ध्रुवस्त्वित्यादिना तालगतमुद्दिश्य गान्धर्वसंग्रहो ह्येष इत्यन्तेनोद्देशत्रयमेकविषयीकरोति अत्र च प्रकरणशब्देन प्रक्रियाप्रसक्तविस्तरमिति लक्षणपरीक्षात्मकम् । निबोधतेत्यनेनोहापोहकौशलशालिनी बुद्धिरत्र भवतामुपयुज्यत इति दर्शयन्नुद्देशक्रमो लक्षणादौ मया नाश्रित इति । तथाहि—ग्रामानन्तरं मूर्छनाः, स्थानान्तरं साधारणे जाति च लक्षयिष्यति न चैव उद्देशस्तत्रोद्देशो नामापि

---

१. KSS. छन्दो वृत्तानि जात्यश्च नित्य पदगतात्मकः । NS. छन्दो विधानं च तथा ।
२ NS. अनिबद्धं निबद्धं च ।
३. NS. reads an additional line अतस्तालगतस्यापि सम्प्रवक्ष्यामि वै द्विजाः ।
४ NS भावापस्त्वथ निष्कामौ ।
५. NS प्रमाणबीजानि । KSS विदार्यङ्गलयो यतिः प्रकरणं तथा ।
६. NS च यतिर्लयः ।
७. NS KSS. पादमार्गाः ।
८. KSS, NS both read the same.
९. KSS. च ।

तत्र स्वराः—

षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा ।
पञ्चमो धैवतश्चैव [1]सप्तमोऽथ निषादवान् ॥२१॥

नानुसृत । उद्देशे तु प्रयोजनं न लक्षणावकाशवितरणम् । अत्रापि तु श्रुतेरस्या अन्याधा मुखेन विभिसाधारणमात्रमिति तेन स्वरादीनामुद्देशक्रमेणातन्त्रत्व यदधाख्यात टीकाकारेण तन्मन्दफलत्व यावय दूषणमश्लिष्ट च । तथापि स्वरेषु सत्सु ग्रामो तदाश्रया मूर्च्छना तानाः इति युक्तम् । यत्तु स्थानानां तदनन्तरमभिधाने कारणं निरूपितम् । न स्थान स्वरस्य स्वरापोहकारी किन्तु तारादि सञ्ज्ञामात्रे यदि तत्र स्थाने निष्पत्त्या तथा सञ्ज्ञा । तर्हि तारमन्द्रमध्यमव्यतिरिक्तस्वरूपाभावात् स्वरूपोकारत्वमेव कथित स्यान्नवेति निबन्धने कृत स्यात् । शुष्कानन्तर साधारणमुद्दिष्ट, शुष्क .तिःवरूपापनायेत्यपि न किञ्चित् । न हि काकल्यन्तरयो शुष्क एव प्रयोगोऽल्पनिषादगान्धारादिजातिषु तद्विनियोगात् । जातिसाधारण तु जातीना किंचिदेकाग्रय मन्यन्ते । सदृश रूपमित्यस्यापि क शुष्केऽवसर । श्रुत्यपेक्षिण स्वरा वैणिकमकाण्डे ता उद्दिष्टा इति चोदयित्वा यत्प्रयुक्त शारीरापेक्षयैव तु न दारव्या वै स्वरा इति तदसङ्गतप्रायम । एतावता हि दारव्या नास्ति श्रुत्युपयोग इत्युक्तम् । तत्किं ताभिरुद्दिष्टाभि ग्रामविभागाय ता इति चेत्तत्सविध एवोद्देश्या इत्यलम् । तन्नात्र क्रमसमर्थनेन प्रयसितव्य ॥१६-२०॥

तत्र स्वरान्वक्तुमाह—तत्र स्वरा इति । तेषूद्दिष्टेषु मध्ये स्वरा उच्यन्त इति शेष । म...षोपतापयो स्वर आक्षेप इत्यनयो स्वरशब्द, तेन शब्दस्वभावा चित्तवृत्तिमध्यस्थना रूपत्वात्स्यावस्थापरित्याजनेनोपतापयन्तो हृद्यतातिशयवशात् स्वतामाक्षिपन्त स्वविषये अभिधान कुर्वंत स्वरा इत्युक्ता । वर्णसाम्यादपि निरुक्तिमाह । स्वत स्वेनैव जातिरागभाषाभेदेषु राजन्त इति स्वरा । अथ स्वरैर्नियतामानन्तर्यं द्योतयति ऋषभ इति । एतदनन्तरमेव शब्दस्तु निकटगान्धार अन्तराभिधानभेदान्तरसम्भवादत्र भेदो नास्त्येव ऋषभ इति दर्शयति । काकल्यन्तरस्वरवशात्तु कथञ्चित्प्रवृत्तीति च शब्दश्चैवरत्र, धैवतश्चैवेत्यत्रापि निपातौ याज्यौ । एतच्च स्वरसाधारणमिति तदभिधानावसरे तन्निदर्शयिष्याम । तत्रानन्तरालश्रुतिषु नियतसस्थाकासु ईषद्वो वायुना स्पृष्टस्तन्महिम्ना य स्वर श्रुतिस्थाने स्निग्धत्वरक्तत्वलक्षणो धर्मः तस्याश्रयभूताया श्रुतेरुपरञ्जक स एव स्वर इति केचित् । षड्जश्रुतिरेवेत्यपरे, समूह इत्येके । वय तु श्रुतेस्थानाभिघातप्रभवशब्दप्रभावितोऽनुरणनात्मा स्निग्धमधुर शब्द एव स्वर इति वक्ष्याम । अत्र नारदाद्या नामनिर्वचनमकार्षु —

---

१ NS सप्तमश्च । KSS निषाद सप्त च स्वरा ।

नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संश्रितः ।
षड्भ्यस्संजायते यस्मात्तस्मात् षड्ज" इत्यादि (१—४७)

तदनुपयोगान्मुनिना न स्वीकृतम् । वीणायां च तथा भावाभावेऽपि षड्जादिदर्शनात् । यत्तु केचित्प्रतिसमादधते—वीणायां प्रतिबिम्बत्वात्तत्र समानेन्द्रियग्राह्यो यः शारीरस्वरसमूहस्तमेव प्रतिबिम्बमर्पयितुमर्हतीति, तदत्यन्तमसाम्प्रतम् । वीणा हि देहस्य प्रतिबिम्बमिति केयं भाषा, न हि दर्पणसंक्रान्तप्रतिबिम्बशरीरप्रतिच्छन्दकसदृशी वीणा वीणेत्युपालम्भः । न च मुकुरवद्देहस्य प्रतिबिम्बनस्थानं, न हि स्वरस्य वीणायां स्वरेणैकेन्द्रियग्राह्यत्वायोगात् । नभसीव च तत्र प्रतिश्रुत्यात्मनः शब्दप्रतिबिम्बसंक्रमणात् । न च वीणास्वरे शारीरस्वरं प्रतिबिम्बमर्पयतीति स्पष्टं द्वयोः स्वरयोरनुपलम्भात् । शारीरस्वराभावेऽपि वैणस्वरप्रवृत्तेः शारीरस्वरं वैणस्वरप्रतिबिम्बमित्यसदेव पृथक्प्रयत्ननिष्पाद्यम् । एवं हि नियमितपीडितत्र्यङ्गुलिसमभिघातोदितशब्दानन्तरसंभवात्प्रगुणतारमात्रः स्वरः । तत्र न च तत्र नासादिकारणपटलमस्तीत्युक्ते प्रतिबिम्बत्वोत्तरीकरणमसदेव, केवलमौत्तराधर्यविपर्यासात् । स्वगतशरीरस्वरानुसारेण च सारणोपयोगिनः उत्कर्षापकर्षणसम्भवात् प्रतिबिम्बत्वमुक्तम् । सप्त इति वचसा काकल्यन्तरस्वरौ पृथक्स्वराविति दर्शयति । सप्त स्वरा इति च सम्भववशादिति च वक्ष्यामः । अन्ये तु 'तत्सवितुर्वरेण्य' इति सप्तवर्णाः नि ग रि ध म प स स्वरैर्ब्रह्मणा पूर्वमुदीरिता इति साप्तस्वर्येऽभिप्रायमाचक्षते । निर्णेष्यामश्चैतत् ।

अत्र केचित् चोद्यं प्रति समादधुः—श्रुतिक्रमाभिव्यङ्ग्याः स्वरा इति श्रुतय एवादौ वाच्या इति चोद्यम्, तत्रोत्तरं—भवेदेव, यदि ध्वनिनादसंज्ञिताः श्रुतय एव नियतश्रुत्यन्तरत्वेन गृह्यमाणाः स्वराः (इति) । न ह्येवं श्रुतयो ह्युच्चनीचतया अपि स्वराश्रया एव प्रतीयन्ते । यथा भट्टमातृगुप्तः—

(जायते) सहजेनैव समस्तः श्रुतिविस्तरः ।
स्वराधिष्ठानतो याति श्रोत्रपीयूषसारताम् ।। इति ।।

श्रुतेरेव च स्वरत्वे चतुर्थस्वरूपोपलक्षितो यः षड्जग्रामे पञ्चमः स मध्यमग्रामे यदि तृतीयः श्रुतिरूपस्तथा स पञ्चमस्वर इति कथं न हि तृतीयं चतुर्थमेकमेव ग्रामद्वयस्य, धैवतस्याप्ययमेव न्यायः काकल्यन्तरयोश्च निषादगान्धारता कथम् ।

पुष्पसाधारणे काले कोकिलो वक्ति पञ्चमम् । (नारदीयशिक्षा १-५-४) इति एतच्च कथं भवेत् । (नासाकण्ठा) द्वौ नियता श्रुतिरूपा अभावात् । भावे हि सर्वे स्वराः स्युः । श्रुतिक्रमापेक्षिणि च स्वराणामात्मलाभेऽन्योन्याश्रयः कस्यचिदव्यवस्थितस्य प्रागसिद्धेः तस्मात् ग्रामविभागार्थमेव श्रुतिकीर्तनं तद्गतसंवाद्यादि वि(वेचनं) कथं तद्गतेषु रागेषु नैव स्वराणां नियतोर्ध्वादिकमनया शरीरसाम्यं भवतीति दर्शयितुमिति श्रुतयः स्वरेभ्योऽनन्तरमुक्ताः । एतदाशयेनैव विशाखिलाचार्यो ग्रामानन्तरं

श्रुतीरुद्दिशति स्म । ता हि परं यो "अत एव सामवेदे ग्रामविभागाभावात्तदुपयोगिन्यां नारदीयशिक्षायां तदभिधानमोत्तरापर्यमात्रमेव सूक्तम् (—) यः सामगानां (नार १-५-१) इत्यादिना ।

दीप्तायताद्याश्च पञ्चश्रुतयः पृथक्स्वरादीनां प्रयुक्तिविशेषतया उक्ताः । अन्ये त्वाहुः--श्रुतेरेव स्वरत्वाभावात् श्रुतिक्रमाभिव्यङ्ग्याः स्वभावेन पूर्वं उद्देश्या भवेयुरिति । अत्रोच्यते—यदि श्रुतिशब्देन समीरणसंयोगी स्थानविशेषो विवक्षितो, "व्यस्तानि तानि षट्षष्टिं विधात्" इति नीत्या तत्सर्वमेव""नमेव । कश्चिद् स्थानं स्वरं मन्यते । न चास्य रूक्षता वा स्निग्धता वा धर्मः समीरणः तद-भिघातयोरेव एव न्याय· अथ श्रुतिभिरिति न स्थानविशेषसमीरणसंयोगी प्रभवो विवक्षितः, तद्गतश्च रक्ततादयो धर्मः स्वर इति । तदा तत्रापि पञ्चमधैवतानुप-पत्तिरिति समानम् । न हि तुर्यस्थानसंयोगोद्भूतस्य ध्वनेर्यो धर्मः स तृतीयस्थान-संयोगोद्भूतस्य धर्मिवदेव, तद्धर्माणां नैयत्यात् । न ह्यन्यधर्मोऽन्यस्य धर्मः । एतेन काकल्यन्तरौ व्याख्यातौ । कोकिलो वक्ति पञ्चममित्यादि चात्र सुतरामनुपपन्नम् ।

ननु तथाभूतस्थानाभावे तत्स्थानप्रभवस्य शब्दस्य यो धर्मः स भवितुमर्हति धर्मिणोऽसद्भावो हि तत्र कारणाभावात् । सत्यं चैतत् उच्यते अभिघातजाच्छब्दा-दनन्तरं योऽनुरणनलक्षणोऽन्यः शब्द उपजायते स तावन्निसर्गस्निग्धमधुराकारः । तथा हि रज्ज्वा तन्त्र्यामाहतायां पाषाणे कांस्ये वा हते तद्भावाभावौ स्फुटं लक्ष्येते । तदेवाय-मसौ समुदायापेक्ष स्वरांशो नाम प्रयोगात्समुदायापेक्षादपर एव । ततश्च य एवानुरणनात्मा चतुर्थस्थानसंयोगोद्भवेन शब्देन जनितः स एव तृतीयस्थानोद्भूतेनापि जनयिष्यते । केवलमुच्चजनितत्वानुच्चत्व तस्यैव लक्ष्यते । मन्द्रषड्जो मध्यतार-षड्जस्येव । एवं तदेवानुरणनं कोकिलादिशब्देन जनितेन तन्त्र्यङ्गुलीसंयोग-मल्लककोटिघातादिप्रभवेनापि शब्देन जन्यत इति युक्तम् ।

ननु कारणभेदप्रजातेन शब्देन कथं तज्जातीयोऽनुरणनशब्दः क्रियते । मैवं, कारणे नियामाकदर्शनाद्वा अय.स्फटिकारणिविद्युदादिकारणभेदसंघातोऽपि ह्यग्निधूमम-मेकजातीयं जनयति । बीजकन्दोचितकदलीद्वयादौ वा कारणभेदेष्वप्येककार्यतादृष्टा । वृश्चिकादौ च । तत्राप्यस्ति सूक्ष्मो भेद, धूमत्वं तु, तदेवेहाप्यस्तु । लक्ष्यते च वीणा-स्वरोऽयं मल्लकस्वरोऽयमिति, षड्जत्वेनत्वभेदः । अत एवैषां धातूनामभिघातृशब्दा नानुरणनं जनयति । तेन शब्द सममपि कुर्वाणा अपरिपूर्णा इत्युच्यन्ते । घातशब्द-स्यानुरणनशब्देन तीव्रत्वाम्यधिकेऽतिरक्तता, साम्ये साम्यं वैपरीत्ये वैपरीत्यम् । यस्य च वक्तिस्थानसमीरणाभिघातप्रभवा अपि शब्दा अनुस्वारस्वरूपं स्वरात्मकं शब्दं जनयेदेव परिपूर्णोत्कृष्टशारीरकमूर्त्ततारतम्ये तु निकृष्टता । अनेन च कारणभेदो-द्योपेणेटरेतराश्रयमपि प्रत्युक्तम् ।

यदि स्वरेषु श्रुतय सर्वेष्वेवोपकारिण्य ग्रामयोर्विभागोऽपि कल्पनीयत्वात् ग्रामयोर्गितर्यैव प्रायोपयोगित्वात्पश्चादभिधानम् । न तु ध्वनिक्रमनिरपेक्ष एव शरीरे प्रयत्न, प्रगीतस्य पर क्रमो लक्ष्यते, यथुभावितत्वात् । स तु नास्ति, अप्रगीते क्रमस्य सवेदनात् तथा ह्यप्रगीते षड्ज निर्वि...। एवा जनमधिक वा...ति । आरोहवरोहेति तावत् स्वरश त्रिवयति । अभ्यासकालगत तन्न्युत्कर्षापकर्षाणि वादिसवादिविवादि-श्वस्वरजननसमर्थशब्दविशेषोत्पत्तिस्थानलाभोऽस्य भवति । (ततः) एवं "उत्कर्षा-पकर्षस्थानभेदेन श्रोत्रगोचराभिलक्षणीयो विशेष उपजायते । तावती श्रुतिरेका परमाणवनुस्थाने स्थापितापि तस्या लक्षणीयत्वात् वसिलाचार्योऽपि ध्वनिशब्देनानु-स्थानमेवाम्यधात् ।

"षड्जत्वेन गृहीतोय षड्जग्रामे ध्वनि" (१-२२) इति ।

श्रुतिनिदर्शन तु वीणाया स्फुटम् । तत्रपि षड्जग्राममध्यमग्रामयो क्रमोपक्रमपञ्चम-स्वरेणैत्याशयेन पश्चात्तु तयो निर्दिष्टा । तत्र प्रयत्नवशात्कस्मिश्चिदभिहते स्थाने जातेऽभिघातजाच्छन्दान्तरेऽनुस्थानात्मनि स्वरे तदव्यवहितस्थानाभिघातो यदि स्यात्सकीर्ण (या) ताम् । पूर्वापरे स्वरे स्थानगतो यथा तत्र सकीर्णभावस्तथा स्वर-गतोऽपि तद्विभागलाभार्थं मध्ये वर्जनीयस्थानभागोऽपत्र स्वर इति द्विश्रुतिकस्य सम्पत्ति । स्थानद्वयेन व्यवधो त्रिश्रुतिकस्य त्रयेण चतु श्रुतिकस्य, तत पर चतुरा-दिव्यवधानेऽतिप्रयत्नवशादूर्ध्वस्वर्यमिति पञ्चश्रुतिकादेरसभव । तत एव श्रुतिद्वयोत्कर्षो द्विश्रुतिकयोरेव गत्योरुक्त । एकश्रुत्युत्कर्षस्तु नोक्त, स्थानसाकर्येण स्वरसाकर्य-प्रसङ्गादिति ह्युक्तम् । चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः । द्वे द्वे निषादगान्धारौ त्रिस्त्री ऋषभधैवतौ ॥ ... चतु श्रुतिस्त्रिस्तिरिति षड्जप्रधानत्वात् षड्जग्राम सरिगमपधनि, मपधन्यादि-मध्यमग्राम । चतुश्रुतिस्त्रि श्रुतिर्द्वि श्रुतिरिति । तथा हि—एकस्मिन्नेवोरसि ऊर्ध्वाधर-तया सप्तस्वरा, तथा हि चतुश्रुतिकात्पूर्णाभिघातात्, तद्वत्स्थानादेकैक निष्कास प्रक्रमेण पुनश्च प्रकृतिमुतपूर्वरूपस्पर्शश्चत्वार सरिगमा । तथैव स्थाने ऊर्ध्वस्पर्शे पधनिसा, केवल षड्जेन द्वितीय स्थान स्पृश्यत एव । मन्द्रस्थानवत् स्थान स्वराणाम् । एव कण्ठस्थाने शिरसि च । तेषु सर्वथा ताद्रूप्यमक्रमणत्वशादिव्यपदेश एव, तद् स्थानगताना तु साद्दश्यपरत एव सवादश्च वक्ष्यते । तेन परमार्थत त्रय एव स्वरा --सरिगा, पधनय । मध्यमस्तु ध्रुवकस्थानीयो मध्यमत्वादेव । चतु श्रुतिरुदात्त उच्चत्वात् । द्विश्रुतिरनुदात्त, नीचैस्त्वात् । त्रिश्रुति स्वरित मध्यवर्तितया समाहारत्वात् । तथा हि—स्वरित एव कम्पितत्व व्यवहरन्ति श्रोत्रिया । इहाप्यलङ्कारेषु त्रिश्रुते कम्पन वक्ष्यते । तस्योर्ध्वाध स्वरस्य स्पर्शनेऽपि स्वरता-क्षमत्वाच्चतु श्रुतेर्हि नोर्ध्वमस्ति द्वि श्रुतेर्नाधरमिति क पथ कम्प ॥२१॥

अथ सार्वप्रयोगसाधारण्य स्वराणा योजना ज्ञातु चातुर्विध्य दर्शयितुमुपक्रमते चतुर्विधत्वमेतेषामित्यादि । एवकारेण वा न्यायतोऽवितस्य स्थितिप्रयोग इत्यादि ।

चतुर्विधत्वमेतेषां विज्ञेयं गानयोक्तृभिः ।[1]
वादी चैवाथ संवादी[2] विवादी चानुवाद्यपि ॥२२॥

[3]तत्र यो यदंशः स तदा वादी । ययोश्च[4] नवकत्रयोदशकमन्तरं तावन्योन्य संवादिनौ । तद्यथा—षड्जपञ्चमौ ऋषभधैवतौ गान्धारनिषादवन्तौ[5] षड्ज-मध्यमाविति षड्जग्रामे । मध्यमग्रामेऽप्येवमेव । षड्जपञ्चमवर्जं पञ्चमर्षभयोश्चात्र संवादः । अत्र श्लोकः—

संवादो मध्यमग्रामे पञ्चमस्यर्षभस्य च ।
षड्जग्रामे तु[6] षड्जस्य संवादः पञ्चमस्य च ॥ २३ ॥

विवादिनस्तु ते येषां[7] द्विश्रुतिकमन्तरं, तद्यथा—ऋषभगान्धारौ, धैवतनिषादौ । वादिसंवादिविवादिषु स्थापितेषु शेषास्त्वनुवादिनः, [अनुवादिसंज्ञका यथा—षड्जस्यर्षभगान्धारधैवतनिषादाः ऋषभस्य मध्यमपञ्चमनिषादाः गान्धारस्यापि मध्यमपञ्चमधैवताः मध्यमस्य धैवतपञ्चमनिषादाः, पञ्चमस्य[8] धैवतस्य षड्जमध्यमपञ्चमाः षड्जग्रामे । मध्यमग्रामेऽपि मध्यमस्य धैवतनिषादर्षं

---

चशब्देन संवादिनस्तत्स्पृष्टे सम्भवमाह । एवशब्देन संवादिनो हि नियतः सम्भवः । अपशब्दे नान्तर्यगोनकेन संवादिनो वादिनश्चानुपलपनम् । विवादी चेति चकारेण विवादिनः प्रत्यवशः अनुवाद्यपीत्यपिशब्देनानुवादिनः संवादिधर्मोपजीवनम् । अत एवास्य सर्वांश्च दुरदनम् नया हि —अनुवादिव दिसवाद्यनुपलपनं सहते, न च भूयस्तरोऽस्य प्रयोग इति ॥ २२॥

ननु प्रधानारम्भराणां धर्मा ग्रहादयश्च अन्तरस्वादय ...अन्ते तद्गुडप्रसङ्ग भेदोऽपि वक्तव्य । स्यादेतत् । ग्रहन्यासापन्यासास्तात्रिहादिनैव प्रायेणगृहीता । तद्गृहाश्च्यासन्यासापन्यासा इति हि शुद्धासु वक्ष्याम । षाडवौडुवितात्पत्वानि विवा (अनुवादिभिन्ना) नि बहुत्र संवादिना, तारमन्द्रस्य न्यासापेक्ष इति । इद चासत् । शुद्धासु जातिषु भवेदेव, अन्यत्र तदभावात्कथमनेन संग्रह । अनुवादी

---

१ KS, NS श्रुतियोगत ।
२. NS ह्यनुवादी विवाद्यपि KSS omits हि ।
३ NS यस्यांश स तत्र (KSS तस्य)
४ NS नवत्रयादशक परस्परन्त श्रुत्यन्तरे KSS नवकत्रयोदशश्रुत्यन्तरे ।
५ KSS निषादौ ।
६ KSS, NS च ।
७ KSS स्याद्विश्रुतिक, NS विंशतिस्वर ।
८ KSS पञ्चमस्य धैवतषड्जौ धैवतस्य ऋषभषड्जगान्धाराः ।

मषड्जगान्धाराः, पञ्चमस्य धैवतनिषादर्षभगान्धाराः, धैवतस्य षड्जर्षभगान्धाराः, निषादस्य षड्जर्षभौ, षड्जस्यर्षभगान्धारौ ॥ ] तत्र वदनाद्वादी, संवदनात्संवादी, [1]विवदनाद्विवादी, अनुवदनादनुवादीति । एतेषां च स्वराणां [2]न्यूनत्वमधिकत्वं वा तन्त्र्युपवादनदण्डेन्द्रियत्रैगुण्यादुपलभ्यते स्वरविधानमेतच्चतुर्विधत्वमिति ।

अथ द्वौ ग्रामौ षड्जग्रामो मध्यमग्रामश्चेति । अत्राश्रिता[3] द्वाविंशतिश्श्रुतयः स्वरमण्डलसाधिताः । यथा—

---

सर्वंभावधिरित्यवश्य वक्तव्य । तदिहाप्यह सुतरां वाच्य, तेन विना हि न कोऽपि (रागव्यापा)रः प्रवर्तते । उच्यते—उत्तमे तत्साधारणयोऽन्नोपयोगीदमुच्यते । एतावतैव च जातिवर्णे भाषाद्युन्मीलनं भवति ग्रहांशन्यासादि वैचित्र्यमन्तरेणापि । तथा हि कुर्वति स्वरे भूयस्तूच्चार्यमाणे संवादिनि च तदनुवर्तिनि च तदनुचयना (वदन ?) शालिनि चानुवादिनि च किञ्चिद्योगभाजि विवादिनि कृतस्वरूपभासीदेति रागस्याभिव्यक्ति । यथा 'सागसा पमपा मनिरिपा गनिमास मासस पापाधा धानिनिरीरिनोसारि" इत्यत्र षड्जवादिनि (गान्धार) निषादयोः संवादिनि मध्यमादावनुवादिनि, अभिव्यक्तो मालवकैशिकः । एतदेव हि (प्रयोग) सर्वस्वम्, ग्रहादियोजनं तु वैशिष्ट्यावहं, गान्धर्वं तु विशिष्टादृष्टसिद्धये । एतच्च वक्ष्यामः ।

तत्र वादिनं लक्षयति यो यदांशस्तदा वादीति । यदेति यत्र प्रयोगात्मनि काले वर्तते स एव स्फुटत्वेन भासमानः अंशः । वादिनं बाहुल्येनोच्चारणमस्यास्तीति च वदति च तारमन्द्रादिव्यवस्थादीनिति च अक्षरं स्वयमेव सूचितम् । अन्येत्वंश इति पर्यायमाहुः । अपरे मतिसद्धय 'यो यदांश स्मृतो" ति पठन्ति । तदसत् ।—अंश एव हि वादीति दत्तिलाचार्यः (I 18) । न चांशलक्षणे पृथगुपयोगीति तत्रैव वक्ष्यते । अ .भावप्रधानो निर्देश ।

संवादिनं लक्षणमाह नवकत्रयोदशकमन्तरमिति । एतच्च स्वराभिधानम् । अन्येत्वाहुः—प्रत्यया (ष्टौ) नवेति नवका अष्टका उच्यन्ते । एव त्रयोदशका द्वादश । एतावत्य श्रुतयः (स्वरयो)रन्तरं ययोस्तौ संवादिनाविति । उपाध्यायास्त्वाहुः—अन्तरमिति स्वरूपं नान्तरालं तेन नवश्रुतिकं यस्य स्वरूपं स्वरस्य, यस्य च त्रयोदशश्रुतिकस्य स्वरूपं, तौ स्वरौ परस्परसंवादिनौ । संव...यथा द्वाविंशतिः षड्जोऽनन्तरश्रुतित्रयेणान्तरश्रुत्या तथेहोच्यते । एवं नवश्रुतिस्त्रयोदशश्रुतिश्च ।

---

१ KSS विवादितान् ।

२ NS न्यूनाधिकत्व तन्त्रीवादन . । KSS मूर्च्छनाधिकारित्व तु ।

३. NS तत्र वा KSS, तत्राश्रिता ।

नन्वेव चतुश्श्रुतेरधिकोऽप्यस्ति । किं बहुना, षड्जान्निषाद प्रयुज्यमानोऽष्टादशश्रुतिक स्यात् । मैव, तावतीना श्रुतिलाभे...तत्स्पर्शिपवनाभिहननजनितनादाशो-पयोग । तत स्वरे तत्कृतश्च श्रुतिसख्यानियम । अत एव निरन्तरध्वन्यशश्रवणं विरूपस्वरश्रवणम् । तत एव तिस्र श्रुतय ऋषभ इत्यादि वक्ष्यते, न तु तृतीया श्रुतिरिति । तत्र विशाखिलाचार्यप्रभृतिभि, 'स्वसवेद्ये परमे श्रुतिधाम्नि समवधानं अपवर्ह्यमाण विशिष्टादृष्टाय प्रयोक्तुर्भवति" इति दर्शितम् । तदुक्त भट्टतोतेन "श्रुति स्वर स्वसवेद्या" इति, गाने श्रोतृणा सर्वत्रापि स्वरूपावभास । तदाह 'श्रूयमाणास्तु दृश्यन्ते गम्भीरा इव' इति । न चावयवं स्वर., नापि सचय यौगपद्याभावात् । क्रमिकत्वेपि हि नैरन्तर्यात्, नाशुभविकृतायौगपद्याभिमान, क्रमिकश्रुतिजनितसस्कारविशेषे चान्त्ये श्रुतिस्थाने स्वरसमुदाय इत्यास्ता तावत् । प्रकृत ब्रूम ।

इहोल्लङ्घनीयस्वीकरणीयश्रुत्यपेक्षया नवत्रयोदशश्रुति च स्वररूपमुक्तम् । अन्योन्यस्येति वचन तावदस्य सवादिनौ मा भूतामिति समानश्रुतिकत्वेन सवदनात्सवादिनौ । वीणाया च षड्जादिस्थानेऽङ्गुल्यन्तरपीडनपूर्वकमभिहन्यमाने तत्तम्पाद्यमिति व्यवहार, सवादिन अत एव न जातुचिल्लोप कार्य । अन्वर्थसज्ञा [या स्वरयोरेव न श्रुत्यो परस्परसवादित्व] यथा मध्यमनिषादयोर्न सवादित्व सत्यपि त्रयोदशनवान्तरत्वे अत एव षड्जमध्यमाया [ जातौ ] मध्यमेंऽशे न षाडवस्य निषादलोपकृतस्यापवाद । मध्यमग्रामे च न ऋषभधैवतमो, तेन कैशिक्या धैवतेंऽशे ऋषभकृतस्य न षाडवस्यापवाद । ननु च सज्ञात एव सन्निधरूपेति लक्षणेन, मैव एव हि षड्ज [ मध्यम ] ग्रामयोरन्यत्र समयो सवादिता स्यात्, समयोश्च, साधारणप्रयोगे च निसयो, गमयोरित्यपि न दोष । तस्मादुभयसवादित्वे प्रयोजकम् । अमुमेवाभिप्राय प्रकाशयितु स्वकण्ठेनोदाहरणोपन्यास करोति यथेत्यादि । सम, सप, ऋष, गनि, षड्जग्रामे । अन्यत्र तु ऋषप इत्यपास्य ऋध ननु परिगणन चेत्किम् । यथेति वचनस्य सिद्धिसादृश्येनोदाहरणान्तरसङ्ग्रहाय स्यात् । स चेह नास्ति । तत्राहु —उभयमनेन क्रियते, येन प्रकारेणाय सवादिक्रमो न लुप्यते स यत्नो गान्धर्वे कर्तव्य । तेन काकल्यन्तरप्रयोगेऽपि* षड्जादीना न श्रुत्यपहार कार्य । अत एवाल्पत्वम् । यत्र निगयोस्तत्र साधारणप्रयोग षड्जमध्यमान्तर्गमनमिव हि तयो, सदा गाने तु साधारणवशात् सचार श्रुताना कैश्चिदेव चेत्सवाद्यस्ति तत सवाद्यनुपलपनमशेन स्वधर्मोपलब्ध इति सवाद्यन्तर लुप्यता नाम । तथा च षड्जाविव्यपदेश, षड्जेऽप्यशे पञ्चमलोपकृतमौडुविक मजत एव । तस्मान्न षड्जमध्यमौ... सामिति बिन्दुप्रयोगे च मम वदन निषादतन्त्र्यामस्यास्तीति

---

* उच्यतेऽत्रान्तर कार्यं सवादिधैवतस्य स' । न चान्तरोल्पप्रयोगादसवादी भवेदिह । काकल्यन्तरयोरल्पप्रयोगत्व मत सताम् । (कुम्भ II)

तयोरपि( वि )संवादित्वमेवेति । यथेत्युदाहरणप्रदर्शनार्थमङ्क्तु तु परिगणनमिति । एतदेव युक्तमित्यभियुक्ताः । श्रुतिसंचरणवशात्सत्त्वेऽपि विवसंवादो दृश्यते, यत ....... ॥ २३ ॥

अथ विवादिनो लक्षयति विवादिनस्तु त इति । अन्तर्हितस्वरूपतो गनिद्वि-श्रुति श्रुतिरूप तेन द्विश्रुति( गान्धा )रो निषादश्च स्वरान्तराणां विवादिनौ सर्वेषामेव तथा बहुवचनम् । स्वरान्तराण्यपेक्ष्य विवादित्वाभिधानं धर्मभेदात् । ऋषभगान्धारौ धैवतनिषादाविति चतुर्विषयोरुपादानं नैकट्यात् । अन्ये तूदाहरणाव-लाभाद्यपेक्षयैव श्रुत्योर्विवादित्वमाहुः । तच्चासत् । सर्वस्वरस्य विवादिन सतो भाव्य संपक्षविपक्षमध्यस्थे । तथापि षड्जेऽस्य तस्य मयो संवादिनौ, ऋषावनुवादिनौ, ऋषभे धमनिगा पमसा गान्धारे नि[ वादी ]त्येतु, नास्ति विवादी, निषादस्य संवादित्वात् पञ्चारपमानुवादिनः । एवमन्यदनुसर्तव्यम् ।

यत्र वादी स्वामी, अमात्य इवेतरोऽनुयायी संवादी, अरिर्विवादीशत्रुवत्, अनुसारिपरिजन इव योगवादी चेति विभाग । अनुवादिन लक्षयति वादिसंवादी-त्यादि । स्पष्टम् । अर्थवा नामभिर्वचसा निर्वचनान्याह वदनाद्वादीत्यादि ।

ननु वीणाया तावत्संरिवेति श्रतिक्रविरामाश्च संवादादिविभागस्य च वीणायामनितोऽपि दृश्यत इत्याशङ्क्याह—एतैवादित्यादि । एतच्च संवाद्यादीनां स्वराणामिति । यथा संवादित्वाभिमतयोरपि षड्जमध्यमयो समत्वमधिकत्व वा अपोदशकनवकान्तरापेक्षया विवादिनश्च मद्रुपयोगिन्यन्तर तदपेक्षयैव विवादकत्व, अनुवादित्वमपि ऊनाधिकत्वेऽपि घटते । तथा हि ऋषभेऽत्रो न्यूनश्रुति षड्स्यानुवादी स्यात् । गान्धारश्चाधिकश्रतिविवादिता जह्यात् । संवाद्यादीनां च षड्जमूलत्वे वादित्व-मप्यसमञ्जसं भवेद् । संवाद्यादिषु प्रभुत्वमेव हि वादित्वम् । एवमूनाधिकत्वे नामुना विघटित चे...... तत्कारणदोषे कृशा तन्त्रीस्वरिसभरिताप्युत्कर्षमपकर्षं वा याति, आर्द्रत्वयोगत्वादिदोषात् उपवादतन्त्रीबन्धनस्थानं तदपि शिथिलताविदोषाणां सारणानामत ? दण्डोऽपि नमनोन्नमनस्वभाव तथैवेन्द्रिय वागिन्द्रिय च तादृशमेव तच्चोपलक्षण मारिकाङ्गुल्यादीनामपि दोषेण तथोपलम्भात् ।

एवं स्वरा उक्ता । तत्र स्वरमात्रं कुत्रचिद् दृष्टादृष्टयोरुपयोग्यपि तु तत्समूह एव तु प्रयो[ग उपयोगी । तत्स्वराणां समूहो ग्राम ] इत्युच्यते । स एव च द्विविध पञ्चमभेदादिति दर्शयितुमाह—अथ द्वौ ग्रामाविति गान्धारग्राम निरस्यति । मध्यमस्य-नाशित्वमिति तावद् प्रधान नियत च तत्संवादित्व षड्जस्येति सोऽपि प्रधान । पञ्चमस्तु न मध्यमस्य संवादी कदाचित्तुल्यश्रुतिकत्वा त्क्रमेव । दत्तिलाचार्यस्तु मूर्च्छनानां षड्जस्वरप्राधान्येन च प्रथमादिव्यपदेशलाभात् षड्जमध्यमयोर्व्यपदेशहेतुत्वमाह—

स्वरौ यावतिथौ स्यातां ग्रामयो. षड्जमध्यमौ ।
मूर्च्छना तावतिथ्येव तद्ग्रामावत एव तौ ॥ इति

तिस्रो द्वे च चतस्रश्च चतस्रस्तिस्र एव च ।
[1]द्वे चैवाद्य चतस्रश्च षड्जग्रामे भवेद्विधिः ॥२४॥
[2]चतुःश्रुतिर्भवेत् षड्ज ऋषभस्त्रिश्रुतिः स्मृतः ।
द्विश्रुतिश्चैव गान्धारो मध्यमश्च चतुःश्रुतिः ॥२५॥
पञ्चमस्तद्वदेव स्यात् त्रिश्रुतिर्धैवतो मतः ।
द्विश्रुतिश्च निषादः स्यात् षड्जग्रामे विधिर्भवेत् ॥२६॥

मध्यग्रामे तु पञ्चमः श्रुत्यपकृष्टः कार्यः । एवं [3]स्वश्रुत्युत्कर्षादपकर्षाद्वा यदन्तरं मार्दवादायतत्वाद्वा तत्प्रमाणं श्रुतिः [4] निदर्शनं [5]त्वासामभिव्याख्यास्यामः । यथा द्वे वीणे तुल्यप्रमाणतन्त्र्युपवादनदण्डमूर्च्छने कृत्वा[6] षड्जग्रामाश्रिते कार्ये, तयोरन्य-

---

एतत्तु फल्गुप्राय प्रथमादिव्यपदेशस्य कुत्रचिदप्यनुपयोगादागममात्रसारत्वा-त्प्राधान्यम् गणनादित्वाच्च प्राधान्यदितरेतराश्रयापत्तेः।

ग्रामाश्रिता इति ग्रामस्वरूपलाभहेतव इत्यर्थः ।

ननु स्थानभेदेन षट्षष्टिः तत्कथं द्वाविंशतिरित्याह—स्वरमण्डलस्य स्वर-समूहस्य सप्तकस्य द्वाविंशत्यैव सिद्धिः । तत एव स्थानान्तरे स्वरमण्डलत्वमिति चक्रमुच्यते । तच्च परिमण्डलं (भा)ङ्गिरसकाश्यपादिभिर्मुनिभिर्दर्शितम् । श्रुतिश्च नाम श्रोत्रगम्यं वैलक्षण्यं यावता शब्देनोत्पद्यते । ननु कालाधा श्रुतिः चतुःश्रुति-कस्यापि बिन्द्वाचलङ्कारादौ मितकालावस्थानाद् द्विश्रुतिकस्यापि स्थायिवर्णप्रयोगेऽन-ल्पकालत्वादेव स्यात्, घण्टाशङ्खादि श्रुतेश्च चिरकालत्वात् । एतन्न शब्दावयवो न श्रुतिरित्युक्तमेव ।

ननु यद्युभयत्रापि द्वाविंशतिः श्रुतयः तर्हि को विभाग इत्याशङ्क्याह—तिस्रो द्वे चेत्यादि । विधिरिति श्रुतिविभाग इत्यर्थः । ॥२४॥

तत्र विनियोगेन स्वरान्विनियोक्तुमाह—चतुःश्रुतिः स्यात् षड्ज इत्यादि स्मृत इत्यन्तेन ॥२५॥

नामधेयानां विभागं आप्तप्रसिद्ध्येति दर्शयति । धैवतो मत इति नास्य कदाचन षड्जग्रामे लोप इति यावत् ।

---

१ KSS, NS चतस्रश्च [illegible]जारुषग्रामे श्रुतिनिदर्शनम् ।
२ KSS, NS omit here these verses
३ KSS, पञ्चमस्य श्रुत्यपकर्षोत्कर्षाभ्यां ।
४ KSS, NS तावत्प्रमाणं श्रुतिः ।
५ KSS चाः समभि ।
६ KSS, NS do not read

तरस्यां पञ्चमस्यापकर्षे श्रुति मध्यमग्रामिकीं कृत्वा तामेव च पञ्चमस्य श्रुत्युत्कर्षवशात् षड्जग्रामिकीं कुर्यात्। एकश्रुतिरपकृष्टा भवति। पुनरपि तद्वदेवापकर्षेत् यथा गान्धारनिषादवन्तावितरस्यामृषभधैवतौ[3] प्रवेक्ष्यत. [4]द्विश्रुत्यधिकत्वात् पुनरपि तद्वदेवापकृष्टाया धैवतार्षभावितरस्या पञ्चमषड्जौ प्रवेक्ष्यतः त्रिश्रुत्यधिकत्वात्। तद्वत्पुनरपकृष्टायाः पञ्चममध्यमषड्जा इतरस्यां मध्यमगान्धारनिषादवन्तः प्रवेक्ष्यन्ति चतुःश्रुत्यभ्यधिकत्वात् । एवमेतेन श्रुतिनिदर्शनेन द्वौ ग्रामिकयो द्वाविंशतिश्रुतयः प्रत्यवगन्तव्या ।[5]

अथ मूर्च्छनाः द्वैग्रामिक्यश्चतुर्दश—

मादावुत्तरमन्द्रा स्याद्रजनी चोत्तरायता।
चतुर्थी शुद्धषड्जा तु पञ्चमी मत्सरीकृता ॥२७॥

---

तत्र गान्धर्वे श्रुतावेवान्यया स्वरस्फुटता दायिन्यामवधातव्य इति विशाखिलाचार्यप्रभृतय ऊचु । "अनय. स्वरान्तरगता" इति, "सप्ताश्रयतया स्वगता" इति, 'अन्तरगतास्वन्या" इति गाने तु श्रोत्रसुखावहोऽनेन विभागेन प्रयोजनम्।

तदाह मातृगुप्तः—

---

१. KSS. अन्यतरी NS एकतरस्या ।

२. KSS, NS कुर्यात् ।

३. KSS, NS धैवतार्षभौ प्रविशत ।

४ KSS, does not read.

५. KSS, NS. read here following verses.

षड्जश्चतु श्रुतिर्ज्ञेय ऋषभस्त्रिश्रुतिस्तथा ।
द्विश्रुतिश्चैव गान्धारो मध्यमश्च चतु श्रुति ॥
चतु श्रुतिः पञ्चम स्यात्त्रिश्रुतिर्धैवतस्तथा ।
द्विश्रुतिस्तु निषाद स्यात्षड्जग्रामे स्वरान्तरे ॥
चतु श्रुतिस्तु विज्ञेयो मध्यम पञ्चम पुन ।
त्रिश्रुतिर्धैवतस्तु स्याच्चतु श्रुतिक एव च ॥
निषादषड्जौ विज्ञेयो द्विचतु श्रुतिसभवौ ।
ऋषभस्त्रि श्रुतिश्च स्याद्गान्धारो द्विश्रुतिस्तथा ॥
अन्तरनिदर्शनमपि व्याख्यातम् ।

हीयमाने स्वरे श्रोतुः स्वस्तवेशोऽल्पश्च क्रमः ।
श्रूयमाणे पुनर्नाद एक एवाद्य रञ्जितः ॥इति॥

तेन गाने प्रधानतयेह विवक्षिते चतुश्श्रुतिरिति साधारण्युक्ति कृतायां तु गान्धर्व-पक्षमपि स्वीकुर्वते । तिस्रश्चतस्र श्रुतय आश्रयान्तराद्वोभयात्मकतया यस्येति ॥२६॥

अथ मध्यमग्राममाह—मध्यमग्रामेत्विति । चतुश्श्रुतौ पञ्चमे षड्जस्येव द्वावमात्यकल्पौ मध्यमपञ्चमौ संवादिनौ भवत इति । मध्यमस्यापि संवादिनोऽपि सर्विदिव व्यपदेशहेतुता । पञ्चमे तु श्रुतिन्यूने मध्यमस्याप्येक संवादी षड्जस्या-पीति । इव तावत् मध्यमस्य स्वम्यदस्ति प्राधान्य (मपि) विना शुद्धत्वकृत-मिति तत्र नैव व्यपदेशो मध्यमग्राम नियमेन इति न किं चतुश्श्रुतिकेनानेकेन तावद्-प्रधानेन भवितव्यम् । पूर्णत्वात् तच्च स्वरद्वयमेव पञ्चमस्य चतुश्श्रुतिकत्वविरमा-त्काकल्यन्तरयोश्चतुश्श्रुतिकत्व विकारो न स्वभाव । तुल्य चानाक्षित्वमिति द्वावेवग्रामौ । तत्र मध्यमा तृतीयस्यामपि श्रुतौ तथाविधानुरणनव्यञ्जनात्मकनाद-निष्पत्ति यथाविध षड्जग्रामे चतुर्थ्यां माभूत् । केवलसस्याननीचस्वाम्नीचा । तल्लक्ष्यते । तत एव श्रूयमान एवासौ पञ्चमो भवति । श्रुतेर्हि कम्पो भवती-त्युक्तम् । तथा चाहु —

वेदश्रुति पवककम्पित्यकस्यः कृशप्रवातोन्मुखता प्रपन्न ।
यतिश्रुति कम्प इवैष भाति यद्वा श्रुति स्वाद्भुतरागनिष्ठः ॥२॥

तत एवाल्पनिषादगान्धार ति काकल्यन्तरयो प्रयोग । त्रिश्रुतेश्च कम्पित-कुहरितरेचितयोग । निगमोश्च विवादित्व रक्तयन्तरानुवृत्ते । एव श्रुत्यप्रकृष्टः पञ्चम इति मध्यमग्रामस्य लक्षणम् । स च पञ्चम प्रधान न तु मध्यमग्रामे कदाचिदपि लोप्यत इत्यर्थ । मध्ये तु ग्रामयोर्वैवतपञ्चमावलोप्याविति । एतदाश्रयत्वान्मध्यम-गतेरित्यमाह ।

अथ केय श्रुतिर्नामेत्याशङ्क्याह—एव श्रुत्युत्कर्षापकर्षाच्चेति । मार्दव तन्त्र्या शिथिलीकरण विपरीतत्वमायतत्व क्रियत इत्याह । श्रुते शब्दस्य श्रोत्र-ग्राह्यस्य उत्कर्षस्तीव्रता अपकर्षो मन्दता, तद्धेतुत्वान्मार्दवायते तु ▮ अपि तथोक्ते । एव तीव्रमन्दत्वहेतुभ्या मार्दवायतत्वाभ्या यदन्तर यो विशेषावबोध प्रमाण निश्चायक यस्या सा श्रुति । प्राक्तनस्य ध्वनेर्वैलक्षण्य यावता हीनेनाधिकेन वा तीव्रमन्दात्मना रूपेण लक्ष्यते सा श्रुतिरिति यावत् । यद्यपि परमाणुतोऽप्युत्कर्षापकर्षौ वा भवेद् ध्वनेर्विशेषस्तथापि नासौ गृहीतु पार्यते । अत एव यत्रोत्कर्षापकर्षौ न कौचिद् ध्वनीना ग्राह्ये ते तत्रैका श्रुतिरिति, यदाह परमाचार्य. "एकश्रुतिर्दूरात्सम्बुद्धौ" इति ।

नन्वलाबूवीणादौ तथाभूताना श्रुतीना विशेषलेशानामनैयत्य दृश्यते । तत कि नियतश्रुतिविभाग उक्त । न तु वीणायामसौ निश्चीयते (इति) । तन्न, तत्राप्यसौ

नियत एव, अन्यैस्तत्प्रग्रहणं तु मिथ्या। यत्तु दण्डविभागस्य दूरादूरत्वविभागविप्लव इति चेत् नैयत्यालब्धते, तत्रापि वामनोऽनन्तपुरुषविभागविशेषोपलक्षणलक्षणीया श्रुति नैवास्तु को विरोध अतएव लक्षणीयस्यैव विशेषस्य श्रुतिरूपतामिति ग्रहणं विशेषणमुपात्तमुत्कर्षशब्देन, प्रकरणाच्चापकर्षस्यापि लभ्यत इति। वीणाद्वये स्थिते एकस्या वीणाया तन्त्र्यामुत्कृष्टाया स्वरस्योत्कर्ष (र्षो) परस्या स्थितवीणा-तन्त्रीस्वरस्यापकर्षो लक्ष्यते। तस्मिश्च लक्ष्यमाणेऽपकर्षे द्वितीयवीणास्वरस्योत्कर्षो लक्षणीयो भवति। प्रायशस्त्वादुत्कर्षापकर्षौ लक्ष्यौ भवत। एवं मार्दवादपि वीणा-द्वयायत्तमेवेदमुत्कर्षापकर्षत्वं दर्शयितुं यथासङ्ख्य शङ्का निराकर्तुं मार्दवायत्तत्वाद्वे-त्युक्तम्। अन्ययोत्कर्षायतत्वमार्दवाभ्यामिति ब्रूयात्। प्रमाणेति वदन्न न कालकला श्रुतिर्नापि नादांशो न चायुर्न स्थान न करणमिति दर्शयति। तेन वक्ष्यमाणोच्चनीच-विभागो ध्वनिरेका श्रुतिरिति तात्पर्यम्। एवमेकस्या श्रुते स्वरूपमभिधाय श्रुति-सत्तास्वरूप यथालक्षणीय यथा भवति तथा दर्शयितुमुपक्रमते निदर्शन त्वासामिति। आसामिति बह्वीना, निदर्शनमिति निश्चततया दृश्यन्ते येनोपायेन तन्निदर्शनम्। यथा हि—प्रथमदर्शनेन रक्तयोर्जात्याजात्ययोरेव चोत्कर्षापकर्षवतोर्विशेषो गृहीत एव। किं तु परस्परविशेषदिदृक्षावधानप्रयत्नबलात्सह्विलोक्य द्वितीयस्य विलोकन पुन प्रथमस्य पुनर्द्वितीयस्येत्यनेनानुसन्धानबलेन निश्चितस्तद्विशेषप्रत्ययो जायते योऽसावभ्यधिक इति भण्यते। प्रकृतेऽपि तन्त्रीद्वये उत्कर्षापकर्षवति (कस्मिंश्चित्)विदाकृते य शब्द प्रतीयते, तस्य परस्परविवेकायावधारयिष्णोर्दोलागमनवत्पुन पुनराकर्षण तत्कृतो-ऽनुसन्धानबलेन .परम प्रत्यय स्फुट तद्गतविशेषग्राही जायेत। तन्निदर्शन-मित्युक्तम्। तत्र प्रथमा (सारणा) साधुकार ध्रुवकवीणा साधयति, द्वितीया श्रुते-रियत्ता, तृतीया श्रुतिचतुष्क बोधयति, चतुर्थी श्रुतिषट्क, पञ्चमी द्वादशकमिति ,सारणपञ्चकमिति तात्पर्यम्। अन्यस्तु व्याख्यायते। प्रमाणं आनाहपरिणाहौ, तन्त्रीणा तुल्यत्व सङ्ख्यया स्थौल्यादिना चेति केचित्। अतश्चतुर्दण्डशब्द पुनरुक्त। तस्मादयं विग्रह। तुल्यप्रमाणतन्त्र्युपपादनदण्डमूर्च्छना ययोर्वीणयोरिति। मूर्च्छनाया च प्रमाणसङ्ख्यैव मन्तव्या दण्डतन्त्र्यादिसाम्य स्वरस्वरूप न भिनत्ति केनाप्यंशेन तेन तथा कर्तव्यम्, येन द्वयेऽपि एकविंशद्भासेते। स्वराणा कस्यचिदपि वैलक्षण्य यस्य प्रतिभासनात्तत्रैका ध्रुवकस्थानीया अचलसारणा वीणायामपरस्या पञ्चमतन्त्री श्रुतिमात्र शिथिलीकार्या। तदा मध्यमग्रामो जायते। अनन्तर मध्यमादीनां सर्वस्वराणा श्रुतिमेकां पातयेत् येन षड्ग्राम एव भवति। एवं ध्रुवकवीणाया चल-वीणाया वा स्वरेषु अध्यमानेषु श्रुतिरधिका न्यूना च प्रत्यक्षेणानुसन्धानबला-ल्लक्षणीया भवति। तदाह पञ्चमश्रुतिरपकृष्टा भवति सर्वस्वरेभ्य इति शेष। सा च

प्रत्यक्षगम्या गुणवतीतिभावः । यद्यपि परमाणुमात्रेऽपि स्थानान्तरे योगिप्राय (समाधि) समाधिगम्य ध्वनिवैलक्षण्यं भवति, तथापि यद्वैलक्षण्यं श्रुतिशब्दवाच्यमिति दर्शयन् श्रुतिसङ्ख्यापरिज्ञानार्थं श्रुतिचतुष्टयोपलब्धं दर्शयति । पुनरपि च तद्वदेवाप-कर्षेदिति चलवीणायां पञ्चमोपक्रमं सर्वस्व(राणा)मेका श्रुतिं पातयेत् येषु चल-वीणागतौ गान्धारनिषादौ ध्रुववीणागताभ्यां धैवतर्षभाभ्यां समस्थानतयापकर्षत्वं गच्छतः यतो ध्रुवकवीणायां द्वाभ्यां श्रुतिभ्यां सर्वे स्वरा अधिकाः । एवं धैवतर्ष-भयोरेण गान्धारनिषादयोरन्यवीणागतधैवतर्षभसाम्यं जायते । तदेव श्रुतिरित्युक्तं भवति । अत एव श्रुत्याविश्यकहारोऽपि लक्ष्यो यो दृश्यते न स निर्मूलः । तथाहि तावन्न्यूनाधिकत्वे . . रे विनाशो भवतीति विशिष्टप्रत्युपयोगाच्छ्रुतिरिति कथ्यते । पूर्वाविघ्नु नैवमिति । एवं श्रुतेश्च स्वरूपं ज्ञातम् । गान्धारनिषादगं प्रत्येकं यच्छ्रुतिद्वयं तच्च धैवतर्षभमिश्रीभावाभिज्ञानेन स्फुटमेवोपलब्धमिति तच्छ्रुतय. प्रत्यक्षीभूता भवन्ति । पुनरपि चलवीणायां श्रुतिर्यदापकृष्यते सर्वस्वरेभ्यस्तदा च वीणागतौ धैवतर्षभौ ध्रुववीणागताभ्यां पञ्चमषड्जाभ्यां यथाक्रमं साम्यं गच्छतः । यतो ध्रुववीणायां स्वरास्तिस्रः श्रुतिभिरधिकाः । एव स्वरद्वये प्रत्येकं श्रुतित्रयं स्फुटी-कृतमिति षट् श्रुतय उपलब्धाः । त्रयो ध्रुववीणायां सर्वस्वरेभ्य श्रुतिमपकर्षणेन तद्गताः पञ्चममध्यमषड्जा ध्रुववीणागतैर्यथाक्रमं मध्यमगान्धारनिषादैः स्थानसाम्यं मिलन्ति । यतस्तस्या वीणायाः सर्वे स्वराश्चतसृभिः श्रुतिभिरधिकाः । एवं स्वरत्रये प्रत्येकं चतस्रः श्रुतयः स्फुटीकृता इति द्वादश श्रुतय उपलब्धा भवन्ति । तेन चतस्रः षट् द्वादशेति द्वाविंशते. उपलभ्यो जातः । ऋषभ (धैवता)भ्यां च गनी द्विश्रुत्यधिकाविति श्रुतिद्वयपातनेऽवश्यं तयोस्त (त्र) प्रवेशः । रिधौ च सपाभ्यां त्रिश्रुत्यधिकौ, षमपाश्च निगमेभ्यः चतुश्श्रुत्यधिका इति तावतीकानां-श्रुतीनां . . . परिवर्तिनि स्वरे प्रवेशयेत् । स तु द्विश्रुत्यधिकत्वादित्यादयस्त्रयो हेतवः प्रवेशनीय स्वरविशेषादपि व्याख्यात एव । तदाह—एवमेतेन श्रुति-निदर्शनेनेति । त . . ................. स्यादित्येव द्विश्रुतिः । एवं श्रुतेः स्वरूपमुप-लब्धम् । अत्र हे द्वयोरिति ता. श्रुतिषु त्रिषु । एवं ध्रुववीणाश्रुतेरियत्तात्र (स्फुटी-कृता) भवति । द्विश्रुतिभिस्त्रिश्रुतिचतुश्श्रुतिस्वरस्वरूप च श्रुतेरियत्ता (निर्धारणा स्फुटीकरणार्थं प्रस्तारादेव दृश्यते । तत्र दण्डप्रस्तारेण केचिद्दर्शयन्ति द्वाविंशता रेखाणाम् । अन्ये तु मण्डलप्रस्तारमाहु· । तिर्यगूर्ध्वं च पञ्चपङ्क्ता इत्येकादशोभयतो द्वाविंशति· ।

एवं ग्रामद्वयं तदुपयोगि च श्रुति सद्भावे स्वराणा श्रुतिनियमप्रामाण्यमभिधाय क्रमप्राप्तां मूर्च्छनामाह—अथेति सम्यगिति क्रमानतिक्रमेणोर्ध्वं यच्छ्रूयमाणमवरोहणं तदुपलक्षितस्वरसप्तकस्वरूपवहो मूर्च्छना । मूर्च्छना हि समुच्छ्राये पठ्यते । अत एवोपसंहारे स्वराः क्रमयुक्ता इति विशेषयिष्यति । अक्रमत्वे मूर्च्छनात्वं मा भूदिति ।

अश्वक्रान्ता तथा षष्ठी सप्तमी चाभिरुद्गता।
षड्जग्रामाश्रिता ह्येता विज्ञेयाः सप्तमूर्च्छना ॥इति॥ २८॥

आसां षड्जनिषादधैवतपञ्चममध्यमगान्धारर्षभा आनुपूर्व्या[1] आद्याः स्वराः।

[2]षड्जे चोत्तरमन्द्रा स्यादृषभे चाभिरुद्गता।
अश्वक्रान्ता तु गान्धारे मध्यमे मत्सरीकृता॥२९॥
पञ्चमे शुद्धषड्जा स्याद्धैवते चोत्तरायता।
निषादे रजनी च स्यादित्येताः षड्जमूर्च्छना ॥३०॥

अथ मध्यमग्रामे—

सौवीरी हरिणाश्वा[3] च स्यात्कलोपनता तथा।
[4]शुद्धमध्या तथा मार्गी पौरवी हृष्यका तथा।
मध्यमग्रामजा ह्येता विज्ञेयाः सप्तमूर्च्छना ॥३१॥

---

तथा हि षड्जादारोहण निषादान्त, धैवतात्पञ्चमान्त, पञ्चमान्मध्यमान्त मध्यमाद्गान्धारान्त, गान्धारादृषभान्तमृषभात् षड्जान्त, षड्जस्य द्वितीयसप्तकान्तर तारस्पृष्टो भवति।

नन्वेव सप्त मूर्च्छना, सत्यम्, पञ्चमस्य श्रुत्युत्कर्षे सप्ताद्या, तदाह ईषद्विशेष इति। पञ्चमे चापकृष्टे तथावनुवादिव्यवस्था लोप्या लोप्या स्वरव्यवस्था चान्यैव सम्पाद्यत इति भूयानेव भेदो जायते। तत्र मध्यमादृषान्त, गान्धमान्त, ऋषभात्तान्त सान्निषादान्त, निषादाद्धान्त, धास्पान्त, पाञ्चान्तमिति सप्त। तत्र नामनिर्देशो वैदिककर्माङ्गमिति दर्शितम्। तथा हि श्रूयते, 'उत्तरमन्द्रया स्वरस्य बहुतान्तिसो गाथा गायेद्" ता पत्नी वा पाटालिकाभिरूपगायन्ति" इत्यादिष्वति। षड्जग्राम इति ॥२७-२९॥

मध्यमग्रामे सप्त। तत्र प्रत्येक मूर्च्छनायाश्चत्वारो भेदाः। षड्जादिपूर्णा सप्त स्वराः, षट् स्वराः षाडव, षट् भवन्ति ये प्रयोग ते स्वराः षाडवाः। तेषु मध्यप्रयोग षाडव। तत्प्रयोगात् पञ्चस्वरा औडुविका, उक्तो तत्त्वारिणा, यान्ति

---

१ KSS षड्जग्रामे। NS आद्या स्वरा इति।
२. KSS, NS do not read it
३. NS अथ।
४ KSS चतुर्थी शुद्धमध्या तु मार्गी पौरवी तथा।
NS शुद्धमध्या तथा चैव मार्गी स्यात्पौरवी तथा।
(हृष्यका चेति विज्ञेया सप्तमी द्विजसत्तमा) ॥

यासां मध्यमगान्धारर्षभषड्जनिषादधैवतपञ्चमा आनुपूर्व्या आद्याः स्वराः।[1] मध्यमेन सौवीरी, गान्धारेण हरिणाश्वा, आर्षभेण कलोपनता, षड्जेन शुद्धमध्यमा, निषादेन मार्गी, धैवतेन पौरवी, पञ्चमेन हृष्यकेति। एवमेताः स्वरक्रमयुक्ताः सम्पूर्णाः षाडवौडुवीकृताः स्वरसाधारणकृताश्चेति मूर्च्छनाश्चतुर्दश भवन्ति। अपि च—

क्रमयुक्ताः स्वराः सप्त मूर्च्छनेत्यभिसंज्ञिताः।
[2]षट्पञ्चस्वरकास्तासां षाडवौडुविताश्रयाः[3] ॥१२॥

साधारणकृताश्चैव काकलीसमलङ्कृताः।
अन्तरस्वरसंयुक्ता मूर्च्छना ग्रामयोर्द्वयोः ॥१३॥

---

गच्छन्त्यस्मिन्निति उडुममाकाशं, तेन पञ्चसंख्या, तैः सप्त लक्ष्यन्ते। पञ्चम महाभूतं हि तत्र सा संख्या सञ्जाता। येषां कृते औडुविताः स्वराः, तेषु अवरप्रयोगः औडुवितः। तद्योगान्मूर्च्छना तथा। यदि वा नक्षत्रकक्ष्येयं संख्या औडुवी सा येषां सजाता मध्यस्थीय. पञ्चम आकाशं उडुव इत्यपि प्रयुज्यते, तथा च प्रयोक्ष्यते। कदाचिच्चौडुवे एता इति स्वरलोपे चैकदेशविकृतत्वेऽप्यनन्यतया भासमा संवासो मूर्च्छना। अन्तरनिषादगान्धारप्रयोगे तु काकल्यन्तरस्वरयोगात्साधारणकृत एव वै कारिकाद्वयेन सङ्ग्रहीतुमाह—

क्रमयुक्ताः स्वराः सप्त मूर्छनेति समाहिताः।
षट्पञ्चस्वरकास्तासां षाडवौडुविकाश्रयाः ॥ इत्यादि

सप्तेति पूर्णा इत्यर्थः। क्रमयुक्ता इति क्रमेणारोहणं तथैव स्वराणामवरोहणेन च पुनरप्याहरणमिति क्रमः। तेन युक्ताः सम्यगाहिताः। तन्यते विचित्रीक्रियते प्रयोगविस्तरो यैस्ते तानाः इति। मूर्छिताः? परिविशिष्ट नामैव भेदमप्युह्य तुरीयभेदमाह—साधारणकृताश्चेति। एवकारेण विकृतत्वेऽप्यनन्ततामाह। चकार उत्तरत्र सम्बध्यते। तल्लक्षयति काकलीसमलंकृताः। अन्तरस्वरसंयुक्ताः इति चकार एतदनन्तरं द्रष्टव्यः। उपसंहरति मूर्च्छना ग्रामयोरिति ॥१३॥

अत्र वैणिकस्योपदेशार्थमाह—द्विविधैकमूर्च्छनायाः षड्जग्रामिकया द्विविधाया मध्यमग्रामिकयो द्वितीयेन प्रकारेण युक्ताया यथासिद्धिर्भवति तथोच्यते। विविधे-

---

१. KSS NS. तत्र षड्जग्रामे षड्जेनोत्तरमन्द्रा, निषादेन रजनी, धैवतेनोत्तरायता, पञ्चमेन शुद्धषड्जा, मध्यमेन मत्सरीकृता, गान्धारेणाश्वक्रान्ता, ऋषभेणाभिरुद्गतेति। अथ मध्यमग्रामे—

२. KSS षट्पञ्चकस्वरास्तासां। NS. सत्पञ्चकस्वरास्तासां।

३. KSS, NS. स्मृताः।

द्विविधैव[1] मूर्च्छनासिद्धिः तत्र षड्जग्रामे द्विश्रुत्युत्कर्षाद्धैवतीकृते गान्धारे मूर्च्छनायामयोरन्यत्वम् । तद्वशान्मध्यमादयो यथा सत्येन निषादित्वं प्रतिपद्यन्ते । तद्वन्मध्यमग्रामे धैवतमादाय द्वैविध्य तुल्यश्रुत्यन्तरत्वाच्च सामान्यत्वम् । मध्यमग्रामे हि चतुःश्रुतिकमन्तरं पञ्चमधैवतयोः तद्गान्धारोत्कर्षाच्चतुःश्रुतिकमेव भवति । शेषाश्चापि मध्यमपञ्चमधैवतनिषादषड्जर्षभा निषादषड्जर्षभगान्धारमध्यमपञ्चमत्वं प्राप्नुवन्ति तुल्यश्रुत्यन्तरत्वादन्तरनिदर्शनमपि श्रुतिनिदर्शने प्रोक्तम् ।

---

नोत्कर्षेणापकर्षेण भाजा एकस्वरेण मूर्च्छनानां विविधानां सिद्धिः । तत्र षड्जग्रामे मूर्च्छना यावतिथी जाता तावतिथ्येव मध्यमग्राममूर्च्छना यथा सम्पद्यते तथा दर्शयति तद् षड्जग्रामेऽपि श्रुत्युत्कर्षाद्धैवतीगान्धार इति गान्धारसंज्ञया द्विश्रुत्युत्कर्षपर्यन्तत्वेनेदम् । अतस्तदेतदेव सर्वं सम्पन्नम् । स हि तदा चतुःश्रुतिको मध्यमग्रामिको धैवतो भवति । पमधनिस सगरिणि? समगस्वरा सम्पद्यन्ते । मध्यमो द्विश्रुतिको आद्यवेनिषादोऽसौ पञ्चम एव ऋषभस्त्रिश्रुतिकत्वात् । गान्धारे सपन्न स ऋषभ । सस्वरा ? मपधनिसरिसरूपत्व याति ? अत्र हेतुमाह—तुल्यश्रुत्यन्तरत्वादिति । समागमत्वमित्यनेन प्रयत्नान्तरमत्र न किञ्चिदस्तीति दर्शयति । तथा सर स्वरे ग्रामे मूर्च्छनायाश्च तुल्यश्रुत्यन्तरत्व स्पष्टयति अन्तरनिदर्शनमपीति ॥ अपि पश्चादुक्तत्वमपि सदित्यर्थः । श्रुतिनिदर्शनमिति । द्वे वीणे इत्यत्रैव मूर्च्छनाना पूर्णावस्थोक्ता ॥ तानावस्थामाह—

तत्र मूर्च्छनातानिका इति । मूर्च्छनामाश्रिता यस्तासामेव तेऽवस्थाविशेषा । तत्र सरिगमप इत्येषामन्यतमेन हीना षट् (स्वर) मूर्च्छना सप्त चतुर्भिर्गुणत्वे अष्टाविंशतिस्ताना । सरिगप इत्येतेषामन्यतमेन हीना मध्यमूर्च्छना एकविंशतिस्ताना इत्येकान्नपञ्चाशत् षाडवा । औडुविकास्तु षड्ग्रामे एकविंशति अन्यत्र तु चतुर्दशेति पञ्चत्रिंशत् । उभयतश्चतुरशीति वीणाया यदा तानक्रिया तदास्तोभ्य स्वरकम्पोत्व क्रियते यदि तावत्कौशल न स्पृश्यते यदि वा शिथिलीकरणे समस्वरसाम्य पीडनेन चोत्तरस्वरसाम्य नीयते । तदाह द्वि (त्रि) विधेति तानाधक्रिया उपाय इत्यर्थः । अपरस्य ऋषभापेक्षया षड्जस्य विप्रकर्ष । पीडनमृषभतापादनम् । तस्यैव निषादापेक्षयोत्तरमन्द्राया निषादतापादन वदन यो बलवान् प्रयोगे भवति तत्र चलतोप्यन्तर्भाव स हि धृष्टतामेव व्रजेत् ।

---

1　KSS, NS तत्र द्विश्रुतिविप्रकर्षात्, गान्धारे धैवतकृते मूर्च्छनायामयोरन्यतरत्व, (NS अन्यत्र) षड्जग्रामे । मध्यमग्रामेऽपि एव क्रमात् द्वैविध्य भवति, तुल्यश्रुत्यन्तरत्वाच्च (सामान्यत्व) श्रुत्यन्तर तद्वत् (चतुःश्रुतिकमन्तर) पञ्चमधैवतयो तद्गान्धारोत्कर्षाच्चतुःश्रुतिकमेव (K अन्तर) भवति ।

अथ मूर्च्छनाश्रितास्तानाश्चतुरशीतिः। तत्रैकान्नपञ्चाशत् षट्स्वराः पञ्चत्रिंशत् पञ्चस्वराः। लक्षणं तु [1]षट्स्वराणां सप्तविधं षड्जर्षभनिषादपञ्चमहीनाश्चत्वारः षड्जग्रामे। मध्यमग्रामे तु षड्जर्षभगान्धारहीनास्त्रयः। एवमेते [2]षट्स्वराः सर्वासु मूर्च्छनासु क्रियमाणा भवन्त्येकान्नपञ्चाशत्तानाः। पञ्चस्वराणां तु पञ्चविधमेव। लक्षण—षड्जग्रामे षड्जपञ्चमहीनः, ऋषभपञ्चमहीनः निषादवदृषभगान्धारहीन इति त्रयः[3]। मध्यमग्रामे तु गान्धारनिषादवदृषीनः, ऋषभधैवतहीन इति द्वौ[4]। एवमेते पञ्चस्वराः सर्वासु मूर्च्छनासु क्रियमाणास्तानाः पञ्चत्रिंशद्भवन्ति[5]।

द्विविधा च तानक्रिया तन्त्र्यां [6]प्रवेशान्निग्रहाच्च। तत्र प्रवेशन[7] मधुर[8]स्वरविप्रकर्षादुत्तरमार्दवाद्वा। निग्रहस्त्वसंस्पर्शः [9]मध्यमस्वरेणैव तु मूर्च्छनानिर्देशः कार्यो भवति अनाशित्वान्मध्यमस्य निग्रहे पर्यग्रहेवा। इदं च प्रयोक्तृश्रोतृसुखार्थं च मूर्च्छनानानात्वम्। मूर्च्छनातानप्रयोजनमपि स्थानप्राप्त्यर्थम्। स्थानं च त्रिविधं पूर्वोक्तलक्षणं काकुविधाविति।[10]

---

ननु त्रिषु स्थानेषु सप्तस्वरा इत्युक्त काकुविधाने। (तत्र कतम स्वरसप्तकमवलम्ब्य) मूर्च्छना कार्येति ये चोदयन्ते तान्प्रत्याह मध्यमस्वरेण स्थिति जाताविकवचनम्, मध्यैरेव स्वैरित्यर्थः। वैणग्रहण शारीरे अप्रगीतस्यापि स्थानलाभार्थम्। अन्ये तु वीणाया... ... ... .. ... ...प्यसम्भवात् मध्यस्यैव च स्वरे सभाव्यमाने दोषे मूर्च्छेति नोपयोगीति मन्यमाना वैणवेनेति पठन्ति। कार्य इति करणाशो भवतीत्यर्थः। अनाशितान्मध्यमगतेरिति स्वरसप्तकस्येति विशेषः। निग्रहो मन्द्रक्रिया तारक्रिया प(र्यग्रह) इति केचित्तेन मन्द्रतारक्रिये वक्ष्येते। मध्यमापेक्षया उभयक्रिया सामर्थ्येत्युक्त भवति। निशेषेण ग्रह सर्वस्थान-

---

१ KSS पाडवादीना।
२. KSS. अपि पाडवासु।
३. KSS., NS वयस्तामा. षड्जग्रामे।
४. NS. द्वौ तानौ। एव। KSS द्वौस्तानाविति।
५. KSS., NS षड्जग्राम एकविंशतिर्मध्यग्रामे चतुर्दश। एवमेते एकत्र गम्यमानाश्चतुरशीतिर्भवन्ति।
६. KSS., NS. प्रवेशो।
८. KSS , NS. परस्वरप्रकर्षात्।
९. KSS., NS. मध्यमस्वरासंस्पर्श।
१०. KSS. विधाने।

प्राप्तिः । परित. समन्तादग्रहः सर्वस्थानानामप्राप्ति तेन पूर्णशारीरकस्येतरस्य वा मध्यमसप्तलाभस्तदस्तीत्येव मन्ये चतुर्थस्वर एव कण्ठ्यो मध्यमात्रेत्यपरे। अपूर्णस्वराया वीणायामवश्यभावी मध्यमसप्तक.। किं च यदा षड्जलोपेन तानक्रिया षड्जग्रामे कृता तदा कथं मूर्च्छना सख्याज्ञानमित्याशङ्क्याह—मध्यमस्वरेणेति। निग्रहोऽस्पर्शो पर्यग्रहे वा ? प्रवेशे सत्यपि मध्यमस्वरो यत अविनाशी अतस्तदपेक्षया ज्ञायते। कुत स्थानात् षड्जे लुप्त इति मध्यद्विचतुर्थेन षड्जेन भवितव्यमिति न तानलाभः। तदाह दत्तिल.—

एवं कृतेऽपि तानत्वे गणयित्वा विनाशिनम्।
विद्यान्नैतावतिथ्येषा मूर्च्छनेत्यवधारयेत्॥ (१-३७)

ननु प्रथमायां सप्तम्यां च मूर्च्छनायां षड्जे लुप्ते रिगमपधनिरूप भवतीति द्वयोर्न विशेष। सत्य, लेख्यभेदो नास्ति। एवं न पुनरस्त्येव तथा हि—यदि तावत् सरिगमपधनि इति मूर्च्छनानन्तर निसरिगमपधानीति मूर्च्छना निषादेन पूर्वकेणैव क्रियते, नतु सप्तकान्तर गतस्य स्वरस्यानुप्रवेश। तदानीं षड्जलोपे प्रथमासप्तम्योर्न भेद:। न च तदा दत्तिलाचार्यकथितं क्रमरूपत्व निर्वाहकम्। तानत्वापत्तेश्च मूर्च्छनासु भूयसी स्यात्। यदा तु सरिगमपधनीति प्रयुज्य द्वितीयमूर्च्छना षड्जाधरवर्तिना मन्द्रसप्तकगतेन निषादेनारभ्यते निसरिगमपध इति पुनर्निषादाधोवर्तिना धैवतेन, ततस्तदधरेण पञ्चमेन यावदृषभेण, तदा मन्द्रसप्तके क्रमेणाक्रम्यमाणे मध्यसप्तके वापचीयमाने मन्द्रगतेषु षड्जपर्यमादिषु निषादान्तेषु श्रुतेषु सप्तमी लुप्तमूर्च्छनेति ज्ञायते। मध्यगतेषु तु षट्सु प्रथम तारसप्तकेन मूर्च्छनाया क्रमेण...म .. यरोहत यदाप्येवमेव क्रम सगरिमपनि इति प्रयुज्य षड्जाद्य स्थान एव निषादो धैवत. पञ्चमो मध्यमो गान्धार ऋषभ इति क्रम.। तदा यद्यपि सप्तकान्तरस्पर्शो नास्ति तथा षड्जस्य स्थिरस्थाने तदुपरिगतस्थानादेवर्षभे प्रयुक्ते रिगमपधनीति श्रुते प्रथममूर्च्छना लुप्तषड्जे...ति सुज्ञातमेव। यदा तु षड्जस्थानमृषभेण क्रान्त तदाधरवर्तिन. षड्जस्य सम्भावनैव नास्ति। रिगमपधनीति श्रुते आनाय्यैव तारषड्जेनात्र भवितव्यम्। स च न श्रूयत इति सप्तमीय मूर्च्छना लुप्तषड्जेति। अत्र च पक्षद्वयेऽपि क्रमरूपतासिद्धस्थानप्राप्तिश्च स्फुटैव। निग्रहश्च मध्यमग्रामे पञ्चमस्य श्रुतिहानेः। एव पञ्चमेन ऋषभ इत्यस्य पर्यग्रहण, असवादित्वादस्मिन् स पर्यग्रह- षड्जग्रामस्तत्रोभयत्रापि न मध्यमो विनाशी। मध्यमादूगते प्राप्तिरस्य पञ्चमस्य, तस्य निग्रहे मध्यमग्रामे नाश। तथा पर्यग्रहे मध्यमग्रामे अनाशः षड्ग्रामे नातिन्यूनो नात्युच्चमध्यमागतित्रिश्रुतिस्तस्माद्विनाशः।

ननु ऋषभस्याप्यनाशित्व स्यादित्याशङ्क्याह—निग्रहे निषादस्य ग्रहणे कर्तव्ये यस्त्रि श्रुति. स धैवत इति यावत्। तदुक्त दत्तिलाचार्येण—

पञ्चमं मध्यमग्रामे षड्जग्रामे तु धैवतम् ।
अनाशिनं विजानीयात्सर्वत्रैव तु मध्यमम् ॥ (१-२०)

ननु रि इति व्यञ्जनं कथं स्वरस्यानुकारः । ननु षकारादयोऽपि किंरूपाः । ननु ऋषभशब्दस्य नायमाद्यः तर्हि षड्जशब्दस्य सकारो न प्रथम इति । सङ्केतमात्रं हि तत् । रिस्त्वित्युभयथाप्यदोषः ।

अन्ये तु दत्तिलादिमतं मुनेरिष्टं, मध्यम एवालोप्योऽस्य मध्यम इत्याचक्षते । ननु च मूर्च्छनास्तावत् जात्यतिप्रह्माषावत्न प्रयोगोपयोगिन्यः, तानाश्च कुतप उपयुज्यन्ते, तानोक्तस्वरातिरिक्तानामपि जातिषु लोपाभावात् स्पष्टत्वात् । तथा हि षड्जमध्यमा षड्ग्रामे जातिः, तस्या षाडवो गान्धारेण । न च षड्जग्राम तानेषु गान्धारो पठित, सरिनिपानामेव लोप उक्तत्वात् । तानेषु च परिगणितेषु पञ्चमस्य मध्यमग्रामेऽथवा धैवतस्योभयग्रमस्यालोपित्वं पुन. किमर्थम् ? कूटतानाश्च ये प्रदर्शिता पूर्वं पञ्चसहस्राणि त्रयस्त्रिंशच्चेति, तथैतेषा प्रस्तारो नष्टोद्दिष्टे सख्या चेति वितायाचार्य. कथिता. । तत्र नष्टोद्दिष्टसख्यापरिज्ञानयोरवगमे करणमुपदर्शितम् । तस्य च लक्षणं यथा "अन्त्यस्यैकान्त्याङ्कैर्दसंख्याम्" इति । शाङ्करोक्तकरणास्तु साधारणा इति टीकाकारैर्दर्शिताः ।

अथ नष्टोद्दिष्टज्ञानार्थश्लोका. पूर्वमुद्दिष्टम् ।
मूलक्रमात्तस्थानं यत्पूर्वेण तदपेक्षया ।
क्रान्तं यावतियेनैव लोष्टं तावतिथं त्यजेत् ॥
अधःस्थानं तदङ्कस्थाश्चौतैरङ्कैः परिस्थितः ।
पुनर्निर्विष्ट एतस्य पूर्वान्स्था—तथा वदेत् ॥
एवमुद्दिष्टो नैव संख्या नष्टक्रमः पुनः ।
ज्ञायते संख्यया तत्र मौलिकाङ्कोपरिस्थया ॥
एककोष्टक एवाधःस्थाने यावतिथस्ततः .
तस्य तावतियेनैव पूर्वेणाक्रान्तिमाविशेत् ॥
अनेककोष्टके स्वर्षे संख्यापा. प्रतिबोधकः ।

ते चेह न दर्शिता इति सर्वं मनीकृत्य मुनि. साधारण वचनमाह—प्रयोक्तु श्रोतृसुखार्थं च मूर्च्छनातानभानात्वमिति । यत्तावदुक्तं मूर्च्छना तानानां कुत्रोपयोग इति तत्रेदमुक्तं मूर्च्छनार्थं न तानरूप, यदुक्तं प्रयोक्तॄणा सुखार्थं, यतस्ते श्रोतार ग्रामभार्य-विद इत्यर्थ. । एतदुक्तं भवति—मूर्च्छनाना यद्यपीहायमे नास्त्युपयोग, तथापि स्पष्टसामक्रियाया वा स्फुट एवोपयोगः । तथा हि दर्शितं, "उत्तरमन्द्रया तिस्रो गाया." इति, तानानां, "अग्निष्टोमीयमाद्यं स्याद् द्वितीय वाजपेयिकं" इत्यादिनामनिरूपण-द्वारेणैव वायुपुराणादौ यज्ञोपयोगी सामगगाथोपयोगः प्रदर्शित. । अग्निष्टोमिकसामेन

साधारणमिदानीं व्याख्यास्यामः[1] तत्र साधारणं नामान्तरस्वरता, कस्मात्, द्वयोरन्तरे भवति यत्तत्साधारणम्[2]। यथा—

छायासु भवति शीतं प्रस्वेदो भवति चातपस्थस्य।
न च नागतो वसन्तो न च निःशेषः शिशिरकालः ॥३४॥

इति कालसाधारणता[3]। तत्र द्वे साधारणे जातिसाधारणं स्वरसाधारणं च।

---

शिव स्तुत्वा तत्फलमिति च प्रयोक्तुरदृष्ट श्रूयते। तथा "सदस्यमग्निष्टोमसाम शृण्वत पातकैर्मुच्यते लोकान् जयति" इति,

दक्षप्रोक्त पठेद्यश्च शृणुयाच्छुद्धपङ्क्तया।
प्रायहं सन्ध्ययोस्तौ तु रुद्रलोकं गमिष्यत ॥

इति च प्रयोक्तॄणां चादृष्टद्वारेण सुखोत्पादक प्रत्युपयोगो दर्शित ऋग्गाथा सामोपयोगादेव नारदीयशिक्षाया पुराणादौ च तानपर्यन्तमेव स्वरमण्डल दर्शितम्, मूर्च्छनाना च यन्नानात्व तदुपनियमद्वारेण दर्शित तच्छ्रोतृसुखलक्षण मर्थं प्रयोजन कर्मभूत प्रयोक्तुमुक्त तच्छोभम्। एतदुक्त भवति—यद्यपि जातिषु षाडवौडुविका नियता एव गणितास्तथा च रागभाषाविवेच्य श्रोत्रसुखजनकमुन्मूलमित्तु स्वातन्त्र्येण स्वरलोपो मध्यमवर्जं प्रदर्शित।

यच्चोक्त कूटताना किमिति नोक्ता इति। तत्र कूटत्व तावन्न किंचित्प्रयोक्तृ-सुखार्थत्व तेषामपि समानम्। केवल परिगणितचतुरशीतिन्यायेन, नियते कर्मणि विशिष्टदेवतापरिपोषणाय। एव मा भूदुपयोग सामान्यात्मना तु दृष्टोपयोगोऽस्त्येव। यच्चोक्त गणना न कृतेति तत्रानन्त्यात्का गणना। यदाह—

'अनन्ता वाङ्मयस्याहो गेयमध्ये च विशेषतो इति (माघ–II–3) (पूर्णस्वराणां षाडवौडुविकादीना) अन्योन्यमेलने द्वात्रिंशत्यादिक्रियमाणे वाचस्पतेरप्यशक्य परिगणनम्। स्यादेतत्—तेन किं प्रयोजनमिति। तन्न, यतस्तदपि सम्यक्प्रयोक्तरि सति श्रोतॄणा तु सुखजनकमेव। युक्त चैतदिति दर्शयति मूर्छना तानप्रयोजनमपीति। मूर्च्छना ताना ऋग्गाथासामस्य आनीय यदि प्रकर्षेण योजन स्थानाना विशेषरक्ति-दायिना प्राप्त्यर्थं... .. ... .. ...द्वितयद्रुजस्थान सञ्चरणं स्वातन्त्र्यलाभे तदुदीर्यमाणे स्वरप्रयोग श्रोतॄणा सुष्ठुतम रञ्जको भवति। प्रयोक्तॄणां च स्वय शृण्वता सुखं जायते। श्रुतित्वलाभद्वारेण... ... ... ...

---

१. KSS, NS. वक्ष्याम।
२ KSS द्वयोरन्तरस्य तत्साधारणम्।
३ KSS साधारण.।

स्वरसाधारणं काकल्यन्तरस्वरौ । तत्र द्विश्रुत्युत्कृष्टो[1] निषादः काकलीसंज्ञो[2] भवति । तद्वद्गान्धारोऽन्तरस्वरसंज्ञो भवति ।

जातिसाधारणमेकांशानामविशेषाज्जातीनां समवायात्प्रत्यक्षं लक्षणसंतानमिति । स्वरसाधारणं द्विविधं द्वैग्रामिकं कस्मात्[3] साधारणोऽत्र स्वरविशेष इति कृत्वा षड्जग्रामसाधारणमुच्यते । एवं मध्यमेऽपि[4] । अस्य तु प्रयोगसौक्ष्म्यात्कैशिकमिति द्वितीयं नाम निष्पद्यते[5] । कस्माच्चात्र काकलीसंज्ञो भवति विकृतत्वाच्चानंशाल्पत्वोपदेशाच्च सप्तस्वरो नान्यो निषादवानेव । यथा हि कण्ठः स्तनानामन्यतमत्वात्संज्ञितस्तथा निषादः काकलीसंज्ञो गान्धारश्चान्तरस्वरसंज्ञो भवति । भवतश्चात्र—

> अन्तरस्वरसंयोगो नित्यमारोहिसंश्रयः ।
> कार्यो ह्यल्पो विशेषेण नावरोही कदाचन ॥३५॥
> क्रियमाणोऽवरोही स्याद्दल्पो वा यदि वा बहु ।
> जातिरागं श्रुतिं चैव निहन्यादन्तरस्वरः[6] ॥३६॥ इति ॥

... पूर्ण स्वसम्यक् निर्वाहो ग्रामरागभाषादौ । पूर्णत्वे सम्पूर्णक्रमाक्रमयुक्तमूर्छनाप्रयोगे झटिति रागप्राप्तिः अपूर्णत्वे तु रागतानप्रयोगे वर्जनम् । प्रत्येक ग्रामरागादौ सर्वेषां मूर्छनादीनां बहुधा प्रयोग इति मूर्छनानानात्वमुक्तम् । न हि इयत्ता काचिदिति स्थितम् ।

स्थानप्राप्त्यर्थमित्युक्तं तत्र किमिदं स्थानं नामेत्याशङ्क्याह—स्थानं त्रिवर्ति । पूर्वमुक्तं पूर्वोक्तं विस्पष्टम् । यत्त्रिविधत्वेनोक्तं काकुविधानेन तच्च षट्षष्टिभेदसंक्षेपतस्त्रिधा सदृशाङ्गालङ्कारयोग प्रयोक्ष्यते ।

एवं मूर्छना तानानां स्वस्थानं व्याख्याय साधारणकृतं नाम बलेन तद्व्याख्यानमुपक्रमते साधारणमित्यादि । अन्तरे भवं अन्तरं स्वस्थानच्युतपरस्थानसंक्रान्तः स चासौ स्वरश्च न तु विस्वरः तस्य भावः साधारणमिति । भावप्रधानो

१ KSS NS प्रकर्षात् ।
२ KSS NS न षड्ज ।
३ KSS NS षड्जग्रामे षड्जसाधारणं मध्यमग्रामे मध्यमसाधारणमित्यधिकः पाठः ।
४ KSS NS मध्यमग्रामेऽपि साधारणत्वम् ।
५ KSS NS omit this
६ KSS NS नयते त्वन्तरस्वरः ।

निर्देश साधारण्यमिति यावत् । तथा अन्तरे भव जातिविभागसाधारणत्वात्स्वरा यत्र प्रयोगे तद्भावो जातिसाधारणं स्वस्य सामान्यलक्षणम् । कस्मादिति किमत्र लौकिकेऽनुगमो अस्ति तेनेति प्रश्न अस्तीत्याह द्वयोरन्तर इत्यादि । छायायामुपविष्टस्य शीतं भवतीति वसन्तस्य पूर्णत्वं, आतपे स्वेद इति शिशिरस्य स्वरूपाप्रच्यवनम् । एतदेवाह न च नागत इति । अनागमनमात्र व्यावृत्तिर्न तु पूर्णतेत्यर्थः । निश्शेष इत्यनेन नष्ट न वा सपूर्ण इत्यर्थयो स मध्यवर्तीकाल साधारण, तद्वद्द्वयो स्वरयो मध्यवर्ती सस्वरसाधारण ॥३४॥

एतमेव विभाग दर्शयति द्वे इति । तेन तानश्रुतिसाधारणं यदेके प्राहुस्तन्नसोढं भवति । निषादस्य षड्जग्रामे षाडवौडुवितत्वेन लोप, गान्धारस्य त्वौडुवितत्वेन, विपर्ययो मध्यमग्रामे । तद्विशेषनाश्रयणे लोप्यत्वमात्रात् । यदि तानसाधारण तन्न, किञ्चिदेतेनोक्तं स्यात् । श्रुतिसाधारणे न किञ्चिन्निषादगान्धारव्यतिरेकेण हि नान्यपरो लोपदशाया श्रुत्युत्कर्षं भजते ।

प्रथम व्याचष्टे तत्र साधारणमिति । एतौ क्रमेण लक्षयति श्रुत्युत्कृष्टो निषाद इति । तत्र सज्ञाग्रहणे भेदमाह—व्यवहारार्थमिमे भिन्ने सज्ञे परमार्थतस्तु द्वयोरपि तीव्रतरत्वात्काकलीत्वम् यद्वक्ष्यति "कलत्वाच्च काकली सज्ञा" (ब) इति । द्वयोरपि चान्तरस्वरत्वम्, यदुक्त—'साधारण नामान्तरस्वरता'' इति । द्वितीय लक्षयति जातिसाधारणमेकाशानामविशेषादिति । एकोऽशो यासा जातीना तासा यो विशेषहीन प्रयोग स वाद्यशानुलपनलक्षणान्तरमार्गरूपस्तुल्य । कथमलभ्य जातिसाधारणे स्थित नत्वेव तस्मिन् भागो जात्योरभेद एवकोऽसाधारणेत्याशङ्क्याह जातीना तु समवायाप्रयशलक्षणतज्ञानमिति । ग्रहन्यासादिदशकस्य य समवायस्ततो हेतोर्जातीनामशे विनिश्चेऽपि लक्षणमसाधारण शक्य ज्ञातुम्, यदाह न्यासान्तरमार्गो तु विशेषकाविति । तुर्व्यतिरेकमाह, तेन नाभेद इति भाव । ग्रहादिभागाना लक्षणपरिज्ञान जातिसाधारणमिति केचिदेव प्रघट्टके व्याचक्षते स्वरसाधारणद्विविधमित्यादिना । काकल्यन्तरयोर्ग्रामद्वये प्रयोगमनुजानाति, निषादगान्धाराहयत्व दशाया नामान्तर च विधत्ते । स्वरद्वय षड्जग्रामे, षड्जसाधारण, अन्यत्र मध्यम साधारणमिति । तच्चेव फल्गुप्राय लक्ष्यते, मूर्च्छना हि स्वरसाधारणकृता भवतीत्युक्तं किमनेनाभ्यधिकमुक्त भवति । अन्ये तु ग्रामद्वये व्यवस्था प्रदर्शयितुमिद, तथा हि, षड्जग्रामे षाडवकरत्वेन निषाद काकली, औडुविते गान्धारोऽन्तरस्वर इति षड्जसाधारण मध्यमग्रामे विपर्ययेणेति प्राहु । तदनेनापि किञ्चिदाशयित भवति । यच्चेदमुच्यते यस्य कौशिकमिति तद्यदि काकल्यन्तरयोस्तयापि निषादगान्धारगतस्य ग्रामभेदे षाडवौडुवितप्रकारस्य तदुचितप्रकारस्य तदुभयथापि षड्जकैशिक्या पूर्णस्वराया कैशिक्या च ऋषभधैवतलोपोपजातषाडवौडुविताया न दृश्यते ।

शुद्धभिन्नगौडमालवषड्जकैशिकानामपि कौशिकीजातिसम्भवमुद्देशा ...भ्या समयाश्च काश्यपमुनिप्रभृतिभिश्च दर्शितम्। तस्मादित्यमेतदित्यरमत्परमगुरव उत्पलदेवपादा मन्यन्ते इह सार्वतिस्रो द्वे चतस्र इत्यादिना स्वस्थानस्वरूपमुक्तं तच्चरा... ... ... त्वात्पारमार्थिकं प्राकृतरूपमुच्यते। षड्जश्चतुःश्रुतिक इत्यादौ यावन्निषादो द्विश्रुतिरिति यथा सपूर्णावयव प्राणिना रूपं तेषामेव त्वन्यथा रूपद्वयेऽपि शुद्धं रूपं छिन्नपुच्छमिव शुनो द्विपुच्छत्वं वा तत्र गान्धारनिषादयोर्विवाविवादित्वात्तदुपक्रमे च विकृतिरुक्ता च, तद्विकृत्या च षड्जमध्यमावपि विकृतौ, पञ्चमस्य त्रिश्रुतिकाभिधाने दर्शितैव विकृतिः। तद्द्वारेण धैवतस्यापि ऋषभस्य तु विकृतिर्वक्तव्या। एतदेव दर्शयति स्वरसाधारणं द्विविधं द्वैग्रामिकमर्मिति। यदेतत्काकल्यन्तरलक्षणं द्वयोरपि ग्रामयो स्वरसाधारणमुक्तं तद्द्विविधम्। अत्र पृच्छति—कस्मात्। अथ भाव। यदि तत्काकल्यन्तरभेदाद् द्विविधत्वं तर्हि पूर्वमेवोक्तमिति, किं पुनरुक्त्या। अथान्यत प्रकारा द्विविधता स तर्हि वक्तव्य इति, इतरोऽपि स प्रकारमाह स्वरसाधारणमत्र स्वरविशेष इति कृत्वा षड्जसाधारणमुच्यते इति। यदा निषाद श्रुतिमेकामुत्कृष्यते ऋषभश्च, तदा निषादस्त्रिश्रुतिः, षड्जो द्विश्रुतिः, ऋषभस्तु चतुश्श्रुतिरिति, तदा षड्जसाधारणो द्वाभ्या निषादर्षभाभ्यामुपजीवितो यत सम्पन्न तत षड्जसाधारणम्।

गान्धारो यदैका श्रुतिमुत्कृष्यते पञ्चमश्च मध्यमग्रामिको मध्यमश्रुतिमेका गृह्णाति धैवतस्तु चतुश्श्रुतिक एव मध्यमग्रामतायां हानि, तदा मध्यमस्योपजीव्यत्वान्मध्यमसाधारणम्।

ननु निषादगान्धारयोर्द्विश्रुत्युत्कर्षणे साधारणमुक्तं कथमधुनैकश्रुत्युत्कर्ष इत्याशङ्क्याह साधारणमस्येति। स्वरस्वय (?) प्राक्तनरूपाद्विशेषो वैलक्षण्यात्मा स एव स्वरसाधारणताया प्रयोगः। अनेन चैतत्सूचयति सर्वथा स्वराणामुच्चनीचत्ववैचित्र्यरूपोदितविशेषाकेवलं गान्धर्वे नियम (म) दृष्टसिद्ध्यर्थं एकश्रुतित्व स्वराणां दर्शितम्, वैचित्र्यान्तरं तु रागभाषादौ लक्ष्ये दृश्यत एव। तथा च वृद्धकाश्यप —

काकल्यन्तरयोगेन चतुस्त्रिद्व्येकतःश्रुतीन्।
स्वरान्सर्वान्प्रयुञ्जीत रागभाषासु सर्वथा॥
स्वरा षड्जादय सप्त तथा चोत्कृष्टपञ्चमः।
अथ धैवततश्चान्यः काकल्यन्तरसंज्ञकौ॥
षड्जमध्यमगान्धाराश्चत्वार इति सर्वथा।
जातिष्वेते प्रयोक्तव्याः स्वराः पञ्चदशैव तु॥

जातीरिदानीं वक्ष्यामः ।

> स्वरसाधारणगतास्तिस्रो ज्ञेयास्तु जातयः ।
> मध्यमा पञ्चमी चैव षड्जमध्या तथैव च ॥३७॥
>
> ग्रासांशास्तु[1] विज्ञेयाः षड्जमध्यमपञ्चमाः ।
> यथा स्वदुर्बलतरन्यत्रासान्पञ्चमे[2] तथा ॥३८॥
>
> [3]जातयोऽष्टादशेत्येव ब्रह्मणाभिहितं पुरा ।
> तास्त्वहं वर्तयिष्यामि ग्रहांशादिविभागतः ॥३९॥

---

अस्य लक्ष्येऽसंभवं दर्शयितुं सञ्ज्ञां करोति अस्य तु प्रयोगस्य सौक्ष्म्यादिति । तुल्यबधारणे, अस्यैव षड्जमध्यम साधारणस्येत्यर्थः । सौक्ष्म्यमैविक्त्यनिपुणसाध्यता च । कैशिकमिति सुकुमारतूर्यप्रयोगात्मिका हि कैशिकी सा विद्यते यत्रेत्याकारः । कशीर्वा कैशिकम् । पातामसौक्ष्म्याद्येति पृथक्प्रयासोप तत्र षड्जगान्धार्याश्च षड्ज-कैशिकी जातेति । मध्यमग्रामाशोऽप्यस्या उपजीव्यम इति चतुःश्रुतिकधैवत प्रतिपद्यते । दौर्बल्याच्च ऋषभधैवताभ्यां चतुश्श्रुतिकाभ्यां भवितव्यं यथाकल्प निषादगान्धारा-स्याम् (।) वक्ष्यति हि—

दौर्बल्यं चात्रकर्तव्यं धैवतस्यर्षभस्य च । इति (२८–) स्वयं चैव षड्ज-ग्रामेणेति पञ्चमेन चतुःश्रुतिकेन भवितु युक्तमिति । कैशिकप्रयोगे षड्जसाधारण-गमनायोगात् षड्जकैशिकीकैशिक्यपि स्वयमध्यमग्रामागा, तेनात्र चतुश्श्रुतिर्धैवतः, ऋषभोऽपि चतुश्श्रुतिः, दौर्बल्य ऋषभस्यात्रेति वक्ष्यते. सोऽप्यत्र चर्षभधैवतयोरिति चतुश्श्रुतिकतया भाव्यम् । धैवत्यार्षभीवर्जाश्च सर्वजातयोऽसाधारणमिति षड्ज-ग्रामानुप्रवेशश्चतुश्श्रुतिकत्ववशात्पञ्चमेन भवितव्यमिति कैशिकापरपर्याय षड्ज-मध्यमसाधारणं तत्स्थानमप्यस्ति, तद्गतातिदेशात्तु कैशिकभिन्नकैशिकादिग्रामरागे-ष्विति सर्वं सुस्थम् । एतदेव मतङ्गाचार्यादिभिर्ग्रामसाधारणमित्युक्तम् ।

श्रुतिसाधारणं तु सर्वस्वराणामनियतश्रुतिकत्वम् । ननु निषादस्य काकलीति कस्मान्नाम, आह कलत्वाच्चेति च चकार ईषदर्थे नेको सादेश (?) ईषत्कलस्तीव्र-भावोऽस्मिन्निति काकली इति, यदि वा भौरादित्यादीकारः काकलीसञ्ज्ञी इति पाठे निषाद एव षड्जत्वं नाप्राप्त छिन्नपुच्छ एव स्वेच । अत एव विकृतत्वेन प्राधान्या-भावादनयाः । ननु सप्तम्यो माभूत्, अन्यो निषादस्तु विकृतोऽसौ न षड्ज इति । किमत्र कारणम् । आह—ग्राप्तोपदेशाच्चेति । चकारो हेत्वन्तरमतिकार द्योतयति । पूर्वं हि निषादधीप्रकृढाया तद्भूदिर्जातेतिप्रायस्यात्तेनैव व्यपदेशः । अत्र दृष्टान्तमाह

---

१. KSS. मङ्गानि NS. मङ्गा. ।
२. KSS NS. स्व दुर्बलतरा न्यस्ता वा पञ्चमी ।
३. KSS. does not read.

*षाड्जीचैवार्षभी चैव धैवत्यथ निषादिनी ।
षड्जोदीच्यवती चैव तथा वै षड्जकैशिकी ॥४०॥
षड्जमध्या तथा चैव षड्जग्रामसमाश्रया ।
अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रिता ॥४१॥
गान्धारी मध्यमा चैव गान्धारोदीच्यवा तथा ।
पञ्चमी रक्तगान्धारी तथा गान्धारपञ्चमी ॥४२॥
मध्यमोदीच्यवा चैव नन्दयन्ती तथैव च ।
कर्मारवी च विज्ञेया तथान्ध्री कैशिकी मता ॥४३॥
स्वरसाधारणगतास्तिस्रो ज्ञेयास्तु जातयः ।
मध्यमा षड्जमध्या च पञ्चमी चैव सूरिभिः ॥४४॥
आसामंशास्तु विज्ञेयाः षड्जमध्यमपञ्चमाः ।
यथास्वं दुर्बलतरं व्यत्यासात्त्वत्र पञ्चमी । ४५॥

---

लवणरस एव तीव्र क्षार इति कथ्यते चाणक्यादिभिस्तु मधुररस मध्यमादृषभगतो वान्तरास्य प्रयोगादान्तरस्वरत्वम् ।

अथात्र साधारणे उक्ते शेष कारिकावल्यामाह—भवति चात्रेति । साधारणे अन्तरस्वरस्य आरोही मध्यमस्य संश्रित्य तत ऋषभ जिगमिषुणा यदि आन्तरस्वर प्रयुज्यते तदासौ सम्यगछ्रुतो योगी भवति । सदल्पकार्यस्तु विषय एव तस्य विनियोग । नावरोहीति तस्याबाधिति शेष. । तेनान्तरस्वरे प्रयुक्ते म नावरोही ऋषभः, स मे...न योज्य इति । अन्तरस्वरेण संयोगो यस्य मध्यमस्य तादृशप्रयुक्त-स्तदा आरोहणमेवकार्यम् । मध्यमादन्तरस्वर प्रयुज्य मध्यम अन्यत्र वा आरोहणमेव कार्यम् ॥३५॥

नावारोहणं कदाचिन्नावरोहीति यदुक्त तदेवदृढयति क्रियमाणोऽवरोहीत्यादिति । अल्पोबहुभिरिति । .. . विपुलो वा विस्तरकारस्थिति आदर इत्यर्थः । जातीस्थदृष्ट, रागमिति रात्रिर (रक्तिद)शुफल, भवतीति अत्युपकारवैरस्य नयत इति नाशयतीत्यर्थं । अन्तरस्वरशब्देन चात्र काकल्यपि सगृहीत इति कृतोऽप्ययमेव क्रम ॥३६॥

षड्ज काकली प्रयुज्य तमेवस्वरान्तर मारोहे... क्रिमित्युक्तम् । तत्प्रसङ्गा-दाह । जातीरिदानीमिति । जायन्ते शुद्धभिन्नगौडरागसाधारणभाषाविभाषात्मक रीतिसप्तक दृष्ट सिद्धिर्भावरसोपरञ्जन च यतस्ततो जातय । ब्रह्मणेति आप्ता-गममस्यानन्यथाभावमाह । वर्तयिष्यामि हृदये वर्तमाना प्रविशन्ति लक्षणक्रमेण

---

* Henceforth we follow GOS edition KSS, NS. vary absolutely.

स्वरजातयः शुद्धा विकृताश्च। तत्र शुद्धाः षाड्जी, आर्षभी, धैवती, निषादिनी च षड्जग्रामे। गान्धारी मध्यमा पञ्चमीति मध्यमग्रामे। एताश्चान्यूनस्वरा. स्वस्वरांशग्रहन्यासापन्यासाश्च।

विकृताः लक्ष्यन्ते तेभ्योऽन्यतमेन द्वाभ्यां बहुभिर्वा लक्षणैर्विक्रियामुपगता न्यासवर्जं विकृतसंज्ञा भवन्ति। न्यासविधावप्यासां मन्द्रो नियमः विकृतास्वनियमः। तत्रैकादशसंसर्गजा विकृता परस्परसमवायविभागेन निर्वर्तयन्ति। यथा—

शुद्धा विकृताश्चैव हि समवायाज्जातयस्तु जायन्ते।
पुनरेवाशुद्धकृता मवन्त्यथैकादशान्यास्तु ॥४६॥

---

प्रहांशतारमन्द्रषाडवौडुविकादि विभागोक्तेन प्रकाशयिष्यामीत्यर्थः। षड्जग्रामगत श्रुतिविभाग सम्पादने चोपजीवतीति तदाश्रया। एवं मध्यमग्रामाश्रया अपि स्थिता। तिस्रः स्वरगता एव। तासु हि निषादगान्धारयो षाडवौडुवितकारत्वमिति पूर्वावस्थाया वक्रार्थेन तौ दुर्बलत्वाद्विकृतौ काकल्यन्तरात्मानौ भवतः। तेन स्वरसाधारणस्यायतितरवादत्रापि प्रयोगः ॥३७४॥

तथाहि (शुद्ध षड्जा) या काकली प्रयोगो दृश्यते (इति) निवर्त्य मनत्वे दौर्बल्यात्तथासा कोऽत्र साधारणविषय इत्याह ग्रामामंशा इति। यथास्वमिति षड्जमध्यमस्वत्वांशः तत्र निषादगान्धारयोस्तावदनयो नास्ति साधारण समपेषु सातिशयस्तत्प्रयोग, मध्यमाया अप्येव विधि, स हि द्विश्रुतिस्थं पञ्चाराया। पञ्चम्यास्तु ऋषभपञ्चमावंशौ भाते...वित येन पञ्चम एवास्या काकल्यन्तरयोगप्रसादस्यामन्यदाह दुर्बलतरस्वरप्रयोगे दुर्बलत्वमात्र कर्तव्यम्। तेन षाडवकारिणो गान्धारस्य स्थाने दुर्बलेनान्तरस्वरेण यत्र भाव्य तत्रासौ दुर्बलतरः कर्तव्य। औडुवितकारिनिषादस्थाने दुर्बलतरकाकलीसञ्ज्ञो दुर्बल काकली कर्तव्य. इति ॥४५॥

अथासां जातीनां विभागमाह स्वरजातय इति स्वरजात्य इत्यर्थः। तासां ग्रामविभागमाह तत्र शुद्धा. षड्जेत्यादि। शुद्धानां लक्षणमाह ता इति। अन्यूनस्वरा. पूर्णस्वरा यो (?) नामकारी स्वरांशादिरूपो (?) यासाम्। चकारः समुच्चये। विकृतानां नैतल्लक्षणमित्याह विकृता लक्ष्यन्ते एभ्य इति। पूर्णग्रहोपन्यासेभ्य। तदाह न्यासवर्जमिति। विकृतसंज्ञा इति विकारे सम्यक्ज्ञान विशेषतो यासा, तेन षाडव-विकृता, ग्रहविकृता, चक्रविकृता, ग्रहांशोपन्यासविकृता इति विभाग।

नन्वेव (ग्रहांश) न्यासभागे शुद्धेतरविभाग कथमित्याह न्यासविधावपीति। तासां जातीनां मध्येऽपि या. शुद्धास्तासु नामकरी यो न्यास नियमेन मन्द्रो भवति, विकृतासु त्वनियम.। न्यासान्तरमार्गलक्षणेन......छायाविना रूपेण विकृतत्वेऽपि तद्वाविभासः।

तासां यन्निर्वृत्ताः स्वरेष्वथांशेषु जातिषु च जातिः ।
तद्वक्ष्यामि यथावत्संक्षेपेण क्रमेणेह ॥४७॥

[1]षाड्जीमध्यमाभ्यां निर्वृत्ता ज्ञेया षड्जमध्यमा षाड्जीगान्धारीभ्यां षड्जकैशिकी, गान्धारीषड्जधैवतीभिः षड्जोदीच्यवा, षड्जागान्धारी मध्यमाधैवतीभिर्गान्धारोदीच्यवा, धैवतीपञ्चमीमध्यमागान्धारीभिर्मध्यमोदीच्यवा, गान्धारीमध्यमापञ्चमीनिषादवतीभी रक्तगान्धारी, गान्धार्यार्षभ्यामान्ध्री, पञ्चम्यार्षभीगान्धारीभिर्नन्दयन्ती, निषादवत्यार्षभीपञ्चमीभिः कार्मारवी, पञ्चमीगान्धारीभ्यां गान्धारपञ्चमी, धैवत्यार्षभीषड्जीभिः कैशिकी ॥

स्यात्षड्जमध्यमाभ्यां निर्वृत्ता षड्जमध्यमाजातिः ।
[2]गान्धारीषाड्जीभ्यां संयोगात्षड्जकैशिकी चापि[3] ॥
षाड्जीगान्धारीभ्यां धैवत्या चापि या विनिष्पन्ना ।
[4]संसर्गाद्विज्ञेया सा षड्जोदीच्यवा जातिः ॥
[5][षाड्जी गान्धारी पञ्चमी तथा धैवती च खलु जातिः ।
गान्धारोदीच्यवतीं जातिं निर्वर्तयन्त्येताः ॥

---

नन्वेवं सप्तानां विभाग उक्तः अष्टादश चोद्दिष्टा इत्याशङ्क्याह तत्रेति । एवं सप्तसु स्थितास्वित्यर्थः । तासां संसर्गादित्याह विकृता इति न तु शुद्धा इत्यर्थः । एकादशेति कर्मपदम् ।

एतदेव संक्षेप्तुमार्यामाह—

शुद्धा विकृताश्चैव हि समवायाज्जातयस्तु जायन्ते इति । निर्हेतौ समवायात् श्रुतिस्वरग्रहादिसमूहाद्यतो जायते ततो जातय इति निर्वचनम् । शुद्धा विकृताश्चेति विभागः । एवकारेण शुद्धानामेव हि विकृतत्वम् । न तु जात्यन्तरत्वमुक्तम् । पुनश्चेति शुद्धाभिर्विकृताः कृता, ताभिस्त्वेकादशेति पुनः शब्दो व्यतिरेकार्थः । एकादशैव नाधिका । तुर्व्यतिरेके, तासु परव्यतिरिक्तानाम वाच्या, न तु शुद्धा मूर्तविकृत्वः कारणनामधेया एव । अथेति समुच्चये कारणनामानुगमाद्येन समुच्चिनोति । तथाहि—षड्जमध्यमयोश्च संसर्गजाति षड्जमध्यमेत्युक्तम् । अन्यास्तु भवन्तु जातय इति अंशरागविभाषादेशीमार्गादिषु प्रधानभूतान्तरमार्गन्यासाद्यनुगमबलेनानुगतप्रत्ययकारित्वादष्टादशमार्गन्यासानीत्यर्थं । अंशग्रहादिगतयोजनाया जायन्त

---

१ KSS NS do not read these lines.
२. KSS does not read
३. NS नापि ।
४. KSS संसर्गाद्वा
५ KSS, varies absolutely

गान्धारपञ्चमाख्या मध्यमया विप्रचिता च धैवतया ।
जातिस्तु मध्यमोदीच्यवेति सद्भि सदा ज्ञेया ॥
गान्धारीपञ्चमयो सप्तम्याश्चैव रक्तगान्धारी ।
गान्धार्यार्षभिकाख्यामान्ध्री सञ्जायते जाति ॥
योनिस्तु नन्दयन्त्यास्त्वार्षभिका पञ्चमी सगान्धारी ।
कार्मारवीं निषादी सार्षभिका पञ्चमी कुर्यु ।
धैवत्यर्षभिकाख्या हीना खलु कैशिकीं कुर्यु ॥]
[1]परस्परविनिष्पन्ना ज्ञेया [2]ह्येव तु जातय ।
पृथग्लक्षणसंयुक्ता ह्यंशादिका स्वराश्रया ॥४८॥

[3]चतस्रो जातयो नित्य ज्ञेया सप्तस्वरा बुधै ।
चतस्रः षट्स्वरा ज्ञेया स्मृता. पञ्चस्वरा दश ॥४९॥
मध्यमोदीच्यवा चैव तथा वै षड्जकैशिकी ।
कार्मारवी च सपूर्णा तथा गान्धारपञ्चमी ॥५०॥
[4][षाड्ज्यान्ध्री नन्दयन्ती च गान्धारोदीच्यवा तथा ।
चतस्र षट्स्वरा ह्येता ज्ञेया पञ्च स्वरा दश ॥५१॥

---

इति जातय इत्यन्ये । जातेरसप्रति प्राप्य इति वा सकलस्य रागादेर्जन्महेतुर्जातिरिति टीकाकार ॥४६॥

ननु कया विकृतया का जातिरित्याशङ्क्यप्रसगादन्यदप्यभिधास्यन् प्रतिज्ञा करोति तासां यन्निवृत्तेति तयो निर्वृत्तयोर्निर्वृत्ता तस्यामिव निर्वृत्तेति पञ्चमीसमास कर्मधारयश्च । तत्रैकशेषावृत्त्यादिभि यो निर्वृत्तस्य यप . ...तत्र यत इत्यध्याहार । स्वरेषु ग्रहांशन्यासादिषु यथावदिति यत्प्रकाररूपमर्हति तद्वक्ष्यामि । एवमशेषु स्वरग्रहणेन लब्ध्या अशा प्रधानात्पृथगुक्ता । हानिषु च षाडवौडुविकास्वस्तु यथावदिति तत्प्रकाररूप तत्क्रमेणोत्पुद्देशनप्यनारस्य, इहेति जातिनिर्णये वक्ष्यामि ॥४७॥

तत्र निर्वृत्तोत्तरावदाह षाड्जीमध्यमाभ्यामित्यादि धैवत्यार्षभवर्जामि कैशिकीत्यन्तेन । आदौ तिस्र षड्जग्रामे, एतच्च षडजपूर्वपदत्वादेव लब्धम् । ग्रहादि-

---

१ NS एव परस्परोत्पन्ना विज्ञेया जातयो बुधै ।
२ KSS ह्येयास्तु ।
३ KSS , NS ग्राम्यश्चतस्रो नियमाज्ज्ञेया सप्तस्वरा बुधैः ।
दशपञ्चस्वरा ज्ञेयाश्चतस्रश्चैव षट्स्वरा ॥
४. KSS does not read

नैषादी चार्षभी चैव धैवती षड्जमध्यमा ।
षड्जोदीच्यवती चैव षडेव षड्जाश्रिता स्मृता ॥५२॥
[1]गान्धारी रक्तगान्धारी मध्यमा पञ्चमी तथा ।
[2]कैशिकी चैव षडेता मध्यमग्रामसंश्रयाः ॥५३॥
यास्ताः [3] सप्तस्वरा ज्ञेया याश्चैताः षट्स्वरा स्मृताः ।
कदाचित् षाडवीभूता कदाचिच्चौडुवे मताः ॥५४॥
षड्जग्रामे तु संपूर्णा विज्ञेया षड्जकैशिकी ।
षट्स्वरा चैव विज्ञेया षाड्जी गान्धारयोगत [4] ॥५५॥
संपूर्णा मध्यमग्रामे ज्ञेया कार्मारवी तथा ।
गान्धारपञ्चमी चैव मध्यमोदीच्यवा तथा ।
पुनश्च षट्स्वरा ज्ञेया गान्धारोदीच्यवा बुधैः ॥५६॥

---

संसर्गेऽपि ग्रामयोरसाङ्कर्यम् । ग्रामसाधारणस्य कैशिकस्य तत्र बाहुल्येन प्रयोग । स्पष्टमन्यद् ।

एतदुपसंहरति अपरस्परनिष्पन्ना इति ससर्गजा अन्योन्य जनिता । नन्वेव षड्जमध्यमाद्या पृथक्क्रियन्ते लक्षणमित्याह पृथग्लक्षणेति । ननु किं तेनेत्याह स्वरा ये प्रहादि विभागस्तत्र नैयास्ते यत प्राप्नोयते लक्षणबलेन द्वैग्रामिकयमिति तित्र षड्जग्रामे प्रष्टावन्यत इत्यर्थः । यदि वा द्वैग्रामिकजात्युद्भवत्वात् तथेति, यदि वा संसर्गजास्य एव स्वराश्रयास्तु स्वरनाम्न्य पृथग्लक्षण शुद्धापेक्षया जात्यश्च संसर्गजा-पेक्षया च जनकत्व भजन्ते ॥४८ ।

अथ हानिप्रकार पूर्णषाडवौडुविकविभाग विवक्षु पूर्णा तन्नियम तावदाह स्वतन्त्र इति । तत्र पूर्णाश्चतस्र आह मध्यमोदीच्यवेत्यादि । तत्र षाडवा आह षाड्जी-त्यादिना । तद्व्यतिरिक्ता शिष्यन्ते दशैव तान् पञ्चस्वरा इति दर्शयति शेषा. पञ्चस्वराश्चेति ॥४६-५१॥

पञ्चस्वराणा विभागमाह निषादिन्यार्षभी चेत्यादि । षड्जाश्रिता इति षड्जग्राममाश्रिता ॥५२-५३॥

एवं मध्यमग्राम अथ तदेव स्पष्टाय निराकाङ्क्ष करोति । यास्ताः सप्तस्वरा इत्यादि । या सप्तस्वरा मध्यमोदीच्यवाद्याश्चतस्रस्ता ज्ञेयास्तथैव नियमेनेति शेष. ।

---

१. KSS. तथैव रक्तगान्धारी ।
२. KSS कैशिकी चेति विज्ञेया पञ्चैता मध्यमाश्रया ।
३ NS पञ्चस्वरा, KSS absolutely varies
४. NS. गान्धारयोक्तुभि ।

आर्षभी च नन्दयन्ती च मध्यमग्रामसंश्रयाः ।
एवमेता बुधैर्ज्ञेया द्विग्रामिक्योऽपि जातयः ॥५७॥
अत ऊर्ध्वं प्रवक्ष्यामि तासामंशविकल्पनम् ।
[1]षट्स्वरा सप्तमे ह्यंशे नेष्यते(न्ते) षड्जमध्यमा ॥५८॥
[2]संवाद्यलोपाद्गान्धारे तद्वदेव हि नेष्यते ।
गान्धारीरक्तगान्धारीकैशिकीनां तु पञ्चमः[4] ॥५९॥
[5]षड्जायां चैव गान्धारमप्यंशं विद्धि षाडवम्[6] ।
षाडवं धैवते नास्ति षड्जोदीच्यामथांशके ॥६०॥
संवाद्यलोपात्सप्तैता षाट्स्वर्येण[7] विवर्जिताः ।
गान्धारीरक्तगान्धार्यौ षड्जमध्यमपञ्चमाः ॥६१॥
[8]सप्तमश्चैव विज्ञेयो येषु नौडुवितं भवेत् ।
द्वौ षड्जमध्यमांशौ तु गान्धारोऽथ निषादवान् ॥६२॥
ऋषभश्चैव पञ्चम्यां कैशिक्यां चैव धैवतः ।
एवं तु द्वादशैवेह वर्ज्याः पञ्च स्वराः[9] सदा ॥६३॥

---

नेन तासां न जातु हीनस्वरता । यास्तु षड्जाद्याश्चतस्रस्ताः षाडवे चकाराद् पूर्णत्वे चा[पि] औडुविता कदाचिदौडुवे पञ्चात्मके तत्प्रयोगे या दृष्टोक्तास्ता [?] कदाचित् षाडवे, चकारात्पूर्णत्वेऽपि । मता इति पाठे न छन्दोभङ्ग इति ॥५४॥

पूर्णानां षाडवानां च ग्रामभेदेन स्वरूपमाह षड्जग्रामे स्थिता इति । गान्धार-योगत इति गान्धारस्य योगमात्रत्वेन प्राधान्यमवलम्ब्य षाड्जी षड्जस्वरात्मिकेनो-क्तापि मतो पूर्णैव विज्ञेया । निषादो ह्यासां षाडवकृत् । स च गान्धाराद्ये तत्संवा-दित्वादलोप्य एव । चोऽप्यर्थे, एवकारः पूर्णशब्दानन्तरम् । कार्मारव्याद्यास्तिस्रो मध्यमग्रामे पूर्णस्वरा एव, गान्धारोदीच्यवाद्यास्तु तिस्रः षाडवा, औडुविता कदाचित् ॥५५-५६॥

---

१ KSS षट्स्वर्यं सप्तमांशा तु । NS षट्स्वरौ सप्तमे स्वंशे ।
२ KSS, NS संवादिलोपाद्गान्धारस्तत्रैव न भविष्यति ।
४ KSS पञ्चमम् ।
५ KSS षाडवे धैवतो नास्ति षड्जोदीच्यविशोभिता ।
६ NS षाडवं ।
७ KSS, NS, षाट्स्वर्यं तु ।
८ KSS सनिषादाश्च विज्ञेया येषु नौडुविते इमे ।
९. KSS, NS पञ्चस्वरे ।

तास्त्वनौडुविता नित्य कर्तव्या ¹हि स्वराश्रया ।
सर्वस्वराणां नाशस्तु विहितस्त्वथ जातिषु ॥६४॥

अंशविकल्पनमिति । अंशस्वरा विकल्प्य ते येन । आस्या जातावयम । अंशा या(ष)ड्वरोहिता इति मीलनग्रन्थेन विचार्यते । त वक्ष्याम । अङ्गविकल्पनमिति पाठ अङ्गस्य षाडवौडविकल्पस्य विकल्पन कथनम् । अस्मिन्नंशे त नास्तीति । सप्तम इति । निषादे गा धारे चांशे तद्वति (?) षट स्वरा नेत्यन्त इत्यथ । अत्र हेतु — सवादिनो लोपाभावान्निनदेन न स्यात् षाडव । स च गान्धारस्य सवादी । गान्धार्यादीनां तिसृणामृषभेण षाडवत्वमुक्तम् । स च मध्यमग्रामे पञ्चमस्य सवादीति । तत्रांशे षाडवाभाव धैवतेंऽशे षड्जोदीच्यवाया न षाडव । ऋषभेण हि तद् । स च धैवतस्य सवादी षड्जग्रामे । एकीकृत्योपसहरति सप्तंशा इति । नि ग प प प ग ध इत्येतेंऽशा । अपाङ्क्ता क्रमेण षड्जम यमादिषु षड्जोदीच्यवाद्येषु । अथौडुवित शून्यानशानाह । गान्धारीरक्तगान्धार्योरित्यादि सप्तम इति । निषाद । षड्जमध्यमाया यौ द्वावशौ गान्धारनिषादौ तावनौडुविकौ । उपसहरति एव तु द्वादशेति । गान्धारीरक्तगान्धार्योरष्टौ षड्जमध्यमाया द्वौ पञ्चम्या कैशिक्या द्वाविति । अत्र क्वचिदशसवादलोपो युक्तिलभ्यते । तदभावे तु तथानिरूपणमेव हेतु ॥५७-६३॥

इयती असख्या भवतीति पर्यन्तावदता, तत्र चतसृणां जातीनां नित्यपूर्णानां नवाशा अपाङ्क्ता इति चतुपञ्चाशत् । तभ्योऽपि सप्त षाडवा सत इति सप्त चत्वारिंशत् षाडवा पतम पूर्णा एवेति चतुर्दशानामन्याना मध्ये चतस्रो औडुविका इति तासां सम्बन्धिनो द्वादशांशा वक्ष्यते, शिष्टानां चत्वारिंशत्, ततोऽपि द्वादश औडुविकता(म)पवादयन्त इति त्रिंशदोडुविता । एव चत्वारिंशच्छत विकृतानां ससप्तजाना च ईश्वमिकाना च जातीनां स्वरनामधेयानां सप्तांशका (षाड)वा इति सर्वससप्तचत्वारिंशच्छतमंशकानामिति ग्रामद्वयमुच्यते । लोके तु यौ षड्जग्रामे मध्यमग्राम इति गीतयस्तेन तन ग्रामौ म नामधेयसादृश्यमात्र तु तद् 'जातिभिश्श्रुतिभिश्चैव स्वरा ग्रामत्वमागता' इति ह्युच्यते । ग्रामो नाम विशिष्टश्रुतिकस्वरसमूहो मूर्छनाश्मा पूर्णावस्थावस्वरगतग्रहांशादिविशेषमूहरूपजातिसमूहश्च ।

अथोच्यते । तत्तदुच मोचितश्रुतिकस्वरपरिवारादिदन्नासन्मुख्यात्मकत्व लौकिकयोर्ग्रामरागयोरिति तद्भवेत् । यदि षड्जमध्यमप्रधानता क्रमेण लक्ष्येत श्रुतिविशेषस्य च नौडुवितत्वमित्यनमवान्तरेण । तुर्हेतौ । यतो द्वादश स्वरा वर्ज्या अत एव स्वरा आश्रीयमाणा प्राधान्यनाशकाया आसुवान्धार्यादिषु भवन्ति तदा नित्यमेव नौडुविता जातय इति सम्बन्ध ।

---

1 KSS, NS जातयो बुधै ।

[1]न मध्यमस्य नाशस्तु कर्तव्यो हि कदाचन ।
[2]सर्वस्वराणां प्रवरो ह्यनाशी[3] मध्यमः स्मृतः ।
गान्धर्वकल्पे[4] विहितः सामस्वपि च मध्यमः ॥६५॥

दशकं जातिलक्षणम्—

ग्रहांशौ तारमन्द्रौ च न्यासोऽपन्यास एव च ।
अल्पत्वं च बहुत्वं च षाडवौडुविते तथा ॥६६॥

---

इदानीं वैचित्र्यार्थं प्रयोगकरणनियममाह सर्वस्वराणामिति। जातिष्वपि समुदायापेक्षया सर्वस्वराणामिति च। तथा हि कस्यांचिज्जातौ कस्यचिन्नाश उक्तः। यद्यपि च धैवतपञ्चमौ षड्जमध्यमग्रामयोः क्रमेणालोप्यौ तथाप्यन्यग्रामे लोपित्व-मस्त्येव तयोरिति मध्यमव्यतिरिक्ताः सर्वे स्वरा नाशिनः मध्यमस्य तु न क्वचि-द्विनाशः। अन्ये तु धैवतपञ्चमयोर्ग्रामविभागेन यदनाशित्वं विशाखिलाचार्यादिभि-रुक्तं नानुमन्यन्ते मुनेर्मध्यम एवाविनाशी मत इत्याहुः।

श्रीमदुत्पलदेवास्त्वाहुः। जातिलक्षणे वक्ष्यमाणे मध्यमस्य लोपो न क्वचि-द्दृश्यते। तन्मध्यमस्य नाशो न कर्तव्य इति किं प्रतिषेधेन। प्राप्तेरभावात्। सर्व-स्वराणां नाश इत्यनेनापि न किंचित्कृतम्। नियमस्वरलोपस्य यथास्वं जातिषु वक्ष्यमाणत्वात्। तस्मादयमत्र भावः। यथा वैचित्र्यार्थं रागयोर्ग्रामरागेषु लोप्यन्ते तथा यद्यपि स्वराः षाडवौडुवितविधिना सर्वासु जातिषु स्वबुद्ध्या ग्रामविभागे क्रमाल्लोप्याः। न तु मध्यमः कदाचनेत्यत्र ग्रामरागवैचित्र्यमनेन सूचितम्। अत्र युक्तिः। सर्वस्वराणामिति। सर्व एव मध्यमत्वादेव तुल्यस्थाननिविष्टः। स्वर-संदोहोच्चारणस्वरस्थानस्थाहेतुः मध्यम एकं नाम द्वितीयमर्थरूपम्। गान्धर्वकल्प इति। गान्धर्वशास्त्र ईदृक्षमाप्ते गायवे ग्रामरागरूप इति यावत् भाषादेशीमार्गादिषु मध्यमस्यापि विनाशित्वमभ्युपगतं भवति। विहित इति। मङ्गलत्वात्। तथा हि मातृगुप्तः—

प्रथमं मध्यमायैव गान्धर्वी सर्वदेहिनाम्।
मङ्गल्यार्थं तदा स्यादारम्भे चोक्षधारकः॥ इति॥

---

१. KSS मध्यमस्य विनाशस्तु कर्तव्यो न कदाचन।
२. NS सप्तस्वराणां।
३ KSS ह्यविनाशी तु मध्यमः।
४. KSS. प्रभिमतः।
५. KSS सामगैश्च महर्षिभिः। NS सामगैरपि मध्यमः।

अथ ग्रहा ।

ग्रहास्तु सर्वजातीनामंशवत्परिकीर्तिता.[1] ।
[2]यत्प्रवृत्तं भवेद्गेयमंशो ग्रहविकल्पितः ॥६७॥

तत्रांशो नाम—

यस्मिन् [3]भवति रागश्च यस्माच्चैव प्रवर्तते ।
[4]मन्द्रश्च तारमन्द्रश्च योऽत्यर्थं चोपलभ्यते ॥६८॥

---

साम्स्वरपीति । तत्र ह्यसौ प्रायशोऽनियतप्रयोग । यदाह नारदमुनि ।

य सामगानां प्रथम स विशेर्मध्यमस्वर. । इति ।

वेणोर्मध्यम'' इत्यन्ये पठन्ति । अन्ये तु आसावेकवचनमिति मध्ये कण्ठस्थाने यत्स्वरसन्तक तद्विनापि सर्वस्य तत्सम्भवात् । तारमन्द्रस्वरास्तु सर्वे पित्तश्लेष्माद्युपहतशिरोवक्षसामसुलभप्रयोगा इति व्याचक्षते ॥६४ ६५॥

ननु जातिरित्युक्तम् तत्र केयं जातिर्नाम । उच्यते । स्वरा एव विशिष्टसन्निवेशभाजो रक्तिपद्ग्रामयुग्य च जनयन्तो जातिरित्युक्ता । कोऽसौ सन्निवेश इति चेदाह । दशकं जातिलक्षणमिति । ग्रहांशाविति । द्वन्द्वेन प्रायोंऽशस्यैव ग्रहत्वमुक्तम् । तारमन्द्रस्वराविरुध्योन्य पक्षा । गाडवौडुविते यत्र सम्भवस्तत्र लक्षणं न सर्वत्रेति दर्शयति । सर्वेति । ते तत्सम्भवप्रकारेणेत्यर्थं । ग्रहक तु सर्वत्राव्यभिचारि । तथा हि प्रथममकरमाण्यपि भावान्न विना क सन्निवेश इति ग्रहाणांन्यासन्यासा । गुण प्रधानभावेन रक्तिर्लोपपद्यत इति प्रधानभूतोऽशश्च तदमारपकल्पश्च । तत्सवादी पर्यायासो नियति बहुत्वमुपयोगि । तदीय तच्चाल्पापेक्षमिति विभावादिलोप्य स्वरगतमल्पत्वमागच्छति । मूर्छनानिर्देशोपदिष्टमध्यमसप्तकस्वरमात्रे चैकरसे प्रयुज्यमाने रक्तेरभाव इति तारमन्द्रोपयोग इत्यष्टक तावदव्यभिचारि । लोपभागिन्या तु स्वरलोपोऽपि लक्षणं भवति ॥६६॥

एवं मार्गैस्तु दशकं निर्णीतेषु ग्रहस्य भावा सख्या । लक्षणमाह । ग्रहास्त्विति । सर्वजातीनां सबन्धिनो ग्रहा । मिलित्वा अशवद्भवन्तीति विधिशिरियम । कश्चासौ ग्रह । आह तस्यैव नामान्तरम् । कथमुच्यते यत्प्रवृत्त भवेद् गेयमिति । गृह्यत जातिप्रयोगो यत इति ग्रह । तेनांशस्यैव धर्मान्तरयोगान्नामान्तरम् । तदाह ग्रहविकल्पित इति । ग्रहधर्मेण एतद्विषतया कल्पितेन द्विस्वभावीकृत । न स्वत एव प्राधान्याद् ग्रहत्व लप्स्यते । तत्सामर्थ्यसिद्धो ग्रह । किं स्वकण्ठेनोक्तमित्याशङ्क्यैतदेवाह ग्रहविकल्पितः । अंशोऽपि हि कदाचिद् ग्रहो न भवति । नन्दयन्त्यामिव

---

१ KSS अश एव हि कीर्तित ।

२ NS य प्रवृत्तो भवेदश सोंशो । KSS यत्प्रवृत्त भवेद्गान ।

३ KSS मन्द्र च । NS. मन्द्रतार ।

[अनेकस्वरसंयोगे योऽत्यर्थमुपलभ्यते
[1]अन्यश्च बलिनो यस्य संवादी चानुवाद्यपि]
[2]ग्रहापन्यासविन्याससंन्यासन्यासगोचर ।
[3]अनुसृतश्च यस्येह सोऽंशः स्याद्दशलक्षणः ॥६९॥

[4]पञ्चस्वरपरा तारगतिर्यथा
अंशात्तारगतिं विद्यादाचतुर्थस्वरादिह ।
आ पञ्चमात्पञ्चमाद्वा नातः परमिहेष्यते ॥७०॥

पञ्चम.। तस्या हि ग्रहो गान्धार । तद्ग्रहस्य पृथगभिधान कर्तव्यमेव । न तु नैकमुदाहरणमित्यत्र न्याय । ग्रहस्य न ग्रामरागादावंशव्यतिरिक्तस्यापि ग्रहत्वाभ्यनुज्ञान भूयस्तरमस्य एक पृथग्ग्रहलक्षणे प्रयोजनम् । तथा हि मालवकैशिकेन षड्जक गीयते न तत्सर्वं नियमेन षड्ग्रहः । एवमन्यदपि वाच्यम् ।.६७॥

अथांशमाह यस्मिन्भवति रागश्चेति । यस्मिन् विद्यमाने रागो रक्तिजनित-स्वरूप च भवति शिरसीव पुरुषस्वरूपम् । एव यमाश्रित्य स्थित स्वर प्रकर्षेण वर्तते । यस्माश्रिति ल्यब्लोपे पञ्चमी । एतदुक्त भवति । यस्य संवादी वानुवादी वा प्राधान्य प्रति कथ्यते मन्द्रोव ग्रामविषये । तत एव विनाप्यंशत्वमस्य संवाद्य-नुवादिनोरेव । ननु जातिविवादित । तदर्थमेव तारावधिमवेक्ष्य च वक्ष्यमाणपञ्च-मादित्यादिना तारमन्द्रस्थिति । यश्च समस्त(प)थे स्वस्वरापेक्षया बाहुल्येन भाति । यश्च स्वयमेव स्वयमेव स्वसंवाद्यनुवादिरूप वा ग्रहादिरञ्जकरूप वा करोति न तु कदाचिद्विवादिनम् । ग्रहादयो गोचरो नियन्तव्यो विषयो यस्य स तथा । यश्चान्या(न)पि स्वरान् स्वपराङ्मुखवञ्चारननानुरञ्जयन्निवर्तते । सोंऽशः प्रधान-भागवत्वाद्दशलक्षण इति सर्वं एते धर्मा मीलिता सन्तो अंशत्वे प्रयोजका । अत एवादिलक्षणमंशलक्षणात्पृथगेवोक्तम् ।।६८-६९॥

अथ तारमाह । पञ्चस्वरपरा तारगतिरिति । ननु यथांशस्वरादारोहक्रमेण तावदारोहणीय यावत्तत्पञ्चमसंज्ञस्य स्वरो न तु तत्परमिति नियम । (एतन्न) सदा महान् लक्ष्यविरोध । षड्ज्या हि षड्जांशे पञ्चमस्वरान्तमेवारोहणीय स्यात् । दृश्यते च लक्ष्ये षड्ज्या .न यथा—निसनिधपानिधपा इति । आर्षभ्या च धैवतान्त स्यात् । दृश्यते च निषादान्त न धरिनिसगम इति । निषादस्वरया च

१. KSS अन्यच्च ।
२. KSS ग्रहोऽन्यासविन्यासविन्यासान्यासगोचर ।
३. KSS, NS परिवार्य स्थितो यस्तु ।
४. KSS. does not read from पञ्चस्वर.... ..पमकृष्टमुवास्विह ।

(लोप्यस्वरोऽपि गण्यः स्याद्बुधैस्तारविधौ पुनः)
[1]त्रिधा मन्द्रगतिः । अंशपरा न्यासपरा अपरन्यासपरा चेति ।
मन्द्रस्त्वंशपरो नास्ति न्यासौ तु द्वौ व्यवस्थितौ ।
[2]गान्धारन्यासलिङ्गे तु दृष्टमार्षभसेवनम् ॥७१॥

पञ्चमान्तमारोहणं दृश्यते गान्धारिग्रा इति । एवमन्यत्रापि विचार्यम् । तस्मान्नाय व्याख्याप्रकारः । किं तर्हि । श्रूयताम् । इह मध्यसप्तकेन तावन्मूर्छनाश्रयं कार्यं इत्युक्तमेव नन्वयम् । तत्सप्तकनिविष्टाः स्वराः सर्व एव प्रयोज्याः इति । सप्तकान्तरगतस्वरप्रयोगेषु किंचिद् दृष्टादृष्टाभ्युदयदायि भवतीति तारमन्द्रतामनास्त्य शिरस्योः स्वस्वरनिष्ठैव सा इह निरूप्यते ।

ननु मध्यमसप्तके स्थिते इति तत्पृष्ठे तारसप्तकनिविष्टाः किं सर्वे स्वराः प्रयोज्याः । सर्वत्र तेनेति निरूप्यते । तत्र यदा षड्जोऽशो भवति तदा तारसप्तक (गा) रिगम (प) न्येतत्पर्यन्तं ग्राह्या यदि शक्तिरस्ति । न तु ततः परं शक्तिमतोऽपि । ऊनग्रहणे तु न दोषः इति परशब्देन वर्जितः । ऋषभेऽशे पुनर्धैवता ता स्वरास्तारसप्तकमे ग्राह्या भवन्ति । गान्धारे त्वंशे निषादान्ताः सप्त । मध्यमपञ्चमधैवतनिषादेषु निषादान्ता एव ते ग्राह्या इति पञ्चस्वंशेषु समस्तः एकस्तारसप्तक सगृहीतो भवति । मध्यमः पुनर्यदि शक्तिः चतुस्स्वरपरमारोहणम् । नन्दयन्त्यां तु परावधिकः एव तारनिष्ठो भविष्यति 'तारगत्या तु षड्जोऽपि कदाचि नातिवर्तते' एतच्च तत्रैव व्याख्यास्यते । तेन न्या चतुस्स्वराविति । यदन्यैर्नन्दय तीविषयं व्याख्यातं न तथा । अत्रैवार्थे कारिका अशात्तारगतिं विद्यादिति । इहेति । मध्यमसप्तके मूर्छनावारिणि स्थिते सति अंशस्वरमवलम्ब्य तारगतिं तारसप्तकगतस्वरपर्यन्तं वा आरोहः सर्वत्र म कर्तव्यो न ततः परं इत्यनेनोच्यते । तं दहेत्यग्रहण नैता च सारमन्द्राणामिति पूर्वोक्तमशलक्षणं (च) न पर्यालोचितं (न) शिरस्य [ऋषभगान्धारयो] धैवतनिषादावप्रयोज्यौ तयो स्वरभावः स्वरत्वानुपपत्तेः शक्त्यभावः स्वप्रयोक्तरि इत्यसदेतत् ।

यत्त्वन्यैर्व्याख्यातम् । अंशस्वरेण सह तावत्तारसप्तगताः पञ्च चत्वारो वा स्वराः कार्याः । यथा षड्जेंऽशे सरिगमप ऋषभे रिगमपध गान्धारे गमपधनि मध्यमे गमपधनि एव पञ्चमधैवतनिषादेषु । एत एवेति तल्लक्ष्येण (स्थाप्यते) । तथा हि । निषादवत्या निषादे(शे) तारषड्जो दृश्यत एवांशेन साधनेन इति । अलं बहुना उक्तैव च व्याख्या लक्षणसंग्राहिणीत्यादरणीयम् ।

१ NS त्रिविधा ।
२ NS गान्धारे ।

अथ न्यास एकविंशतिसंख्यः । अङ्गसमाप्तौ न्यासः । तद्वदपन्यासो ह्यङ्गमध्ये षट्पञ्चाशत्संख्यः । यथा—

न्यासोऽङ्गसमाप्तौ स चैकविंशतिसंख्यस्तथा । (१६ अक्षराणि षट्पञ्चाश-त्संख्योऽपन्यासोऽङ्गमध्ये भवेत् ॥७२॥ १४ अक्षराणि सन्न्यासश्विन्यासा-वप्यङ्ग(प्यंश)मध्य एव । अनियतत्वाच्च बहुत्वमिति ।

---

भात: परमिति । तारगते ऊनत्वे कामचारमाह—इहेति । आतिषु ग्राम-रागादौ नाप नियम इति त्रिमात्र । बुधैरिति । लोप्यमिति स्वर ये बुद्धयन्ते तैर-धूर्णांशेऽपि लोपस्वरविधौ गणनीय इत्याह । तथा च विशाखिलाचार्य । नाशि-स्वरस्तारविधौ संख्यायते इति । तारयति प्लावयति वेगेन वाचमिति तार ॥७०॥

अथ मन्द्रमाह । त्रिधा मन्द्रगतिरिति । मदीड मोदने नभ्रन्वाहललितो मन्द्र । योऽसावंशस्वरो मध्यमे सप्तके तदन्तमेव मन्द्रसप्तकाद्ग्राह्य न्यासस्वरान्त वा तत्परो वेत्येक परशब्दो लुप्तनिर्दिष्ट न्यासस्वरात् य. परस्तात् परा . ...स्यर्थ । परग्रहणं तत ऊनस्य ह्यनुज्ञा वा कामचारमाह । नन्वेव षाड्ज्या धैवतस्य मन्द्रस्य कथ प्रयोग कथ न यावता षड्जान्त तत्र मन्द्रसप्तकेन पूर्णेन विनस्य कामचारात्तु धैवतान्तो मन्द्रप्रयोग । यो हि तद्ग्रहन्यासमध्यषड्जेनासौ मन्द्रसप्तकात् अपि तु मध्यगता मध्यगतादेव सा...मन्द्रो नियमात् इत्यत्र हि तारनिवृत्तिपर वचन न हि षाड्ज्या यत्र षड्ज स्थानत्रये श्रूयते इति । तत्रैव कारिका पठन्ति । मन्द्रस्त्वं-शात्परो नास्तीति । तथा हि निषादवत्या निषाद एव मन्द्रो नासौ दृश्यते अगग्रह-स्वरस्य मध्यगतत्वन्यासे तु सति द्वौ मन्द्रौ न्यास एव तत्परे वा । अत्रैवोदाहरण तद्व्यवस्थितविषया लक्ष्यति नियममाह गान्धारलक्षणे न्यासपरत्वादेव मन्द्रत्व सिद्धम् । तत्किं पुनर्वचनेन । अस्ति च यद्वक्ष्यते । सत्त्वन हा...षभस्यापि तत्त्व मन्द्र-गत स्मृतम् । इति । तद् ज्ञापयति व्यवस्थितविषयोऽय विकल्प इति । ननु वचनमेव मुनिशपिकत्वेनोपन्यस्यतीति किमेतद्गान्धर्ववचननेदं पूर्वं सिद्धमित्यदोष । गुरव-धारणे व्यवस्थितावैयर्थ्यं ॥७१॥

अथ न्याससंख्यया: लक्षणेन चाह । न्यास एकविंशतिसंख्य इति । षड्ज-मध्यमाया द्वे कैशिक्यास्त्रय शिष्टाना षोडशेति । अस्या जगतिशरीरसमाप्तौ कर्तव्य-ताया वा स्वर. सन्यास [नि] तर्हि अस्यते प्रयोगे येनेति [न्यास] ।

अपन्यासमाह—तद्वदिति समाप्तौ तर्हि न्यासात् कोऽस्य विशेष । आह । अङ्गमध्य इति । अवान्तर समाप्तावित्यर्थं । तथा च दत्तिलाचार्य: । विदारी मध्य-गतया इति । तत्र षड्जग्रामे षड्जमध्यमाया सप्तापन्यासा । षड्जोदीच्यवाया पञ्चाना प्रत्येक त्रय इति चतुर्विंशति । शेषास्तु मध्यमग्रामे । एतदेवापन्यास-स्वरूप वितानवृत्तेनानुष्टुब्भेदेनाह । यथा—

तत्र प्रथम(म) विदारीमध्ये न्यासस्वरप्रयुक्तस्तु ।
विवदनशील मुक्त्वा सन्यास सोऽभिधातव्य ।
कृत्वा पदावसाने विन्यासाख्यापि विन्यास ॥७३॥

द्विविधमल्पत्व लङ्घनादनभ्यासाच्च । तत्र षाडवौडुवितक(का)रणा-
मनशाना च गीतान्तरमार्गमुपगताना स्वराणामनभ्यास लङ्घनादनभ्यासाद्यथा
जात्यल्पत्व तद्बहुलत्व च ।

तथा—अल्पत्वेऽथ बहुत्वे बलवदबलता विनिश्चयादेव ।
जातिस्वरैस्तु नित्य जात्यल्पत्व द्विविधमेतत् ॥७४॥

---

न्यासोऽङ्गसमाप्तौ स चैकविंशतिसङ्ख्यस्तथा ।
षट्पञ्चाशत्सङ्ख्योपन्यासोऽङ्गमध्ये भवेत् ॥ इति ॥७२॥

अथानुद्दिष्टमप्यवान्तरलक्षणापेक्षित प्रसङ्गाल्लक्षयति सन्यासविन्यासावप्यङ्ग-
मध्य एवेति । विदारीमध्य इत्यर्थ । अथानियतयो का सङ्ख्येत्याह । अनियत-
त्वाच्च बहुत्वमिति । न्यासापन्यासोपन्यासयो प्रतिजातिप्रयोगनियमोऽस्तीत्यर्थ । तत्र
सन्य समाह ।

तत्र प्रथमविदारीमध्ये न्यासस्वर प्रयुक्तस्तु ।
विवदनशील मुक्त्वा सन्यास सोऽभिधातव्य ॥

अशस्य विवादी यो न भवति स चेत्प्रथमविदार्यन्त प्रयुक्तस्तस्तदा सन्यास समीप-
भूतो न्यास इति ।

कृत्वा पदावसाने विन्यासाख्यापि विन्यास ।

अशस्य सवाद्यनुवादी वा कापि विदारीभावरूपस्य पदस्य पदान्ते विन्यस्यते तदा
विन्यास ॥७३॥

एवमनन्यासस्यैव प्रक्रान्तरूप सन्यासविन्यासद्वय लक्षयित्वा अशकप्रस्तावे
प्रकृतमल्पत्व विभागद्वारेण लक्षयति । द्विविधमिति । लङ्घन स्पृष्टैवाविमर्शैव
तत्स्वरान्तरगमने तस्य स्वरस्य स्वप्रधानीकरणम् । यथा न रागे गान्धारी स्व. ..
विदा इति श्रान्ता तस्यानावृत्तिरनभ्यास यत्स्वावर्जनमेव लङ्घनमिति तदसत् ।
अल्पत्वभावाया व योगात् षाडवौडुवितविषेयचाल्पत्व पृथङ् न तत् स्यात् ।
नन्दयन्त्या च पञ्चमाशो यावत्सवादिन ऋषभस्य लङ्घनोयत्व युक्त न चास्य
सवादिनो लोपो युक्त । न चैवमित्यथावा सवाद्योडुवितस्याप्ते (लङ्घना) नम्या-
योर्विष विमर्शति । तत्र षाडवौडुवित कारणामिति । लोप्यस्वरपूर्णावस्था या यदा
प्रयुज्यते तदा तस्य बाहुल्येन लङ्घनम् । क्वचिदनभ्यासोऽपि । येऽश [illegible] स्वरा
पर्यायाशा न भवन्ति यथा [illegible] कुभ्या निषादर्षभौ तौ यदाऽन्तरमार्गे प्रयुज्येते तदाऽन-
भ्यास । तथा क्वचिल्लङ्घनमपि गीते ग्रहसवाद्यवस्थान मुक्त्वा नी. .. रु योगर्षभ-

सञ्चारांशे(श)बलस्थानामल्पत्वे[2] दुर्बलासु च ।
[3]न्यासश्चान्तरमार्गस्तु(श्च) जातीनां व्यक्तिकारकः ॥७५॥

षट्स्वरं षाडवितं(त) चतुर्दशविधं सप्तचत्वारिंशत्प्रकारं पूर्वोक्तविधानं यथाजात्यंशप्रकारमिति ।

---

न्यासनिश(च)ये भवेत् । स तरमागमिल्यन्तरमार्गस्य(गस्य) लक्षणम् । यथा जानीते । कर्याचिद्गान्धारोऽपि जाल्प । तथा च कार्मारव्या गान्धारस्य संवस्वरसङ्ख्या बहुत्वेनान्तरमार्गे प्रयोग इति वक्ष्यते

गान्धारस्य विशेषेण सर्वतो गमनं भवेत् । (भ ना २८ १३६)

इति । अथ तत्र बमाह । अहारव तद्वहुत्वं वक्ष्यति । लक्षयतीति शेष । कथमित्याह । बलवद्बलवतोऽपि(र्यो)पर्याये । अबलमल्पं तद्विपर्ययाद्बलवदिति बहुत्वाल्पलक्षणं सम्पन्न एव । अत एवाह ।

जातिस्वरैस्तु नित्यं चाल्पत्वं द्विधा चंल(द्व) ॥

इति । जातिगतमल्पत्वमिव तद्वहुत्वमपि द्विधा । तच्च जातिस्वरैः पर्यायांशैरनवाविभिश्चोपलक्षितं (क्ष्यते) । तेनेयामयंबहुत्वम्(न्यास)श्चेति द्विधा बहुत्वमित्युक्तं भवति ॥७४॥

तथाल्पत्वबहुत्वयोरुपयोग दर्शयन् प्रसङ्गादन्यदप्याह—

सञ्चारांशे(श)बलस्थानामल्पत्वे दुर्बलासु च ।
न्यासश्चान्तरमार्गश्च जातीनां व्यक्तिकारकः ॥

इति सञ्चारेण पर्यायेण यो भासतद्विषयं तत्र निष्ठलीनां (याम) सान्तरमार्गं स्वरूपाभिव्यञ्जको ना पयेति वस्तुत्व(तत्त्व)स्योपयोगः । अल्पत्व इति । अल्पत्व विषयस्वरकृते सोऽप्यानशस्वरविषये या दुर्बला हीनबला मान्यस्ताम् स्वरीभवति नान्यथेति । अन्ये त्व तरमार्गस्य सर्वत्र प्रधानस्याल्पत्वबहुत्वाख्या विना स्वरूपलाभ एव (न) भवतीति तात्पर्यं मन्यमाना अन्तरमार्गलक्षणत्वेन श्लोकं व्याचक्षते । कथम् । चो हेतौ । यस्मादन्तरमार्गो जातीनां व्यक्तिकृत् स चाल्पत्वबहुत्वजीवो तस्य हि लक्षणम् । सञ्चारेति । सञ्चारे अनुवादिन्यंशे अंशस्वरे च प्रधानभूते बलकल्पे स्थिते बलस्थाना मता मवादिना स्वराणां न्यवत्तयाऽल्प त(त्वे दुर्बलासु) ... स्वराणां दुर्बलप्राणत्वेऽविलङ्घनेन न्यसन य (रोति) सोऽन्तरमार्गस्तस्मात् त्वल्पत्वबहुत्वे वक्तव्य इति । अन्ये त्वत्र जनिर्जातिदव । द(र्शि०)य बलवत्तीति नीत्या न्यासान्तरमार्गाभ्यां जय बहुत्वप्रयोज्ये पर्यायांशे सति यासां तरमायवशादिति श्लोकस्यार्थमाहु ॥७५॥

---

१ NS सञ्चारोऽश

२ NS अल्पत्वे ।

३ NS द्विविधान्तरमार्गस्तु ।

पञ्चस्वरमौडुवितं विज्ञेयं दशविधं प्रयोगज्ञैः ।
त्रिंशत्प्रकारविहितं पूर्वोक्तं लक्षणं चास्य ॥७६॥

षट्स्वरस्य प्रयोगोऽस्ति तथा पञ्चस्वरस्य च ।
चतु.स्वरप्रयोगोऽपि ह्यवकृष्टध्रुवास्विह] ॥७७॥

द्वैग्रामिकीना(णां) जातीनां सर्वासामपि नित्यशः ।
[1]प्रशास्त्रिषष्टिर्विज्ञेयास्तेषां चैवांशवद् ग्रहा.[2] ॥७८॥

---

अथ षाडव पूर्वमुक्तमपि दशकलक्षणाभिधानप्रसङ्गशय्यावैषम्यशान्तये पुनराह षट्स्वरं षाडवमिति । चतुर्दश जातिगताश्च (विधा) तच्चतुर्दशजातिविषयः (चतुर्दशविध) चतसृणा नित्य पूर्णत्वेन तदभावात् । सप्तचत्वारिंशत्प्रकारमिति । त्रिषष्ठेति(त्रिषष्टिरिति) पूर्णाशा न च पात्यन्ते । अपवादाश्च सप्त । तदाह । जात्यंशप्रकारमिति । जातौ येंऽशस्वरास्तेषु य प्रकारोऽपवादविधिश्चतस्तद्व्यतिक्रमेण । पूर्वाभिप्रायेणौडुवमाह । पञ्चस्वरमिति । दशविधमिति । दशस्वेव हि जातिषु । तत्र त्रिंश प्रकार मिति । त्रिषष्टेश्चतस्रो नित्यपूर्णा इति तदीया नवांशाः पात्यन्ते । *चतस्रो नित्यषाडवा इति तदीया द्वादशेति । अनेक शिष्टा द्वाचत्वारिंशत् । अत्र* हि द्वादशो शदानीया इति शिष्टास्त्रिंशत् । तदाह । पूर्वोक्तं लक्षण चास्येति ॥७६॥

अथैतद्व्यतिरिक्त किन (किञ्चिन्) मार्गप्रसङ्गाष्ट्ध्रुवा(स्व)स्तीति वदन् गान्धर्वे तदभावमाह ।

षट्स्वरस्य प्रयोगोऽस्ति तथा पञ्चस्वरस्य च ।
चतुःस्वरप्रयोगोऽस्ति (पि)कृष्टासु द्वादशास्विह
(ह्यवकृष्टध्रुवास्विह) ॥

इति । तथेति समुच्चये च समुच्चितावधारणे । तेन षड्जा.. ...स्वरयो पूर्णस्यैवास्ति प्रयोग. । अस्तीति तामाचक्षमाणो गान्धर्वे तन्नियममाह । इहेति । यदिम नाट्योपयोगि ध्रुवागान तत्र चतुःस्वरप्रयोगोऽपि । अपिशब्दात् पूर्वोऽपि त्रिविध । (कु)त्रेत्याह । अवकृष्टासु करणोपयोगिनीषु गुरुप्रायासु ध्रुवासु ॥७७॥

अथ ग्रहाशाना सङ्ख्या निरूपयितु प्रतिजाति विभागमाह । द्वैग्रामिकीणां जातीनामित्यादि ॥७८॥

---

१. NS त्रिषष्टिरशा ।
२. KSS, NS तासा चैव तथा ग्रहा. ।

षंशग्रहमिदानीं वक्ष्यामः । तत्र

मध्यमोदीच्यवायास्तु नन्दयन्त्यास्तथैव च ॥
तथा गान्धारपञ्चम्या पञ्चमोंऽशो ग्रहस्तथा[1] ॥७९॥
धैवत्याश्च तथा ह्यंशौ विज्ञेयौ धैवतर्षभौ ।
पञ्चम्याश्च तथा ज्ञेयौ ग्रहांशौ पञ्चमर्षभौ ॥८०॥
गान्धारोदीच्यवायास्तु ग्रहांशौ षड्जमध्यमौ । 
[2]आर्षभ्याश्च ग्रहा ह्यंशा धैवतर्षभसप्तमा ॥८१॥
गान्धारश्च निषादश्च ह्यार्षभश्च तथापरः ।
निषादिन्यास्त्रयो ह्येते ग्रहा ह्यंशाश्च कीर्तिताः ॥८२॥
षड्जपञ्चमगान्धारैस्त्रिभिरेव प्रकीर्तिता ।
अंशैर्ग्रहैस्तथा चैव विज्ञेया षड्जकैशिकी ॥८३॥
[3]षड्जश्च मध्यमश्चैव निषादो धैवतस्तथा ।
[4]षड्जोदीच्यवतीजातेर्ग्रहा ह्यंशाश्च कीर्तिताः ॥८४॥

---

तत्र सङ्ख्यानुरोधाद् ग्रामविभागक्रममनादृत्यैवैकादश्याद्यादियोग सप्तांश-पर्यन्तमाह । मध्यमोदीच्यवायास्त्वित्यादि । तत्र तिसृणामेक एकोंऽशः । तिसृणां द्वे द्वे (द्वौ द्वौ) । तिसृणां त्रय । तिसृणां चत्वार । चतसृणां पञ्च । एकस्याः सप्त(षट्) । (एकस्याः) सप्तेति (त्रि)षष्टिः । स एव यो(स एवांशो) ग्रहः । नन्दयन्त्यामंशस्वर एव ग्रहयुक्तो निजलक्षणाद्गान्धारो लक्ष्यत इति विकल्पो मन्तव्य । मुनिना ग्रहत्वमंशस्योक्तमिति तदेव मुख्यम् । यन्वत् सवादिविवाद्यादियंदा ग्रह क्रियते तदा विकृतत्वमासाम् । तदाह । विकृत (ता) स्वरयोगत इति । ग्रह-विकारः सर्वासामेव जातीनामस्तीति या(सर्वा)स्वत्र ॥७९-९१॥

अथास्य सप्तचत्वारिंशदधिकस्य जात्यंशविभागस्य यत्नपरेक्षणीयत्वमभिधास्यन् प्रधानमेव सङ्ख्याविभागं संक्षिप्याह । सर्वासामेव जातीनां त्रिषष्टिस्तु गण इति ।

---

१ KSS स्मृत ।
२ NS आर्षभ्या तु निषादस्तु तथा चर्षभधैवतौ । KSS आर्षभ्याश्च तथैवांशा निषादर्षभधैवता ॥
३. NSS निषादिन्या (निषादा N ) निषादस्तु गान्धारश्चर्षभस्तथा ।
४ ग्रहांश्च (तथा च N ) षड्जकैशिक्या षड्जगान्धारपञ्चमा ।
५ इत पूर्वं क० न० पुस्तकयो "तिसृणामपि जातीनां ग्रहा ह्यंशाश्च कीर्तिताः ।" इत्यधिकमस्ति ।
६ NS ग्रहा ग्रहास्तु चत्वार षड्जोदीच्यवतीश्रिता ।

पञ्चमश्चार्षभश्चैव निषादो धैवतस्तथा ।
[1]कार्मारव्या चतुरंशा ग्रहाश्च परिकीर्तिता ॥८५॥
गान्धारश्चार्षभश्चैव [2]पञ्चमोऽथ निषादवान् ।
[3]चत्वारोऽशा नन्दयन्त्या ग्रहाश्चैव तथैव हि ॥८६॥
षड्जश्चार्षभश्चैव मध्यम पञ्चमस्तथा ।
मध्यमाया [4]ग्रहा ज्ञेया अंशाश्चैव तथैवता. ॥८७॥
[5]निषादषड्जगान्धारमध्यमा पञ्चमस्तथा ।
गान्धारोदीच्यवत्यायोर्ग्रहा अंशाः प्रकीर्तिता [5] ॥८८॥
षाड्जी धैवतगान्धारषड्जमध्यमपञ्चमैं ।
ग्रहैरंशैश्च विज्ञेया विकृता स्वरयोगतः ॥८९॥
कैशिक्यास्त्वार्षभं हित्वा ग्रहांशाः षट् स्वराः स्मृताः ।
सप्तस्वरग्रहांशा तु विज्ञेया षड्जमध्यमा ॥९०॥
[6]एते त्रिषष्टिविज्ञेया [7]सर्वास्वंशास्तु(स्वत्र तु) जातिषु ।
अंशवच्च ग्रहास्तासा सर्वासामेव नित्यश ॥९१॥
सर्वासामेव जातीना त्रिजातिस्तु गणः स्मृतः ।
[8]ते च सप्त गणा ज्ञेया वर्धमानस्वरा बुधै ॥९२॥

गण समूह स च सर्वासा जातीनां मध्ये यास्तिस्रो जातयस्ताभि कर्तव्य । ननु समूह के (का)श्चिदेकस्या(देका)मुद्दिश्य क्रियते । इह तु समूहकरणे कोऽयं इत्याशङ्क्याह । ते च सप्त गणा ज्ञेया वर्धमानस्वरा इति । ते एको जातिस्वरप्रयुक्तो गण एकस्वरादारी यावत् सप्तस्वराश इति । स हि करणे अशासङ्ख्यो विभाग-

१ KSS कर्मारव्यास्तथैवाशाश्चत्वार सम्प्रकीर्तिता ।
२ KSS निषाद पञ्चमस्तथा
३ KSS *does not read*
४ KSS ग्रहास्त्वशा धैवतश्च प्रकीर्तित ।
५. KSS षड्जाया षडजगान्धारो मध्यम पञ्चमस्तथा ॥ धैवतश्चापि विज्ञेया ग्रहारचाशाश्च प्रकीर्तिता । न वर्जितर्षभयोगास्तु कैशिक्यश षट्चैव तु । स्वरा सर्वे च विज्ञेया षड्जमध्याशजा ग्रहा ॥ NS सर्वं ।
६. KSS NS एव ।
७. KSS NS ग्रहा अशाश्च जातिषु ।
८. KSS सर्वथा चैव विज्ञेया वर्धमानस्वरास्तथा (N यथा) ।

एकस्वरो द्विस्वरश्च त्रिस्वरोऽथ(श्च)चतुःस्वरः ।
[1]पञ्चस्वरश्चतुर्धा स्यादेकधा सप्तषट्स्वरौ ॥६३॥

[2]एतदुक्तं मया त्वासां ग्रहांशपरिकल्पनम् ।
पुनश्चैव प्रवक्ष्यामि न्यासापन्यासयोगतः ॥६४॥

---

प्रयोक्तव्यमित्युक्तं भवति । ननु यदि जातित्रयेण सप्तगणास्तर्हि कथमष्टादशजातयः । यच्च (यस्य न) तथा । पूर्वं ह्युक्तं जातयोऽष्टादशेत्येव ब्रह्मणाभिहितमिति (भ ना २८--३९) तदेतदपवादरूपं भवतु तदेकमुक्तम् ॥६२॥

त्रिजातित्वोत्सर्गस्य विषयमाह—

एकस्वरो द्विस्वरश्च त्रिस्वरश्च चतुःस्वरः ।

इति । एते चत्वारो गणास्त्रिजातय इत्यर्थः । एवं द्वादशजातयः । एकःस्वरोंऽशो यत्र गणे । एवं यावच्चत्वारः स्वरा अंशा यत्रेति । अपवादं दर्शयितुमाह । पञ्चस्वरश्चतुर्धा स्यादिति । यत्र पञ्चांशस्वरा स गणश्चतसृभिस्त्रिभिर्भवति मि ... .. (चतसृभिर्जातिभि ः) । तेन पूर्वाभि सह षोडश जातयः । एकधा सप्तषट्स्वरैरेकैव जाति । सप्तस्वरो गणः षट्स्वरश्च । एकस्या अपि जातेर्गणत्व व्यपदेशिवद्भेदेन स्वरातिभेदे निबन्धनमित्यष्टादशजातयः । त्रिचतुरिस्त्रा । स एव ग्रहा इति ॥६३॥

एतदुपसंहरति । एतदुक्तं मयेति ।

पुनश्चैव प्रवक्ष्यामि न्यासापन्यासयोगत ॥

इति । अथ भाव । अत्रग्रहांशोक्ता एव न्यासापन्यासास्तथा भेदये योगा यथालक्षणोक्तं प्राप्तितो लक्षणाभावः । षाडवौडुवितादय पूर्वमभुक्तत्वात् वक्ष्यमाणा कथ्यमानस्वेनोपयोगे... ततस्तावत् प्रतिजाति वक्तव्या । न्यासाद्यश्चो(श्चा)पन्यासाश्च योगाश्चेति द्वन्द्वः । . . न्यतो(सो)ऽश्य यत्रान्यसयोक्तमपि ग्रहांशविकल्पनं पुनर्वक्ष्यामि । तदभिधाने हि मुख्यग्रहणमयज्ञा (ज्ञा)तु शक्यमिति भाव । अतएवेक्तो हि प्रायशोऽयलक्षणमप्यहार(व्यवहार) । एकस्थान च जातिलक्षणं ज्ञातु स्पष्टतर भवति । प्रतिजायशेषा यदा तु त एवंविध... लक्ष्य प्रपञ्चश्चेति । इत्यादयोपयोगी वाम जातिसन्धि । अन्ये त्वत्रग्रहमित्यादिना लक्षणमित्यादिग्रन्थं तत्र पठन्ति ॥६४॥

षाड्जी लक्षयति । पञ्चांशास्तिव(त्वि)ति । सप्तमपञ्चा इत्यर्थः । यत इत्येतावपन्यासौ । स(सो)न्यास । निषादेन (हीना) षाडव(वा) इति । अन्योन्य-

---

१ KSS NS षड्स्वरश्च तथा सप्तस्वरोऽपि च ।

२ NS पूर्वमुक्तमिदं । KSS varies absolutely

निषादिन्यां निषादोंऽशो सगान्धारर्षभस्तथा[1] ।
एत एव ह्यपन्यासा न्यासश्चैवात्र सप्तमः ॥१०२॥
धैवत्या इव कर्तव्ये षाडवौडुविते तथा ।
तद्वच्च लङ्घनीयौ तु बलवन्तौ तथैव च ॥१०३॥

अंशास्तु षड्जकैशिक्याः षड्जगान्धारपञ्चमाः ।
[2]अपन्यासा भवन्त्यत्र षड्जपञ्चमसप्तमाः ॥१०४॥

गान्धारश्च भवेन्न्यासो हीनस्वर्यं न चात्र तु ।
दौर्बल्यं चात्र कर्तव्यं धैवत(मध्यम)स्यार्षभस्य च ॥१०५॥

षड्जश्च मध्यमश्चैव निषादो धैवतस्तथा ।
[3]अंशाः षड्जोदीच्यवायास्तु न्यासश्चैव तु मध्यमः ॥१०६॥
अपन्यासौ भवेतां च धैवतः षड्ज एव च ।

---

भवति । निषयोरत्र किञ्चिदाधिक्यमिति । अस्याः शुद्धत्वं नास्तीति अत एवाद्यका पूर्णा ॥१०४—१०५॥

अथ षड्जोदीच्यवा । षड्जश्चेत्यादि । समनिधा अंशाः । धष(सा) म(ध) पन्यासा(सौ) । म(मो) न्यास । अंशानामन्योन्यसङ्गतिः । रिलोपे षाडव(म्) । ऋषभलोपे औडवम् । ऋषभ संवादी धैवतस्य षड्जलोपे न लुप्यमाने यत । संगता बलिन । अस्य(षड्ज)स्यांशत्वात् सिद्धं बलित्वं पुनराधिक्यार्थमुक्तम् । ऋषभस्या-स्यल्पत्वं प्राप्तं प्रतिषेद्धुं गान्धारस्य मन्द्रस्थाने बाहुल्यम् । अस्या एकादशांशका । पूर्णादिषत्वार । षाडवाश्चत्वार । धैवतांशे तदल्पवादाद् । औडुविताश्चत्वार ।

---

१ KSS गान्धारश्चर्षभस्तथा ॥ एत एव ह्यपन्यासा षड्जमध्यमपञ्चमा । निषादश्च भवेन्न्यासो हीनस्वर्यं च नेष्यते ॥ दौर्बल्यं चात्र कर्तव्यं धैवतर्षभयोस्तथा ॥

२. KSS एत एव ह्यपन्यासा सनिषादा प्रकीर्तिता ॥ गान्धारोऽत्र भवेन्न्यासो दुर्बलौ धैवतर्षभौ ॥ हीनस्वरस्याभावात्तु सम्पूर्णा चेयमिष्यते ॥

३ भवन्ति षड्जोदीच्यव्या न्यासो मध्यम इष्यते ॥ अपन्यासाविह स्यातां धैवतर्षभ एव च ॥ परस्पराशानुगमो गान्धारोऽनुपतो भवेत् ॥ पञ्चमर्षभहीनं तु पञ्चस्वर्यं विधीयते ॥ ऋषभः षाडवे हीनो लङ्घनं च तयोर्भवेत् ॥

[1]परस्परांशगमनमिष्टतश्च[2] विधीयते ॥१०७॥
षाड्स्वर्यमृषभापेतं कार्यं गान्धर्ववेदिभिः ।
पञ्चमार्षभहीनं तु पाञ्चस्वर्यं तु तत्र वै ॥१०८॥
षड्जश्चाप्यृषभश्चैव गान्धारश्च बली भवेत् ।
गान्धारस्य च बाहुल्यं मन्द्रस्थाने विधीयते ॥१०९॥
सर्वेंऽशा. षड्जमध्यमायामपन्यासास्तथैव च[3] ।
षड्जश्च मध्यमश्चापि न्यासो नार्यौ प्रयोक्तृभि ॥११०॥
गान्धारसप्तमापेत पाञ्चस्वर्यं विधीयते ।
[2]षाडवं सप्तमापेतं कार्यं चात्र प्रयोगतः ॥१११॥
मिथःस्वराणां सञ्चार इष्टतस्तु विधीयते ।
षड्जग्रामाभिन्ना (श्रयाः)श्रु ता(सप्त) विज्ञेया सप्त जातयः
(या जातयो ध्रुवं ) ॥११२॥

---

षुर्वस्तु नास्ति । तत्र कैशिके पूर्वं निर्वचनमुक्तम् । तद्योगाश्चाति । कैशिकी । उदीच्यवन्या(वायां)श्चाह. । उदीच्या प्रयोक्तारो बाहुल्येन अन्यस्यामित्युदीच्या । वान्ति गच्छन्तीति । उदीच्येऽपि च दृश्यते । गीत च देशनामधेयैर्बाहुल्यादिभिरवित-त्वापेक्षया व्यपदिश्यत एव । टक्करागो मालवपञ्चमो गौडी मालवी काम्भोजी-त्यादि ॥१०६-१०६

अथ षड्जमध्यमा । सर्वेंशा. षड्जमध्यामामिति । सप्तांशा अपन्यासाश्च । षम्मौ न्यासौ । निलोपे षाडव । निगयोप्य(पि)न्य । निरल्पतरो यथाऽन्य सदा । सञ्चारे यथेष्टम् । अस्या सप्तदशाशका । तत्र सप्त पूर्णा । पञ्च षाडवा षोडु-विताश्च । यो...रितयोस्तत्पवादात् । एतदुपसंहरति । षड्जग्रामाश्रया: सप्तेति ॥११०-११२॥

अन्यदुपक्रमते । अतः परमिति । तत्र गान्धारी तावत् । गान्धार्यां इति । धमगपनि(नयो)मशा (शा) । सपावपन्यासौ । ग(गो) न्यास । रिलोपे षाडव । रिधमोपेऽन्यत् । पञ्चमस्य शापे ह्यलोप्यत्वम् । तयोर्लङ्घन पूर्णावस्थायामृषभावैवत-

---

१. NS परस्परविहाराणां सञ्चारश्च विधीयते । KSS- परस्परांशानुगमो गान्धारोनुगमो भवेत् । षाडवे चर्षभापेन ॥

२ KSS ऋषभ षाडवे होमो दुर्बल- सविशेषत ॥

अतः परं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः[1]।
[2]गान्धार्यां पञ्च एवांशा धैवतर्षभवर्जिताः ॥११३॥

[3]षड्जश्च पञ्चमश्चैव ह्यपन्यासौ प्रकीर्तितौ।
गान्धारश्च भवेन्न्यासः षाडवं चर्षभं विना ॥११४॥

धैवतर्षभयोर्हीनं तथा चौडुवितं भवेत्[4]।
लङ्घनीयौ च तौ नित्यमार्षभाद्धैवतं व्रजेत् ॥
विहितस्त्विति गान्धार्यां स्वरन्यासांशगोचरः ॥११५॥

लक्षणं रक्तगान्धार्या गान्धार्या एव यत्स्मृतम्।
[5]धैवतो बलवानत्र दौर्बल्यं तस्य लोपतः ॥११६॥

गान्धारषड्जयोश्चात्र सञ्चारश्चार्षभादिना[5]।
[5]अपन्यासस्तथा चैव मध्यमस्तु विधीयते ॥११७॥

---

गमनम्। मध्येषा स्वराणां न्यासस्वरविषयोऽशस्वरविषयश्च सञ्चारः। तदाह। स्वरन्यासांशगोचर इति। स्वराणां न्यसनस्वा(स्या) शगोचरं भवत इत्येतदथमन्ये व्याचक्षते। एवं चैतदनुक्तसम (म)स्यात्। अस्यामेका (स्या त्रयोदशा)शका चुवा विकृता। पूर्णा पञ्च। चत्वारः षाडवा। पञ्चमे तदपवादात्। औडुविते गान्धार एवांशेऽन्यत्र तदपवादात् ॥११३—११५॥

अथ रक्तगान्धारी। लक्षणं रक्तगान्धार्या इति। सगमपनि(मध) पञ्चांशा। ऋषभेऽपि षाडवम्। ऋषभलोपेऽप्यत्। कस्तर्हि स्यात्ततो विशेष। आह। धैवतो बलवानत्र। तस्य हि लोपत्वाद्दौर्बल्यं स्यात्। ऋषभं चोल्लङ्घ्य सगेत्य मयोरन्योन्यमैकद्य मेलनं च। अपन्यासो मध्यम। अस्या द्वादशाशका। पूर्णा पञ्च। चत्वारः षाडवा। पञ्चमेऽप्यवाद। नव औडुविता। मध्यमषड्जयोस्तु तदपवादात् ॥११६-११७॥

---

१ KSS संश्रिताः।
२ KSS अंशाः स्युः पञ्च गान्धार्याः ॥
३ KSS अपन्यासत्वमस्यास्तु षड्जपञ्चमयोरपि ॥ धैवतर्षभगान्धार्यां कर्तव्य स्वरयोगतः ॥ षड्जमध्यमयोरत्र बाहुल्यं संविधीयते ॥
प्रयोक्तृभिः प्रयोक्तव्यं गान्धारस्य च लङ्घनम् गान्धारीविहितस्यासौ हीनस्वर्यं च लक्षणम्। सर्वं च रक्तपूर्वाया गान्धार्याश्च विनिर्दिशेत् ॥ बलवन्तौ विधातव्यौ धैवतः सप्तमस्तथा ॥
४ KSS आर्षभं विना।
५ KSS अपन्यासस्तु कार्यं स्यादेक एवात्र मध्यमः ॥

[1]गान्धारोदीच्यवांशौ तु विज्ञेयौ[2] षड्जमध्यमौ ।
[2]पाञ्चस्वर्यं न चैवात्र षाड्स्वर्यमृषभं विना ॥११८॥

कार्यस्त्वन्तरमार्गश्च न्यासोऽपन्यास एव च ।
[3]षड्जोदीच्यवतीयस्तु पाञ्चस्वर्येण जातुचित् ॥११९॥

मध्यमाया भवन्त्यंशा [4]विना गान्धारसप्तमौ ।
एत एव ह्यपन्यासा न्यासश्चैव तु मध्यमः ॥१२०॥

[5]गान्धारसप्तमापेतं पाञ्चस्वर्यं विधीयते ।
षाडवं चाप्यगान्धारं कर्तव्यं तु प्रयोगतः ॥१२१॥

षड्जमध्यमयोश्चात्र कार्यं बाहुल्यमेव हि ।
गान्धारलङ्घनं चात्र कार्यं नित्यं प्रयोक्तृभिः ॥१२२॥

---

अथ गान्धारोदीच्यवा । गान्धारोदीच्यवाऽऽख्यायिते । द्वौ समावंशौ । ऋषभेण षाडव । औडुवितस्याप्येव(म्) । षड्जोदीच्य(वत्या)वा-न्या (पञ्चम्) । अस्या-मन्तरमार्गं परस्परमसंस्वरयो सञ्चार । स(धा) ध(न)पन्यासौ । षड्जेनातोऽपि बहुतर । ऋषभो लोप्योऽपि पूर्णावस्थायामप्य । मन्द्रस्थाने गान्धारस्य भूयस्त्वमिति सर्वमतिदेशात् । अस्याश्चत्वारोंऽशा । द्वौ पूर्णौ द्वौ षाडवौ ॥११८-११९॥

अथ मध्यमा । मध्यमाया भवन्त्यंशा इति । अरिमपधा अंशा । अपन्यासास्त एव । न्यासो म । गलोपे षाडव । गनिलोपे चापरम् । सनयो पर्यायांशत्वात् सिद्ध बहुत्वम् । पुनर्वचनात् प्रकृष्ट मन्तव्यम् । गान्धारस्य लोप्यत्वाल्लङ्घनमल्पत्वम् । पूर्णावस्थायामपि यत्नात्कर्तव्यते । अस्या अष्टावंशाः । पूर्णा पञ्च । विकृतास्तावन्त एव षाडवौडुविता ॥१२०-१२२॥

अथ मध्यमोदीच्यवेति । अंशा (पञ्चम) । नित्यपूर्णता । गान्धारोदीच्य

---

१ KSS गान्धारोदीच्यवायां तु तावंशौ ।
२ KSS पञ्चस्वर्यं भवेनात्र षाट्स्वर्यं चर्षभं विना ।
३ KSS तत्राल्पत्वाद्द्विविधम षड्जोदीच्यवतीमता ॥
४. KSS सषड्जर्षभमध्यमा । पञ्चमो धैवतश्चैवापन्यासास्तु त एव तु ॥
५ KSS न्यासो मध्यम एवात्र द्विश्रुत्योर्हीनता भवेद् । गान्धारहीन षाट्स्वर्यं बाहुल्य षड्जमध्यमो । गान्धारस्य च दौर्बल्य मध्यमायां विधीयते ॥

[1]मध्यमोदीच्यवा पूर्णा ह्यंश एकस्तु पञ्चमः ।
शेषो विधिस्तु कर्तव्यो गान्धारोदीच्यवा गतः[2] ॥१२३॥

द्वावंशावथ पञ्चम्यामृषभः पञ्चमस्तथा[3] ।
स(ऋ)निषादावपन्यासो न्यासश्चैव तु पञ्चमः ॥१२४॥

मध्यमावत् कर्तव्ये षाडवौडुविते तथा ।
दौर्बल्यं चात्र कर्तव्यं षड्जगान्धारमध्यमैः ॥१२५॥

कुर्यादत्यत्र सञ्चारं पञ्चमस्यार्षभस्य च ।
गान्धारगमनं चैव[4] कार्यं त्वत्पञ्च(स्य च)सप्तम (मात्) ॥१२६॥

अथ गान्धारपञ्चम्या पञ्चमोंऽशः प्रकीर्तितः ।
तारगत्या तु षड्जोऽपि कदाचिन्नातिवर्तते ॥१२७॥

---

(वा)वद् विधिनिर्देशः । अपन्यासो सधौ । मध्यमगान्धारव(बा)हुल(ल्य)म् । न्यासो म । अस्या एकोंऽशक पूर्णा ॥१२३॥

अथ पञ्चमी । द्वावंशावथ पञ्चम्यामिति । रिपावंशौ । ऋनी अपन्यासौ । पो न्यासः ॥१२४॥

गलोपे षाडवं गनिलोपे औडुवमिति मध्यमावदित्यति शेष । षड्जमध्यमयोरंशत्वाद् गान्धारस्य लोप्यत्वात् सिद्धेऽल्पत्वेऽल्पतरार्थं वचनम् ॥१२५॥

रिम(प) इत्यनयोरन्योन्यसङ्गतिः । पूर्णावस्थायां च निषादाद् गान्धारगमनम् । तच्च परिमितम् । तस्या षडंशका शुद्धा । द्वौ पूर्णौ द्वौ षाडवौ एक औडुवितम्(त) । ऋपञ्चसे (धैवतस्या)पददनात् ॥१२६॥

अथ गान्धारपञ्चम्या इति । अंशः प । ऋपावपन्यासौ । गो न्यासः । नित्यपूर्णता । धैवतगमनमृषभादिति गान्धार्या(र्या) सञ्चारः । उक्त मध्यमर्षभसङ्गतिर्निषादादृगान्धार इति पञ्चम्याम् । एतावुभयोऽप्यस्या कार्यं । एक एवास्या अंशक ॥१२७-१२८॥

---

१ KSS मध्यमोदीच्यवायास्तु पञ्चमोऽशो न हीयते ।

२ KSS भवत ।

३ KSS न भवत पञ्चमर्षभौ । अपन्यासो निषादश्च पञ्चमर्षभसयुत ॥ न्यास पञ्चम एव स्यात् मध्यमावच्च हीनता ॥ दुर्बलाश्चात्र कर्तव्याः षड्जगान्धारमध्यमा । कुर्याच्चाप्यत्र सञ्चार मध्यमस्यर्षभस्य च ॥

४. KSS कमम चास्य सप्तमात् सम्प्रयोजयेत् ।

ऋषभः पञ्चमश्चैव ह्यपन्यासौ प्रकीर्तितौ ।
[1]न्यासश्चैव तु गान्धारो सा च पूर्णस्वरा सदा ।
[2]पञ्चम्या यश्च गान्धार्याः सञ्चार [illegible] विधीयते ॥१२८॥

[3]पञ्चमश्चार्षभश्चैव गान्धारोऽथ निषादवान् ।
चत्वारोंऽशा भवन्त्यान्ध्र्यामपन्यासास्त एव हि ॥१२९॥

गान्धारश्च भवेन्न्यासः षड्जापेतं तु षाडवम् ।
[4]गान्धारार्षभयोश्चापि सञ्चारस्तु परस्परम् ॥१३०॥

[5]सप्तमस्य च षष्ठस्य न्यासो गत्यनुपूर्वशः ।
षड्जस्य लङ्घनं चात्र नास्ति चौडुवितं सदा ॥१३१॥

नन्दयन्त्याः(न्त्यां) [6]क्रमात् न्यासापन्यासांशाः प्रकीर्तिताः ।
गान्धारो मध्यमश्चैव पञ्चमश्चैव नित्यशः ॥१३२॥

---

मधान्ध्री । पञ्चमश्चेति । ऋगपनीरयंशाः । त एवापन्यासाश्च । ग(गो) न्यासः । सलोपे षाडवः । औडुवितामाव । ऋग अ(इत्य)नयो सगतिः । निषाद-धैवतयोश्च न्यासो गत्यनुपूर्वशः । यो यदात्र प्रधानभूतस्तेन तेन न्या(न्या)सः गमन कार्यम् । तदुक्तम् । अंशानुपूर्व्या न्यासगमनमिति । अन्ये त्वाहुः । येनैव क्रमेणांशा स्वराः पठितास्तेनैव क्रमेण ते कार्या यावदपन्यासस्वर इति । अस्यामष्टावंशका । चत्वारः पूर्णाः षाडवाः ॥१२६ १३२॥

अथ नन्दयन्ती । नन्दयन्त्यां क्रमादिति । प(पो)न्यासो ग्रहश्चेति वक्ष्यते । अपन्यासः अ(सो म.) । प अ(पोऽ)श सोऽप्यपन्यासः पश्चादुक्तः । षड्जेन षाडवम् । नीऽयत्वाल्लङ्घनत्वं सिद्धम् । पुनर्वचनादल्पतरत्वमपीति । मन्तव्यम् । नान्ध्रीलक्ष-णमिति । गान्धार्यार्षभीभ्यामान्ध्री पञ्चम्यार्षभीगान्धारीभिर्नन्दयन्तीति ससर्ग-

---

१ KSS गान्धारोऽत्र भवेन्न्यासो हीनस्वर्यं च नेष्यते ॥
२. KSS गान्धारोपञ्चमीभ्या तु सचार सविधीयते ।
३. KSS NS. ऋषभ पञ्चमश्चैव ।
४. KSS. NS. गान्धारषड्जयोरत्र ।
५. KSS. षष्ठसप्तमयोश्चात्र ।
६. KSS क्रमाद् विद्यादपन्यासोऽश एव च ॥ NS भवत्यश पञ्चमो नित्यमेव तु ॥ स्यातामस्या अपन्यासौ मध्यम पञ्चमस्तथा ॥ षाडव षड्जहीन तु सङ्कीर्णः स एव च ॥ धान्ध्रीवत्सञ्चरो नित्यमृषभस्य च लङ्घनम् ॥ तत्र मन्द्रगतिः प्रोक्ता नित्य गानप्रयोक्तृभि. ॥

षड्जो लोप्यश्च लङ्घ्यश्च गान्धीसञ्चरणे भवेत् ।
लङ्घनं ह्यृषभस्यापि तच्च मन्द्रगतं स्मृतम् ॥१३३॥

तारगत्या तु षड्जस्तु(ड्जोऽपि) कदाचिन्नातिवर्तते ।
गान्धारो वा ग्रहः कार्यस्तथा न्यासश्च नित्यशः ॥१३४॥

[1]कार्मारव्या स्मृता ह्यंशा आर्षभं पञ्चमस्तथा ।
धैवतश्च निषादश्चाप्यपन्यासास्त एव तु ।
[2]पञ्चमश्च भवेन्न्यासो हीनस्वर्यं न चात्र तु ॥१३५॥

गान्धारस्य विशेषेण सर्वतो गमनं भवेत् ॥१३६॥

---

प्रकरणे निरूपणं जातिवयस्यकारणतुल्यत्वादान्ध्रीवद् सगतिः प्राप्नोति इत्यनेन निषिध्यते । एतच्चारक्तातल्यजातिकारणिकानां जातीनां सङ्गतिरतुल्यैव कर्तव्येति सूचयति । ऋषभस्य लङ्घनं च इत्यस्येति पक्षिस्वरूपं यथं उपचरित इ(मि)ति । मन्द्रगतं लङ्घननियुक्तम् । तारगत्या षड्जो नातिवर्तते नातिशय्यते । .... गत्या षड्जो नातिवर्तते नातिशय्यते । तत ऊर्ध्वकं न शिरस्यसप्तकस्वरा प्रष्टव्या इत्यर्थं । अन्ये त्वाचक्षते । षड्जेन(ड्ज एव) कदाचिन्नातिवर्तते नारोहं भजते तारं न किञ्चिद् प्रष्टव्यमित्यर्थं । कदाचिदिति । वैकल्पिकोऽयं तारं इत्यर्थं । ग्रहणमेकं पूर्णोति एकं षाडव इति द्वौ ॥१३२-१३४॥

अथ कार्मारवी । कार्मारव्या इति । ऋषभनि(न्यौ) अंशा(ऽशा) अपन्यासा इच । पन्यासता । नित्यपूर्णता । विशेषेणेति । अन्ये त्वनया इहाभूतस्वभाज । सर्वेष्वोऽपि विशेषेण तु गान्धारस्य यथाशक्ति सञ्चरति । यदाह विशाखिलाचार्य- । बाहुल्यादनशानां विशेषतः सर्वतो गान्धारगमनमिति । अस्याश्चत्वारोऽशाः पूर्णा एक ॥१३५-१३६॥

अथ कैशिकी । कैशिक्यामिति । सगमपधनिष(न्यौ)शा अपन्यासाश्च । गनी न्यासौ । पर्यायेण धैवतनिषादौ यदांशौ तदा पञ्चमो न्यासः । कदाचित् ऋषभोऽपीति । लोपावस्थाया तन्ना(तु ना)शौ । तथा पूर्णतादशाया तु वा भवतीति । दौर्बल्यमृषभस्य । यत कदाचिल्लोप(प्य)त्वात् । ऋलोपे यथा षाडवम् । ऋषलोपे

---

१ KSS कर्मारव्या भवन्त्यंशा पञ्चमर्षभधैवता ॥ निषादश्चेति चत्वारो ग्रहाश्च परिकीर्तिता ॥ एत एव ह्यपन्यासा न्यास पञ्चम इष्यते । हीनस्वर्यं न चात्र स्यादनशा बलिनस्तथा ॥

२ KSS — एत एव अपन्यासा न्यासा पञ्चम इष्यत ।
हीनस्वर्यान् चात्र स्यादनशा बलिनस्तथा ।

सम्प्रणेतार प्रसिद्धास्त्विति छलयन्ति लोकान् सर्वथाऽर्थेऽनभिज्ञाता । व्यावृत्तिस्ता-वदस्त्वित्याशयेन तल्लक्षणं सङ्क्षिप्य पठाम क्रमेण ।

षड्जा(षाड्जी)मध्यमयोर्मध्यमोदीच्यायाश्च सङ्करात् ।
मान्तो स्याता (क्रमात्) षड्जमध्यमग्रामसंज्ञको ॥

सांशान्तो मध्यमोद्भूतो रागः स्याच्छुद्धषाडव ।
धांशान्तोऽल्पगनिर्मध्यमापञ्चम्योस्तु पञ्चमः ॥

साशौ मान्तौ तयोश्चैको धैवतीषड्जमध्ययो ।
कार्यः कैशिकमध्योऽन्यो जातः साधारितः स्मृतः ।
चितर्षिः कैशिकं पूर्णं सांशः पान्तश्च कैशिकी ।
कार्मारव्यस्य हेतु सा सप्तधा शुद्धगीतिका ॥

षड्जोदीच्याङ्गिन्मषड्जो धांशो मान्त परी(गत) ।
पांशो मान्तो भिन्नतानं पञ्चमीमध्यमोद्भवः ॥

सांशो मान्तोऽल्पगनिको ज्ञेयः कैशिकमध्यम. ।
षड्जमध्योद्भवो धांशः मान्तोऽसौ भिन्नपञ्चमः ॥

दुर्बलो रिश्च मन्द्रांशी पञ्चमीमध्यमोद्गतः ।
कार्मारवी षड्जमध्यामध्भूतो भिन्नकैशिकः ॥
सांशः पान्त पञ्चमेवभिन्नगीतिरि(रोय मता(त) ।
धैवतीषड्जमध्योत्थो [1]विपनिगोह्यपञ्चमः ॥
धांशो मान्त. साशमान्तो भिन्न कैशिकमध्यमः ।
धैवतीमध्यमोद्भूतः सांशः पान्तस्तु कैशिकः ॥
कार्मारवीषड्जमध्याजात्योस्त्रेधा तु गौरव. ॥
सौवीरः षड्जमध्योत्थो ॥
टक्क. सांशान्तो बहुसङ्गतिः ।

सांशान(न्त) षड्जमध्योत्थ सौवीरो गनिवर्जित ।
याशान्तो विगनिमध्यपञ्चम्योर्मालवेसर ।
मांशान्त षड्जमध्योत्थोऽप्यनिर्वेसरषाडवः ।
षपमध्योद्भवा(वो)षांशो मान्तो (बोट्ट) ।
हिन्दोलकश्च सांशान्तो रियजात्यपसम्भव ॥
सांशान्तोऽस्पनिगष्टक्कैशिको मध्यजातिभाक् ।
कैशिकपुरस्थो विधि साशन्यासो मालवकैशिक ॥
षट्या वेसरागीति ।
... ... . .. ॥
भार्येन्युत्थ .. . ।
... ... .. ॥
पूर्णस्तु (पा सो)धान्तो धा साशो मध्माद्यपञ्चम ।
मान्तोऽल्पगनिक षड्जमध्यमोत्थनिषादज ॥
सध्यशो रूपसाधारो मान्तो गान्धारसम्भव ।
गान्धारपञ्चमो गांशन्यासस्त्रिश्रुतिदुर्बल [४] ॥
[3]रशो मान्तश्चापभीजो रेवगुप्तो 'विषड्जक ।
द्विश्रुत्यल्पो सांश कैशिक्या षड्जकैशिक ॥
सांशान्त सधजातीओ निगो(गा)ल्प (ल्पो)ऽशकपञ्चम ।
इतीय नवधा गीति साधारण्याश्रया स्मृत (ता) ॥
एवा विभाषा गीति तु ग्रामरागाश्रिते मते ।
ध्रुवागानोपयोगाय तथेतद्गीतिसप्तकम् ॥

एतत्सङ्ग्रहार्येयमार्या कश्चित् पठिता । अस्मत्पुस्तकेषु न तथा दृश्यते । न च तया विना न सङ्गृहीतमेतद्भवति जात्यशके हि सर्व स्वीकृतम् । तथापि चा(मा)र्जनो पयोगिनो वैचित्र्यह्य(स्या)प्यनुज्ञान मुनिनव कृतम् । यतु स्वरप्रयोगोऽपि षप(ड्ज)कृष्ट्रध्रुवास्विह । (भ ना २८-७०) इति वदतोत्तरत्र चालङ्कारवैचित्र्य विभजतेति ॥

एवमेता बुधैर्ज्ञेया जातयो दशलक्षणाः[1] ।
[1]यथा यस्मिन् रसे यास्च गदतो मे निबोधत ॥१४१॥

इति भरतीये नाट्यशास्त्रे जातिविकल्पनं नामाध्यायोऽष्टाविंशतितमः ।

---

अध्यायार्थमुपसंहरन्नर्थान्तरं प्रस्तावयति । एवमेता इति । दश(दश)लक्षण-व्यभिचारिणी हेतु(चारिहेतु)सम्भवमात्रत इत्याशयेनाह । बुधैरिति । यथा यस्मि-न्निति । यत्र रसे येनाशान्यासादिना प्रकारेण या इत्यर्थः । गदतो मे इत्यनादरे षष्ठी । तेन मद्वचनमेवात्र न केवलं प्रमाणम् । यावत् कश्यपमुनिप्रभृतिभिरपि यन्निरूपितं तदपीति शिवम् ॥१४१॥

शिशिरकरकलाशेखरचरणाम्भोजाश्रयाकलिततापः ।
अभिनवगुप्तो गुप्तं जात्यध्यायं विचारितवान् ॥

इति श्रीमहामाहेश्वराचार्याभिनवगुप्तविरचितायां नाट्यवेदवृत्तावभिनवभारत्यां जातिविकल्पाध्यायोऽष्टाविंशः समाप्तः ॥

---

१. KSS NS कार्या (यथा) यस्मिन् रसे यश्च तत्त्वं मे सन्निबोधत ।

## अथैकोनत्रिंशोऽध्यायः

[1]षड्जोदीच्यवती चैव षड्जमध्या तथैव च ।
[2]मध्यपञ्चमबाहुल्यात् कार्या[3] शृङ्गारहास्ययो ॥१॥
[4]षाड्जी त्वथार्षभी चैव स्वस्वरांशपरिग्रहात[5] ।
[6]वीररौद्राद्भुतेष्वेते (वीरेऽद्भुते च रौद्रे च) प्रयोज्ये गानयोक्तृभि ॥२॥

---

## ॥ एकोनत्रिंशोऽध्यायः ॥

जातिविनियोगकल्पं भूवलवैचित्र्यमपि हि जनयति या ।
वन्दे तमभेदकरीं तां ज्वियति शाङ्करी शक्तिम् ॥१॥

अस्य योनिर्भवेद्गानम् । (भा० ना० २८-१०) इति गानसमन्वयेनास्य गान्धर्वलक्षणस्यार्थस्यागतत्वाज्जात्यात्मको यो गान्धर्वभाग उक्तस्तस्य भागे केनापेतोपयोग इत्यभिप्रायेणाध्यायान्ते पूर्वमुक्त यथा यस्मिन् रसे योज्य (याश्च भ० ना० २८-१४१) इति । गान्धर्वशेषतैव चार्थस्य या सम्प्राप्तिरनेनदर्थमध्यायच्छेद । तथा च वक्ष्यति । एवमेता बुधैर्ज्ञेया जातयो नाट्यसंश्रया. । (भ० ना० २९-१३) इत्य नाट्योपयोगिन्य इत्यर्थ । तत्र षड्जग्रामाश्रितानां रसाविष्टेषु विनियोक्तुमाह । षड्जोदीच्यवती चैवेति । षड्जादीच्यवत्या मध्यमेन योऽशक षड्जमध्यमाया षण्(ड्जो)मध्यमपञ्चमाख्या ते त्र्योऽशका । शृङ्गारहास्ययोरित्यत्र मध्यपञ्चमबाहुल्यादिति यथासम्भव विनियोज्या ॥१॥

षाड्ज्या षड्जेन योऽशक आर्षभ्यामृषभेण तौ वीराद्भुतरौद्रेषु । तदाह । स्वस्वरांशपरिग्रहादिति । स्वो नाम स्वरस्तस्य योऽशत्वेन परिग्रह इत्यर्थ ॥२॥

---

१. NS षड्जोदीच्यकर ।
२. KSS षड्जमध्यमबाहुल्यात् ।
३. KSS, NS. कार्यम् ।
४. KSS आर्षभी चैव षाड्जी च ।
५. NS स्वरांशपरितस्पृहात् । KSS षड्जर्षभग्रहस्वराम् ।
६. KSS वीराद्भूते च रौद्रे च निषादाङ्ग परिग्रहात् ।

[1]निषादेंऽशे तु नैषादी गान्धारे षड्जकैशिकी ।
करुणे तु रसे कार्या जातिगानविशारदैः ॥३॥

धैवती धैवतांशे तु[2] बीभत्से सभयानके ।
[3]ध्रुवाविधाने कर्तव्या जातिगाने प्रयत्नतः ।
[रसं कार्यमवस्थां च ज्ञात्वा योज्या प्रयोक्तृभिः ।]
षड्जग्रामाश्रिता ह्येताः प्रयोज्या[4] जातयो बुधैः ॥४॥

अतः परं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः[5] ।
गान्धारीरक्तगान्धार्यौ गान्धारांशोपपत्तितः ।
करुणे तु रसे कार्ये निषादेंऽशे[6] तथैव च ॥५॥

मध्यमा पञ्चमी चैव नन्दयन्ती तथैव च ।
[7][गान्धारपञ्चमी चैव मध्यमोदीच्यवा तथा ।]
मध्यमपञ्चमबाहुल्यात् कार्या शृङ्गारहास्ययोः ॥६॥

[8]कार्मारवी तथा चान्ध्री गान्धारोदीच्यवा तथा ।

---

निषादिन्या यो निषादांशक षड्जकैशिक्याश्च गान्धारांशकस्तौ करुणे ॥३॥
धैवत्या धैवतोंऽशको बीभत्सभयानकयोः ॥४॥

अथ मध्यमग्रामजातीनां विनियोगमाह । गान्धारीरक्तगान्धार्योरिति । एतयोर्द्वयोरपि गान्धारनिषादांशकौ करुणे ॥५॥

मध्यमाद्याः पञ्च मध्यमपञ्चमांशकाः शृङ्गारे हास्ये च ॥६॥

कार्मारव्यान्ध्र्योस्तिस्रो वीररौद्रयोः षड्जर्षभांशकयोर्योगे । कैशिकी धैवतांशा

---

१ KSS गान्धार्यंशोपपत्त्या च करुणे षड्जकैशिकी ॥
२ KSS भया च ।
३ अत्र पूर्वं "धैवती करुणे योज्या चोन्माद षड्जमध्यम" इति पद्यार्धमधिक NS पुस्तके ।
४ KSS विज्ञया ।
५ KSS मध्यग्रामसमाश्रया ।
६ KSS जातिगाने प्रयोक्तृभिः ।
७ काशीसीरिजपुस्तके पद्यमेतन्नास्ति ।
८ अत्र पूर्वं KSS पुस्तके "मध्यमोदीच्यवा चैव… कर्तव्या वीररौद्रयोः" इत्यधिक श्लोक ।

वीरे रौद्रेऽद्भुते(तथा) कार्याः षड्जर्षभांशयोजिताः ।
कैशिको धैवतांशे तु बीभत्से सभयानके[1] ॥७॥
एवं च षड्जमध्या ज्ञेया [2]सर्वरससंश्रया जातिः ।
तस्यास्त्वंशा सर्वे स्वरास्तु विहिताः प्रयोगविधौ ॥८॥

---

बीभत्सभयानकयोः ॥७॥

अत्र टीकाकार आह्कुते । योऽयं जात्यंशकानां विनियोग उक्तः स कश्यपमुनि-मतङ्गादिभिर्विरुध्यते । तथाहि तैरुक्तम् ।

सम्भोगे चैव शृङ्गारे प्रेङ्खोलितकमेव च ।
कामकृतेषु सर्वेषु कुर्यात् मालवकैशिकम् ।
भिन्नषड्जो मानवंश्ये चैकान्ताजीवितस्य च ॥

इत्यादि । न च ते रसभावाः एतेषु मतेषु । रसेषु विनियुक्ताः । येन विरोधः स्यात् ।

अत्राहुः । कश्यपाद्यैस्तावत् मालकैशिकादीनां तत्तच्चित्तवृत्त्या औचित्यं दृष्ट्वा विनियोग उक्तः । न तस्यानव्यापकत्वादङ्गीकर्तव्यम् । मुनिना जात्यंशक-विनियोग आधाराभिप्रायेणोक्तः । तथाहि । यावन्तः परमार्थतः स्वरा इति सप्त-चत्वारिंशत् स्वराः । यदाहुः । त्रिरूपविंशतिरूपा इति । (३+४४=४७) सङ्क्षेपेण त्वुदात्ताद्यस्त्रय एव स्वराः । विस्तरविवक्षायां तु जात्यंशग्रामरागभाषादेशीमार्ग-वैचित्र्येणानन्ता एव स्वराः ।

अन्ये हि षड्ज षाड्ज्यामन्यस्वार्यस्याः समाने जीविभि पाणिपादादियोगे यथा स एव चैनाव(वि)धो(धौ)ऽश्वपतित्वं महामात्रत्वं सेनापत्यं मन्त्रित्वं पौरोहित्यमिति विचित्रधर्मयोगित्वमुद्वहंस्तत्परिवारमध्यान्निष्क्रान्तोऽप्येकैको विग्रहावहितयैनाविभिन्न-मेवाभिमानं बिभर्ति तद्वत् तत्तदंशकवैचित्र्ययोग्यतास्वर एव केवलो रूपी विचित्रा-कारः । तथाहि । तुल्ये च श्रुति(त्ये)कत्वेऽप्यादृशो मालवकैशिके षड्जो भाति । टक्करागे त्वन्यादृशः । तथापि वेगस्वरसैन्धवभेदेन भिन्न एवावभाति च । कथं: षड्जस्त्वमिमात्रधव(क)श्रुतिएककरागोऽयं सैन्धवो वेगस्वर इति मालवकैशिको वा बीभत्स इति । सोऽयं सकलकरणोपजीवनप्रतिस्वभावभेदस्य व्यंशकस्वर इह यो

---

१. KSS तथा गान्धारपञ्चमी । इतोऽग्रे "प्रयोक्तव्या बुधैः सम्यक् बीभत्से सभयानके" इत्यधिकम् ।
२. KSS सर्वरसा सश्रया, जाति ।

स्थायी तत्र तत्र रसे कर्तव्यो मालवकैशिकादावपि गीयमाने स्वरगणानुदय एव। पश्चादिति(दपि) दृष्टतदाधारमभि(मि)माना आधेयस्यापि वैचित्र्यसिद्धिरिति।

उपाध्यायास्त्वाहुः। एवम्भूतस्तावदाधाराधेयभावो लक्ष्ये न लक्ष्यते। न च तस्य वैचित्र्यकारित्वं किञ्चिद्दृष्टम्। नापि मुनेः कश्यपादीनां वचनमत्र किञ्चिदस्ति। न च नियमादृष्टस्यात्र विषयः। तस्मादयमभिप्रायो मुनेः। इह जात्यंशका एव परमार्थतः समस्तगीतसर्वस्वम्। तत्र हि रागभाषादयोऽप्यन्तर्भूताः। न चायं नियमः। एकेनैव जात्यंशकेन भवितव्यम्। अत्रैव रस इति। तथा ह्याह। एकैव षड्जमध्या सर्वरसेषु जातिः। सप्तांशा हि सेति। तत्र यथा मालवकैशिकविनियुक्ते षड्ज(क्षे)-ष्व(ष) रञ्जनातिशयसिद्धये सैन्धविकाहयपुरिकादीनां भाषाणां गानमविरुद्धम्। तस्मात् तत्र तत्रांशके गीते सति तदनल्पतिशयत्वा(स्या)वश्य(श्य) मालवकैशिकादे-र्गानं भविष्यति रक्त्यतिशययोगात्। अत एव ह्येते ग्रामरागा इत्युक्ताः। ग्रामो हि जातिसमूहस्तस्य सम्बन्धिनो रक्त्यतिशया इति।

एतदप्यपरे नानुमन्यन्ते। न हि षड्जोदीच्यवत्या मालवकैशिको हिन्दोलको हि रसान्तरेण आनिनात। (सा हि) भिन्नषड्जस्य कारणत्वेनोक्ता। भिन्नषड्ज-हेतुरपि जातिस्ताभ्यां रक्तिमति सम्पत्स्यते।

को विरोध इत्यपरे।

अन्ये मन्यन्ते। यथा स्थायिसूत्रस्य यदा व्यभिचारिभ्यः सकाशादुद्रेको लक्ष्यते तदा रसहीनः प्रयोग उक्तः। तद्व्यञ्जकत्वशक्तानां सञ्चारिभावानां तु व्यभिचारिसम्पाते भावहीनाभिव ग्रामरागादीनामिति।

युक्त्यन्तरं किञ्च लक्ष्यते। किमनेन तन्त्रान्तरशीले(लने)न। कश्यपादिभिस्ता-वान् यो(वो)विनियोग उक्तः सोऽप्यत्र। अयमपि मुनिविनियुक्तोऽस्तु। परमतमप्रति-षिद्धमनुमतमिति स्थित्या हि न्यायात्। वैकल्पिकत्वे को विरोधः। प्रत्युत कोहल-रसाद्भविष्यतीति (भ० ना० ३७।१८) मतमनुज्ञातमेव मुनिना। एतत्प्रसिद्धये तत्र तत्रोक्तं रक्त्यतिशययोगाच्च। लोके कोहलकश्यपादिमतमेव प्रसिद्धिमुपगत-मित्यलं बहुना ॥८॥

न चायमेव नियम इति दर्शयितुं समस्तलक्ष्योपसंग्राहकं च सामान्यलक्षणं वक्तुमाह।

यो यत्र बलवान् यस्मिन् सर्व(स्वरो)जातिसमाश्रयात्।
तत्प्रवृत्तं रसे गानम्॥ इति॥

यस्मिन्निति। ग्रामरागभाषादौ। तेनेदमुक्तं भवति। क्वचिद्विशेषविनियोगस्तावदुक्तो यथा मालवकौशिकादौ। तत्रापि सर्वांशकायोगे भाषाद्वारेण भावनेन नियम्यते।

यो यदा बलवान् यस्मिन् स्वरो जातिसमाश्रयात्[1] ।
[2]तत्प्रवृत्त रसे कार्यं गानं (गान कार्यं) मेवे प्रयोक्तृभिः ॥९॥

मध्यपञ्चमभूयिष्ठ गानं शृङ्गारहास्ययो [3] ।
षड्जर्षभप्रायकृतं वीररौद्राद्भुतेषु च ॥१०॥

गान्धारः(र) सप्तमश्चाय (प्रायं) करुणे गानमिष्यते ।
तथा धैवतभूयिष्ठं बीभत्से सभयानके ॥११॥

[4][एवंव षड्जमध्या विज्ञेयाऽखिलरसाश्रया जातिः।]
तस्यास्त्वंशाः सर्वे स्वराश्च विहिताः[5] प्रयोगविधौ ॥१२॥

---

एतद्वृत्तिविशेषप्रधानोऽयम(व)लम्बनीयो यथा पञ्चमप्रधानतया सैन्धव्या भाषया शृङ्गार. सम्यगुद्दीपितो भवति मालवकैशिकेनेति ॥९॥

एव तावद्विनियोगे सति विनियोगशेषोऽय ग्रन्थो यत्र तु नोक्तस्तत्र जात्यंश-कस्वरपर्यालोचनयाऽभ्यूहनीयो विनियोग. । तेन ककुभस्य करुणे यद्यपि निषाद-गान्धारप्रधानया भोगवर्धनिकया समुपरक्तस्तोऽसौ सम्यक् करुणमभिव्यनक्ति । तदेतदाह । मध्यपञ्चमभूयिष्ठमित्यादि । ये स्वेनमतग्रन्थजातिविनियोगस्य शेषत्वेन व्याचक्षते तैः पौनरुक्त्य दुष्परिहरम् । तस्य प्रथमए(मे)वोक्तत्वात् ॥१०-११॥

ननु एवंव षड्जमध्या विज्ञेयाऽखिलरसाश्रया जातिः । इत्यार्या पुनरुक्तार्था । नैतदिव स्मृयोच्यते । जातिभिः सर्वं व्याप्तम् । जातयश्च सर्वा षड्जमध्यमायाम् । तथाहि । षड्ग्राममध्यमग्रामयोर्य(या)प्रधानभूते(ता)भाश्यजातीना या चेयद्भूतेति सर्वस्वराश्च तदेवास्यामतः । एतेन यावद् किञ्चिद्विलसर्वस्व ससारेऽस्ति तत्तत् षड्जमध्यमाया पिण्डीभूतमिति तदंशकेष्वेवमात्म्यम् । रक्तिलाभे सर्वे स्वराश्च विहिता प्रयोगविधाविति विन्यासादिभावेन चेत्यर्थ. । किञ्च ये केचित् प्रयोगस्य शेषस्य विधौ प्रकारभेदे गीतिसप्तके ते स्वरा(के स्वरा)स्तेऽस्यामेव जातौ विहिता एकीकृता इत्यर्थ. ॥१२॥

---

१. NS. समाश्रयः ।
२. KSS. तत्प्रयुक्ते रसे गानं कार्यं ।
३. KSS. हास्यशृङ्गारयोर्भवेत् ।
४ KSS. does not read here.
५. KSS. प्रयोगविहिता. ।

सर्वेष्वंशेषु रसा नियमविधानेन सम्प्रयोक्तव्याः ।
काकस्यन्तरविहिता विशेषयुक्तास्तु(श्च) बलवन्तः ।
एवमेता बुधैर्ज्ञेया [1]जातयो नाट्यसंश्रयाः ॥१३॥

---

यदि नामास्या जातावपि पिण्डीभूतं सर्वप्रयोगस्ततः प्रकृते किमित्याशङ्क्याह । सर्वेष्वंशेषु रसा नियमविधानेन सम्प्रयोक्तव्या इति । षड्जमध्यमयोः सम्बन्धिनो येंऽशाकास्तेषु सर्वेषु रसा यथोचितं सम्यक् प्रयोक्तव्याः ।

काकस्यन्तरविहिता विशेषयुक्तास्तु बलवन्तः ॥ इति ।

स्वरविशेष (ष)षड्जमाश्रित्य बलवत्त्वम् । काकस्यन्तरयोरपि न प्रयोगमात्रमादरणीयमपि तु बलवत्त्वमेव । जातीनां नाम्योपयोगं कथयन् रसादियोगो जातीनामनुद्दिष्ट एव किमिति कथितं इत्याशङ्का शमयति ।

एवमेता बुधैर्ज्ञेया जातयो नाट्यसंश्रयाः ॥ इति ।

इत्यमेता नाट्योपयोगिन्यो ध्रुवागानोपयोगविशेषत्वर्थः ॥१३॥

ततस्तल्लक्ष्यप्रबन्धगानोपयोगि कथमप्युद्दिष्टं विनियोगजातं कथ्यते ।

ध्रुवागानाभिजावेशो स्ववते निष्कलचीजुषाम् ।
सामाजिकानां हृदये सङ्क्रामेत् प्रस्तुतो रसः ॥१॥

तत्र शुद्धरसेनोक्ता भाषा रसयशसम्भवात् ।
प्रतीऽनुल्बणचिह्नतो सन्धिशेषे नियोज्यताम् ॥२॥

मुखे तु मध्यमग्रामः षड्जः प्रतिमुखे स्मृतः ।
गान्धारो गर्भसन्धौ स्यादवमर्शे तु पञ्चमः ॥३॥

कैशिकं स्यान्निर्वहणे प्रशस्यन्ते तु मध्यमः ।
बाढवः पूर्वरङ्गे स्याद्विष्णोर्नामिदयं विदुः ॥४॥

गौर्यास्तु पञ्चमं कुर्यात् साधारं स्कन्दसूर्ययोः ।
मध्यम कैशिकं विद्यात् साधारं च भयानके ॥५॥

ललित(तादि)रिय शुद्धा गीतिः स्यान्नाट्यवृत्तयोः ।
दैन्यावमानभूयिष्ठे रसे षड्जो विधीयते ॥६॥

कामिनीजनितेऽप्यपि भावास्तद्व्यभिचारिषु ।
शुद्धावहित्थे गोप्यत्वे दाक्षिणात्या सर्वेवते ॥७॥

---

१. KSS जातयो रससंश्रयाः । NS. जातयो नाट्यसंश्रयाः ।

[1]पाठ्यप्रयोगविहितान् स्वरांश्चापि निबोधत ।
हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ ।
षड्जर्षभौ च कर्तव्यौ वीररौद्राद्भुतेष्वथ ॥

गान्धारश्च निषादश्च कर्तव्यौ करुणे रसे ।
धैवतश्च [2]प्रयोक्तव्यो बीभत्से सभयानके ॥]

---

चिन्तायां कलिकौत्सुक्ये गौराली धूर्तमालिके ।
माङ्गली वेदप्रणययोः सैन्धवी तापसाम्बरे ॥८॥

कालिन्दी सम्मदे कुत्से पुलिन्द्यात्मप्रकाशिनि ।
श्रावणी शोकभूयिष्ठे बहुलास्याऽसीतसम्मदे ॥९॥

मालवी गुर्जरी चाथ चिन्ताप्रशमयोः क्रमात् ।
मतिधृत्यवहित्थेषु गीयते बाह्यषाडवा ॥१०॥

कौसला कौशले कुर्याद्गान्धारी षड्जवर्जिते ।
मृदौ सौवीरललिते लालिते ललितासमे ॥११॥

तुम्बुरावस्यकैशिक्यो गा(क्योर्गा)न्धारललिता भवेत् ।
कर्णाटी मग्ननिर्विण्णा(ण्णे) चित्रकर्मणि वा भवेत् ॥१२॥

कालिङ्ग्यमर्षविषे तु सिञ्जिता कपटात्मनाम् ।
मध्यमा स्मृतिशङ्कासु निर्विण्णे पार्वती भवेत् ॥१३॥

निषादिनी विमोहाद्यौ भिन्नषड्जे वणास्त्रयम् ।
स्वापकीये समोत्साहे भिन्नपञ्चम उच्यते ॥१४॥

सम्भ्रमे नर्तरागस्य मले(दे) कैशिकदपाद्भुते ।
क्रमाच्छ्रमामर्षेषु शुद्धभिन्ना(न्ना) नियुज्य(ज्य)ते ॥१५॥

वराटी वर्णसवेषविस्मयेषु विधीयते ।
धृतिस्मृत्यवहित्थेषु भवेद्धैवतभूषिता ॥१६॥

---

१ NS does not read KSS बाह्यप्रयोगविहितान् स्वरांश्चैव निबोधत ।

२. KSS प्रयोक्तव्य ।

आलस्यदैन्यमोहेषु विशाला व्रीडितेऽपि च ।
गर्वौत्सुक्यवितर्केषु ढक्कापरिगीयते ॥१७॥

त्रासशङ्कासम्भ्रमेषु कोशल्या विनियुज्यते ।
वाङ्गाल्यमर्षवेगेषु धृतिस्मृतिषु च स्मृता ॥१८॥

उत्तमे करुणे भावे सु(त)ये व्यभिचारिणि ।
कार्यान्तरा (सुरोद)भूते भाषा कामोद्भवा मता ॥१९॥

छन्नेऽभिलापे शृङ्गारे वीरे धर्मात्मके तथा ।
कृतकर्तव्यताया च कर्तव्यो भिन्नकैशिकः ॥२०॥

रक्तौचित्यादद्भुतोत्साहे भिन्नकैशिकमध्यमः ।
अनयोभिन्नयोर्बालाकैशिकयो व्यभिचारिणी(णि) ॥२१॥

सूक्ष्मभवना स्वरैर्यास्या श्रुत्या भिन्ना निरूपिता ।
प्रसत्स्वभावो यो रौद्र उत्साहो धर्मवर्जितः ॥२२॥

गौडपञ्चममिच्छन्ति तत्रैके कश्यपादयः ।
चिन्तादैन्यधृतिश्रद्धामर्षादौ द्राविडी स्मृता ॥२३॥

दुःखे दुरन्तेष्वभये पताकादेर्नियुज्यते ।
गौडकैशिकमेकस्य भाषा तन्त्रामिकामपि ॥२४॥
भयानके मध्यमः स्याद्भिन्ना चोत्साहयोगिनि ।
नन्दयन्तीव तन्त्रायां भवेत्तु व्यभिचारिषु ।
गौडगीतिरिय प्रायो वेगस्वरविचित्र(त्रि)ता ॥२५॥

टक्करागस्तु कर्तव्यो रसयोर्वीररौद्रयो. ।
दीप्ते च हृदयेऽस्यार्थे स्याद्गाढविपर्येऽपि स. ॥२६॥

हर्षे वाऽप्यथ चिन्तायां श्रवणा श्रवणोद्भवा ।
वैरञ्जिका हिता वन्ध्या देवाक्रो रणकल्पने ॥२७॥

मालवेधरिका कार्या समराङ्गणकल्पने ।
गुर्जर्यमर्षवेगेषु सौराष्ट्रो निष्ठुरात्मके ॥२८॥

सैन्धवो परितोषे स्याद्वैरस्ये वेसरी मता ।
पञ्चमाख्या विहसिते रविचन्द्रा विषादिनि ॥२९॥

अम्बाभे (ही)री मदोन्मादे ललिता दर्पविप्लवे ।
कोलाहले. कलकले मध्यमग्रामिका मता ॥३०॥

शङ्कासूयाश्रमे भाषा गेया गान्धारपञ्चमी ।
धृते(ता)वेता मतिस्मृत्योः स्याद्दिवाकरवर्धिनी ॥३१॥

पौराली दीप्तभावेषु साक्ती(त्वते)तानतूलिका ।
महानिर्वेदभावाना ॥३२॥

चिन्ताविषादनिर्वेदे शार्दूली शोकसम्भवा ।
भये हर्षे वितर्के च मालवी परिगीयते ॥३३॥

स्वाध्यायादिप्रसक्तेषु तज्ज्ञावस्ये च गीयते ।
सौवीरी मतिधृत्योस्तु सौवीरी वेगमध्यमा ॥३४॥

षाडारिता च हर्षे स्याद्गान्धारी शोकचिन्तयोः ।
अभिलाषिकशृङ्गारे मध्यस्थे हृदयेऽप्यथा ॥३५॥

हक्कार(वि)तथा(ता)वाथ गेयो मालवपञ्चमः ।
निर्वेदग्लानिशङ्कासु भये वा भैरिका भवेत् ॥३६॥

आवेगशङ्करसामर्षगर्वौग्र्ये भावनी मता ।
पाञ्चाली च मदोन्मादे दैन्यव्यौत्सुक्यनिद्रयोः ॥३७॥

गुर्जरी धृतिहर्षादावन्धाली मदवृद्धिषु ।
कामावस्था दाक्षिणात्या सर्वामुद्दीपयेत् किल ॥३७॥

आलस्यावहित्यमतिषु तर्के तानोद्भवा मता ।
भवणी मदनावस्था शोकोत्कण्ठासु कथ्यते ॥३९॥

मौचाना मदशङ्कौग्र्यगर्वालस्येषु कौशिकी ।
करुणे दैन्यभूयिष्ठे प्रादुर्वेदवती बुधा ॥४०॥

पौराल्पञ्चमे हर्षे गर्वे स्व(त्वा)न्धी प्रचक्षते ।
औग्र्ये क्रोधे च गान्धारी सङ्गमे च विभाविनी ॥४१॥

भिन्नकैशिकमध्यस्य स्थाने वेसरषाड(ड)व. ।
पुष्पमोक्षे चावहित्यवृत्यादौ बाहुषाड(ड)वः ॥४२॥

रवान्धा हास्ययोगे तु म(मा)ङ्गल्ये वोट्टरागत ।
मङ्गलाख्योत्सवे हर्षे रागश्चोऽविभाविनि ॥४३॥

रते कामदशानां वा भिन्नत्वे टक्ककैशिकः ।
भिन्नषड्जस्य वा स्थाने चिन्ताव्रीडासु मालवो ॥४४॥

अन्ये तु कथयन्त्येना चेटिकाशबरादिषु ।
रोषे स्यात् कैशिकी बन्धे भये स्याद् द्राविडी शुचि ॥४५॥

विप्रलम्भे कामदशायोगे मालवकैशिक ।
शुद्धा स्याच्छुद्ध(गान्धारी)पौराली शोकगोचरे ॥४६॥

हर्षे हर्षपुरी स्याता चिन्तायामथवेसरी ।
जुगुप्सायां तु पाञ्चाली सैन्धवी मोहगोचरे ॥४७॥

नर्मस्कन्जे(स्कन्दे)ऽपि चाभीरी सञ्जनो गीयते शुचि ।
अमर्षे गुर्जरी रौद्रे कैशिकी च सुदर्शने ॥४८॥

धृती मतौ श्रमे गौडा स्यात् सिन्धुवलिता मये ।
शार्दूली यक्षमाटी धृतिस्मृतिमतिष्वपि ॥४९॥

प्रेङ्खा सम्भोगशृङ्गारे विदूषकपरिक्रमे ।
आवेगे वेसरी दैन्यचिन्तयोश्चूतमञ्जरी ॥५०॥

औत्सुक्ये विभ्रमे खेदे षेवाडीं सम्प्रयोजयेत् ।
षड्जमध्यमिका हर्षधृत्योर्मधुरिका तथा ॥५१॥

शोके च हर्षिच द्राक्ष्या मदोन्मादेषु पिञ्जरी ।
व्रीडायां भिन्नवलिता चापले च विधीयते ॥५२॥

कर्तव्या भिन्नपौराली ह्यासासूयावितर्कणा ।
द्राविडी स्यात् परिभ्रष्टे पार्वत्युत्साहहर्षयो ॥५३॥

अष्टधा रागगीतिः स्याद्दोषाला(वा)विरयजीविता ।
शोकेऽप्येसे तु ककुभो धृतौ काम्भोजिका मता ॥५४॥

मध्यमग्रामिका गर्वे चिन्तालस्येषु माधुरी ।
षाडवर्षभिका चिन्ताश्रमतोषेषु गीयते ॥५५॥

मोगवर्धनिका शोके दैन्ये निर्वेदचिन्तयो ।
निद्रोन्मादजडत्वेषु शाकाङ्क्षे वलिता तथा ॥५६॥

भिन्नपञ्चमिकां कुर्यात् स्मृतौ धृत्यवहित्थयो ।
शोधवर्जनिकास्थाने मदे माऽऽभीरिका भवेत् ॥५७॥

विषादचिन्तानिर्वेददैन्यखेदप्रजागरे ।
उरमन्तो च शौराल्या श्रीवराव(ह)वहित्थगा ॥५८॥

प्राकृतेषु सचिन्तेषु गातव्या टक्कमिश्रिता ।
उक्ते रहुविक(रहसि च)स्थाने योज्यते किरणावली ॥५९॥

रेवयन्ती अनुवदे(बे) विच्छदे प्रियबान्धवे ।
ललिता धैर्यगाम्भीर्ये हर्षे बाङ्गालकेसरी ॥६०॥

भवेरागमिहेच्छन्ति यत्र मालवकैशिक ।
ककुभो वा दैन्यचिन्तालस्यमोहेषु नर्तकी ॥६१॥

वीराभासे तु हास्येन निर्वाहे टक्क इष्यते ।
शङ्कावहित्थनिर्वेदश्रमे तहलिता स्मृता ॥६२॥

नारीलास्यविहलायामाहु पञ्चमषाड(ड)वम् ।
लास्ये(स्य) भावे(वा) रेवगुप्ता शकस्थाप स्वतन्त्रका ॥६३॥

रागो हर्षमदोत्साहधृतिस्मृत्यादिगोचर ।
मार्गभ्रष्टेऽथ बीभत्से नीचे भम्माणपञ्चम ॥६४॥

भयशङ्कावितर्केषु कार्या मध्यमभूषिता ।
रूपसाधारितष्टक्करागस्थाने स्वरूपत ॥६५॥

गान्धारपञ्चम सा च नीचस्याद्द्भुतहास्ययो ।
बीभत्से हास्यवीरोगे कर्तव्य षड्जकैशिक ॥६६॥

चिन्तावितर्कयो सा स्यात् स्त्रीणां मालवपञ्चमा ।
औत्सुक्ये प्रोषिते पत्या शङ्कासूयासु भावनी ॥६७॥

इति साधारणोक्ति स्यात् सर्वगीतिविमिश्रणाद् ।
मुख्यत्वस्वस्वतो भाव(वो)व्यभिचारिगतो भवेत् ॥६८॥

पाठ रसेषु यथोक्तं विषयस्यैकतास्थिति ।
ध्रुवादौ मध्यमग्रामषड्जौ षाडवपञ्चमौ ॥६९॥

गान्धारमध्ये कैशाख्या पगी गान्धारपञ्चम ।
सूर्ये सौवीरकश्चण्ड्या कैशिकः पञ्चमेऽपि तु ॥७०॥

सर्वे एव सुराराती भवेत् मालवकैशिक ।
सर्वे रागा महादेवे सम्यक् सन्तोषपोषका ॥७१॥

गोली(लि)साधारगौडीये नाट्ये तु प्रहरद्वये ।
भिन्ना न चरमे सैव पूर्वस्मिन् न तु जातुचित् ॥७२॥

नाट्यादभावासान स्यादमङ्गलतमो ह्यसौ ।
चरमे रागगीति स्यान् नाट्ये न नियम स्वयम् ॥७३॥

मेङ्गोलितो वसन्ते स्यात् तथा मालवपञ्चमा(म) ।
टक्करागो गौडककुभो भिन्नषड्जोऽथ कैशिक ॥७४॥

भिन्नपञ्चमकश्चेति ग्रीष्माद्युतषु संमता(ता) ।
इत्येव कश्यपाद्युक्तो विनियोगो निरूपित ॥७५॥

ननु शान्तरसे न केनचिदशकेन गानमुक्तम् । विस्मरणशीलोऽसि । स्मर्यते-(तै) । उक्त हि । न शान्तरसप्रधानता प्रयोगस्य भवति । ततोऽपि हि रसान्तरोपरक्त एव प्रयोगयोग्यो नान्यथेति ।

एव विनियोगजात्यशकानभिधायाधुना वक्तव्यान्तर वक्तुमुपक्रमते ।

अत ऊर्ध्वं प्रवक्ष्यामि वर्णालङ्कारलक्षणम् । इति ।

ननु वर्णादिर्जातिशरीरानुप्रवेशाज्जातिलक्षण एव निरूपणं युक्त दृश्यते । लब्धात्मलाभस्य हि विनियोगो युक्त । दशलक्षणादपि वा पूर्वं विनियोगो वक्तव्य । विनियुक्तस्य लक्षणमित्यपि दृश्यते । षष्ठे तु तदभिधानमयुक्तमिव । उच्यते । जातिर्नाम स्वरसमूहमात्रम् । पदसम्बन्धाधीनस्तु वस्तुवर्णव्यवहार । तदायत्तश्चालङ्कारः । न चार्थविशेषाभिधायिना पदेन सम्बन्धो विनियोगमन्तरेण भवति ।

नन्वेव न्यासापन्यासावपि तत्रावाच्यौ । तयोर्हि समस्तविदारसमाप्ति । असावदान्तरविदारी समाप्तिश्च स्थानम् । विदारी चावान्तरपदसमूहविच्छेदरूपा । यद्येवमतत(ल्प)त्वमिदमुच्यते । ग्रहांशादयोऽपि पदापेक्षा एव । तर्हि गीयमानपदाभावे कश्चिदपि स्वत स्वरोपयोगोऽस्ति गाने गान्धर्वे वा । समवाये गान्धर्वमिति

अत ऊर्ध्वं प्रवक्ष्यामि वर्णालङ्कारलक्षणम् ।

आरोही चावरोही च स्थायिसञ्चारिणौ तथा ।

वर्णाश्चत्वार एवैते ह्यलङ्कारास्तदाश्रयाः ॥१४॥

[1]आरोहन्ति स्वरा यत्रारोहीति स तु संज्ञितः[2] ।

---

विशालिलाचार्यः । तस्मात् पदसम्बन्ध सर्वत्र प्रयोजक । किं तु वर्णो नाम पदसम्बन्धमन्तरेण लक्षयितुमेव न शक्यते । तथाहि वक्ष्यते । पदं लक्षणसंयुक्तमिति (भ० ना० २६.१७) । पदाश्रय स्वरारम्भबाहुल्यपरा वा हीनत्वसमाप्तिलक्षणा. । तथा च पदनिरपेक्षेऽप्यन्तरालापादावपि भवत्येव तैर्विना आरंभका रागस्वरूपमेव न किञ्चिदुन्मूलयन्ति । अलङ्कारस्तु परमार्थेन पदग्रामस्थंवालङ्कार्यत्वादक्षकयोगाद्धि गीयमान एव सम्पद्यते । अर्थयोगादिव सार्थक वृत्तबन्धयोगादिव च श्रव्य प्रसन्नादिप्रमुख्यलङ्कारसम्बन्धात् तदेव गुह्यतममित्यलङ्कृत सम्पद्यते । उपमानप्रसादिकायोगादिवालङ्काराणा च (औपम्याव प्रसन्नादिभावे)नाश्रयो वर्ण इति पदाधीनस्वभावत्वादेषा विनियोगानन्तरमेव युक्तमभिधानम् ।

टीकाकारास्त्वाहु । ग्रामपरस्वरस्वरूपेण आनीता गान उपयोगो न तु रक्तिसम्पादकार्थं । तत् ग्रामरागाणामेव । तेऽप्यन्यैरेवोक्ता इति न मयोच्यत(न्त) इति । मण्डपो दीपयोगी वास्तु . ...र्वाद्यत्रार्थं ज्ञापकमिदम् । वाक्यानां पश्चादभिधानम् । एतच्च पूर्वमेव विचारितमित्यास्ताम् । एतच्च (व च) क्रियाविस्तारवाची वर्णशब्द । तथाभिनयक्रिया एकस्वरमात्रावस्थानेन वा आरोहणेन वा अवरोहणेन वा व्यामिश्रतया वा सम्पद्यत इति चत्वार एव वर्णा । (तदधिका) न भवन्ति । तदाह । आरोही चेत्यादि अलङ्कारास्तदाश्रया इत्यन्तम् । सामान्यमेवाश्रयमित्युक्त पूर्वमेव बुद्धावारोपमाणत्वात् । एकस्वरेणैव गायामीति यावत् स्वरविशेषान् स्थायरायां गायामीत्यभिसन्धाय गायन् प्रयोक्ताऽलङ्कारान् प्रयुङ्क्ते तावत् । स्वरालङ्कारेषु यत् सामान्य स वर्णः । तेनारोहणावरोहणावस्थानसञ्चरणान्येव परमार्थतो वर्णे । तद्योगात्तु गीयमान पदमपि वर्णक इत्युच्यते ॥१४॥

तदभिप्रायेणैव आरोहन्ति स्वरा यत्रेति लक्षणम् । तुरवधारणे । आरोह-

---

१. KSS, NS आरुहन्ति ।

२ KSS यत्र आरोही स तु भण्यते । NS यत्र आरोही स तु संज्ञितः ।

[5]स्थिराः स्वराः समा यत्र स्थायी वर्णं स उच्यते[6] ।
सञ्चरन्ति [7]स्वरा यत्र स सञ्चारीति कीर्तित. ॥१६॥
शारीरस्वरसम्भूतास्त्रिस्थानगुणगोचराः ।
चत्वारो लक्षणोपेता वर्णास्तत्र[8] प्रकीर्तिताः ॥१७॥
यत्र चैवावरोहन्ति[3] सोऽवरोही प्रकीर्तितः[4] ॥१५॥

---

त्वेव न त्ववरोहन्ति ।-आरोहण एवावरोहणमिश्रीभाव एव मान्वारः स्यात् ।-एव-मवरोहत्येवेति ॥१५॥

समा इति तुल्यजातीया । तेन मन्द्रतारमध्यमरूपतया तस्यैव स्वरस्य प्रयोग । स्थाय्येव वर्णः । विच्छिद्य विच्छिद्य पुन प्रयोगः कर्तव्यो न तु दीर्घदीर्घेणाविच्छेदेन चण्टास्वमवर्तिति दर्शयितु स्वरा इति बहुवचनप्रयोग । स्वरा उपस्वरास्वेति सर्वैक-दोष इति केचित् । एतत् गान्धारिच्ययुक्तस्वरद्वयमप्यारोहणावरोहस्थिरत्व(तद्)-व्यतिरेकेण कथं प्रतियोज्यम् । अलङ्कारविशेषयोगेनाप्यलङ्कारगमनमेकस्वरायत्त-मेव ॥१६॥

नन्वारोहणावरोहाभ्या तारमन्द्रस्वीकारस्तावद् दर्शित. । कण्ठयस्वस्वीकारस्तु कथमित्याशङ्कयाह ।

शारीरस्वरसम्भूतास्त्रिस्थानगत(गुण) गोचरा ।
चत्वारो लक्षणोपेता वर्णा ॥ इति ।

एतदनेनाह । मात्रारोहण शिरस्यस्वरनिष्ठमेव लक्षितमवरोहण वाऽवकृष्य(ष्ट)स्वर-निष्ठम् । किन्त्वेकैकं तस्यैकविषयतामाह । त्रिस्थानेति । त्रिषु ये गुणा गुण्यमाना उपकार्यमाणानि स्थानानि वा गुणाश्रया येषामिति स्वरास्ते गोचरो विषयो येषाम् । न ह्यारोहणावरोहणे एकतन्त्रिकाया वीणाया बहुतन्त्रिकाया वा विपर्यये बंशे च । यत एव न सर्वेषते मत्तकवीणादौ न च भवत । तत्र वर्णसङ्करोपलम्भः ।

---

३ NS चैवावरोही च ।
४. KSS रोहीति सज्ञित । NS. रोहीति मण्यते ।
५. KSS स्थिरस्वरा ।
६. KSS. सज्ञित ।
७. KSS. स्वयं ।
८. KSS ह्येते ।

एव (पव) लक्षणसंयुक्त यदा वर्णोऽनुकर्षति।
तदा वर्णस्य निष्पत्तिर्ज्ञेया स्वरसमुद्भवा[1] ॥१८॥

---

तत् कथमिद लक्षणमित्याह । शारीरस्वरसम्भूता इति । शारीरस्वरेषु मुख्येष्वा-श्रितेषु लक्षणमिदमुक्तम् । तत्सदृशस्वरोपलम्भ एवान्यत्र वीणादाविति तत्रापि पर्यवस्यतीति न तु वीणादावलङ्काराभाव । अत एवोक्तम् ।

शारीर्यां त्वस्फुटा ये तु दारव्या ते व्यवस्थिताः ।
दारव्यां चलिता ये तु शारीर्यां ते सुनिश्चलाः ॥

इति ॥१८॥

नन्वविधिविशेषरूपेदारोहणादौ न कश्चिचतदा सर्वत्र सर्वं स्यात् । यथाऽऽ-रोहणेऽन्यैकत्र स्वरेऽवस्थानमवश्यम्भावीति स्यादिवत्सम्भव । एवमन्यत्रापि 'आख्य-मिति स्वरसाकूर्यमित्य,शङ्क्यावधिनियमार्थं वर्णांशन्वस्य च निरुक्तस्यापनार्थमेक-बुद्धिग्राह्यत्वे च निमित्तमाह ।

एवं (पद)लक्षणमयुक्तं यदा वर्णोऽनुकर्षति ।
तदा वर्णस्य निष्पत्तिर्ज्ञेया स्वरसमुद्भवा ॥

इति । विवक्षितसङ्गानिर्देशो लक्षणसयुक्तवचनेन दीर्घेऽपि समासपदे भागशः पद-नियममाश्रित्यावधिनियम इति दर्शयति । सकललोकप्रसिद्धमेव तदेवोपलक्षण ग्राह्य-मिति लक्षणसयुक्तवचनेन सूचयन् कुष्टादिष्विति पदलक्षण पराकरोति । प्रसिद्धत-वन्त (पुरितकन्त) पद विभक्त्यन्त पदमिति हि तत्र प्रसिद्धम् । तेन पदमेक यदा यतो वर्णंगीतिक्रियाऽनुकर्षति दीर्घकाल करोति तदा ततो वर्णस्तस्यैकस्य सङ्कीर्णस्य निष्पत्ति । तेनानवधिनियमादसङ्कीर्णत्वम् । यतश्च पद कर्षति विस्तारयति ततो हेतो-र्वर्णस्येति वर्णसंज्ञाया निष्पत्तिरिति निरुक्तम् ।

यद्यपि चोच्चारित प्रध्वसित स्वरो न सम्बन्धेन वर्तते येन तद्विषय एकोऽय वर्णो इति धी स्यात् । तथाप्यर्थं(र्थे)कत्वादिना निमित्तेनैकधीरोपक पद यतोऽनुकर्षति तत एकपदनिष्ठत्वाद्धेतोरेकानुसन्धानसामान्या एकादिनिष्पत्तिर्धीरनेकस्वरविषयाऽपि न वि(रु)ध्यति(ते) । तदाह । स्वरसमुद्भवा निष्पत्तिरिति । स्वरा केवलास्तेभ्य उद्भूता स(रिगाद्य इ)त्या (स) वर्णस्य निष्पत्तिरित्यर्थ । मा (प्रा)दीना च निपा-ताना प्यदत्वमेव स्वरत।मादिषु तु यद्वर्णतालङ्काराणा स्वरूपनिर्धारण तत्प्रदर्शनं सस्कृतस्वरकल्पानुकृत स्वाश्वविरामकृतविच्छेदा(पंग दि) मतं चेति ॥१८॥

---

[1] KSS विज्ञेया स्वरसभवा । NS विज्ञेया रससभवा ।

एते वर्णास्तु विज्ञेयाश्चत्वारो गीतयोजकाः[1] ।
[2]एतान् समाश्रितान् सम्यगलङ्कारान् निबोधत ॥१९॥

प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ।
प्रसन्नमध्यश्च तथा क्रमरेचित एव च[3] ॥
प्रस्वा(स्ता)रश्च प्रसादश्च सप्तैते स्थायिवर्णगाः[4] ॥२०॥

---

एतदुपसंहरन्यदासूत्रयति । एते वर्णा इति । तुः समुच्चये । वि.. .......
(यागादिषु) तानप्रयोगे वर्णा सर्वे एव भवन्ति । तदलङ्कारा सर्वे इति भावः ।
एतेषामेव भवन्ति । एवकारेण वर्णालङ्काराणामन्योन्यमव्यभिचारो दर्शितः ।
सम्यङ्निबोधतेति । स्वराणा(वर्णाना)मुपयोग कार्योलङ्कारवत् तेषामियत्ता निय-
मेनाभिधातुमशक्यत्व द् वर्णोत्पत्त्यैव च तेषा परमार्थत स्थापनात् मया यद्यपि सर्वे न
लक्षितास्तथापि शास्त्रान्त रवक्ष्यमाणनिरुक्तपरस्यर्शो(र्यो)पायेनैनाञ्जानीतेत्यर्थः ॥१९॥

तान् वर्णविभागेन प्रदर्शनार्थमुद्दिशति ।
प्रसन्नादिः प्रसन्नान्त प्रसन्नाद्यन्त एव च ।
प्रसन्नमध्यश्च तथा क्रमरेचित एव च ।
प्रस्तारश्च प्रसादश्च सप्तैते स्थायिवर्णगा ॥

इति । प्रसन्नत्व मन्द्रभाव । तत्र बिन्दुर्लोकेऽभिज्ञानम् । तारत्वे रेखोर्ध्वा शिरोगता ।
या सा इति । अत्रैव यदा षड्जर्ष्यंशोपक्रममङ्कुराभ्या प्राधान्य मध्ये तु स्वरान्तरानु-
प्रवेशो भवन्नपि न स्थायिवर्णविषय बाधते तदालङ्कारान्तराणि । सम्प्रति सक्रमेणात्र
तारगतेरसक्रमो रेचित । अथ प्रस्तार प्रकृष्टशब्दस्तारता यत्रेति । अथ मन्द्रभूत्वा
प्रसादयति प्रक (सा)मो(दो)ऽस्ति । अथ स्वराणा सङ्ख्याया चाक्रमत्वे यद्यपि भेदजातं
सम्भवति सक्रमसस्पृष्टविवक्षे भेदानामसङ्ख्येयता । अत एवालङ्काराणामनियम
इत्युक्तम् ॥२०॥

मन्द्रस्तथा प्रसन्नादि प्रेङ्खितो बिन्दुरेव च ।
सन्निवृत्तप्रवृत्तश्च रेचित कम्पित सम ।
कुहरश्चैव वेणुश्च रञ्जितो ह्यवलोकितः ।
आवर्तित० (तक) परावृत्तः सञ्चारिण्यश्चतुर्दश ॥

---

१. KSS, गानयोगत ।
२. NS एतानेवाश्रितो भूयो ह्यलकारान्निबोधत ।
३. इतोऽग्रे काशीसीरिज पुस्तके श्लोकषट्कमधिकम् ।
४. KSS, NS स्थायिवर्णसमाश्रय ।

अथ [1]सञ्चारिजान् भूय कीर्त्यमानान्निबोधत ।
[2]मन्द्रस्तथा प्रसन्नादिः प्रेङ्खितो बिन्दुरेव च[3] ।
[4]सन्निवृत्त प्र(त्त्प्र)वृत्तश्च रेचित कम्पित सम ॥२१॥

कुहरश्चैव वेणुश्च रञ्जितो ह्यवलोकित ।
आवर्तक परावृत्त सञ्चारिण्यश्चतुर्दश ॥२२॥

---

(इत्यादि) । मन्द्र इति । मन्द्रो येषा यस्य मध्ये तेषा तस्य ग्रहणम् । प्रसन्नादिरिति बाहिशब्दो(ऽत्र च)पादानपदम् । प्रेङ्खितो तो(दो)लावत्वत् । तैले बिन्दु । चिरकालमवस्थाने स्वरान्तरोपरञ्जकत्वतैलबिन्दुवत् प्रसरणात् । निवर्तनमवरोह. । सम्यगिति दूरम् । प्रवृत्त्या यदारोहण तदा य(स)न्निवृत्तप्रवृत्त । यद्यपि चैव वैऽलङ्कारा पत्रर(पत्र वि)हिलात्स्वेन भाति(न्ति) तथापि प्रतीतस्य गीतसमयप्रविष्टस्याभिज्ञानार्थं लिखिता । रेचितकुञ्चितकुहरास्तु शिरोवक्ष कण्ठनिविष्टस्य त्रि श्रुते स्वरस्य कम्परूपा इत्यभिज्ञानेनापि दर्शयितुमशक्या इति न विलिखिता इति । यत्रारोहणमे-(मि)वमावरोहण च सम स सम । काक्त्या यद्गीतवद् गीत मुक्तकण्ठ तत्र वेणु । अन्ये तु सौषिर्येण शिरोपलक्ष्यान् मध्ये यद्विचित्र हृत च विच्छेदरूप तद्वेणुरित्याहु । यथा(दा) जातिषु मध्ये दिश्रुतिमूर्च्छितान्त इति निरूप्यते (तदा) रञ्जितः । यदा स्वरान्तरमुच्चारितमप्यूरुत्रयोदारस्वरूपा नानुरक्त प्रतीयते । तदाऽवलोकितः । यत्र चित्र... ..तत्राप्यवलोक एव । यामन्तावर्तमानावावर्तक. । अस्यैवालङ्कारान्तरप्रायोविच्छिन्नस्यापि पुन प्रयोगे परावृत्तिः । अत्र चालङ्कारचतुर्दशके विशेषो द्विरूपो वर्णानुगस्थिरत्वारोहणादवरोहणनियमाभावात् ॥२१-२२॥

निष्कर्षोऽप्यु(भ्यु)च्चयश्चैव हसितो बिन्दुरेव च ।
प्रेङ्खोलितस्तथाक्षिप्तो विशीर्णो घटितस्तथा ॥
ह्लादमानः सम्प्रदानः सन्धि प्रच्छादनस्तथा ।
प्रसन्नादि प्रसन्नान्त इत्यारोहे त्रयोदश ॥

एकस्वर प्रयुञ्जतदविच्छेदेनैव (स्वरान्तरे)रूर्ध्वगमन निष्कर्षः । अभित ऊर्ध्वं चयनमभ्युच्चय । सगमसा ।... . (मन्द्रादि प्रसन्नान्ता कला).. ...यदा

---

१. NS सचारिताम् ।
२. KSS मन्द्रतार प्रसन्नश्च ।
३ KSS, NS बिन्दु प्रेङ्खोलितस्तथा ।
४. KSS तारमन्द्रप्रसन्नश्च सन्निवृत्तप्रवृत्तक ।

[1]निष्कर्षोऽभ्युच(च्च)यश्चैव हसितो बिन्दुरेव च ।
प्रेङ्खोलितस्तथाक्षिप्तो विस्तो(स्ती)र्णोद्व(घ)ट्टितस्तथा ॥२३॥

[2]ह्लादमान सम्प्रदान सन्धि प्रच्छादनस्तथा[3] ।
प्रसन्नादिः प्रसन्नान्त इत्यारोहे त्रयोदश[4] ॥२४॥

[5]विधूतश्च त्रिवर्णश्च तथोद्वाहित एव च ।
[6]उद्गीतश्च तथा [7]वेणिर्विज्ञेया ह्यवरोहिण ॥२५॥

---

भवति तदा ह्लादमान । सम्प्रदान इति । दा(दो) अवखण्डने (पा० धातुपाठ—१२२१) देङ् रक्षणे (पा० धातुपाठ — १०३१) इत्युभय (यो)रूपम् । तेन विच्छिद्य विच्छिद्य यदारोहस्वर्णैव परिपालन तदा सम्प्रदानालङ्कार । एतावलेख्यौ । सन्धानात् । सन्धिः । सरिग (गमप, प) .. . ध(नि) । प्रविष्टमर्वञ्चमत्र स्वरास्वराणा यत्र मध्यगताना प्रच्छादनम् । सरिग । प्रसन्नशब्देनात्रारुक्षत (स्त) स्वरास्तवरोहिण ॥२३ २४॥

एकत्यागेनारोहणावरोहणाद् विधूतः । सस( ग )मरि(प ग रि) । प्रो-(प्रारो)ह्यविक्रमेण कम्पपूर्वोऽवरोहो विधूत इत्यन्ये । प्रमरस्वरे त्रिविश्रान्त्या त्रिवर्णः । स नि ध ध ध । एतद्विपर्ययेणोद्गीत. । ऊर्ध्वस्वरे गानक्रियाया विश्रान्ते । स स स-स नि । मध्यैकविश्रान्तेरुद्वाहित. । स नि नि नि ध ध ध । इति वेणिः ॥२५॥

अथैषा प्रयोगविषय नियमयितु तत्र च हेतुनिरूपणद्वारेणालङ्कारालङ्कार्यभाव दर्शयितुमाह ।

सप्तरूपगता ज्ञेया अलङ्कारा बुधैस्त्विमे
नैते साक (सर्वे) ध्रुवास्विष्टाः श्रुति(श्रोतृ)वर्णप्रवेशनात् ॥

इति । सप्तरूपग्रहण सकलगान्धर्वोपलक्षणम् । तेन गान्धर्वे गीतस्वरूपसम्प्रभेदरूपे

---

१. NS निकषोऽत्युच्चय । KSS varies
२ NS स्पन्नमान ।
३ KSS प्रह्लादन तथा ।
४ KSS, NS इति चारोहिण (वारोहिण) स्मृता ।
५ NS विधूत स्यात् त्रिवर्णश्च । KSS विधूमो मात्रवर्णश्च ।
६ NS अहितश्च ।
७ KSS वेणु ।

सप्तरूपगता ज्ञेया अलङ्कारा बुधैस्त्विमे ।
[1]नैते (सर्वे)ध्रुवास्विष्टा श्रुति(श्रोतृ) वर्णप्रकर्षणात् ॥२३॥

---

याश्रयमात्रोपयुक्तेष्वर्थप्रतिपत्तिसम्पादनात् । तात्पर्यविरहणात्समुच्चारणमात्रफलेषु पाठेषु यथेष्टमलङ्कारा ।

ननु वा(चा)र्थस्यैव हि तत्र प्राधान्यम् । वर्णे वा(चा)लङ्कारबलेन प्रकल्प्यमानार्थप्रतीतिविघटितेऽप्यतीतेष्वक्षरेष्वनुसन्धानसम्भावि । अत श्रोतृणा वर्णं प्रकर्षणाश्रिंश च ध्रुवस्व वर्णस्यालङ्कार्यतामाह । न च वर्णादिबेन (श्लेष) स्वादित्यु-च्यते । तस्य सकलपदविश्रान्तस्य गानक्रियासम्पत्यैं प्रस्तुतरूपध्वैस्य शोभा कृता भवन्ति । यथेकदा उक्तत्रुवं वैचित्र्यमभिधीयते यथा प्रस्तुतस्य वदनस्य चन्द्रोपमानेन । अत एव गीतिरलङ्कारहीना (भ० ना० २६-४५) इत्यत्र व्यतिरेकद्वारेण गीतेरेवा-लङ्कार्यता लक्ष्यते । गीवर्णं इति च पर्यायौ ।

अत्र चोदयन्ति । चत्वारो(रस्तु)च(गु)रुणा युग्म (भ० ना० ३१ १०६) इत्यादिना तालकलाविषये पदमात्रापरिमाणनियमस्य लक्ष्यमाणत्वात् निमेषा पञ्च मात्रा स्यात् (भ० ना० ३१४) इति कलापरिमाणस्य कथमभिवर्णप्रकर्षण शक्यम् ।

अत्राह । वर्धमानासारितविषयोऽयं पदमात्रापरिणामनियमो न प्रगीतिकादौ तन्नियमाभावात् । अत एव सप्तरूपगता इत्युक्तम् । तत्र यथेष्टं वर्णप्रकर्षणमिति लक्ष्येऽपि च जातिगीतादौ यथेष्ट प्रकर्षणमुपलभ्यमेव ।

अन्ये त्वाहु । आसारितद्वारेण सर्वविषय मत्पदमात्रापरिमाणनियमोऽतिवर्ण-प्रकर्षण प्रत्यक्षमङ्गमिकयाऽलङ्कारपरम्परायोजन तच्चेदमयुक्तमिव । न हि ध्रुवासु क्रियमाण तदर्थप्रतीतिं विहन्ति । प्रयुत सालङ्कारस्वजमायेव स्यात् ।

बिन्दुरेककलो ज्ञेय कम्पित द्वि(तद्व) कलाद्वयम् । (भ० ना०२९ ३८) इत्यादि यदुच्यते त . . र्विषय न तथा दृश्यते इति प्राच्य एव परिहारो युक्त ।

एत इति सर्वसम्भवो निषिध्यते । एते सर्वे नेष्टा । यद्यपि वर्णे प्रक्षेप कर्षिण कम्पितादयो नात्र वहन्ति तथा । सर्व इति । समष्टिरूपा इत्यर्थ । तत एकत्रैवाक्षरे बहवोऽलङ्कारा क्रियमाणा प्रतिप्रकर्षं कुर्वंत इति नेष्टा ॥२६॥

ननु यम(द)तिप्रकर्षणस्तत्किमिति ध्रुवासु नेष्टा इत्याह । न हि वर्णप्रकर्षस्तु

---

१. NS नैतेऽस्माक.. .. प्रतिवर्णप्रकर्षणे KSS नेष्य ते हि ध्रुवादेते जाति वर्णप्रकर्षणात् ।

[न हि वर्णप्रकर्षस्तु ध्रुवाणां सिद्धिरिष्यते ।
[1]श्येनो वाऽप्यथवा बिन्दुर्ये चान्येऽपि(तु) प्रकर्षिणः] ॥२७॥

ते ध्रुवाणां प्रयोगेषु न कार्या स्वप्रमाणतः[2] ।
[तद्ध्रुवाणां प्रयोगे तु(ऽपि) कार्या ह्यारोहिणः स्वरा] ॥२ ॥

---

ध्रुवाणामिति । के तस्यालङ्कारा इत्याह । श्येनो वाप्यथवा बिन्दुरिति । श्येन इत्यनेन तन्त्राम्नरलक्षितेन व्यवहारेणालङ्काराणां सङ्ख्यानियम प्रत्यानादर दर्शयति । तत्र श्येनलक्षणम् ।

श्येनश्चैकान्तरो ज्ञातः कलामात्रान्तरे स्थितः ।
तस्मिश्चैव स्वरे वृद्धि गृह्णात्येव विलक्षणम् ॥

अन्ये तु वेणिवेणि( )श्येन इत्याहु । ननु बिन्दुश्येनावेव निषिद्धौ । नेत्याह । ये चान्ये तु प्रकर्षिणः । तेऽपि (न) ध्रुवाणां प्रयोक्तव्या । तुरपिशब्दस्यार्थे ॥२७॥

आरोहिणो वर्णस्य सम्बन्धिनः । अपिशब्दादवरोहिणोऽपि । ये स्वरा इत्यलङ्कारा । ते प्रयोक्तव्या । यदि वाऽऽरोहिण, स्वरा इति सावरोहा न तु विश्रान्त्या प्रकर्षिणः प्रयोक्तव्या ।

अन्ये त्वाहु । स्वरा इत्यलङ्कारैकदेशा प्रयोज्या येऽनुज्ञाताः ।

श्रीमदुत्पलदेवपादास्तथा मन्यन्ते । आरोहिणः स्वरा इत्यनेनातिप्रकर्षिण स्वरूपमुक्तम् । प्रत्यक्षरमारोहो विद्यते येषा स्वराणां ते आरोहिणः । तेन प्रतिस्वरमक्षर प्रत्यक्षरं स्वरमित्येवरूपमतिकर्षणम् । यथा कुसुमव(च)राव(ग)पुञ्जपरि-(वि)ञ्जरहृत(दर्श)नीया इत्यत्र चञ्चत्पुटभङ्गेन (दश)नीयेत्यस्मिन्नक्षरेऽनेकस्वरमारूढ कर्तव्य इति यावत् ॥२८॥

अत्र हेतुमाह । यस्मादर्थानुरूपा हि ध्रुवा कार्येति । ननु नियता नाम । तथाभूता प्रवेशाक्षेपनिष्क्रामणप्रसादनान्तरचेत्यान्तरयुक्ता कविना सूच्या । अतिप्रकर्षणवर्जन तु किमर्थमित्याह । अर्थदर्शिकेति । अभितो दृष्टार्थो गान्धर्व इवार्थबद्धोऽपि तु सामाजिकाना तत्प्रतीतिसिद्धये प्रकृतिभेदो विभावादिभ्यस्तत साधारणीभूतस्तथावगतो रससम्पत्त्युपयोगी भवतीति यावत् ।

---

१ KSS बिन्दुर्वापि हि वेणुर्वा
२ KSS कार्या ह्यारोहिण स्वरा ।

यस्माद्वर्णानुरूपा हि[1] ध्रुवा कार्याऽर्थदर्शिका ।
वर्णास्तु पुनः कार्यं कुशलत्वं पदसंश्रयम् ॥२९॥

[2]येऽत्र प्रयोगे गच्छन्ति तांश्च वर्णान् निबोधत ।
प्रसन्नादि प्रसन्नान्त प्रसन्नाद्य त एव च ॥३०॥

---

नन्वेवमर्थसमर्पणप्रधानत्वाद्येन केनचित् पदेनार्पणीयोऽर्थं । नेत्याह । वर्णानां तु पुनः कार्यं कुशलत्वमिति । स्थाय्यादिशङ्कापरिहारार्थमाह । पदसंश्रयमिति । कुशलत्वमित्यस्खलनस्य बहुतरदर्शनमयोगदशमहीनत्वमित्यर्थं । एतदुक्तं भवति । यथा हि गीतिर्वर्णापणमनवधारयन्ती कर्तव्या तथैव पदगतान्यक्षराण्यपि दुर्भणसमोगादिहीनाङ्गान्यधिकानि कर्तव्यानि । तेनौचित्येन पदगीति कर्तव्येति । टीकाकारैस्तु श्लोकार्थस्यास्य प्रतिकर्षणत्वमस्य(त्व) व्याख्यातं पुनरुक्तप्रायमित्यास्ताम् ॥२९॥

ननु बिन्दुश्येनादयोऽलङ्कारा । तेषामियत्तालक्षणादि वक्तव्यमित्याशङ्क्याह ।

येऽत्र प्रयोगे गच्छन्ति तांश्च वर्णान् निबोधत ।

इत्यादि । येऽलङ्कारा स्वरा (ग्राम)मात्रारागस्वरूपोत्थापकाश्च त(ते)त्र पूर्वं (प्रयोगे) धातुवाद्य वर्णाङ्गलक्षणादेव गम्यते । ये त्वन्ये गीतप्रयोगविषयास्तान् निबोधतेति । त्रिवर्णाश्रितत्वाद्वर्णा इति टीकाकृदभ्यधात् ।

परमगुरुश्रीमदुत्पलदेवपादा मन्यन्ते । वर्णानां पदनिबन्धनत्वे तदाश्रितालङ्कारा गीतप्रयोगरहितकेवलस्वरालापमात्रगामिन इति शङ्कापदाममेव । तत्रालङ्कारतावप्रतिभासस्तात्सत्कारको न मुख्य । वक्ष्यमाणा एव गीतिप्रयोगोपयोगिनो नान्ये इत्यत्र लक्ष्यदर्शनादिप्रमाणं पश्याम । श्येनादयश्च लक्षयितव्या । प्रयोगोपयोगान्न चाप्रतो लक्षित(ता) इति ।

तस्मादेवोऽत्रार्थं । वर्णस्व(रूप)वर्णाङ्गैर्धातुवाद्य चोभयमपि हि क्रियाविस्तारात्मकम् । जातावेकवचनम् । तदयमर्थ । ये स्थाय्यादयो वर्णा उक्ता यानि वर्णाङ्गानि धातुवाद्यादीनि वस्तूनि लक्ष्यन्ते तैश्च प्र(यो)ज्या । अत्र ध्रुवाप्रयोगे ये गच्छन्त्युपयुज्यन्ते तान् निबोधत स्वयमूहध्वं वर्णलक्षणं तावत् । ऊहो व्याख्यात । वर्णोऽत्र धातुवाद्यादिगतस्तत्रैव व्याख्यायते । ननु कुत्राप्यविवक्षितेनैव प्रवर्तत ऊह-

---

१ NS रूपादि ।

२ KSS ये तु प्रयोग NS यत्र प्रयोगे ।

[1]प्रसन्नमध्यमश्चैव बिन्दुः कम्पितरेचितौ ।
[तारश्चैव हि मन्द्रश्च तथा तारतरः पुनः ।]
[2]प्रङ्खोलितस्तारमन्द्रौ मन्द्रतारः समस्तथा ॥३१॥

सन्निवृत्तः प्रवृत्तश्च प्रसादोऽपाङ्ग एव च ।
[3]ऊर्मिः प्र(प्रे)ङ्खोऽवलोकश्च इत्येते सवर्णगाः ॥३२॥

स्थायिवर्णादृते[4] चैषां सम्प्रवक्ष्यामि लक्षणम् ।
क्रमशो[5] दीपितो यः स्यात् प्रसन्नादिः स कथ्यते ॥३३॥
स्वरस्तोच्चारितः एवैष प्रसन्नान्तो विधीयते ।
आद्यन्तयोः प्रसन्नत्वात् प्रसन्नाद्यन्त इष्यते ॥३४॥
प्रसन्नमध्यो मध्ये तु [6]प्रसन्नत्वादुदाहृतः ।
सर्वसाम्यात् समो ज्ञेयः स्थितस्त्वेकस्वरोऽपि यः[7] ॥३५॥

---

शक्तिरियानलङ्कारमनावर्षेति । चकारेण लक्षणमपि कर्तव्यमिति सूचयति । अत एवोद्दिशति प्रसन्नादिरित्यादि सवर्णगा इत्यन्तेन । न प्रत्येकं मन्तव्यमपि तु समुदायापेक्षमेतत् । तेन यथायोगं कश्चिदेकत्र वर्णे कोऽपि द्वयोरित्यादि मन्तव्यम् ॥३०-३२॥

स्थायिवर्णादृते चैषां सम्प्रवक्ष्यामि लक्षणम् ।

इति । स्थायी(ति) । यथारुचि स्थेनावध प्रयोज्या इति तात्पर्यम् । तत्रालङ्कारस्वरूपमेवमुक्तम् । अस्माभिः पूर्वग्रन्थेषु यदनुक्तं तद् व्याख्यायते । दीपनं तारता प्रसादो मन्द्रता । दीप्तत्वं नाम श्रावकश्रोतृ(निष्ठो)विशेषो यम इत्युक्तलक्षणम् स्वरसाधारणम् । सामवेदे च रागसाभौमे इति च यदुच्यते तदिहानुपयोगीत्यास्तामेतत् । दीपनप्रसङ्गात् सम पदवावृद्धिन्दोऽयम लक्षित । सर्वसाम्यात् समो ज्ञेय इति । दीपनस्य सर्वत्र

---

१ KSS तथा प्रसन्नमध्यश्च बिन्दुकम्पितरेचिता ।
२ KSS प्रेङ्खोलितस्तथा तारमन्द्रस्तारः ।
NS प्रेंखोलितस्तथा मन्द्रो.. ।
३ KSS अवलोकस्तथा वेणुरित्येते ।
NS ऊर्मिखोपावलोकश्च ।
४ KSS त्व ये सवर्णा प्रयोगिनः । NS इत्वेतेषा सम्प्रवक्ष्यामि. ।
५ KSS दाप्यते यस्तु ।
६ NS प्रसन्नः स्यात् ।
७ NS स्वरेऽपि यः ।

[धादिमध्यलयो यत्र स वोर्मिरिति संज्ञितः ।]
[1][श्रुतयोऽन्त्यात्(न्त्या) द्वितीयस्य मृदुमध्यायता स्वरा. (स्मृताः) ॥३६॥

आयतत्वं भवेन्नीचे मृदुत्व तु विपर्यये ।
[2]स्वे स्वरे मध्यमत्वं च मृदुमध्यमयोस्तथा ।
दीप्तायते करुणाना श्रुतीनामेव निश्चय ॥३७॥

बिन्दुरेककलो ज्ञेयः कम्पितश्च कलाद्वयम् ।]
गतागतप्रवृत्तो य स प्रेङ्खोलित इष्यते[3] ॥३८॥

---

साम्यादिति यावत् । समस्यैव विशेषोऽनुगोतिरिति स लक्ष्यते । स्थितस्वं(स्वे)कस्वरे (रो)ऽपि यद्(य इति) ।

> धादिमध्यलयो यत्र स वोर्मिरिति संज्ञितः ।
> श्रुतयोऽन्त्या द्वितीयस्य मृदुमध्यायता॰ स्मृता ।
> आयतत्वं भवेन्नीचे मृदुत्व तु विपर्यये ।
> स्वे स्वरे मध्यमत्वं च मृदुमध्यमयोस्तथा ।
> श्रुतीना निर्णयो ज्ञेयः ॥ इति ।

विकल्पमनुस्वार तमाह । गान्धारस्यैकाक्षरगतस्य नीचे ऋषभे परे आयता श्रुति॰ कार्या । मध्यमे परे मृद्वी । गान्धार एव तु परतो मध्या ॥३३—३७॥

एव प्रसङ्गागतं निर्णयोद्देशानुसारेण बिन्दुमाह । बिन्दुरेककल इति । एककल मायतो मृदुर्वा विपर्यासेन वर्तुलीभाव एव बिन्दोर्लक्षणम् । प्राचिकस्वर-लक्षणविवर्तकल इत्यनोक्ता । तदेव तु रूप दीर्घस्वरस्थित कम्पितम् । बिन्दु-कम्पितोभयलक्षणोपजीवित्वात् प्रेङ्खोलित लक्षयति । गतागतप्रवृत्तो य स प्रेङ्खोलित इति । बिन्दुकम्पितान्दोलनादित्यर्थं । मृद्वायतगमनाभ्यासादित्येके ।

---

१. KSS. बिन्दुरेककलस्तार । स्पृष्टा तु पुनरागत ॥ स्यान्निवृत्तप्रवृत्तश्च यत्र गत्वा समागत ॥ प्रकीर्तितलयो यश्च स वेणु परिकीर्तित ॥ कण्ठे निरुद्धपवन कुहरो नाम जायते ॥ त्रिकला कम्पनात् तद्वद् रेचितारव्यः शिरोगत ॥ उरोगत कम्पित स्यात् कम्पनात् कलात्रयम् ॥

२. NS स्वस्वरे मध्यमत्व च श्रुतीनामेव निर्णय । दीप्तायते करुणाना मृदुमध्य-मयोस्तथा ।

३. KSS. इष्यते ।

¹यस्तु कण्ठे स्वरोऽथः स्यात् स तु तारः प्रकीर्तितः ।
उरोगतस्तथा मन्द्रो मूर्ध्नि तारतरस्तथा² ॥३९॥

क्रमागतस्तु यस्तारः षष्ठ पञ्चम एव वा ।
तारमन्द्रप्रसन्नस्तु³ ज्ञेयो मन्द्रगतः स च ॥४०॥

सङ्कुयित्वा ⁴ परान् मन्द्रात् परां(तु) तारगतिं गतः ।
मन्द्रतारप्रसन्नस्तु विज्ञेयो ह्यवरोहणात् ॥४१॥

प्रसन्नान्तः स्वरो यत्र प्रसादः स तु ललितः ।
अपाङ्गकिस्तु विज्ञेयः स्वराणामथ सञ्चरात् ॥४२॥

---

ऊहविदव्यापक लक्षणोपयोगितावद्रूप वक्तव्यमित्याशयेन तारमन्द्रतारतराणा लक्षणमाह । यस्तु कण्ठे स तार उरसि मन्द्रोमूर्ध्नि तारतर इति ॥३९॥

एतत्त्रितयोजनेनान्येऽप्यलङ्कारा ऊहित शक्या उद्दिष्टा इत्याशयेनाह । क्रमागतस्तु यस्तारः षष्ठः पञ्चम एव वा । तारमन्द्रप्रसन्नस्त्विति । न चायमप्युद्दिष्टो मन्तव्य इत्याह । ज्ञेयो मन्द्रगतः स चेति । मन्द्रशब्दनोद्दिष्टोऽयमिति यावद् । षड्‌जमस्तारषड्‌जस्ततो निषादस्तत षड्‌जर्षभ पञ्चमो वा गान्धारः । एवमन्ये ॥४०॥

मन्द्रतारसमशब्देन तु य उद्दिष्टो मन्तारप्रसन्नस्त लक्षयति ।

सङ्कुयित्वा परान् मन्द्रात् परांस्तारगतिं गतः ।

इति ॥४१॥

एवदलङ्कारद्वयेनान्दोलनात् त(स)न्निवृत्तप्रवृत्तस्य लक्षणमूहित शक्यत इत्याशयेन तदुल्लङ्घ्य प्रसादं लक्षयति । प्रसन्नान्त स्वरो यत्र प्रसादः स त्विति । आदौ स्वरस्य मर्शनरोचनदीपनवेदकम्पनवलनलयननयनस्फुरणवर्मि मरणादि यथायोग विधायान्ते दीप्तायततादिस्वरश्रुतिविशेष एव विश्रान्ते प्रसादावपाङ्गं लक्षयति ।

अपाङ्गिकस्तु विज्ञेय· स्वराणामथ सञ्चरात् ।

इति । यथाऽपाङ्गनिरीक्षणमन्यैर्न लक्ष्यते तद्वद् यद्भ्रमणवैचित्र्येण दुरवधारस्वरूप. सोऽपाङ्गिकः । तथाविधप्रयोगेऽन्तर्भावे यदा विश्रान्तिविभ्रममयादन्तरवीक्षित लौकिक इति प्रवादापाङ्गाम्यां सम जनित इति पृथग् लक्षित ॥४२॥

---

१. KSS यस्य कण्ठे स्वरोऽथस्तात् । NS यस्य कण्ठे स्वरोऽध स्यात् ।
२. KSS तारतर स्मृत । NS मन्द्रप्रचरित ।
३. NS. प्रसन्नेषु ज्ञेयो मन्द्रगतस्य च (KSS मन्द्रगतिस्तु स) ।
४ NS मन्द्रात् परा । KSS मन्द्रात् क्रमात् ।
५. KSS ज्ञेयो ह्यारोहणात् बुधै । इतोऽग्रे श्लोकत्रयस्थाने "एक स्वरादि" इत्यादि एकविंशश्लोका अधिका तत्रैव द्रष्टव्या ।

रेचितः शिरसि ज्ञेय कम्पित तु (तश्च) कलात्रयम् ।
कण्ठे निरुद्धपवन कुहरो नाम जायते ॥४३॥

---

एवमुद्दिष्टा लक्षिता अलङ्कारा ऊहसिद्धये । तत्र दीप्तायतादि म द्रुतारादिक वा कम्पादिस्थानभेदनिरोधनतोदनादि कालदीर्घत्वादुद्दिष्टधर्मं अलङ्काराश्रित त्विय-दिति तत्र दीप्ताद्युक्तमन्यत्तु प्रदर्शयितुमाह ।

रेचितः शिरसि ज्ञेय कम्पितश्च कलात्रयम् ।
कण्ठे निरुद्धपवनः कुहरो नाम जायते ।

इति । ततश्चाति(श्च त्रि)श्रुतेरेव कम्पितमिच्छत (न्त) कलात्रयमिति श्रुतित्रय व्याचक्षते । अन्ये तु चतु श्रुतेरेव श्रुतित्रये कम्पन कार्यमित्याहु । इतरे तु सर्वस्वरविषय कम्पनमिच्छन्ति । कलात्र न श्रुति । अपि तु कालकला । तत्र त्रित्वोपादान परप्रकर्षसूचनाय सामर्थ्याच्च । उरसि कम्पनात् कम्पितो भवत इत्याह । (कण्ठे निरुद्धपवन इति ।) एते च शरीरे प्राधान्येन लक्ष्यन्ते । धातुवाद तु वीणायामित्याशयेन भेदेनाभिधानम् । वस्तुतस्तूभयत्रापि सर्वं तस्य योजनमिति लक्षण निपुणमतीना मत इत्थ. .. मय भरतग्रन्थे तु सङ्ख्यात एवेति मन्तव्यम् । टीकाकृद्भिस्तु सदाशिवमतादिग्रन्थान्तरालिखित अर्यास्त्रिंशदिमे प्रोक्ता अलङ्कारा इत्यादि तत्र लिखितम् । ग्रन्थान्तरपरिवर्जन चनिष्टप्रसङ्गात् । सोमाद्युप्रोक्तादि तु स्वगुणमतनारदमता (नारदीयशिक्षा)जुनयतादिषु भोसहिता न्योन्यदर्शनात् त्रियलिखनीयम् । न चापि किञ्चित् । तेन (न) किञ्चित् प्रयोजनम् । वर्णेष्वः सर्वेषु सिद्धिरिति ह्युक्त प्राक् । ये तु लक्ष्ये दृश्यन्ते तल्लक्ष्म पठमानम् (पठ्यते) ।

अवरोहारोहकृतो वेणु पञ्चकल क्रमात् ।

यथा-निधधनि रिससरिपसनिनिसा ।

एकस्वरेऽधिरोहात् प्रस्तारोऽन्यथा प्रसादस्तु ।

यथा—सगारिगागमपमधपनिधमा— प्रस्तारः ।

सधानिधापधापधामरिगसा—प्रसाद ।

तदनन्तरस्वरौ द्वौ (विधार)स्पृष्टाहितस्तथा द्विकलः ।
आरोहत्येककलोऽसौ ॥

विधूतस्तु एकस्मिन् लघुवर्णे स्वरयो(द्व)यमिलिता(ते) लघुपरिमाण प्रयुज्यते । तत्र च द्वयो स्वरयो शीघ्रकालोच्चारणेन सकल पद प्रयुज्यते । पुनस्तदुपरितनात् स्वरद्वये । एवमेवान्ये । कालकलाविधूत स्वररूपविधूननात् ।

दीर्घाक्षरमारोहे तदनन्तरस्वर कलास्तरयोः ।
कम्पो प्रसन्नरूपो (ज्ञेय )पुनर्गात्रवर्णोयम् ॥

ससरिगासससससारि—इत्येव दीर्घमक्षर पर्यन्त प्रयुञ्जीत । इति गात्रवर्णः ॥४४॥

एवमेते त्वलङ्कारा विज्ञेया वर्णसंश्रयाः ।
अथ गीतीः प्रवक्ष्यामि छन्दोऽक्षरसमन्विताः ॥४४॥

शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव ।
अविभूषितेव च स्त्री गीतिरलङ्कारहीना स्यात् ॥४५॥

[1]प्रथमा मागधी ज्ञेया द्वितीया चार्धमागधी ।
सम्भाविता तृतीया तु चतुर्थी पृथुला स्मृता ॥४६॥

त्रिनिवृत्त(त्ति)प्रगीता या गीतिः सा मागधी स्मृता ।
अर्धतः सन्निवृत्ता च विज्ञेया ह्यर्धमागधी ॥४७॥

---

एवमलङ्कारा व्याख्याताः । अथ तानुपसंहरन् यत्र तेषामुपयोगस्तां गीतिं सूचयति । एवमेते इति । अथ गीतिरिति च । वर्णसंश्रया इति च वर्णानुक्रान्त्या गीतीनामन्तरेणैतेऽलङ्काराः प्रतिपद(द) जन्मना(ना) न वक्तु क्षमया इति भावः । गीतिशब्देन स्वराणां पदानां च यः परस्परमाश्रयाश्रयिभावः सा पृथग् गीतिः । ननु गीतिर्वर्णरूपैवेति पुनः कस्मादभिधानमित्याशङ्क्याह । छन्दोऽक्षरसमन्विता इति । पदाश्रया गीतिर्वर्णं इत्युक्तम् । पदं च प्रवृत्तनिबद्धच्छन्दोमयं पदरूपं चाक्षरात्मकम् । तत्र यथा सम्यग् ग(गी)तयो भवन्तीति गीतीनां (लक्षणं) तथा वक्ष्यामीति भावः ॥४४॥

अथालङ्काराणामुपयोगमाह ।

शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव ।
अविभूषितेव च स्त्री गीतिरलङ्कारहीना स्यात् ॥

इति । कश्चिदलङ्कारो वर्णमुज्ज्वलयति कश्चित् सूत्रयति कश्चिद् [illegible](सु)विकासयति कश्चिद् रञ्जयतीति दृष्टान्तचतुष्केण सूचिता(तम्) ॥४५॥

गीतिरुद्दिशति प्रथमा मागधीत्यादिना । तत्र यतिकालविभागेन वर्णालङ्कारनियमेन लयगानक्रियाविशेषो गीतिरिति सामान्यलक्षणम् ॥४६॥

तत्रासां क्रमेण विशेषलक्षणान्याह । सन्नि(त्रिनि)वृत्तिप्रगीता या गीतिः सा मागधीति । या पदानां निवृत्तिरावृत्तिस्तया प्रकृष्टं विततं गीतं गानक्रिया यस्याः सा गीतिः । विशेषसामान्यभावेन पत्ति(वृत्ति)पदार्थोऽस्य च विभागः । एतदुक्तम् । देवमिति पदं गीत्वा प्रथमकला निर्वाह्य विलम्बितेन लयेन यदा द्वितीया कला मध्यमलयेन देवमिति (द्वे)तेन पदेन शर्वमिति शब्दसहितेन गायति ततोऽपि तृतीया कला द्रुतलयेन देव शर्वमिति पदद्वयेन च वन्दे शर्वमिति पदान्तरसहितेन निर्वाहयति तत

---

1. KSS varies absolutely.

सम्भाविता च विज्ञेया गुर्वक्षरसमन्विता।

[1]पृथुलाख्या च विज्ञेया नित्यं लघ्वक्षरान्विता॥४८॥

---

एवं देव इत्यत्र शब्दः कलात्रयव्यापनात् त्रिनिवृत्तिनिर्वाह एव। एवं शर्वमित्यादयोऽप्युत्तरोत्तरकलाव्यापित्वस्तदा मागधीति गीतिः। मगधेषु तथा गाननिर्वाहोपलम्भात्। यदाह। त्रिदर्शादिषु दृष्टत्वात् मगधाख्या इति। उदाहरणम्। समासससा मास सम ससम समसरिरीति। अर्धमेव इति। परस्य सम्बन्ध्यर्धपदादावर्तनतदाऽर्धमागधीति। न चात्र पादार्धप्रवृत्तौ निवर्तनहेतुर्मन्तव्यः। यतः सामवेदे गीतप्रधाने पादावृत्तिश्चर्यो नाद्रियते। एवमादि तु जातवेदसमिति (सामवेदसंहिता १ १ ३ ११) हि यत्र जातवेदसपर्यन्तमावृत्तिपर्यन्तारम्भतया गीत्वा तदेवसमिति गीयते। तत्र जातवेदसमिति पदस्य पदञ्जनादार्थभङ्गो भवत्यपि। अन्ये तु त्रिनिवृत्तिप्रवृत्तेति मागध्या लक्षणं पठन्तोऽर्धमागध्याः सन्दावृत्ति व्याचक्षणा सर्वं भञ्जनमपि परिहरन्ति॥४७॥

एवं निवृत्तिकृतौ द्वौ गीतिभेदावभिधाय निवृत्तिहीनमपि गीतिद्वयं लक्षयितुमाह।

सम्भाविता च विज्ञेया गुर्वक्षरसमन्विता।

पृथुलाख्या च विज्ञेया नित्यं लघ्वक्षरान्विता॥

इति च। नित्यशब्द आभीक्ष्ण्यवाची। उभयत्रापि सम्बन्धनीयस्तेन बाहुल्यतो यत्र गुरूणि। सम्भावित संक्षिप्त पदानां भावना यत्रेति। लघुप्रायत्वे तु पृथुला। पृथुत्वात् पदग्रामस्य॥४८॥

ननु कुत्र का गीतिः प्रयोज्येत्याशङ्क्याह।

एतास्तु गीतयो ज्ञेया ध्रुवायोगे विनैव हि॥

इति। ध्रुवाश्रयो योगस्तद्वर्जमेता गीतयो गान्धर्वे एव प्रयोज्या न तु गाने इति तात्पर्यम्। मागध्यर्धमागध्यौ सामनामध्रुवास्तु (सु) प्रयोजितौ(ते)। सम्भाविता-पृथुले... ..तैत्रापसारित्वेनैतद्धवासु हि करुणरौद्रादिम(रसा)नुसारेण गुरुलघ्वक्षरविनियोगो गीतिषु यथेष्टमेवेति विशेषः। अत एव विनियोगबर्जमि(भ० ना० २९-

---

१. NS लघ्वक्षरकृता या तु पृथुला सा प्रकीर्तिता। KSS लघ्वक्षरकृतोनित्या पृथुला सम्प्रकीर्तिता।

एतास्तु गीतयो ज्ञेया [1]ध्रुवायोग विनैव हि ।
[2][गान्धर्व एव योज्यास्तु नित्य गानप्रयोक्तृभि ]॥४९॥

[[3]गीतयो गदिता सम्यग धातूश्चैव निबोधत ।]
विस्तार· करणश्च स्यादाविद्धो व्यञ्जनस्तथा ।
चत्वारो धातवो ज्ञेया [4]वादित्रकरणाश्रया ॥५०॥

---

४९)त्युक्तम् हियस्मात् गीतय एव गदिता न त्वत्र विषयविशेष उक्त ॥४९॥

अस्य गीत्यंशे भेदमाह । यद वैलक्षण गीतीनामुक्त तन् महय न वचितमिति तथा हि । यदन्यैर्लक्षिता ।

द्विगुर्वाद्विनिवृत्ता च चित्रे गीतिस्तु मागधी ।
लघुप्लुतगता चैव तदर्थे चार्धमागधी ॥ (बृहद्देशी मतङ्ग १७७)

सम्भाविता (पृथुला च) यथाक्रम चतसृभिर्द्वादशभिश्च मात्राभि प्रयोगादिति । अथ मार्गाश्रितेहि (यो हि) कलवतुष्कलप्रयोगयोरित्वति । एतच्च लक्षण(विरुद्ध न)स्फुटमेव व्याप्नुयात् । नाम्नयैतदनुसारेणान्यत्रापि योजना तथापि मार्गोपयुक्त भवति तद्गीति वैचित्र्यमिति । यस्मात्त्वासा मागभेदाभिधान तस्मायुक्त सम्यगिति ।

एवमलङ्कारप्रसङ्गेन गीतय उक्ता । अलङ्कारानन्तर च दारव्या कृता उद्दिष्टालङ्कारा सन्धातव्या इति धातुभ्यश्च दारव्या वा लक्ष्यमाणशोभातिशये अन्यो (न्ये) वैचित्र्योपजीवनेन शारीर्यामप्यलङ्कारा शक्ययोजना इत्यभिप्रायेणाह । धातूश्चैव निबोधतेति । चकारेणालङ्कारत्वमप्येतेषा समुच्चिनोति । एवकारेण चतुष्प्रहरण विप्रहरणमङ्गुलीना विभागो ॥ वृत्तो समलेखा विषमलेखेत्यादिक विशाखिलाचार्यप्रोक्त सर्वमेव ध्रुवगानज्ञानवैकल्योपयोगान् मया नोक्तमिति सूचयति । दधत्यप्स्ट विशिष्ट स्ट रक्ति च तरन्ति धारयन्ति च वीणाबाद्यस्वरूप मिति धातव । प्रहारविशेषजन्या स्वरा । तत्समुदायोऽपि अन्यशकल्पमानो धातु । तत्रोद्देशमाह । विस्तार इत्यादि । वाद्यतेऽनेनेति वादित्रमङ्गुलीकोणादि । तस्य तत् करण प्रसरतम् (त्न) । तदाश्रया प्रहारविशेषजन्या इति यावत् । अनेन सामान्यलक्षण धातूनामुक्तम् ॥५०॥

---

१ NS ध्रुवयोग ।
२ NS does not read
३ KSS does not read
४ NS वाद्यत्र...।

सङ्घातजोऽथ(जश्च) समवायजश्च विस्तारजोऽनुबन्धकृत ।[1]
ज्ञेयश्चतुष्प्रकारो धातुर्विस्तारसञ्ज्ञश्च ॥५१॥
[2]विषयस्तु(श्च) स्मृतास्तस्य पूर्वं विस्तार एव च ।
सङ्घातसमवायौ तु विज्ञेयौ तौ द्विकत्रिकौ ॥५२॥
पूर्वश्चतुर्विधस्तत्र पश्चिमोऽष्टविध स्मृत ।
करणानां विशेषेण [3]विज्ञेयौ तौ पृथक् पृथक् ॥५३॥

---

तत्र हि विस्तारधातोश्चतुर्दशविधत्व निरूपयिष्यते । भेदान्तर्गतभेदचतुष्टय तावदवतारयन् तावर्ल्यनिबन्धनमुद्दिशति । सङ्घातजा(ज)श्चेति ॥५१॥

तत्र विस्तारजो नाम भेदो य उक्तस्तस्य भेदान्तरभावेन मितवक्तव्यतया प्रथम विशेषलक्षणमाह ।

विषयश्च स्मृतास्तस्य पूर्वं विस्तार एव च ।

इति । चकार स्ववृत्तिरत्रमेवकारोऽन्वयंता सूचयति ।

तदयमर्थं । विस्तारो नाम यो विस्तार एव । विस्तीर्णत्वमेवास्य लक्षण मित्यर्थः । एतदुक्त भवति । अनेकोऽपि स्वरप्रकरणे यथा पृथगनुपलक्ष्यमाणविभागो-विश्रान्तस्थानभूतपर्यन्तिकस्वररूप (धमेकी)कुर्वन्नन्तरीभवच्चित्रवचनान्तरेणेव विमि-श्रीयमाणगुरुत्व(स्वरत्व)विकीर्णस्तयासौ । अन्यत्र स एव विस्तार उक्त । तस्य च ये विषयो भेदास्तेषु पूर्वमुक्ता अलङ्कारनिरूपणावसरे विचित्रप्रकारा सन्दर्शिता इति यावत् ।

अन्ये तु मन्यन्ते पूर्वमुक्ता स्वरास्त एव । तेषां विषयो भेदा स्वरान्तरोप योगादेकविस्तारवाच्या इति । द्विकत्रिकाविति ॥५२॥

(सङ्घातजस्तूत्तरभेदद्वयेन) चतुर्धा । अन्यस्त्रिक सोऽष्टधा । तदा वा पूर्वं चतुर्विध इति द्विकत्रिकौ [illegible] तुल्ये कि कृतो योत्तरभेद इत्याह ।

करणानां विशेषेण विज्ञेयौ तौ पृथक् पृथक ।

इति । क्रियाविशेषादवान्तरभेदा इति यावत् ॥५३॥

स च विशेषो हस्तस्व(स्थ)तन्त्रीभेदादित्याशयेनाह । अधरश्चोर्ध्वं चेति । नात्र विकृतमौत्तराधर्यम् । किन्तु शरीरे यात्रदवरोत्तरजो मन्द्रतारस्वरो वीणायामधरोत्त-

---

१ KSS अनुबन्धश्च ।
२ KSS विधिर्यस्तु स्मृतस्तस्य ।
३. NS विज्ञेयो वै । KSS विधिश्चैव ।

अधरश्चोर्ध्वं च विज्ञेयावधरोत्तरजौ स्वरौ ।
सङ्घातजो विधिस्त्वेष विज्ञेयो वादन प्रति ॥५४॥

[1]द्विरुत्तरो द्विरधरस्त्वधरादिश्चोत्तरावसानश्च ।
ज्ञेयस्तथोत्तरादिः पुनरप्यधरावसानश्च ॥५५॥

समवायजस्तथा स्यात् त्रिरुत्तरस्त्रिरधरश्च[2] विज्ञेयः ।
[3]द्विरधरोत्तरा(रो)धरान्तो(न्त्यो)द्विरधरश्चो(रोऽयो)त्तरविरामश्च ॥५६॥

---

रजौ । यथाह दत्तिल । वीणाया स्वधरोत्तर (दत्तिलम् । ६) इति । एवमधरोत्तर-स्वरूपमभिधाय तत्कृतसङ्घातजस्य भेदचतुष्क सूत्रयति सङ्घातज इति । विधिभे(र्भे)द इति । एव इति ॥५४॥

आर्यया वक्ष्यमाण तदाह ।

द्विरुत्तरो द्विरधरस्त्वधर(रादि)श्चोत्तरावसानश्च ।
ज्ञेयस्तथोत्तरादि. पुनरप्यधरावसानश्च ।

पुन शब्देनाप्यावृत्या प्रयोगे द्वयता भवतीति सूचयति ॥५५॥ इति ।

अथ समवायस्य भेदाष्टकमाह । समवायजस्तथा स्या(दिति) । तथाऽऽवृत्या यावद् द्विरधरश्च विज्ञेय । स द्विरधरोत्तरोऽधराद्य• । अधरान्तस्तद्यर्थवाचिना सह समागम । द्विरुत्तर उत्तरो यत्रेति । द्विरधरश्चान्त(रोयोत्त)रविरामश्च । उत्तरमुखो द्विरधरादि । द्विरुत्तग न( द )न्ना द्विरुठा व्युत्क्रमेणोत्तरावमाने तु यत्रेति प्राग्-बहुव्रीहि ।

मध्योत्तरो द्विरधर (रो) द्विरुत्तरोऽप्यधरमध्यश्च ।
समवायौ विधयो रूढोऽनेक इति त्रिक समवाय उक्त । द्विकस्तु सङ्घात इति ॥५६-५७॥

अथानुबन्धमाह ।

अनुबन्धस्तु ज्ञेयो व्याससमासाच्च नियतभेदो हि ।

इति । व्यासो भेदाना मिश्रत्वेन प्रयोग । तस्य पुनरपि सकत समूहनापीडन न(निय)-त(तम्) एवाविति । स्वभेदपरभेदनिष्ठानामित्यर्थ । अनुबध्यते मिश्रीक्रियते भावो यत्रेत्यनुबन्धः । एवमुपसंहरति । एव चतुर्दशविधो विस्तारो धातुरिति । एको

---

१ KSS, NS द्वावुत्तरौ ।
२ NS त्रिरुत्तरधरश्च ।
३ NS द्विरधोत्तरा ,। KSS द्व्यधरोत्तरावसानो द्विरुत्तरस्त्वाधरान्तस्तु ।

[1]उत्तरमुखो द्विरधरो द्विरुत्तरावसानश्च ।
मध्योत्तरो द्विरधरो द्विरुत्तरोऽप्यधरमध्यश्च ॥५७॥

अनुबन्धस्तु ज्ञेयो व्याससमासाच्च नियतमेषां हि ।
एवं चतुर्वंशविधो विस्तारो धातुराख्यातः ॥५८॥

रिभितोच्चयनीरिभितो(ता)ह्लाद(दः)स्तु तथानुबन्धः स्यात् ।
पञ्चविधो विज्ञेयो वीणावाद्ये करणधातुः ॥५९॥

[2]त्रिकपञ्चसप्तनवकैर्यथाक्रमं संयुतो भवेद्वाद्ये ।
सर्वैरनुबन्धकृतैर्नवंश स्यात् करणधातुः ॥६०॥

[3]क्षेपः प्लुतोऽतिपातोऽतिकीर्णम(र्णो)नुबन्धसंज्ञितश्चैव ।
आविद्धो विज्ञेयो धातुर्वै पञ्चविध एव[4] ॥६१॥

---

विस्तारः सङ्घातस्वभुवो समवायोऽपृथाऽनुबन्धश्चैक एव । एव विस्तीर्णभेदयोगादु-दात्ततानहृदयविस्तारणाच्च विस्तारधातु ॥५८॥

अथ करणधातुभेदान् पञ्चोद्दिशति—

रिभितोच्चयनीरटि(रभि)तो(ता) ह्लादश्च(श्चस्तु) स्यात्तयाऽनुबन्ध (तथाऽनुबन्धः स्यात्) ॥

इति ॥५९॥

एषां क्रमेण लक्षणमाह । त्रिकपञ्चसप्तनवकैरिति । आद्यौ द्वौ प्रहारौ लघू तृतीयो गुरुरिति रिभितः । पञ्चम इत्युक्तः(च्चय.) । सप्तम इति नीर(रि)भितः । नवमो गुरुरन्ये लघव । ह्लादो लङ्घ्य इति । एतद्भेदानुबन्धनादनुबन्धः इति । पञ्चधा क्रियाबाहुल्यात् करणधातुः ॥६०॥

अथाविद्धधातुभेदान् पञ्चाह ।

क्षेपः प्लुतोऽतिपातोऽतिकीर्णम(र्णो)नुबन्धसंज्ञितश्चैव ।

इति ॥६१॥

एषां लक्षणमाह—

द्वित्रं(त्रि)श्चतुष्कनवकैः प्रहारैः क्रमशः कृतैः ।

---

१. NS द्विरधोत्तरावसानोऽधरादिरुत्तरमुखो द्विरधरश्च । KSS varies
२ KSS त्रिकपञ्चसप्तकनवकैर्यातिर्युक्तो यथाक्रम विहित. ।
३. KSS. NS. varies.
४. KSS. वाद्यप्रयोगे तु ।

[1]द्विस्त्रिचतुष्कनवकैः प्रहारैः क्रमशः कृतैः ।
आविद्धधातुर्विज्ञेय सानुबन्धविभूषितः ॥६२॥

[1]व्यञ्जनधातोः पुष्पं कलतलनिष्कोटितं तथोद्(न्मृ)ष्टम् ।
रेफोऽनुबन्धसंज्ञोऽनुस्वनितं विन्दुरवमृष्टम् ॥६३॥

कनिष्ठाङ्गुष्ठसंयुक्तं पुष्पमित्यभिसंज्ञितम् ।
अङ्गुष्ठाभ्यां सम तन्त्र्योः स्पर्शनं यत् कलं तु तत् ॥६४॥

वामेन पीडनं कृत्वा दक्षिणेनाहतिस्तले ।
सव्याङ्गुष्ठप्रहारस्तु निष्कोटितमिहोच्यते ॥६५॥

---

इति । क्रम(श) इति । लघुरिति द्विक लघुश्चतुर्लघुरित्येके । एव यावन्नवक । अन्ये तु क्रमशब्दलक्षणालक्षणालघुसङ्ख्याक्रमपरमेव प्रहाराणां मन्यन्ते । लघुत्वप्रहारत्वादेव भास(स) आविद्धधात् ॥६२॥

अथ व्यञ्जनधातो सप्त(तोर्दश)भेदानाह ।

व्यञ्जनधातो(तो.) पुष्प कल(ल)तर(ल)निष्कोटितं तथोन्मृष्टम् ।
रेफोऽनुबन्धसंज्ञोऽनुस्वनित त्रिन्दुरवमृष्टम् ॥

इति ॥६३॥

एतान् क्रमेण लक्षयति । कनिष्ठाङ्गुष्ठसंयुक्तं पुष्पमिति । त्रि (यत्र) विशेषाभावेऽप्यङ्गुष्ठौ । तेन क्रमभे(भेणै)कैकस्या तन्त्र्या प्रहारत्रयात् पुष्पम् । यथोक्तं भट्टमातृगुप्तेन ।

पुष्पं च जनयत्येको भूय स्पर्शात् स्वरान्वित ।

इति । अङ्गुष्ठाभ्यां सम तन्त्र्यौ तु (न्त्र्योस्तु) नानास्थानस्वर(रा) तन्त्रीद्वय (ये) युगपज्जन्या । अङ्गुष्ठद्वयेनेत्यर्थ ॥६४॥

वामेन पीडन कृत्वा दक्षिणेनाहतिस्तले ।

वामेनाङ्गुष्ठेन त न्त्री पीडयित्वा दक्षिणेन हन्यादिति तलम् । सव्याङ्गुष्ठप्रहारस्तु निष्कोटितम् । ऊर्ध्वाधरहनेन कुटिलोऽय प्रहार इति निर्वचनबलादित्युपाध्यायाः ॥६५॥

प्रहारो वामतर्जन्या तु तनु (द्व)मृ(न्मृ)ष्टम् । तर्जन्या तथा प्रहरणपीडना- हतप्राय मधुरस्वरजन तन्त्रीषु मार्जनामात्रमेव भवतीत्युन्मृष्टम् । सर्वाङ्गुलिसमा-

---

१ KSS. द्विस्त्रिचतुष्कैर्नवकै प्रकारै । इतोऽग्रे काशीसीरिज पुस्तके पाठक्रमो भिद्यते ।

प्रहारो वामतर्जन्या उद्धृ(न्मृ)ष्टमिति सञ्ज्ञितम् ।
सर्वाङ्गुलिसमाक्षेपो रेफ इत्यभिसञ्ज्ञित ॥६६॥

तत्स्थानेऽधस्तन्त्रीणामनुस्वनितमुच्यते ।
पुर्वक्षरकृता तन्त्री बिन्दुरित्यभिसञ्ज्ञित ॥६७॥

कनिष्ठाङ्गुष्ठकाभ्यां तु दक्षिणाभ्यामधोमुखम् ।
तन्त्रीषु त्रिप्रहार चाप्यवमृष्ट प्रकीर्तितम् ॥६८॥

व्याससमासादेषामनुबन्ध सार्वधातुको ज्ञेयः ।
इति दशविध प्रयोज्यो वीणायां व्यञ्जनो धातुः ॥६९॥

इत्यत्र (त्येते)धातव प्रोक्ताश्चत्वारो लक्षणान्विताः ।
तिसृणामपि वृत्तीना येषु[1] वाद्यं प्रतिष्ठितम् ॥७०॥

---

क्षेपादकः । सर्वाभिरङ्गुलिभिरेकस्वरताडय पर्यायेण विचित्र । एकत्र विश्रान्ति । रेफविस्तारे नन्वे(स्वे)ते(रा इ)ति विशेष ॥६६॥

तत्स्थानेऽधस्तन्त्रीणामनुस्वानितम् । तलनिष्पत्ती यस्यां तदवच्छिन्नेऽधम-(न) तस्मि (तन्त्री) प्रहारपरम्परे(रा)ऽनुस्वनितम् । पुर्वक्षरकृता तन्त्री बिन्दुः । पूर्वतो विलम्बितकाल एकस्यामेव तन्त्र्या प्रहार इत्यर्थ ॥६७॥

कनिष्ठाङ्गुष्ठकाभ्या तु दक्षिणाभ्यामधोमुखम् ।
तन्त्रीषु त्रिप्रहार चाप्यवमृष्टम् । इति ।

त्रिषु स्थानेष्वेकस्वरतन्त्रीत्रय प्रत्येक कनिष्ठाङ्गुष्ठद्वयेनाधोगत कृत्वा हन्यादित्यव मृष्टम् ॥६८॥

व्याससमासादेषामनुबन्ध इति स्पष्टम् । ननु सार्वधातुको ज्ञेय इति किमनेन । प्रतिधातुनिरूप(ण)नोऽप्यनुबन्ध सम्यक् । स तु प्रातिपदिकधातुभेद-मिश्रणात्मा दर्शित । अनेन तुल्य अ(न्यो)ऽन्यधातुगतान्य(न)पि भेदान् धात्वन्तर-भेदैर्मिश्रीकृत्य प्रयोज्य(ज्य) इति कथ्यते । सर्वेषु धातुषु भव इति (सार्वधातुक) ॥६९॥

उपसहरति । इत्येत इति । लक्षणान्विता इति । शास्त्रोक्तनयाऽदृष्टोपयोगि-नोऽपीत्यर्थ । प्रशाखान्विता हि तन्त्रीवाद्यभेदा कियन्तो गण्यन्ते तेऽपि चैतत्पद एवाधभूता अवगन्तव्या । तिसृणा लक्ष्यमाणाना वृत्तीना सम्बन्धेन वृत्तिगत यत्किञ्चिद्वाद्य वीणावाद्याद्यद् विपञ्चकालाबुवीणादि सरिकारावणहस्तादिगत ततवाद्याद्यदपि चावनद्धवाद्यजात तद्येषु धातुषु भेदषु विश्रान्तम् । एतत् प्रकृतिक हि

---

१ KSS. धातु NS यस्तु ।

तिस्रस्तु वृत्तयश्चित्रा दक्षिणा वृत्तिसंज्ञिताः ।
वाद्यगीतोभयगुणा निर्दिष्टास्ता यथाक्रमम् ॥७१॥

[1][तिस्रो गीतिवृत्तयः प्राधान्येन ग्राह्या. । चित्रा वृत्तिर्दक्षिणा चेमि । तासां तासगीतिलयर्यतिमार्गप्राधान्यानि यथास्वं व्यञ्जकानि भवन्ति । तत्र चित्रायां सङ्क्षिप्तवाद्यतालद्रुतलयसमायतिरनागतप्रहाराणां प्राधान्यम् । तथा वृत्तौ गीतवाद्यद्विकलतालमध्यलयस्रोतोगतायति समग्रहमार्गाणां प्राधान्यम् । दक्षिणायां गीतिचतुष्कलतालविलम्बितलयगोपुच्छायत्य(ति ।प्र)तीतग्रहमार्गाणां प्राधान्यम् ।

सर्वासामेव वृत्तीनां ललिताद्यास्तु[2] धातवः ।
धातुभिः सह [3]संयुक्ता भवन्ति गुणवत्तराः ॥७२॥

---

सर्ववाद्यानाम् । तच्च पुष्कराध्याये (अ० ३४) वक्ष्यते। धातव इति प्रोक्ता एवं ललिता इति सम्बन्धः ॥७०॥

उक्ता वृत्ति निरूपयति । तिस्रस्तु वृत्तय इति । वृत्तिर्गुणप्रधानभावात्मा व्यवहार इति सामान्यलक्षणम् । ततवाद्यप्राधान्ये गीतगुणतेति चित्रा वृत्ति. । गीतमुखेऽपेक्षताविरहित हि वाद्य यथाविधि वैचित्र्यचर्चित क्रियते । एतद्विपर्ययस्तु दक्षिणा वृत्तिः । गीत हि विशिष्ट(ष्ट)स्थानीय प्रधान तदनुकूलत्वाय व्यवहार. । यत्र सममेव द्वयोर्व्यवहारस्तत्र साम्येन वर्तनाद् वृत्तिर्नाम । वृत्तिसंज्ञितशब्दस्यावमाशय । वृत्तिरिति सामान्ये विशेषे च प्रयुक्तोऽत्र । ब्राह्मणाख्या ब्राह्मण इति यथा। गुणशब्दोऽत्रोत्कर्षवाची न त्वप्रधानवाची तेन वाद्यस्य गीतस्य च गुण उत्कर्षो यत्र प्राधान्यमिति यावत् । तथा च दत्तिलाचार्यः ।

दक्षिणावृत्तिचित्राश्च वृत्तयस्तास्त्रयं विधिः ।
प्रधान गीतमुभय वाद्य चेति यथाक्रमम् ॥ इति ।

(दत्तिलम्-४१)

अन्ये तु पठ्यन्ते । द्रुतमध्यविलम्बितात्मक यत्कालत्रयमान तदेवानेन विशेषेणोक्तं वृत्तित्रयम् । तच्च स्वरगतो(तमु)पदिष्टस्वरमनेन विशेषेणाहेति प्रावापादियोगो हि तालो मुख्यतया । तथाह । आसारितोपर(व)हनमाद्यता [(तेष्वादावासारणानि) भत ना० ३१ १०३] तालादि। तत्र मुख्यया ध्रुवावेरेव नियमिता गान-

---

१. NS does not read.
२ NS. समन्वता ।

[ [1]एतेषां धातूनां समवायाज्जातयस्तु जायन्ते ।
स्यात् स्वादुदात्तललितरिभितघनसज्ञाश्चतस्रस्तु ॥७३॥

तत्रोदात्ता विस्तारधातुविषया ह्युदात्तत्वात् ।
ललिता व्यञ्जनधातोर्ललितत्वादेव सम्प्रयोक्तव्या ॥७४॥

आविद्धधातुविषया रिभिता लघुसञ्चयाद् विनिर्दिष्टा ।
करणविषया च घनसज्ञा गुरुलघुसञ्चयात्तु स्यात]॥७५॥

---

मिति च वक्ष्यते । न चात्रापि सम्भव इति च तत एवेति च तालविधावुपदेक्ष्यमाणात् मार्गत्रयादिद वि(भि)द्यत इत्यलमतिप्रसङ्गेन ॥७१॥

ननु कस्माद्वादौ चत्वारो धातव (भ० ना० २९ ५०) इति निरूपिते चैषा चतुर्दश पञ्चदशेति भेदा निरूपिता । त(क)स्मात् मूलत एव चतुर्वि(स्त्रि)शद्धातव इति नोक्तमिति धात्वाङ्ग्याख्या-परजातिविभाग तावद्भेदानुगतपरिहारान्तर तेन दर्शयित सर्वासामेवेति । सर्वासा वृत्तीना सम्बन्धिन । ता शुद्धा । न तु सर्वे चतुर्वि(स्त्रि)शदपि । एवकारो यथासङ्ख्यमसम्भाव्यमे(ए)व । तैर्धातुभिस्त्रयद्वय सम्भूय ललिता जायन्ते सपुस्ता सम्बद्धा भवन्ति । गुणवत्तरा इति । व्यञ्जनधातावप्याविद्धत्व क्वचिदस्ति तथापि ललिताप्रधानमेव । अन्यत्राप्यन्यदिति यावत् । वीणावाद्ये सौकुमार्यं प्रधानमिति पश्चान्निर्दशेप-व्यञ्जनधातुनिर्दिष्टापि ललिता जातिरिहादावुक्ता ॥७२॥

ननु कुत्र धातौ का जातिरिति वाच्यम् । किञ्चैकैकत्र धातुभेदे नास्त्यस्याभिव्यक्तिरस्ति । तत् कथमिमा जातय इत्याशङ्क्याह ।

एतेषां धातूनां समवायाज्जातयस्तु जायन्ते ।
स्यात् स्वादुदात्तललितरिभितघनसज्ञाश्चतस्रस्तु ॥

इति । एतेषा धातूना मध्ये तस्या तस्या जातौ यश्चोचितस्त(स्माद्) एतज्जा(ता जा)यन्त इति । अभिव्यज्यन्त इत्यर्थ । तत्र विस्तारधातावुदात्ता जातिरौचित्यात् । तत्र ह्येकविस्तारादिप्रयोगे ईहादिबाहुल्यात् प्रयोगस्य चित्तवृत्ति( ) सुभगीभवति । व्यञ्जनधातौ ललिता सौकुमार्यात् प्रयोगस्य । अत एव च श्रीहर्षेणाङ्गनासमुचित वाद्यमित्याशयेन व्यक्तिव्य(व्यं)ञ्जनधातुना दन(श)विधेनात्र प्रसव्यात्म(मु)ना (नागानन्दम् १ १४ प्रियदर्शिका ३ १०) इत्युक्तम् । आविद्धधातौ रिभिता लघु(ल)घुप्रयोगाद् रिभो(फें)हि वर्णप्र(व्य)त्यय एतद्रूपम् । रिभि(फि)श्च कत्थनयुद्ध (निन्दा)-

---

१ KSS does not read

'[1]त्रिविधं गीते कार्यं वाद्यं वीणासमुद्भवं तज्ज्ञैः ।
तत्त्वं ह्यनुगतमोघं स्यानेककरणसमायुक्तम्' ॥७६॥

हिंसानादरेषु (हिंसादानेषु) पठ्यते । (पा० धातुपाठ —१३०६) अनादरश्चा (प्रादान) विश्रान्ति । युद्धादावपि च चातुर्योग एवोचित । करणघातो घना । गुर्वन्तरविश्रान्त्या निषिद्धत्वम् । अन्ये तु विपर्ययमाहु । आविद्धे घना । लघुभिर्निरन्तरत्वात् । करणे लघूपक्रमत्वाद्गुरुविश्रान्तेश्चैकत्रानादरात् । यत्पुनरेतदुक्तमेकैकत्र भेदेन तज्जात्यभिव्यक्तिरिति तदेवमेतदाह समवायाश्चिति । बहुभिर्भेदैर्युक्तैः सा जातिर्व्यक्ता भवतीति यावद्भेदैरित्याशङ्क्याह । स्यादिति । यावती भेदकलापयुक्ते तथाविधाभिव्यक्तिरिति यावद् ग्रामरागाभिव्यक्तिलक्षणत्वादभिव्यक्तिश्चैवमेव दृष्टा बाह्यन्त एव हृदयेऽन्य एव (बाह्यान्तरेऽप्यन्येव) । अस्यापि शतधापि पुनस्तथोपकारिण इत्यर्थः ।

अन्ये त्वित्थं योजयन्ति । यस्मात्ता जायन्त इति प्रश्न उत्तरमिदं समवायादिति । अथे याह नोदात्तादिकाया आर्ताया जायतश्चेति किं न वृत्तयस्तेन धातवो धातुभेदसञ्चयात् सा चित्तवृत्तिर्जायत इति तावतो भेदकलापस्यैव करणादेकरूपतया परिगणन जातिश्च । स्पष्टार्थोऽत्र व्याख्याने । कस्मात्ताश्चित्तवृत्तयो जायन्त इत्यत्रैकैकंवोत्तर जायत इति । यत इति विभिते च चित्तवृत्तिरपि भवता (ति) विश्राम्यत्वात् । अविभागान्नियमे जातिभेदनिमित्तमभिधाय दक्षिणादिवृत्तित्रयेऽपि साधारण वाद्यविधि त्रिविधमाहु । त्रिविध गीत इति । विधाशब्दो विधिवाची । तथा चाहु । तत्त्वौघानुगताश्च वाद्यविधय इति । गीत इति । गीतविषयो वाद्यस्य मेलनप्रकार स त्रिविधिरिति सामान्यलक्षणस्य वृत्ति । स तु गुणप्रधानभाव इति भेदगुणत्वेऽपि हि तन्त्रादिनयं प्रधानत्वेऽपि हि स्वातन्त्र्येऽपि ॥७३ ७६॥

अथैषां विशेषलक्षणं क्रमेणोच्यते ।

लयतालवर्णपदयतिगीत्यक्षरभावकं भवेत् तत्त्वम् ।
गीतं तु यदनुगच्छत्यनुगतमिति तद्बुधैर्ज्ञेयम् ।
आविद्धकरणबहुलं ह्युपर्युपरिपाणिकं द्रुतलयं च ।
अनपेक्षितगीतार्थं वाद्यं त्वोघे विधातव्यम् ॥

इति । लया द्रुतमध्यविलम्बिता वक्ष्यमाणलक्षणा । तालश्चञ्चत्पुटादिकृत साम्यविशेषो वा ॥(म्या)तालादि(स)हितवीणाया शक्यप्रयोग । वर्णं स्थाय्यादि । पद

१ KSS varies absolutely

लयतालवर्णपदयतिगीत्यक्षरभावकं भवेत् तत्त्वम् ।
गीतं तु [1]यदनुगच्छत्यनुगतमिति तद्भवेद्वाद्यम् ॥७७॥

आविद्धकरणबहुलं ह्युपर्युपरिपाणिकं द्रुतलयं च ।
अनपेक्षितगीतार्थं वाद्यं [2]ओघे विधातव्यम् ॥७८॥

[3]एवं ज्ञेया वैते वाद्यविधाने तु धातवस्तज्ज्ञैः ।
वक्ष्याम्यतः परमहं निर्गीतविधानसमवायम् ॥७९॥

---

विरामरूपो विच्छेदः । यतिः स्रोतोगतादि । गीतिग्रामविभागत । आर्च्यंशविशेषो-चितपदाक्षरभेदवैचित्र्यसम्भावितो(ता)वा गीतिः । अक्षराणि देव शर्वमित्यादि (दीनि) । एतच्च समस्तं गीतं वीणायां शक्यप्रयोग (गं) स्वरपदतालनिष्ठुर(निष्ठित) प्रपञ्चं दर्शयति । भू प्राप्तौ (पा० धातुपाठ —१८६४) । अत्र तेन लयादिभेदं भावयते प्राप्नोति स्वीकरोति यद्वाद्यमतत्त्व न स्वभावव्यतिरिक्तत्वात् । तेन तथाविध-गीतेन सह समवाय सम्मेलना स तत्त्वाख्यो वाद्यविधि । एवमन्यत्र मन्तव्यम् । अनुगच्छति न सर्वं तद्रूपमनुहरत्यपि तु किञ्चिद्यथा विलम्बितेऽपि लये नून प्रयोग मध्ये करोति देवमिति । वर्णद्वये गीयमाने त्रिचतुरान् प्रहारान् करोति । यत्र पुन समवायात् प्रत्यक्षमेवमनुसरणं न भागशब्द स ओघः । आविद्ध चतुर कृत्वा प्रहार-क्रियानेन(तेन) बहुलम् । उपर्युपरीति समीप्ये । तेन निरन्तरा पाणयो घाता यत्र । गीत (तस्य) च योऽर्थं(र्थः) प्रवृत्तिविदारीलक्षणो विच्छेद सोऽनपेक्षितो यत्र । गीत-विदारीष्वव्यवच्छित्तिमिति यावत् । अत एवौघ इवौघ । केचिदाविद्धकरणबहुल धातू निष्क्रिबिति मन्यन्ते । अन्ते तु निर्देशादेव पूर्वो वाद्यविधिर्व्यञ्जनविस्तारधातु-विष(य)यो मन्यन्ते । तत्पक्षे न क्वचिरस्य(र्थं)ञ्जनधातुनोऽप्युपक्रम(म्य)वाद्यविधयः सम्यक् त्रयो दर्शिता (नागानन्दम् १ १४ प्रियदर्शिका ३ १०) इत्यसमीचीन स्यादि-दम् । न तु वाद्यत्रिवित्र्योपदेशेनादावपि केनचिद्विकारभेदेनावनद्धवाद्येऽपि । अत इत्यमुद्दिष्टम् ॥७७-७८॥

तन्निरूपयितुमुपक्रमते । वक्ष्याम्यतः परमिति । निर्गीतं बहिर्गीतं शुष्कमिति पूर्वरङ्गाध्याये (भ० ना० अ० ५ श्लो० ३०-५७) निर्णीतमेव । तस्य विधानादिभेद-स्तेषां सम्यगवगमो येन भवति त समवायलक्षणं वक्ष्यामीत्यर्थं ॥७९॥

---

१. KSS यदनुगच्छेदनुगतमित्युच्यते वाद्यम् ।
२ KSS चौघ बुधैर्ज्ञेयम् । इतोऽग्रे काशीहीरिजपुस्तके श्लोकद्वयमधिकम् ।
३ KSS. varies

[1]आश्रावणा तथाऽऽरम्भो वक्त्रपाणिस्तथैव च ।
[2]सङ्घोटना तथा कार्यं पुनश्च परिघट्टना ॥८०॥

मार्गासारितमेतत्[3] स्याल्लीलाकृतमथापि च ।
आसारितानि च तथा[4] त्रिप्रकारकृतानि तु ॥८१॥

एतानि तु बहिर्गीतान्याहुर्वाद्यविदो[5] जनाः ।
[6]सतालानि ह्यताल्यानि चित्तवृत्तौ कृतानि तु ॥८२॥

प्रयोजनं [7]च विज्ञेयं पूर्वरङ्गविधिं प्रति ।
एतेषां सम्प्रवक्ष्यामि लक्षणं समिदर्शं म[8] ॥८३॥

---

तत्राश्रावणामेव लक्षयति । विस्तारधातुविहितैरिति । विस्ताराख्ये धातौ यानि विहितानि शास्त्रकारेणेति । एकविस्तारादयश्चतुर्दश प्रभेदास्तैः प्रविभागश इति । एकैकं द्विरभ्यस्तैर्वारद्वयं प्रयुक्तैः । पुनर्भेदान्तरेऽपि तथैव द्विः प्रयुक्तो(क्तै)द्वि(द्वि)रावृत्तैस्तया च पुनरावृत्तैः । करणस्य स्वगताया क्रियाया अपवया पूर्वपुक्ति-मुञ्झनभेदेनान्तरनिमज्जन(त)या तेषा तैरेव विधैवपलक्षिता स्यादाश्रवणा नामेति । सन्निवृत्त (त्तं) । तद्यथा । एकविस्तारो द्वि प्रयुज्यते ततो वा द्विरधर इत्ययं भेदो द्वि । पुनरेकविस्तारो द्विस्तर इत्यत्र भेदे गुणनयापि लापितम्वल्पो द्विस्तनो द्विरत-(धर)इत्यय भेदो द्वि । ततो द्विस्तार इत्यय भेदो द्विरधर इत्यय भेद । द्विरधर इत्यत्र भेदनिमन्तस्वभावो द्विरित्येवमेतदप्यनुसर्तव्यम् । विशाखिलमतानुसारिणस्तु(प्राहु)-रवास्य स्वरविस्तारणेऽभ्यापचमातालप्रभेदेषु तैर्वस्तु (त) एकविस्तारान् मात्राभेद

---

१ KSS आश्रावणारम्भविधी ।
२ KSS परिघट्टना च विज्ञेया तथा संघोटनैव च ।
३ NS मन्यत् ।
४ KSS त्रिप्रमाणानि यैं तथा ।
५ KSS NS आदौ योज्यानि योक्तृभि ।
६ KSS, NS सर्वाण्यतालपतालानि चित्तवृत्तौ स्मृतानि च । (का० चित्तवृत्त-गतानि) ।
७ KSS हि पूर्वोक्त पूर्वरङ्गविधौ मया NS च तज्ज्ञय ।
८ KSS, NS दशनानि यथाक्रमम् ।
तत्रैषामुद्देशमाह । साश्रावणेत्यादि ॥८० ८३॥

मालावणा नाम ।

विस्तारधातुविहितं करणं प्रविभागशो द्विरम्पस्ते ।
[1]द्विश्चापि सन्निवृत्तं करणो(णा)पचयं क्रमेण स्यात् ॥८४॥

[2]गुरुणी त्वादावेकादशक चतुर्दशं सपञ्चदशम ।
सचतुर्विंशमेव द्विगु णोट्टतमेतदेव स्यात् ॥८५॥

[3]लघुनी गुरु चैव [4]स्यादथाष्टम गुरु भवेत्तथा च पुन ।
षट् च लघूनि [5]ततोऽन्ये गुर्वाश्रावणाया तु ॥८६॥

कर्तव्य । तस्य नवस्वरकानुवक्ष्यमानत्वात् ॥८४॥

एव वीणावाद्यमुखत्वेतद्गत गुरुलघ्वात्मकप्रस्तारमाह । गुरुणी त्वादाविति । गुरूणि शेषाणि भवन्ति । न च लघ्वक्षरम् । इदमेव द्वितीयखण्डम् । तत पञ्चदशाक्षरे तृतीयखण्डे त्रयो गुरवोऽन्य लघव । लक्षणश्रवणार्थं सावकपदोदाहरणानीह लिख्यन्ते । खण्डप्रस्तारक लक्षणपूर्वकम् । ततोऽन्यनीस(तननयननसा ॥२॥) समजनस(सा) । समस्तमात्रा (मा)श्रावणानुसार(रेण) इति त्रिखण्डा । (यथा) ।

शम्भु प्रणमत मम किल मानसमाश्रावणा(ण)मिह कृतहृदये ।
मद्र वसति (पदकमलयुजन)योगाविलसुतनतमकुटे ।
वरद स हि शरण भवति जनपद(स्य) ॥

(इति) ॥८५-८६॥

अत्र तालविशेषमाह । त्रि शम्योपरिपाणाविति । एवमेवेति । न सोऽपि त्रिरुपरिपाणो च तेन शम्यात्रये आदो वीणादिवाद्येऽनुगत गीतम् । एककवानिति । एकया विदार्या इयदृश्ये । तालत्रयपर्यन्ते गीते विच्छेद एक कर्तव्य इत्यर्थं ।

अन्ये तु एककवानिति न पठन्ति । एवमेवार्य(र्थ इ)ति ते पठन्ति । तेषामाशये उपरिपाण्यभिधानादेव शम्यात्रय विदारीविच्छेदो(द ऊ)पलभ्य नव । तेनादौ वीणावाद्यप्रयोग शम्यावाद्यमतोऽपि वीणावाद्य ततस्तालत्रयमिति तद्वक्ष्यते । लमस्योपरि यद्वाद्य पाणिस्तस्योपरीति । तयो वाद्यस्य (वेन)सम ग ति । द्व शम्ये ।

१ KSS बिश्चापि NS द्विश्चापि ।

२ KSS गुरूणि त्वादावेकादशकचतुर्दशकपञ्चदशकम् । NS. गुरूणात्वदावेकादश...।

३ KSS, NS लघू गुरुणी च तत ।

४ KSS स्यातायथाष्टम गुरु भवत्तदा च ।

५ KSS ,NS तथाऽन्य गुरु वाद्याश्रावणाया तु ॥

त्रि शम्योपरिपाणौ [1]तालावप्येवमेव चंकि(क)कवान् ।
समपाणौ द्वे शम्ये तालावप्येवमेवाथ[2] ॥८७॥

योजनावपाणौ तालोपरीति प्रयुक्तम् । समे चेति । प्रयुज्यमाने(न इ)ति । प्रसमे च प्रयुज्यमाने तालावध्येवमिति । द्वौ समपाणौ तत्र शम्या तालद्वये च गीतवाद्ययो सङ्ग्रह ॥८७॥

ततश्च यो शम्यातालौ तत्र पूर्वं गीत ततो वाद्यमित्यवपाणि । ततस्तथाः चंकेति । तेनैव रक्षणे(लक्षण)प्रकारेण उत्तर पञ्चपाणि षटकल । चच्चत्पुट। षटचतसृभि कलाभिरिति द्वाविंशतिकला । द्विरत्र तत्र चंकेति वचनात् पञ्चपाणौ च चच्चत्पुटे चावपाणिरेव । तेन सप्त विदार्योऽत्र द्वयोरुपरिपाणिर्द्वयो समपाणिरितः क्षुण्ववपाणि । वाद्यनिकश्चाय तालविशेष इति युग्मौजविभागापेक्षण मन खेदमात्रम् । अन्ये तूत्तरस्तथा द्विकल इति पठन्ति । तेऽष्टाविंशतिकला(या)श्रावणामाहु । अपरे चच्च पुटस्तनेति (भ० ना० २९-८८) वचनात् सोऽपि द्विकल एवेति व्याचक्षाणा द्वात्रिंशत्कलामिमा मन्यन्ते । द्वात्रिंशति(त्)कलत्वमेव सूचित पूर्वापरविचारेण लक्ष्यते । तथा हि । चत्वारस्तु गुणा युग्म (भ० ना० अ० ३१ १०६) इति वक्ष्यते । खण्डद्वया ते च मात्राद्वय कलाया यद्यपि । एककलापि मात्रेति । एव खण्डद्वयऽष्टा-दशकला । तृतीये चतुर्दश । अन्त्य गुरुद्वयोश्चतुष्कलयो । वक्ष्यते हि । निवृत्तौ हि कला न्यूना यदा वस्तुवशाद्भवेत् । आकलापातमात्रेति ॥ (भ० ना० ३१ २२८) ॥ स्पष्ट क्रम ।

अन्यैस्तु ध्रुवा त्रिखण्डा कृता तालस्त्रिखण्ड कृत । तत्र प्रथमखण्डे उपरि पाणियोगाच्च तस्य कला पदशु या शेषास्वष्टासु पदानि । द्वितीयेऽवपाणियोगाद् द्वौ गुणौ तु ताल तु प्रवेशेन लभते(न्यते) शेष पदग्राम षष्ठ(ट्सु)कलास्विति पञ्च-पाणि । तृतीये तु खण्डे चतस्र कला इति पृथगेव खण्डत्रये तालयोग इति । कत-मदेतत् । अतन्त्रमिति न चोद्यम् । न ह्यत्र समुदायाश्रय मानम् । अपि तु प्रतिखण्ड-भेदे च भवति गानवैचित्र्यमिति लक्ष्यते ध्रुवाध्याये (भ० ना० अ० ३२) । एकस्तु ध्रुवा ज्ञेया इत्युपक्रम्य द्विवस्तु परिकीर्तिका (भ० ना० अ० ३२ ७) इत्यादि । चतुर्विंशतिकलात्मकेऽर्धयोगात्रेकादशकनिकत्व तु सहजीण मान तच्च तालाध्याय (भ० न० अ० ३१) सङ्ग्रहोऽप्यते कला पञ्चेत्यादिनेति (भ० ना० अ० ३१ ४४) व्याचक्षते तदसत् । तत्र योगेऽत्र विच्छेदाभावात् खण्डत्रयणैवापृथक् ताल । तद्य

१ NS पित्वावचाममव KSS तालोऽपि ह्यथ निर्दिष्ट ।
२. NS स्यात् ।

[1]भूयः शम्यातालावपाणावुत्तरस्तथा चैव ।
चच्चत्पुटस्तथा स्यादेवं ह्याश्रावणाताल ॥८८॥

[2][यत्रोदाहरणम् ।
भण्टु जगति यत्रलितक जम्बुक भण्टुं तिति च लघु च भण्टु (तिति वा) ।
विङ्कुते गणपतिपशुपतिजम्बुक दिङ्गले वरभुज दिगिनिगि वा ।
तिति वादिभि निगिचा पशुपति गीतिवा ॥]
अथारम्भ ।

दीर्घाण्याराबष्टौ [3]द्वादश च लघूनि नैधनं चैव ।
चत्वारि गुरूणि तथा ह्रस्वान्यष्टौ च दीर्घं च ॥८९॥

---

भञ्जचतुलंध्यादि यदिति मान . ..पि स्फुट एव । तदर्थमेव खण्डत्रयविभागो मुनिना कृत । ताले पदेषु च प्रथमखण्डे च सङ्कीर्ण' ताले तद्वद्यते कला. पञ्च तदा तत्र पुनर्नव च कीर्तिताः ॥ दर्शकादश चैवेति (भा० ना० भ० ३१ २४) एव च गीतताम-विषय पदेषु यो गुणविभागो वक्ष्यते तालाध्याये चत्वारश्च गुणा युग्म (भ० म० ३१.६८) इत्यादिना सोऽपि नास्यत्तायेह्यपि न भवतीत्यल बहुना । इत्याश्र(श्रा)वणा ॥८८॥

अथारम्भः । आरम्भे तावद्गीतपद प्रस्तारमाह । दीर्घाण्याराबष्टावित्यादि । नैधन गुर्वित्यर्थं । चत्वारि लघूनीति । निधनमिति । गुरु चान्ते गुणीकृतानि । पञ्च द्विगुणं पुनर्गुरुद्वयम् । मो स्नो नो स इति । स्मौ नो स्मौ इति । स्मौ नौ ग (इति) । आरम्भे तृतीयखण्ड ।

स वन्दे नाथं त्वामारम्भ इह नियतविरहितमहतम् ।
गौरीकान्त(न्त) हुतवहरविशशिय (हक्)त्रिनयनिय(नम्) ।
नैव त्व(श्राप्य)त्वं हृदि विदलितत(मस)म् ॥

अत्रापि त्रिखण्डत्वमेव । गीततालयोर्वश कला आद्यखण्डद्वितीये षट्कला ......यमे खण्डे... ..मैथुनग्रहणादेकविंशतितमे गुरोर्विश्रान्तिकलाप्रयोग पुन ......चतितमे इति पञ्च । ८९-९०॥

---

१ KSS, NS varies absolutely

२ कोष्ठकबद्धपाठ काशीसीरिजपुस्तके नास्ति । अन्यत्र च सर्वदा ।भवति ।

३. KSS. द्वादश ।

लघुसञ्ज्ञानि [1]चतुर्था निधन द्विगुणीकृतानि दीर्घे द्वे ।
अष्टौ लघूनि नैधनमित्यारम्भेऽक्षरविधानम् ॥६०॥

[[2]अत्रोदाहरणम् ।
झण्टु झण्टु झण्टु झण्टु जगति यवलितक दिगिनिगिचा ।
दिड्गुले दिडगुले तिलि कुक्कुलकुचक्क(कुक्क)लजम्बुक तितिचा ।
गणपति (झण्टु झण्टु) सुरपति पशुपति चा ॥]
अस्य तु धारणम् ।
[3]कार्यं त्रिपर्व(वि)हितं रुद्रहर्नैरप्यथ समवरोहं ।
ललिरिभितह्लादयुतं.[4] करणंविस्तारमुपविष्ठं ॥
उपचययुक्तं द्विस्त्रिस्तथा निवृत्तैहिरन्यस्तं ।
आरम्भोऽप्यवतरणस्त्रिपर्वयुक्तैश्च कर्तव्यः ॥

---

(अ)क्षरेषु द्वादश कलास्तासां तालविधिमाह । तालस्त्रिकलश्चाद्यो । तृतीयस्या कलाया तालमेकस्या शम्या द्वितीयस्या ताल । द्वितीयस्या शम्या द्वितीयस्या तालम् । अन्येऽपि तालोऽपि ह्येकका(कला)त्मक स्यादिति वदन्ति । ते शम्यानन्तरमेव तालमाहु । तृतीयस्या सन्निपात शेषं तु विप्रा इति परिपाट्या । द्विकलपादभागानुसारेण युता (पुन )पितापुत्रकश्चपटपूर्व (भ० ना० २६-६२) इति द्विकल एव पञ्चपाणि । चच्चत्पुटस्तथा द्विकल एव । के(ते)न तीरवताप्रशतादसतानि प्रतिषप्रसतिस इति केचिद् व्या(च)क्षते । अत्र क्रमादय शब्दा पूरणार्थं वर्तमितव्यास्तावन् न्यायोऽस्ति यत्र मध्य च विकलोचितेन पूर्यन्ते(ते) ।

ननु चच्चत्पुटश्चतुष्कलोचितेनेति प्रमाणाभाव ( ) षट्पितापुत्रगो(को)ऽत्र द्विकल (भ० ना० २६-६२) इति प्रकरण प्रमाणमिति चेदन्योन्याश्रय । द्विकलो द्वि पञ्चपाणिरिति चारित्र (च त्रि)कल ज (लश्च)सन्निपात (भ० ना० २६-६२) इत्यतोऽनन्तर भूय एवमिति बाधकत्वे त्रिकल च (लश्च) सन्निपात (भ० ना० २६-६२) इत्यतोऽनन्तर पितापुत्रक च (कश्च) पटपूर्व (भ० ना० २६ ६२) इति वचनप्रयोजन तथा चासारितेषु चच्चत्पुटपरिवर्तस्य शम्यादि(दी)द्वे(द्वौ) च पञ्चपाणि-

---

१ KSS च चत्वारि द्विगुणीकृतानि दीर्घे च ।
२ ग्रन्थान्तरेषु श्लोकद्वयानन्तर वर्तते स च भिद्यते ।
३ KSS varies
४. NS. हृद्भेदयुतं ।

ऽवधारणे । तेनास्य वाद्यविधिनैव प्रयोग । तथापि पुष्कराध्याये (भ० ना० अ० ३४) (प्रत्याहारायां)तावन्नोर्ण्णकोटी(टि) तत्र वाद्य सार्वमंजित सार्वभाण्डिक सकलस्त्री बालमूर्खादिरञ्जन प्रयोजनाऽयमिति । तदेवमवतरणं वाद्यप्रधानमेवेति तावत् मुने ।

स अन्तरे तु तस्य रूप सप्तरूपात्मकमुक्तम् । तदपि स्पष्यते ।

चचत्पुटोत्तरेमिश्रा सुगत्यास्तु यथाक्षरी ।
सुगधि मुत्तरांशमुपाश्रिता ॥
विकटोत्तरयुग्म(ग्मा)म्या रौद्रौ स्याद्विचातिः कला ।
पञ्चपदयास्तु कर्तव्या वार्तिके द्विकलेन च ॥
चचत्पुटे चतुष्पद्विव(षं)तनेऽयथ ।
उद्घट्टचच्चत्पुटयो पाञ्चाली सप्तका चतु ॥
दक्षिणे चोत्तरेण स्याच्चैव ।
मुष्कयोगो दक्षिणेऽत्र चतुष्कल . ॥
पुजाविवनो दक्षिणेन ध्रुवामप्तकमित्यथ ।
सूर्यावितो षड्ङ्गेय षड्जग्रामादिसप्तकम् ।

इति । एवमनस्त्यादिचतुष्केण मुक्तधुर(धवो) मक्रमेण यथाक्रम सप्तसु ध्रुवासु गीतादवपरिग्रहस्माऽवतरणप्रयुक्त भवति । अन्यवधानेन भवतीति कीर्तिधराचार्येण लिखितम् । प्रत्याहारोऽपि यस्मिन्साम स्यात् पद्मल इति वक्ष्यते । तत्रैककलादिना गुहनिकने(न ह) ति प्राहण साम । सा नि नि सा मा (सा) नि वि (नि) सा । चैककला चैककला द्विकला चतुष्कलना(त्वान्ना)दि पिण्डीकरणम् । अत्र क्रमेण चित्र वार्तिकदक्षिणाना द्रुतादीना च विधि पञ्चकलाद्यमाने स सा म सा स सा नि सा नि सा सा स नि वि स । एव नित्त । सोरउद्घटे(ट्टे)न चाचपुटो बि(द्वि)कलो ऽथ चतुष्कल । सा सा सा नि स मा नि सा नि स मा नि वि स मा नि वि स स । एतदुक्तम् ।

प्राह्लमेककलं साम द्विकल वह्निच तथा ।
चात्र तु द्विकल शुष्कं पूर्वयो सार्धक परम् ॥

इति कीर्तिधराचार्य । तदेतदपि पुष्कराध्याये (भ० ना० अ० ३४) निरूपयिष्यते । तत्र त्रिपर्वभिधानमेव ज्ञापयति पूर्वरङ्गाध्याय (भ० ना० अ० ५) पुष्कराध्याय (भ० ना० अ० ३४) चोपजीव्य पूर्वरङ्गरचना कार्या । आस्ता तावत् । नन्वारम्भ पूर्वरङ्गाध्याये (भ० ना० अ०) प्रथममुद्दिष्ट । इहत्वाश्रावणेति किमेतदुक्तम् । उत्रैव

[अस्य तु वाद्यम् ।

कार्यं त्रिपर्वर(वि)हितंस्ढहर्नरप्यथ समवरोहे ।
तत्परिमितह्लादयुतं करणैर्विस्तार भूयिष्ठं ॥९३॥
अपवयपुक्तैर्द्विस्त्रिस्तथा निवृत्तैर्द्विरप्यन्ते ।
प्रारम्भोऽप्यवतरणस्त्रिपर्वमुपनेऽस्त कर्तव्यः ॥९४॥]

अथ वजपाणि ।

गुरूणि पञ्च ह्रस्वानि षड्गुरुरथ चतुर्गुण. ।
गुरुणो द्वे लघु स्वेक चत्वार्यथ गुरूणि हि ॥९५॥

चत्वार्यथ लघूनि स्युस्त्रीणि दीर्घाणि चैव हि ।
लघून्यष्टौ च दीर्घं च वज्रपाणौ भवेद्विधि· ॥९६॥

[अत्रोदाहरणम् ।

विहगले भण्टुं जम्बुक जगति य भण्टु विहगले ।
घेन्दु(घ) घेटो घाटो भट्टु(ट्ट)नकिटि इनं (तोनं) दुडु ।
घटुगदुकिटमटनम ।]

---

वैकल्पिकमनयो प्रायस्य समकालत्वात् द्वयो ॥९३-९४॥

अथ प्रकृत वज्रपाणि लक्षयितुमाह । गुरूणि पञ्चेत्यादि । गुरुणो द्वे लघु (घुनी)द्वे इति कचित् पठन्ति । अन्ये लघु त्वेकमिति । प्राच्य तु दुष्ट मन्यन्ते यति-र्णोमावरत्वात् । म त न लघु गुरु नयन गुरु । ननल गुरु ।

वज्रे गीर्वा

स्म दावह (दा·दहो) तु द्रुरितमरम् ॥

तत्र च च च दत्थर्वं चच्चत्पुटो द्विकल (भ० ना० भ० ३१ १४२-१४५) इति वक्ष्यते । हान पञ्चपाणिरेकैकनन्तरय लेरयगिवतला ॥९६॥

अथास्य वीणावाद्यविधिरुच्यते । आविद्धकरणायुक्त इति । आविद्धधातुना करणधातुना सर्वथैव न युतो वज्रपाणौ वाद्यविधि स्यादिति सम्बन्ध । तत्र च द्वे भङ्ग वक्ष्येत । मुख प्रतिमुख चेति वर्णाङ्गान्तत्र । एक विदार्यात्मकम् अपर षट्पद-विदारीकम् । यद्वत्त नम्यावरोहित्वलक्षणोऽत्र प्रवृत्ताख्यो भेदोऽपि वक्ष्यते त वा कुर्यात् । एव नान्तदङ्ग स्यात् । एकैकप्रवृत्तो(त्ता) वेति पाठे व्याख्या । यदा तद्वर्ण-केनोपयोगत्वप इति पाठस्तदा विवक्ष्यमाणैकविधैकप्रवृत्तमध्याद् द्वे गकम ङ्गमस्मिन्

अस्य वाद्यम् ।

आविद्धकरणयुक्तो व्यञ्जः स्यादेकप्रवृत्तो(त्तो) वा ।
मल्पव्यञ्जनधातुर्वाद्यविधिर्वक्त्रपाणौ तु ॥९७॥
द्विकले मन्द्रके (मन्द्रके द्विकले) यत्तु[1] शम्यातालादिपातम्[2] ।
तत्सर्वं वक्त्रपाणौ तु कार्यमष्टकलान्वितम्[3] ॥९८॥
[4]तस्याधस्तात् पुनः कार्यं पञ्चपाणिचतुष्टयम् ।
वक्त्रपाणेरय तालो मुखप्रतिमुखाश्रय ॥९९॥

[इति ।]

---

प्रयोक्तव्यमिति व्याख्या ॥९७॥

अथास्य तालविधिमाह । मन्द्र(न्द्र)क इति । कलाकालपरिच्छेद येन तत्पादनं .. ...शम्यादिना परो द्विकलापरिच्छेद्य गीतस्यैकेन्द्रियग्राह्यतया।वधारयति । चत्वा- र्यावापादिना पर प्रत्यस्य चक्षुर्ग्राह्यत्वात् स्वात्मन्यवधानकमातिशयेनाक्षरत्रयगणनाया स्वादष्टमात्रमुपयोग । तत एव कालत्वेन स्वस्यादे स्वकलोपयोग इति न । नास्तीति कलात्वमपि न तु द्विकलमद्रकगत । किमत्रन्या (वा-न्य)मप्तनासेनेत्याह । अष्टकला- न्वितमिति । अनु पश्चाद्भागमितं प्राप्नम् । तेन द्विकलम द्रकस्या.... त मात्रा गत. । अत्र तालविधि । श ता ता श ता (सम्) । अ्यायाा अन्ते चास्य ताल इति दर्श्यते ॥९८॥

तस्याधस्तादित्यष्टकलस्य मुखस्य पश्चात् पञ्चपाणिचतुष्क प्रतिमुखात्मक कुर्याद् । तस्य पुनरप्यन्ये(न्यस्ये)त्यर्थ । न तदेव गीत चतुरवाक (रावृत्त) गेयमिति कथयति ।

वक्त्रपाणेरय तालो मुखप्रतिमुखाश्रय ।

इति । मुखमष्टकल शिष्ट प्रतिमुखम् । एकदा ह्यत्र ताल केवल परिवर्तमात्रभेद इति भाव । अन्ये त्वष्टकलामात्रा त्रिरावृत्या. ...। अत्र तालस्ततावनद्धयो स्वदावाक्षर- साम्यमिति मन्यन्ते ॥९९॥

अथ सङ्घोटनामाह । गुरुणीत्यादिना । नैधनमिति । गुर्वित्यर्थ । तेन सङ्घोटना त न न य ज न म न ग (स इति) । विधिभावात्स्(वात्) द्विधा । वे

---

१ NS यत्र ।
२ NS योजितम् ।
३ KSS, मुखे ह्यष्टौ कला स्मृता । NS कार्यमष्टकले मुखे ।
४ अस्य स्थाने काशीसीरिजपुस्तके "शम्यातालाः" वित्यादि श्लोको दृश्यते । अनन्तर सार्धत्रयपद्यमधिक च ।

अथ सङ्घोटना ।

गुरुणी लघून्यथाष्टौ[1] दीर्घं द्विगुणं तथा च कर्तव्यम् ।
लघदीर्घे लघु च पुनश्चतुर्गुणं सम्प्रकर्तव्यम् ॥१००॥

पुनरष्टौ [3]ह्रस्वानि स्युरिह तथा नैधनं च कर्तव्यम् ।
[2][सङ्घोटनवस्तुविधौ ह्रस्वगुरुविधि समुद्दिष्टः ॥१०१॥

सङ्घोटनाया उदाहरणं प्रकल्प्य कृतम् ।
दिङ्गले जगति य वलति कलेचालिच.तिभ्र लघु घभ्रल पशुपतिधा ।]

[4]सस्या वाद्यविधि ।

[5]अधिदण्ड हस्ताभ्यां वीणां विनिगृह्य दक्षिणाङ्गुल्या ।
अङ्गुष्ठाभ्यां च तथा कार्यं सङ्घोटनावाद्यम् ॥१०२॥

सङ्घोटयेत् स्वरं वादिना तु सवादिना तथाधिवलम् ।
समवायिभिश्च शेषैरनुवादिभिरल्पकैश्चार्षं ॥१०३॥

---

द... . । यदि वा मतान्तरे प्रस्तार मङ्घोटना म(त) ॥१०० १०१॥

अथ वीणावाद्यविधि । अधिदण्डमिति । वीणादण्डेनह स त्री । अधि समीपे । यथा बिन्दुर्वाग्निते तथाऽऽपीड्य दक्षिणतर्जन्याऽङ्गुष्ठाभ्याम् । वादिना सवादिन (ना) तेन च सहाधिवल वादिनोऽस्वर च घोटयेत् चद्याभेप्रये (बिन्दु मेलयेत) । अनुवादिस्वरास्तत्र मेलनार्था समवायिना गुणभावेन निभाममाना प्रयोज्य । एतत्स्वयाऽपैन्या ये वादि वादिनस्तेऽल्पका मन्द्रगानादितरस्वरापेक्षयाऽल्पा इव नातिपुनरुक्ता । सम्मेलनात् मध्ये प्रयोक्तव्या ॥१०२ १०३॥

केन धातुभेदेनेत्याह । विस्तारचित्रकरणैरिति विस्तारधातुजा ये विचित्रा यथा तुम्बन्धामित्रलया करणा(णा)भेदास्तै । द्विस्त्रिनिर्वर्तितैश्चाभ्यस्तै । त्रिरावृत्या(त्य)भ्य पदोऽत्रतानैर्वा प्रधानीकृतो विशेष इत्युक्त प्राक् । उपचययुक्तैरन्यया भेदविस्तारधातुभङ्गैरिति यावत् ।

---

१ KSS तयाष्टौ दीघद्वितय ।
२ KSS ह्रस्वा स्यु ।
३ KSS सघोटन वस्तुविधौ विज्ञेय गुरुनाघत्राविधानम् ।
४ KSS, NS अस्य ।
५ इत पर ग्र यान्तरेषु पाठक्रमो भिद्यते । अत्र गायकवाडसीरिजपुस्तकानुसारेण श्लोकक्रम. । तत्रैव च भिन्नपाठक्रमवानपि षोडशोऽध्याय ।

विस्तारचित्रकरणैर्द्विस्त्रिर्विनिवर्तितैर्द्विरभ्यस्तं ।
उपचययुक्तं क्रमशो वदन्ति सङ्घोटनावाद्यम् ।
तालोऽस्या गदितस्तज्ज्ञैः शीर्षवत् पञ्चपाणिना ॥१०४॥

अथ परिघट्टना ।

दीर्घाण्याद्यावष्टौ लघूनि कुर्यात् पुनर्द्विगुणितानि ।
ह्रस्वान्यपि चत्वारि द्विगुणानि स्युः ततो दीर्घाणि ॥१०५॥

षोडश लघूनि च स्युः सह तिघनेनैव कार्याणि ।
एष परिघट्टनायां गुरुलघुवस्तुक्रमः प्रोक्तः ॥१०६॥

---

अथास्यास्तालविधिमाह । तालोऽस्या गदित इति । शीर्षवदिति सिद्धे पञ्च पाणिग्रहणं शीर्षकं परिवर्तनं न्यावर्तयितुम् । मद्रकरोविन्दकोत्तरेषु हि शीर्षकं लक्ष्यते । तत्रेह विशेषाभिधाने विशेषकवत् सर्वमतिदिश्यते । रोविन्दकशीर्षकमपि विशेषातिप्रवृत्तत्वमिति वदत्ते । पञ्चपाणिनेत्येतावता सिद्धे शीर्षकवदिति वचनं द्विकचतुष्कयोः प्रभिन्नत्वयम् ।

यथाक्षरस्य कलस्य मद्रकस्य तु शीर्षकम् ।
चतुष्कस्य पञ्चपाणिर्द्विकले द्विकलस्ततः ।
चतुष्कलस्तु कलयो मद्रके तु चतुष्कले ॥

(भ ना म २३८ २३६)

इति । वस्यत इति । अन्यथा ऽऽद्यत्यादेवक्कल एव प्रतीयते । तत्र च मे च लय (वा) ल्लयनदेवता इति ध्रुवामाहुस्तेषां द्विकलं । अन्येषां चतुष्कलं इति ॥ ०४॥

परिघट्टनाध्रुवाविभागमाह दीर्घाण्याद्यावष्टावित्यादि । सो म न स सा न स र ला । परिघट्टना यथा ।

सर्वेषां पाशानामेव(वा)घटनमवघटनपरमलहक(ति)रसि ।
परिचितहृदय हत सा)निकृतनिकृ तमु(म)राकृतनुर्गत(ति)
भगवन् ॥१०५-१०६॥

अथात्र वीणावाद्यविधिमाह । वाद्यं वास्यमिति । अस्य त्विति । गुच्छभेदस्येति योज्य । सोद्वहनमिति । आरोहप्रधानम् । ह्रस्वान्यपीत्यादिति । तत्तद्वतिरूपपादद्य न भाति केवलमनाहतं पल्लक्षणमात्रं श्रूयत इति यावत् । तथा चाह । व्यञ्जनधातोरन्वित(धातुसमुच्च)मिति । तस्य च जनिता जातिरित्युक्तम् । नानाप्रकारा ये

[एतस्यामप्युदाहरणं प्रकल्प्य कृतम् ।

दिङ्गले दिङ्गले दिङ्गले दिङ्गले जगति य वलति क ।
तितिझलकुचझलदिगिनिगि गणपति चा ।
चलति क गणपति पशुपतिसुरपति चा ।]
वाद्यं चास्यास्त(स्यां त)ज्ज्ञैः सोद्वहन् हस्तलाघवात् कार्यम् ।
व्यञ्जनधातुसमुत्थ नानाकरणाश्रयोपेतम् ॥१०७॥

---

करणधातोर्भेदा उक्तास्तेषां यदाश्रयणं व्यञ्जनभेदश्चाम्यापादनं एतेनोपेतम् ॥१०७॥

सम्पिष्टकवच्चास्यातालः करणैस्तु धातुसंयुक्तैरिति केचित् पठन्ति । सम्पक्वे-ष्टकवच्चास्यास्ताल इति यावत् । तथा चाह ।

निष्कामप्रवेशितः कृत्वा शम्यास्तिस्रः प्रयोजयेत् ।
तालत्रयं ततश्चैव शम्यातालौ ततः परम् ॥
शम्यातालौ ततः कार्यो सन्निपातोऽन्त्य एव च ।
प्रोवेणके तु सप्ताङ्गे सम्पिष्टकमिद मतम् ॥
द्विः शम्यातालयोगेन द्वादशाङ्गे(ऽपि चेष्यते) ।

(भ ना अ ३१ श्लो २८६-२९१।१)

इति तत्र शीर्षकवदिति प्रकरणाद् द्वादशक मकलम् । एव हि सम्पिष्टकताल इत्या-पद्यते । अन्ये तूभयथेति द्वाविंशतिकलत्व परिपट्टनाया प्राहु । नी स स ता सा सं ता स (१२) नि स स ता ता स सा सा स ता सा सा (ऽऽऽऽऽऽऽऽऽऽऽ) अत्र च पक्षे वरकरणवाचकमित्युक्त पूर्वरङ्गाध्याये (भ ना. अ ५) । सम्पक्वेष्टकस्य लक्षणं वक्ष्यते ।

तालादिरूपप्रभेदोऽयः सम्पक्वेष्टक संज्ञितः ।
गुरुपञ्चाक्षराद्यन्तप्लुतमात्रासमन्वितः ॥

(भा ना अ. ३१ २१)

अन्ये पठन्ति । अन्ते चतुर्मात्राद्यान्विता(तः) इति । ता स ता स ता यदि वा सो स सा सो ता । अन्ये तु द्वादशकल चासाविति । विकलीकृत्य निष्क्रामप्रवेशयोर्योगेनात्र सम्पक्वेष्टकश्च योज्यते । ता प्र सं प्र ता प्र स ता प्र सा प्र नि स । वरकरण चात्र पक्षे न वाचकम् । यथाक्षरं विकलं मिश्रीकृत्य सम्पक्वेषकमष्टेच्छन्ति । ते चाष्टादश-कलत्वमासामाहु । एव ह्यनुसृत भवतीति । गुरुलघुयोगादेव विहिताः कार्यो बुर्य-विधेय(नित्य)मिति च ग्रन्थो वाचको भवति । गुरुशब्देन यथाक्षरं लघुशब्देन विकल-

सम्पिष्टकवच्चास्यास्ताल करणैस्तु धातुसंयुक्तैः ।
गुरुलघुयोगादेव विहितः कार्यो बुधैर्नित्यम् ॥१०८॥

मार्गासारितवाद्य विस्तारविद्धकरणसंयुक्तम् ।
सकलं सतलं करणैस्त्र्य गुरुलघसञ्चयश्चायम् ॥१०९॥

चत्वारि गुरूणि स्युर्लघूनि चत्वारि च द्विगुणितानि ।
गुरुणी लघून्ययान्ते गुरुणी चेत्येवं त्रिधा योज्यम् ॥

[अथवा ।
चत्वारि तु गुरूणि स्युर्ह्रस्वान्यष्टौ भवन्ति हि ।
गुरुणी नव ह्रस्वानि दीर्घमन्त्यमथापि च ॥

---

द्विकलो योगशब्देन प्लुत सङ्गृहीत । सम्पक्वेष्टकपक्षे तु गुरुलघुयोगात् ध्रुवागत-वीणाप्रतिगतो वा मन्तव्य ॥१०८॥

अथ मार्गासारित वक्तव्यम् । तस्य च चित्रपूर्वरङ्गपक्षे तात्ववाद्यप्रयोगेऽपि सर्वत्र पक्षे तन्त्रीवाद्यप्राधान्य

तन्त्रीभाण्डसमायोगात् मार्गासारितमिष्यते ।

(भ ना अ ५-२०)

इत्यत्र प्रतिपादितम् । तदेव यस्तु प्रथममस्य वीणावाद्यविधिमपि विधत्ते । मार्गा-सारितवाद्यमिति । व्यञ्जनधातुवर्जं धातुत्रयमप्यत्र प्रयोज्यम् । व्यञ्जनधातुभेदो तु तालकलो प्रयोज्याविन्याह । सकलं सतलं करणैरिति । त्रयतैर्धातुभेदैरित्यथ । अन्ये तु करणधातुभेदा एव कलतन्त्राख्या मिश्रीणीया इत्याहु । वीणावाद्यविधिमभिधाय तन्त्र प्रत्याहारभेदोपयोगि गुरुलघुवैचित्र्यसम्पादक ध्रुवाभिधेयायोऽत्र मते । अथ गुरु-सञ्चयश्चायमिति । वक्ष्यति इति शेष ॥१०९॥

तस्मात् । चत्वारि गुरूणि स्युरित्यादि । म्भो नो तो सलग प्रशेषमार्गं । द्विधा यदि वा ऽऽऽ । एतच्च त्रिधा योज्यमेकतवन्च पूटे द्वौ पञ्चपाणी । यस्यैर्या(यो)य स्तुतिपर इति हि र(ह्र)कृतार्थ विरचयसि शिवपुरान् । प्रशान्मात त्रिभुवनमयव रहेतुत्रिपुरसदन(वि)दलना ।

स्त(स्त)पाता(मारते) यि(द)लयतु (हि) शिवमार्ग(र्गे)रणघटितनिजमनस ॥
अस्य तालविधिमाह । वालासारितवदिति । वनिष्ठासारितस्य तालो वक्ष्यते ।
षट्पितापुत्रपरिवर्त शम्यादि षो च पञ्चपाणिकृतो । अन्ते च सन्निपात ॥

(भ ना अ ३१ ६५)

अत्रोदाहरणम् ।

दिङ्गले भण्टुं जगति य ।
पलितक भण्टुं तिति ।
भलकुच भलतितिचा(तति चा) ।]
बालासारितवच्चैव तालोऽस्य परिकीर्तितः ॥११०॥

---

इति सप्तदशकल सोऽत्रापि मन्तव्य । स ता स सा ता स ता स मा स त सा स ता स ता सा: ॥११०॥

अथ लीलाकृतमुद्दिष्ट तल्लक्षण वक्तव्यम् । ननु पूर्वरङ्गाध्याये (भ ना० अ० ५)-ऽस्य नामापि नोक्तम् । तत्र वैकल्पिको मार्गासारितलीलाकृतयो प्रयोग आसारितमध्य एव चास्य सङ्ग्रह इति तस्य लक्षणमाह । श्रवणमधुराणि लीलाकृतानीति अभिसृत परिसृत चासारितभेद एव । आसारिततालयोगेनैव गीयमान वार्तिकमार्गगतत्वाद् द्विगुणाक्षर षड्जग्रामगीतजात्यष्टकगीयमानमभिसृतम् । तदेव ग्रामान्तरे परिसृतम् । अन्ये त्वभिसृतमपदान्तक मात्रयाशादितालरचित सप्ताङ्ग इत्यथम् । परिसृत तु (द्वि)युजमन्ये(न्य) प्रदानादिनवाङ्गमित्याहु । अन्तरशब्देनात्र लयान्तरम् । तच्च कनिष्ठासारितापेक्षया द्विगुणपदलयमार्गवाद्याक्षरम् । तदीयवाक्त्या तालादि । वक्तमेवोपक्रमं तल्लयद्वैगुण्येन मध्ये मध्ये गीयमान भवति । तैरभिसृतान्तरैर्वामासारितैर्यानि वाद्यानि कृतानि । लीलया सौकुमार्यधुर्यरूपया कृतानीति लीलाकृतानि । तथा तैरपसारितै कृतानि प्रयुक्तानि गीयमानपदानि नियमस्य वा तालात्मकानि वस्तुनि ।

चत्वारस्तु गणा युग्मे ओजे षट् परिकीर्तिताः ।
द्वितीये पञ्चपाणौ तु सार्धा षट् परिकीर्तिता. ॥

(भ० ना० अ० ३१-१०६)

इति । तथा ।

पञ्चपुटपरिवर्त. शम्यादि द्वौ च पञ्चपाणिकृतौ ।
अन्ते च सन्निपातः ॥ (भ० ना० अ० ३१-६५)

इत्येवरूपाणि तै कृतानि लीलाकृतानीति त्रीण्येतानि भवन्ति । इह चोद्देश एतानि पृथग् गीतानि । उद्दिष्ट तत् कथमेतदित्याशङ्क्याह । तान्यप्यर्थवशादिहेति । ध्रुवकेऽपि प्रा(प्र)यो(ग)विधौ अपक्रान्ते अर्थमर्थ्यमवलम्ब्य तान्यपि प्रयोज्यानि । अपिशब्दाज्ज्येष्ठाद्यपि । तेन द्विरेवा प्रयोग इत्युक्त भवति । एवमासारितविधाविरयवगन्तव्यम् । तानि यद्यपि अर्थ......व(अर्पयन्ति) पदानि तथापि बहुप्रयोगनिर्वहण-

अवगाढमधुराणि लीलाकृतान्यभिसृतपरिसृतान्तरकृतानि ।
तान्यत्यर्थवशादिह कर्तव्यानि प्रयोगविधौ ॥१११॥

अथासारितानि ज्येष्ठमध्यकनिष्ठानि तालप्रमाणनिर्दिष्टानि तानि ताल-
विधाने वक्ष्यामः ।

एवमेतद् स्वरगतं ज्ञेयं वीणाशरीरजम् ।
विपञ्चीवाद्ययुक्तानि करणानि निबोधत ॥११२॥

---

कर्तव्यतासामर्थ्यात्कर्तव्यासारितविधावप्ययमेव मार्गः । तत्र सतालानि चित्रवृत्तौ कृता-
नीत्युद्देशान्तर(रे) निरूपितम् ।

तत्र केचिद्वीणावाद्यप्रयोगस्तालशून्यो ध्रुवाप्रयोगस्तु सतालो वीणावाद्ये शम्या-
त्मकतालयोगेऽपि शम्याताला नि विच्ययोगादिति मन्यते । अन्ये तु विशाखिलाचार्य
मतानुसारतः सर्वथैव तालम(लय)न्यत्र वीणावाद्यमाहुः । अपरे तु ध्रुवागानमेवो-
भयथा तालयोगाभ्यामनेच्छन्ति ॥१११॥

अथासारितानां तन्त्रयुक्त्या ता(ल)गताबेक्षणया लक्षणया लक्षणमाहुः । ज्येष्ठ-
मध्यकनिष्ठानि तालविधाने इति । वर्धमानात् त्रिविधैककलादियोगादासारितानि ।
नात्र लयान्तरस्य नामापि गृहीतम् । वर्धमानान्तर्भावि हि तदिति केचित् ।

उपाध्यायास्त्वाहुः । बहिर्भावेऽपि तात्कालिकापेक्ष(क्षा)भावे हि वर्धमानान्त-
र्गतरूपप्रतिज्ञा स्वतन्त्रेऽपि भवति । बहिर्गीतेऽप्यस्ति लयान्तरस्य लीलाकृत एवानु-
प्रवेशात् त्रीण्येवात्र अन्तर्भाव्यानि न तु चत्वारि । यथा कीर्तिधरोऽभ्यधायद(धाद्) ।
प्रत्याहारादीनि यानि पञ्चमेऽध्यायेऽन्तर्यवनिकान्तानीत्युक्तानि तत्प्रत्याहारावतरणयोः
पुष्कराध्याये (अ ना अ ३४) लक्षणं भवति । शेषाणां त्विह लक्षणं कृतम् ।
एवमनन्तरं तु यानि बहिर्यवनिकाङ्गानि तेषामस्माभिः पञ्चमेऽध्याये यथास्वागमं
स्वरूपं प्रदर्शितम् । यत् कीर्तिधरेण नन्दिकेश्वरमतानुगमित्वेन दर्शितं तदस्माभिः
साक्षान्न दृष्टम् । तत्प्रत्ययात्तु लिख्यते सङ्क्षेपतः ।

तत्र मार्गासारितप्रयोगे नर्तकीचतुष्कं पटान्तरहितं पुष्पपिण्ड्या पुष्पाञ्जलि-
मादाय प्रविश्याष्टाभिः षोडशभिर्द्वादशभिर्वा(ऽङ्गहारैः) प्रतिक्षेपो(प)गीयमानस्थित
लयेन तदर्थं भावयेत् । अवकृष्टे तु पदे स्थितलयेन परिवर्त्यपूर्वं रङ्गमध्ये पुष्पं त्यक्त्वा
मध्यगतलय परिवर्तद्वयमङ्गहारं कुर्यात् ।

तत्र प्रथम पञ्चकलमुपोहन पुष्पपिण्ड्या सूचया भावयेत् । एतदेव समङ्गहारं कुर्यात् । तत प्रथमवस्त्वभिनयेत् । तत सर्वा मिलित्वा तदेव देवताराधक पिण्डीबन्ध कुर्यु । तच्चोपोहनमङ्गहारं नृत्येयु । ततो द्वितीया प्राग्वदुपोहन प्रयुज्य द्वितीयवस्तुनश्चच्चत्पुटात्मकेनार्थमुपनयेत् । तदेव चास्य प्रतिक्षेपेना(णा)ङ्गहार पर्यस्तकास्य कुर्यात् । तत सर्वा शृङ्खला कृत्वा पुनरुपोहन कुर्यु । तत आद्या प्रतिक्षेप कृत्वा प्रथमवस्त्वर्थं पुनरभिनयेत् । द्वितीया चाङ्गहार कुर्यात् । तत प्रथमपिण्डस्योपोहन कुर्यु । ततस्तृतीया प्रविश्योपहार कृत्वा तृतीयवस्तुन पञ्चपाणैरर्थमभिनयेत् । आद्येऽङ्गहारो कुर्याताम् । ततो लतापिण्डीस्थमुपोहन कुर्यु । ततो द्वितीया द्वितीयस्यार्थमभिनयेत् । ततोऽङ्गहारान् कृत्वा शृङ्खलया सोपोहन कुर्यु । प्रथम(त) आद्यस्याभिनय कृत्वाऽऽद्या पिण्डीबन्ध कुर्यात् । तत सर्वा भार्य उपोहन कुर्यु । पुनश्चतुर्थी यावत्तुर्यवस्तुन पञ्चपाणेरर्थमभिनयेत् । तत सर्वा भेद्यकस्यास्तृतीयोपोहन रचयेयु । पुनस्तृतीया तदेव भावयेत् । ततो लतास्था द्वितीयोपोहन सूचयेयु । पुनर्द्वितीया द्वितीयस्यार्थमभिनयेत् । अन्याङ्गहार कृत्वा शृङ्खलयोपोहन कुर्यात् । आद्या प्रतिज्ञेयार्थमभिनयेत् । अन्या अङ्गहार कृत्वा विदध्युर्यावच्चतुर्थवस्त्वन्तरम् । तृतीयद्वितीयप्रथमवस्तूनि केवलैरेवाङ्गहारै कुर्यु । तदेव हि पुनर्वस्त्वन्याश्रयेण । तेन प्रतिक्षेपान्ते ताद्या( ) पिण्डीबन्ध कृत्वा रङ्गपीठ परीत्य पुष्पपिण्ड्या पुष्पाणि कृत्वाऽपसरेयु । एवमन्याश्चतस्रो द्वितीयमासारित प्रयुञ्जीरन् । एव चतस्रश्चतस्रो यावच्चतस्र । उक्त हि । एव पदे पदे कार्यो विधिरिति । पिण्डीबन्धकाले तु द्वादशपुष्पमालाभिर्विकिरेयु । तत्र षोडश सम्भूय शेषमन्य वा पिण्डीबन्ध कृत्वा पुष्पवीथ्या पुष्प प्रतिक्षिप्य निष्क्रामयें(मे)यु । अभावे त्वासादितचतुष्क ता एव चतस्रस्तत्र प्रतिक्षेपार्थवाद्य पदैर्दर्शितमुपोहन चच्चपुटपञ्चपाणिद्वयसन्निपाताश्चेति तालाध्याये (भ ना अ ३१) पदै सह भविष्यति । एवमासारितक्रिया ततो वर्धमान प्रयुञ्जीरन् । एकप्रघट्टकेन चतुर्भिर्नर्यं परिवर्त प्रयुज्य पटेऽपकर्षिते पुष्पवीथ्या चतसृणा नर्तकीना प्रवेश । ततो ब्राह्मीपरिवर्तेन पुष्पाञ्जलि क्षिपेयु । तत एका ब्राह्मीमभिनयेत् । तत सर्वा शिवपिण्ड्या आसीरन् । तद्यथा । एकस्या आलीढमर्धवन्मण्डलिवत् खटकामुखेन तत्पार्श्वगतयोर्वा षोडशकला( ) सम्भाविता( ) गीतको ... ...शम्यातालंश्चतु षट्था करण तुर्या चाहु ।. ...समपदा तिष्ठेत् । ततोऽन्यस्था एव द्वितीयखण्डिकाङ्गेन सूचयेयु । ततस्तुर्या चतुर्थमभिनयेत् । तिस्रो नर्तस्य सशैलपिण्डया तृतीयार्थं भावयेयु । तत सर्वास्तृतीयामङ्गहारं प्रयुज्य तया द्वितीयार्थं भावयित्वा नृत्तेन प्रदर्श्य शृङ्खलया प्रथमा (मा) सूचयित्वाऽङ्गहारैस्तदर्थं प्रयुज्य शिवपिण्डी कृत्वा परिक्रम्य पुन प्राग्वदासारितानि प्रयुञ्जीरन् । तत पादान्तर्वर्ध-

मानप्रतिक्षेपमत पुष्पपिण्ड्या प्रतिक्षेपस्य द्वितीयगान प्रयुज्य पुष्पाणि क्षिप्त्वा तृतीये तुरीये तद्गानेनान्त्येनोदन्त्यपुष्पपू . ...स्य( ) कृत्वा पुष्पाणि क्षिपेयु । तत एकान्तमुपोहन नृत्तेनोदन्त्यविधानार्थमभिनयेत् । तत पिण्डीबन्धेन सङ्गतोपोहनं सर्वा । ततो द्वितीया तदेव रसेन स्याद् सङ्गतामभिनयेत् । तत शृङ्खलाया मुनन्दोपोहन कुर्यात् । ततस्तृतीया तन्नृत्तं प्रयुज्य मुनन्दार्थमभिनयेत् । ततो लताबन्धेन मुमुख्योपोहन कुर्यु । तुर्या नृत्तेन स्वसुमुखयर्थमभिनयेत् । तत. सर्वा पिण्डीबन्ध कृत्वा नृत्तेन सर्वा एव पिण्डिकाबन्ध कृत्वा भेदकेन तृतीयोपोहनं कृत्वा तृतीया नृत्तेनायोज्य लताया द्वितीयोपोहन प्रयुज्या द्वितीया नर्तिका शृङ्खलयान्त्योपोहन धूयित्वाऽऽद्यार्थमङ्गहारं प्रयुज्येट्देवत्तापिण्डिकां कृत्वा परिक्रम्य रङ्गे पुष्पपिण्ड्या पुष्पाणि क्षिप्त्वा पटान्तरिता निष्क्रामेयु । इति वर्धमानप्रयोगो यद्योक्तमेकादिप्रयम..१...सम्पिकाताल चाऽदूरत एव तालाध्याये (अ ना अ ३१) भविष्यतीति न लिखितम् ।

तथो गीतकविधि. । तत्र च ध्रुवे प्रावेशिकीमादिका च प्रयुज्याङ्गहारविधिः । ततो वाद्यचतुरस्रकम् । तत पुष्पपिण्ड्या ध्रुवकस्यैक गीतम् । द्वितीयतृतीययोरङ्गहारक्रम । ततो वस्तुप्रयोग । चीर्णकान्ते वन्दनेन नैष्क्रामिकीवस्तुनिबन्धेषु तद्वदङ्गहारेषु वा गीतेषु वा......चोदा......चाङ्क्तिा प्रत्येक चास्या प्रावेशिकी प्राक्षिप्ता ध्रुवा नैष्क्रामिकीति चतुर्धा विधि । तत्र नन्दिभद्रा चौक्षषाडवेन । पिण्डीकृता चौक्षपञ्चमेन । भुसुण्डिनी चोक्षकौशिकेन । कपिलोद्भूवा चौक्षपञ्चमेन । वाक्षी चौक्षकैशिकमध्यमेन । पौष्पदन्ती चौक्षसाधारणेन । सर्वासामुपरञ्जनं भिन्नषड्जेण । षड्भिर्नर्तकीभिरय प्रयोग कार्य । तत्रार्या......वृत्तपाठस्यान्तराले शुष्कवृत्त विद्युद्भ्रान्ताऽतिक्रान्तनिशुम्भितादिकरणं कुर्यात् । तत परिवर्तनी प्रावेशिका प्राक्षिप्तिका ध्रुवा अन्तरगीतमिति विधि । दिग्देवतानामभिध्यायि च शार्दूलविक्रीडितादिवृत्तयुद्धगीतयादिगानम् । एव नान्द्यामपि विभक्ते प्रावेशिक्यादि । एव रङ्गद्वयेऽपि वैष्णवत्वावलक्षोद्वारादित्योमेन तत्र च क्रमेण नर्तकीना प्रवेशेन सिद्धि । ईर्ष्याविरहशोकविस्मयादिविचित्र काव्य गीत च नृत्तताल......चामपि प्रावेशिक्यादिविधि । तत्र . व्यसनेर्ष्याकोपादिकाव्यार्थगान चौक्षसाधारणेन रञ्जन हिन्दोलकेन महाचार्यामुद्रनर्कलामोहरण.. _ विजनितरोषसत्वप्रकृतिरर्थ रावणे धावितरूप. । प्रावेशिक्यादि तु प्राग्वत्र । शुद्धा च गीतिरुपरञ्जना पाटासरात्म( तिम )का यावापादयपचितकालस्य मानेन चतुष्पदादिगीतक्रमात्मकेनोपरञ्जनम् । तत्र च

रूपं कृतं प्रतिकृतं प्रतिभेदो रूपशेषमोघश्च ।
षष्ठो वै प्रतिशुष्का त्वेवं ज्ञेयं करणजातम् ॥११३॥

---

प्रावेशिक्यादिविधिः प्रागवदेवत्येव(व) नन्दिकेश्वरमतानुसारेणाय चित्रपूर्वरङ्गविधि-रिति न बद्धः ।

अथ प्रकृतमनुसराम । इह वीणावाद्यविधिः प्रस्तुतः । तत्प्रसङ्गेन पूर्व-रङ्गाङ्गानि तत्प्रधानानि दर्शितानि । तत्रेह मुख्यैव वीणा । अङ्गास्तद्भेदास्तु प्रत्यङ्गानि । अन्यत्र च ।

वक्रा कूर्मा ह्यलावुश्च वीणाद्या त्रिविधा मति(ता) ।
विपञ्ची वल्लकी मत्तकोकिलसंज्ञा सरस्वती ॥
गान्धर्वी ब्राह्मिका सप्त वक्रयास्तन्त्र (न्त्या) कला नव ।
एकद्वित्रिचतुरिति चतुर्थी दश वा कला ॥
सवादिनी च तन्त्री च किन्नरी परिवादिनी ।
वैशेषिका पञ्चकलाश्चतुरस्त्र(स्त्र्य)श्रमङ्गले ॥
पिङ्गलो नकुलश्चेति द्विधाऽलावू प्रकीर्तिता ।
एकया पिङ्गलस्तन्त्र्या परो द्वाभ्यां सुमङ्गला ॥
चित्तन्त्रीका विशोकेति चेश्वरी परिवादिनी ।
सदाशिवागमाज्ज्ञेया यथागमनिदर्शनम् ॥
शततन्त्री विशोकाख्या सप्ततन्त्रीश्वरा तथा ।

इति तत्र मत्तकोकिला प्रधानभूता । एकविंशतितन्त्रीकत्वेनान्यूनाधिक त्रिस्थानगस्वर-सारणाजातिगीतिवीणाशरीरमुच्यते । तद्गतश्च धातुप्रयोग उक्तः । तदुपजीवकास्ते-मापरा भवन्तीति तदेतद् दर्शयति ।

एवमेतद् स्वरगतं ज्ञेयं वीणाशरीरग(ज)म् ।
विपञ्चीवाद्ययुक्तानि करणानि निबोधत ॥

इति । विपञ्चीति प्रत्यङ्गोपलक्षणम् । तेन विपञ्च्यां वाद्यन्ते यान्युक्तरिभितादि-करणमुख्यवीणावाद्योपरञ्जकानि वादनवैचित्र्याणि तानि बुध( ध्य )ध्वमिति सम्बन्धः ॥११२॥

नान्युद्दिशति । रूपमित्यादि ॥११३॥

वीणावाद्यद्विगुणं गुरुलाघववादनं भवेद्रूपम् ।
रूपं प्रतिभेदकृतं प्रतिकृतमित्युच्यते वाद्यम् ॥११४॥

युगपत्कृतेऽन्यकरणं प्रतिभेदो दीर्घलाघवकृतः स्यात् ।
कृतभेदस्या तन्त्र्या प्रतिशुष्का नाम विज्ञेया ॥११५॥

वीणावाद्यविरामेऽप्यविरतकरणं तु रूपशेषं स्यात् ।
याविद्धकरणयुक्तो ह्युपर्युपरिपाणिकस्त्वोघः ॥११६॥

---

तारकमेण लक्षणमिति वीणावाद्यद्विगुण( ण )मित्यादिना यदैकेन वीणाय गुरु प्रयुज्यते तदैव पञ्च(वैपञ्चि)केन (विपञ्च्या) लघुद्वय यदा लघुस्तदा द्रुतद्वयमित्येव समवायवैचित्र्येण प्रायो रूपमुच्यते । तद्देव यनु पश्चाद् यद्यु(द्रु)च्यते तत्समकाल तदा(था) कृते सति तत्प्रतिबिम्बतया प्रतिकृतमिति ॥११४॥

युगपत्कृत इति । प्रतिकृतसमकाल प्रयोग एवान्यस्वेन प्रकारः प्रतिभेद । स च गुरुलघुकृतो न तु लेख्यादिस्वरप्रयोगप्रतिभेदमहत इति तेन गानवैचित्री । यदा लघुद्वय प्रयुङ्क्ते तदा स गुरु । यदा वैणिको गुरुद्वय तदा ▯ प्लुतलघुरूप इत्याविरूपे तु भञ्जनमुक्तम् । इयति विपर्यय इति विशेष । तदेव पुनर्यच्चिन्त्य वैपञ्चिको यदैकस्यामेव तन्त्र्यामशब्दवादिन्या सालपतादि करोति तदा (प्रतिशुष्का ।) प्रतिशुष्कपदस्यैवाऽवस्थे स्वग्ये ॥११५॥

यदा तु वैणिको क्षणे विदारीवशाच्छेद करोति तदा छिद्रे वैपञ्चिको यदा तद्रूपशेषम् । विभक्तितन( य ) एवमपि वैचित्रिकप्रयोगे हस्तधातुर्यादो(यतोऽतिद्रुतो वैपञ्चिकप्रयोग ▯ ओघः । एव विपञ्चीध्रुवास्वपि वक्तव्यम् । नियमोऽदृष्टविषय एव । गान्धर्वे विपञ्च्येवोपरञ्जिका ध्रुवागाने स्वनियम- ॥११६॥

विपञ्चीवाद्यस्य प्राधान्यमाह । कार्यं ध्रुवाविधाने प्रायेण हि कोणवादनमिति । केचिदाहुः । पूर्वरङ्गगतोत्थापनाद्ध्रुवाविधानुत्थानस्यातोद्यरञ्जनार्थमिति वा । प्रवृत्तिविभागार्थमाह । तन्त्र्योजस्क(तच्चौघतुल्यक)रण मिति । वाद्यवृत्तिविभागार्थमि(म ना ५-१६)त्यादिना कथितस्य प्रयोजनस्य द्वयोर्वीणयोरुत्तराधरहितत्या सर्वा एव वीणा कोणवाद्येन वादयेदिति तदिद न विद्म कोणवाद्ये का स्यानप्राप्ति । कोणवाद्य (द्या) विपञ्ची स्यादिति च वक्ष्यमाणत्वात् कथ सर्वासा कोणवाद्यतेति । तस्मादेवमेता इह ध्रुवाविधाने वाद्योपरञ्जनध्रुवागानमित्युच्यते(न्ते) । तत्राल्पेन बाहुल्येन वा कोणवादन कर्तव्यम् । प्रायोग्रहणाद् द्व्यङ्गुलिवादनमुभय-

कार्यं ध्रुवाविधाने प्रायेण हि कोणवादनं तज्ज्ञैः ।
स्थानप्राप्त्यर्थंचेद्यत्र भवेदय नियमः ॥११७॥

[तच्चौघतत्त्वकरणं वाद्यं कार्यं विपञ्च्यास्तु ।]
सप्ततन्त्री भवेच्चित्रा विपञ्ची तु भवेन्नव ।
कोणवाद्या विपञ्ची स्याच्चित्रा चाङ्गुलिवादनात्(ना) ॥११८॥

ततवाद्यविधानमिदं सर्वं प्रोक्तं समासयोगेन ।
वक्ष्याम्यतश्च भूयः सुषिरातोद्यप्रयोगं तु ॥११९॥
इति भारतीये नाट्यशास्त्रे ततातोद्यविधानं नामाध्याय एकोनत्रिंशत्तमः ।

---

वादनं च । वाद्ये हि त्रिप्रकारके सव्याङ्गुष्ठकनीयस्यो स्थाने वादकं भवेदिति कोणोऽत्र प्रहारम(रोऽ)ङ्गुल्यङ्गुष्ठप्रहरणतया चतुष्प्रहरणं कोणाङ्गुलिप्रहरणं ध्रुवासु वाद्यं कुर्यात् । यदा तु करणं तु लीनं भवति तत्र लीनानामभ्युद्धारणं कोणवादनेन सम्यक् स्थानप्राप्तिः । मर्दनमोदनधाग्रणकम्पनावर्तनादि कोणस्य भवतीति नियतिः । तथाभूतस्थानप्राप्त्यर्थं वीणावाद्यं तदा यथोचितमेकतन्त्र्यादिप्राप्तं तत्रायमेव नियमः कोणैकवाद्यप्रयोग इति ॥११७॥

अथ त्रिप्रकारवाद्यविषयमाह ।

सप्ततन्त्री भवेच्चित्रा विपञ्ची तु भवेन् नव ।
कोणवाद्या विपञ्ची स्याच्चित्रा चाङ्गुलिवादना ॥

इति । चकारेणोभयवादनमुभयोरुक्तम् । अन्ये तु चकार ए(मे)वार्थं वर्णयन्त कोणं विपञ्च्यामाङ्गुली च चित्रायां नियमयन्ति । अन्ये तु कोणाङ्गुलिवाद्या विपञ्ची अङ्गुलीमात्रवाद्या चित्रेत्याहुः ॥११८॥

एतदुपसंहरति । ततवाद्येति । सर्वमिति । गान्धर्वं गानविषयमङ्गप्रत्यङ्गगतं चेति यावत् । भाविनोऽध्यायस्यार्थमासूत्रयति । वक्ष्याम्यतश्चेति । भूयश्शब्दस्याय-माशयः शारीरेणैव वैणविधौ भणिते तु चिरप्रयोगो वैतावदुक्त एव तत्राभ्यधिकं यद्वक्ष्यते पूर्णीकरणायेति शिवम् ॥११९॥

परमेश्वरचन्द्रचूडनिरन्तस्तुतचिन्तापरिलब्धविविधप्रकारः ।
स्फुटमभिनवगुप्तनामधेयस्ततवाद्ये कृतवान् विचारमित्यम् ।
इति महामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेदविवृतावभिनवभारत्यां ततातोद्यविधानमेकोनत्रिंशोऽध्याय. ॥
एकोनत्रिंशोऽध्यायः ।

[1]भिन्नपाठक्रम. ।

षड्जोदीच्यवती चैव षड्जमध्या तथैव च ।
षड्जमध्यमबाहुल्यात् कार्य(र्ये) शृङ्गारहास्ययोः ॥१॥

आर्षभी चैव षाड्जी च षड्जर्षभस्वरग्रहात् ।
वीरेऽद्भुते च रौद्रे च रसे कार्ये प्रयोक्तृभिः ॥२॥

निषादवत्यद्भुते च निषादांशपरिग्रहात् ।
गान्धारांशोपपत्त्या च करुणे षड्जकैशिकी ॥३॥

धैवती धैवतांशा च बीभत्से सभयानके ।
ध्रुवाविधाने कर्तव्य जातिगान प्रयत्नतः ॥४॥

रसं कार्यमवस्थां च ज्ञात्वा योज्या प्रयोक्तृभिः ।
षड्जग्रामाश्रिता ह्येता विज्ञेया जातयो बुधै ॥५॥

अत. पर प्रवक्ष्यामि मध्यग्रामसमाश्रया. ।
गान्धारीरक्तगान्धार्यौ गान्धारांशोपपत्तित. ।
करुणे तु रसे कार्ये जातिगाने प्रयोक्तभि ॥६॥

मध्यमा पञ्चमी चैव नन्दयन्ती तथैव च ।
मध्यपञ्चमबाहुल्यात् कार्या. शृङ्गारहास्ययो. ॥७॥

मध्यमोदीच्यवा चैव गान्धारोदीच्यवा तथा ।
षड्जर्षभांशनिष्पत्त्या कर्तव्या (व्ये) वीररौद्रयोः ॥८॥

कार्मारवी तथा चान्ध्री निषादांशोपपत्तितः ।
अद्भुते तु रसे कार्ये जातिगाने प्रयोक्तृभिः ॥९॥

कौशिकी धैवतांशत्वात् तथा गान्धारपञ्चमी ।
प्रयोक्तव्ये बुधैः सम्यग् बीभत्से सभयानके ॥१०॥

एकैव षड्जमध्यात्र ज्ञेया सर्वरसाश्रया जाति. ।
तस्या ह्यंशा. सर्वे रसास्तु विहिता प्रयोगविधौ ॥११॥

१. मतङ्गादिभिरुदाहृतोऽप्य पाठक्रम अभिनवभारत्या न स्वीकृत ।

यो यदा बलवान् यस्मिन् स्वरो जातिसमाश्रयात् ।
तत्प्रयुक्ते रसे गानं कार्यं गेयप्रयोक्तृभिः ॥१२॥

मध्यपञ्चमभूयिष्ठं हास्यशृङ्गारयोर्भवेत् ।
षड्जर्षभप्रायकृतं वीररौद्राद्भुतेषु च ॥१३॥

गान्धारसप्तमप्रायं करुणे गानमिष्यते ।
तथा धैवतभूयिष्ठं बीभत्से सभयानके ॥१४॥

सर्वेष्वंशेषु रसा नियतविधानेन सम्प्रयोक्तव्याः ।
काकल्यन्तरविहिता विशेषयुक्तास्तु बलवन्तः ॥१५॥

एवमेता बुधैर्ज्ञेया जातयो रससंश्रयाः ।
वाद्यप्रयोगविहितान् स्वरांश्चापि निबोधत ॥१६॥

हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ ।
षड्जर्षभौ च कर्तव्यौ वीररौद्राद्भुतेष्वथ ॥१७॥
गान्धारश्च निषादश्च कर्तव्यौ करुणे रसे ।
धैवतश्च प्रयोगज्ञैर्बीभत्से सभयानके ॥१८॥

अत ऊर्ध्वं प्रवक्ष्यामि वर्णानामथ लक्षणम् ।
आरोही चावरोही च स्थायिसञ्चारिणौ तथा ।
वर्णाश्चत्वार एवैते ह्यलङ्कारास्तदाश्रयाः ॥१९॥

आरोहन्ति स्वरा यत्र आरोहीति स भण्यते ।
यत्र चैवावरोहन्ति सोऽवरोहीति संज्ञितः ॥२०॥

स्थिराः स्वराः समा यत्र स्थायी वर्णः स संज्ञितः ।
सञ्चरन्ति स्वरा यत्र स सञ्चारीति संज्ञितः ॥२१॥

शारीरस्वरसम्भूतास्त्रिस्थानगुणगोचराः ।
चत्वारो लक्षणोपेता वर्णा ह्येते प्रकीर्तिताः ॥२२॥

एवं लक्षणसंयुक्तं यदा वर्णोऽनुकर्षति ।
तदा वर्णस्य निष्पत्तिर्विज्ञेया स्वरसम्भवा ॥२३॥

एतेषु वर्णेषु विजयाश्चत्वारो गानयोगतः ।
एतान् समाश्रितान् सम्यगलङ्कारान् निबोधत ॥२४॥

प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ।
प्रसन्नमध्यश्च तथा समोऽन्यः स्थिर एव च ॥२५॥

स्यान्निवृत्ति प्रवृत्तिश्च कम्पितः कुहरस्तथा ।
रेचिताख्यस्तथा चैव प्रेङ्खोलितक एव च ॥२६॥

मन्द्रतारप्रसन्नश्च तारमन्द्रप्रसन्नकः ।
प्रस्वारश्च प्रसादश्च तथोद्वाहित एव च ॥२७॥

अवलोकितस्ततश्चैव निष्कूजितक एव च ।
उद्गीतो ह्लादमानश्च रञ्जितश्च तथा परः ॥२८॥

आवर्तकाख्यो विज्ञेय परिवर्तक एव च ।
उद्घट्टितस्तथाक्षिप्तः सम्प्रदानस्तथाऽपरः ॥२९॥

हसिताख्योऽथ हुङ्कारः सन्धिप्रच्छादनस्तथा ।
विधूतनाख्यश्च तथा गात्रवर्णस्तथैव च ॥३०॥

प्रसन्नादि. प्रसन्नान्त. प्रसन्नाद्यन्त एव च ।
तथा प्रसन्न एव च समोऽनुज्झित एव च ।
प्रस्तारश्च प्रसादश्च स्थायिवर्णसमाश्रयाः ॥३१॥

अथ सञ्चारिजान् भूयः कीर्त्यमानान् निबोधत ।
मन्द्रतारप्रसन्नश्च बिन्दु- प्रेङ्खोलितस्तथा ॥३२॥

तारमन्द्रप्रसन्नश्च स्यान्निवृत्तप्रवर्तकः ।
कुहरश्चैव वेणुश्च रञ्जितो ह्यवलोकित. ॥३३॥

आवर्तकपरावृत्तो ज्ञेया सञ्चारिजास्तथा ।
निष्कूजितः सहुङ्कारं ह्रसित बिन्दुरेव च ।
प्रेङ्खोलितमथाक्षिप्तं विधूतोद्घट्टिते तथा ।
ह्लादमानः सम्प्रदान सन्धिप्रच्छादने तथा ॥३५॥

प्रसन्नादिः प्रसन्नात इति चारोहिजाः स्मृताः ।
विधूतो गात्रवर्णश्च तथोद्वाहित एव च ॥३६॥

उद्घीतश्च तथा वेणुरित्येते ह्यवरोहिणः ।
सप्तरूपगता ज्ञेया अलङ्कारास्त्विमे बुधैः ॥३७॥

नेष्यन्ते हि ध्रुवास्वेते जातिवर्णप्रकर्षणात् ।
बिन्दुर्वापि हि वेणुर्वा ये चान्येऽतिप्रकर्षिताः ॥३८॥

ते ध्रुवाणां प्रयोगेषु न कार्याः स्वप्रमाणतः ।
यस्मादर्थानुरूपा हि ध्रुवा कार्यार्थदर्शिका ॥३९॥

वर्णानां तु पुनः कार्यं कृशत्वं तु ध्रुवाश्रयम् ।
ये तु प्रयोगं गच्छन्ति तांश्च वर्णान् निबोधत ॥४०॥

प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ।
तथा प्रसन्नमध्यश्च बिन्दुः कम्पितरेचितौ ॥४१॥

तारश्च तारमन्द्रश्च तथा तारतरः पुनः ।
प्रेङ्खोलितस्तथा तारमन्द्रस्तारसमस्तथा ॥४२॥

स्यान्निवृत्तश्च प्रवृत्तश्च प्रसादोऽपाङ्ग एव च ।
अवलोकस्तथा वेणुरित्येते सर्ववर्णगाः ।
स्थायिवर्णाहिते त्वन्ये सर्ववर्णाः प्रयोगिणः ॥४३॥

अत ऊर्ध्वं प्रवक्ष्यामि वर्णालङ्कारलक्षणम् ।
क्रमशो दीप्यते यस्तु प्रसन्नादिः स कथ्यते ॥४४॥

व्यस्तोच्चारित एवैष प्रसन्नान्तोऽभिधीयते ।
आद्यन्तयोः प्रशमनात् प्रसन्नाद्यन्त इष्यते ॥४५॥

प्रसन्नमध्यो मध्ये तु प्रसन्नत्वादुदाहृतः ।
सर्वसाम्यात् समो ज्ञेयः स्थिरस्त्वेकस्वरोऽपि हि ॥४६॥

बिन्दुरेककलस्तारं स्पृष्ट्वा तु पुनरागतः ।
स्यान्निवृत्तप्रवृत्तश्च मन्द्रं गत्वा समागतः ॥४७॥

आक्रीडितनयो यश्च स वेणुः परिकीर्तितः ।
कण्ठे निरुद्धपवनः कुहरो नाम जायते ॥४८॥

त्रिकलं कम्पनं तद्वद्रेचिताख्यः शिरोगतः ।
उरोगतः कम्पितः स्यात् कम्पनात्तु कलात्रयम् ॥४९॥

गतागतप्रवृत्तो यः स प्रेङ्खोलित उच्यते ।
यस्तु कण्ठस्वरोऽधस्तात् स तु तार प्रकीर्तितः ॥५०॥

उरोगतस्तथा मन्द्रो मूर्ध्नि तारतरः स्मृतः ।
क्रमागतस्तु यस्तारश्चतुर्थं पञ्चमोऽपि वा ॥५१॥

तारमन्द्रप्रसन्नस्तु ज्ञेयो मन्द्रगतस्तु ■ ।
सङ्घयित्वा परान् मन्द्रात् क्रमात्तारगति गतः ।
मन्द्रतारप्रसन्नस्तु ज्ञेयो ह्यारोहणाच्चतुर्थः ॥५२॥

[एकस्वराधिरूढः क्रमशः प्रस्वारसंज्ञितो ज्ञेय ।
प्रस्वारस्तु निवृत्तः शनैः प्रसन्नः प्रसाद स्यात् ॥५३॥

समनन्तरौ स्वरौ द्वौ विचरत्युद्वाहितो द्विकल एव ।
यारोहत्येककला पुनरेककला प्रसादयति ॥५४॥

उद्वाहित एव स्यादवलोलितसंज्ञितो द्वि न्यस्तः ।
एवं द्वौ त्रीन् गच्छन् स्वरान् क्रमेण सङ्क्रमो ज्ञेयः ॥५५॥

एकान्तरमारुह्य प्रत्येऽन्यान्तरं स्वरं यस्तु ।
निष्कूजितसंज्ञोऽसौ ज्ञेयोऽलङ्कार उद्गीत ॥५६॥

क्रमयोगेनानेन तु सञ्चार्यैकान्तरस्वरो द्विकलः ।
द्युघरः पद्पर एव ह्यारोही ह्लादमानः स्यात् ॥५७॥

अथ रञ्जितस्तु समनन्तरस्वरे द्वे कले पुनः स्थित्वा ।
अर्धकलामारोही पुनरेव तथावरोही स्यात् ॥५८॥

आवर्तकश्चतुर्षु स्वरेषु समनन्तरेषु सञ्चरति ।
आरोहणावरोहणविधिना चैकान्तरेष्वपि च ॥५९॥

ज्ञेयो निरन्तरकृतस्त्वष्टकलः सान्तरस्तथा कार्यः ।
तज्ज्ञैः कलाश्चतस्रस्त्वावर्त्या वर्तको भवति ॥६०॥

अधिरुह्य तु स्वरास्त्रीन् स्वरान्तरं लङ्घयति यद् वृत्तौ ।
पुनरपि च परावृत्या स स्यात् परिवर्तकोऽष्टकलः ॥६१॥

यस्य स्वरावतीतो तथा परं ह्यन्तरस्वरो भवति ।
एककलश्चैव तथा स भवेदुद्घट्टितो नित्यम् ॥६२॥

आक्षिप्तकस्त्रिस्वरजः कर्तव्यः षड्विधः कलामात्रः ।
एककलस्त्ववरः स्याद्विज्ञेयः षट्कलस्तु परः ॥६३॥

आक्षिप्तवच्चतुर्भिः स्वरैस्तु कालः कलान्तरोपेतैः ।
एकान्तरस्वरकृत इह गदितः सम्प्रदानस्तु ॥६४॥

द्विरपि द्विकलं गदितं हसितमिवोच्चारितं तथा हसितम् ।
समनन्तरस्वरकृतं तज्ज्ञैराक्षिप्तकं ज्ञेयम् ॥६५॥

समनन्तरस्वरेषु तु हसिताद् द्विगुणश्चतुष्परो वापि ।
आरोहत्येककलां हुङ्कारोऽयं स विज्ञेयः ॥६६॥

स्थानात्स्थानमारुह्य प्रत्येति समश्चतुष्कलः क्रमशः ।
नोर्ध्वं परिक्षेपः स्यात् सन्धिप्रच्छादनो नाम ॥६७॥

आद्यो पदमुच्चार्य तु यत्र स्याद् द्विस्वरे लघुनि वर्णे ।
समनन्तरमारोहत्येककलं तद्विधूतं तु ॥६८॥

आवावरोहो स्यात् प्रत्यारोऽन्तेऽवरोही तु ।
यत्राद्यन्तकलासु च वदन्त्यलङ्कारमुद्गीतम् ॥६९॥

ओङ्कारवदारोहेदनन्तरं तु स्वरात् कलान्तरयोः ।
द्वौ द्वौ प्रकम्पमानौ स्वरौ ततश्च प्रसन्नौ द्वौ ॥७०॥

एषोऽलङ्कारविधिर्विज्ञेयो गात्रवर्ण इत्येव ।
एकारौकारकृते दीर्घाक्षरमप्यदपि योज्यम् ॥७१॥

गीतालङ्काराणां करणविधिरयं यथावदुपदिष्टः ।
एभिरलङ्कर्तव्या गीतिर्वर्णाविरोधेन ॥७२॥

स्थाने चालङ्कारं कुर्यान् नह्युरसि काञ्चिका बध्येत् ।
अतिबहवोऽलङ्कारा वर्णविहीना न योक्तव्याः ॥७३॥

अलङ्कारास्त्रयस्त्रिंशदेवमेते मयोदिताः ।
नोदिता ये तु तेऽप्यत्र प्रत्येतव्या मनीषिभिः ॥७४॥]

अथ गीतीः प्रवक्ष्यामि छन्दोक्षरसमन्विताः ।
शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव ।
अविभूषितेव च स्त्री गीतिरलङ्कारहीना स्यात् ॥७५॥

अत ऊर्ध्वं प्रवक्ष्यामि गीतीनामपि लक्षणम् ।
प्रथमा मागधी ज्ञेया द्वितीया चार्धमागधी ।
सम्भाविता तृतीया च चतुर्थी पृथुला स्मृता ॥७६॥

भिन्नवृत्तिप्रगीता या सा गीतिर्मागधी मता ।
अर्धकालनिवृत्ता च विज्ञेया त्वर्धमागधी ॥७७॥

सम्भाविता च विज्ञेया गुर्वक्षरसमन्विता ।
लघ्वक्षरकृता नित्यं सा पृथुला प्रकीर्तिता ॥७८॥

एतास्तु गीतयो ज्ञेया ध्रुवायोगे विनैव हि ।
गान्धर्व एव योज्यास्तु नित्य गानप्रयोक्तृभिः ॥७९॥
अत परं प्रवक्ष्यामि धातुवाद्यस्य लक्षणम् ।

विस्तारः करणश्चैव आविद्धो व्यञ्जनस्तथा ।
चत्वारो धातवो ज्ञेया वादित्रकरणाश्रया ॥८०॥

सङ्घातजश्च समवायजश्च विस्तारजोऽनुबन्धश्च ।
ज्ञेयश्चतुष्प्रकारो धातुर्विस्तारसंज्ञस्तु ॥८१॥

विषयस्तु स्मृतास्तस्य पूर्वं विस्तर एव तु ।
सङ्घातसमवायो तु विज्ञेयौ तौ द्विकत्रिकौ ॥८२॥

पूर्वश्चतुर्विधस्तत्र पश्चिमोऽष्टविध स्मृत ।
करणाना विशेषेण विविधश्चैव पृथक् पृथक् ॥८३॥

अधश्चोर्ध्वं च विज्ञेयावधरोत्तरजौ स्मृतौ ।
सङ्घातजो विधिस्त्वेव विज्ञेयो वाद्ययोक्तृभि ॥८४॥

द्व्युत्तरो द्विरधरस्त्वधरादिश्चोत्तरावसानश्च ।
ज्ञेयस्त्वथोत्तरादि पुनरप्यधरावसानश्च ॥८५॥

समवायजस्तथा स्यात् त्रिरुत्तरस्त्रिरधरश्च विज्ञेय ।
द्व्यधरोत्तरावसानौ द्विरुत्तरश्चाधरान्तस्तु ॥८६॥

प्रागुत्तरो द्विर्द्विरधरस्त्वधरादिर्द्विरुत्तरावसानश्च ।
उत्तरमध्यश्च तथा मध्ये त्वधर पुनर्ज्ञेय ॥८७॥

व्यञ्जनधातोर्जेयं कलतलनिष्कोटिताग्यघोन्मृष्टम् ।
रेफावमृष्टपुष्पानुस्वनितं बिन्दुरनुबन्ध ॥८८॥

अङ्गुष्ठाभ्यां तु तन्त्रीणां स्पर्शनं यत् कलं तु तत् ।
वामे निपीडनं कृत्वा दक्षिणेनाहतिस्तलम् ॥८९॥

सव्याङ्गुष्ठप्रहारश्च निष्कोटितमिहोच्यते ।
सव्यप्रदेशिनीघातमुन्मृष्टमिति संज्ञितम् ॥९०॥

सर्वाङ्गुलिसमाक्षेपाद्रेफ इत्यभिधीयते ।
कनिष्ठाङ्गुष्ठकाभ्यां तु दक्षिणाभ्यामघोगतम् ॥९१॥

तन्त्रीषु त्रिप्रकारं चाप्यवमृष्टमिति स्मृतम् ।
कनिष्ठाङ्गुष्ठसयुक्तं पुष्पमित्यभिधीयते ॥९२॥

तलस्थानेऽपरन्यासस्त्वनुस्वनितमुच्यते ।
गुर्वक्षरैकतन्त्र्यां तु बिन्दुरित्यभिसंज्ञितः ॥९३॥

व्यासस्समासादेवामनुबन्ध सार्वधातुको ज्ञेयः ।
इति दशविधः प्रयोज्यो वीणायां व्यञ्जनो धातुः ॥९४॥

रिभिताह्नाद्यश्च तथाऽनुबन्धसंज्ञः करणधातुः ।
पञ्चविधो विज्ञेयो वीणावाद्ये करणधातुः ॥९५॥

त्रिकपञ्चकसप्तनवकैर्धातिर्युक्तो यथाक्रमं विहितः ।
सर्वैरनुबन्धकृतैर्गुर्वन्तः स्यात् करणधातुः ॥९६॥

क्षेपः प्लुतोऽतिपातोऽतिकीर्णमनुबन्धसंज्ञिताश्चेति ।
आविद्धो विज्ञेयो धातुर्वाद्यप्रयोगे तु ॥९७॥

द्वित्रिचतुष्कैर्नवकैः प्रहारैः क्रमशः कृतैः ।
आविद्धधातुर्विज्ञेयस्त्वनुबन्धविभूषितः ॥९८॥

इत्येते धातवः प्रोक्ताश्चत्वारो लक्षणान्विताः ।
तिसृणामपि वृत्तीनां यासु वाद्यं प्रतिष्ठितम् ॥९९॥

तिस्रो गीतवृत्तयः प्राधान्येन ग्राह्याः। चित्रा वृत्तिर्दक्षिणा चेति। तासां वाद्यताललयगीतियतिमार्गप्राधान्यानि यथास्वं व्यञ्जकानि भवन्ति। तत्र चित्रायां सङ्क्षिप्तवाद्यतालद्रुतलयसमायतिरनागतग्रहाणां प्र(प्रा)धान(न्य)म्। य(त)या वृत्तौ गीतिवादित्रद्विकलातालमध्यलयस्रोतोगतायतिसमग्रहमार्गाणां प्राधान्यम्।

दक्षिणायां गीतिचतुष्कलतालविलम्बितलयगोपुच्छिकायत्यतीतग्रहमार्गाणां प्राधान्यम् ।

सर्वासामेव वृत्तीनां ललिताद्या हि धातवः ।
धातुभिः सह संयुक्ता भवन्ति गुणवत्तराः ॥१००॥

त्रिविधं वैणं वाद्यं कर्तव्यं गीतसंश्रयं तज्ज्ञैः ।
तत्त्वं तथानुगतमोघश्चानेककरणसंयुक्तम् ॥१०१॥

लयतालवर्णपदयतिगीत्यक्षरभावकं भवेत् तत्त्वम् ।
गीतं च यदनुगच्छेदनुगतमित्युच्यते वाद्यम् ॥१०२॥

आविद्धकरणबहुलं ह्युपर्युपरिपाणिकं द्रुतलयं च ।
अनपेक्षितगीतार्थं वाद्यं चौघं बुधैर्ज्ञेयम् ॥१०३॥

स्थिते तत्त्वं प्रयोक्तव्यं मध्ये चानुगतं भवेत् ।
द्रुते चौघं प्रयुञ्जीयादेष वाद्यगतो विधिः ॥१०४॥

तत्त्वं तु प्रथमे गाने द्वितीयेऽनुगतः स्मृतः ।
ओघस्तृतीये कर्तव्यो लयतालविचक्षणैः ॥१०५॥

एवं तज्ज्ञैर्ज्ञेया वीणावाद्ये तु धातवः प्रोक्ताः ।
वक्ष्येऽधुना विपञ्च्यां वाद्यविधाने तु करणार्थम् ॥१०६॥

रूपं कृतं प्रतिकृतं प्रतिभेदो रूपशेषमोघश्च ।
षष्ठी च प्रतिशुष्का ह्येव शेयं करणजातम् ॥१०७॥

वीणावाद्यद्विगुणं गुरुलाघववादनं भवेद्रूपम् ।
रूपं प्रतिभेदकृतं प्रतिकृतमित्युच्यते वाद्यम् ॥१०८॥

युगपत्कृतेऽन्यकरणं प्रतिभेदो दीर्घलाघवकृतः स्यात् ।
वीणावाद्यविरामेऽप्यविरतकरणं तु रूपशेषः स्यात् ॥१०९॥

आविद्धकरणयुक्तोऽप्युपरिपाणिकस्त्वोघः ।
प्रतिशुष्का विज्ञेया वाद्ये तु सहैकतन्त्रिकृता ॥११०॥

कार्यं ध्रुवाप्रयोगे प्रायेण हि कोणवादनं तज्ज्ञैः ।
द्वाभ्यामपि वीणाभ्यां गाने वा वादने वाऽपि ॥१११॥

स्थानप्राप्तं वा स्यात् तन्त्रीषु विभावयेत् समं गानम्।
तच्चौघतुल्यकरणं वाद्यं कार्यं विपञ्च्यास्तु ॥१२२॥

सप्ततन्त्री भवेच्चित्रा विपञ्ची नवतन्त्रिका।
विपञ्ची कोणवाद्या स्याच्चित्रा चाङ्गुलिवादना।
एवं वीणा तज्ज्ञैर्नानाकरणाश्रया। विपञ्ची तु ॥११३॥

अत ऊर्ध्वं प्रवक्ष्यामि लक्षणयुक्तं बहिर्गीतम्।
आश्रावणारम्भविधिर्वक्त्रपाणिस्तथैव च ॥११४॥

परिघट्टना च विज्ञेया तथा सङ्घोटनैव च।
मार्गासारितमेव स्याल्लीलाकृतमथापि च ॥११५॥

आसारितानि च तथा त्रिप्रमाणानि चैव तु।
एतानि च बहिर्गीतान्यादौ योज्यानि योक्तृभिः ॥११६॥

सतालानि ह्यतालानि चित्रवृत्तिगतानि तु।
प्रयोजनं हि पूर्वोक्तं पूर्वरङ्गविधौ मया।
तेषां चैव प्रवक्ष्यामि लक्षणं सनिदर्शनम् ॥११७॥

तत्राश्रावणा नाम।
विस्तारजातुविहितैः करणैः प्रविभागशो द्विरभ्यस्तैः।
द्विश्चापि सन्निवृत्तैः करणोपचयैः क्रमेण स्यात् ॥११८॥

गुरुणी स्यादादावेकादशचतुर्दशकसपञ्चदशकम्।
सचतुर्विंशकमेव द्विगुणीकृतमेतदेव स्यात् ॥११९॥

लघुगुरुणी च स्यातामथाष्टमं गुरु भवेत्तथा च पुनः।
षड् च लघूनि तथान्त्यं गुरु ह्याश्रावणायां तु ॥१२०॥

त्रिः शम्योपरिपाणौ तालोऽपि ह्येव निर्दिष्टः।
समपाणौ द्वे शम्ये तालावप्येवमेव स्यात् ॥१२१॥

भूय शम्यातालात्तुपाणादुत्तरस्तथा द्विकलश्च।
चञ्चत्पुटस्तथा स्यादेव ह्याश्रावणातालः ॥१२२॥

अथारम्भः।
दीर्घाण्याद्यावष्टौ द्वादश च लघूनि नैधनं चैव॥
चत्वारि गुरूणि तथा ह्रस्वान्यष्टौ च दीर्घं च ॥१२३॥

लघुसंज्ञानि चतुर्थां निधनं द्विगुणीकृतानि दीर्घे द्वे ।
अष्टौ लघूनि नैधनमित्यारम्भेऽक्षरविधानम् ॥१२४॥

अस्य तु वाद्यम् ।
कार्यं त्रिपर्यंहोनैरथबहुनैरथ समवरोहैः ।
तलरिभितहावयुक्तैः करणैर्विस्तारभूयिष्ठैः ॥१२५॥

अपचययुक्तैर्हस्तैः कृत्वा च निर्वलितैर्विरभ्यस्तैः ।
आरम्भे वाद्यविधिः कार्यस्त्वेवं प्रयोगज्ञैः ॥१२६॥

तालप्रत्यय ।
तालस्त्रिकलस्त्वादौ शम्यैककलाद्वयं यतो तालः ।
द्विकला च पुनः शम्या तालो द्विकलश्च कर्तव्यः ॥१२७॥

द्विकलश्च सन्निपातः पुन पितापुत्रकश्च षट्पूर्वः ।
चञ्चत्पुटस्तथा स्यादारम्भे तालयोगस्तु ॥१२८॥

अथ वक्त्रपाणिः ।
आविद्धकरणयुक्तो द्व्यङ्गं स्यादेककं प्रवृत्तं वा ।
अत्यश्वमञ्जनचातुर्वर्णोऽप्यथ वक्त्रपाणिस्तु ॥१२९॥

गुरूणि पञ्च ह्रस्वानि षड् गुरूणि चतुर्गुणम् ।
गुरुणी द्वे च लघुनि चत्वार्यथ गुरूणि च ॥१३०॥

चत्वारि च लघूनि स्युस्त्रीणि दीर्घाणि चैव हि ।
लघून्यष्टौ च दीर्घं च वक्त्रपाणौ विधीयते ॥१३१॥

द्विकले मद्रके यस्तु शम्यातालनिपातनम् ।
तत्सर्वं वक्त्रपाणौ तु मुख्ये ह्यष्टौ कलाः स्मृताः ॥१३२॥

शम्यातालौ तालशम्ये तेषु कुर्यात् क्रमेण तु ।
तालं शम्यां च तालं च सन्निपातं तथैव च ॥१३३॥

तस्याधस्तात् ततः कार्यं पञ्चपाणिचतुष्टयम् ।
वक्त्रपाणेरयं तालो मुखप्रतिमुखाश्रय ॥१३४॥

अथ सङ्घोटना ।

अधिदण्डा(?) हस्ताभ्यां वीणामुपगृह्य दक्षिणाङ्गुल्या ।
अङ्गुष्ठाभ्यां च सदा कार्यं सङ्घोटनावाद्यम् ॥१३५॥

सङ्घोटने स्वराणां संवादिविवादिन(नो)श्चापि ।
सङ्घोटना त्वभिहिता शेषैरनुवादिभिश्चैव ॥१३६॥

विस्तारधातुकरणैस्त्रिभिश्च विधैस्तथा निवृत्तैश्च ।
त्रिभ्यश्चाभ्यस्तोपचयैर्वदन्ति सङ्घोटनावाद्यम् ॥२३७॥

गुरुणी लघून्यथाष्टौ दीर्घद्वितयं तथा च कर्तव्यम् ।
लघुदीर्घं लघु च पुनश्चतुर्गुणं चापि कर्तव्यम् ॥१३८॥

पुनरष्टौ ह्रस्वाः स्युस्त्रय गुरु निधन तथा कार्यम् ।
सङ्घोटनवस्तुविधौ विज्ञेयं गुरुलाघवविधानम् ।
अस्यास्तालः शीर्षकवत् पञ्चपाणिविहितः ॥१३९॥

अथ परिघट्टना ।
परिघट्टनासमुत्थं वाद्यं स्वयं हस्तलाघवात् कार्यम् ।
व्यञ्जनधातुसमुत्थं नानाकरणाश्रयोपेतम् ॥१४०॥

दीर्घाण्यावाष्टौ लघूनि च द्वे गुरूण्यपि च कुर्यात् ।
लघुनी द्वे सर्वाणि द्विगुणानि सहैव दीर्घेण ॥१४१॥

षोडश लघूनि च स्यु सगुरूण्यन्ते तथैव कार्याणि ।
एष परिघट्टनाया गुरुलघुवस्तुक्रम· प्रोक्तः ॥१४२॥

सम्पिष्टाकवदस्यास्तालः करणैश्च धातुसंयुक्तम् ।
सकलैः सततैर्वापि विस्ताराविद्धकरणसंयुक्तै ।
मार्गासारितवाद्ये गुरुलाघवसंश्रयाच्चैव ॥१४३॥

चत्वारि गुरूणि स्युर्लघूनि चत्वार्यथ द्विगुणितानि ।
गुरुणी लघूनि चाष्टावन्त्य गुरु चेति कर्तव्य ॥१४४॥

गुरुणी लघूनि नव च स्युर्मार्गासारिते वस्तुनि ।
कनिष्ठासारितविधौ चास्य ताल (प्रकीर्तितः) ॥१४५॥

श्रवणमधुराणि लीलाकृतानि धामिकृतपरिसृतानि ।
तान्यप्यपंचशाविह कर्तव्यानि प्रयोगज्ञैः ॥१४६॥

अथासारितानि ।

ज्येष्ठमध्यकनिष्ठानि तानि च तालप्रमाणनिर्दिष्टानि तानि तालविधाने यथाक्रमं व्याख्यास्ये ।

एवं स्वरगतं ज्ञेयं वीणाशारीरसम्भवम् ।
अत ऊर्ध्वं प्रवक्ष्यामि सुषिरातोद्यलक्षणम् ॥१४७॥

इति भरतीये नाट्यशास्त्रे ततातोद्यविधानं नामैकोनत्रिंशोऽध्यायः ।

# नाट्यशास्त्रम्

अथ त्रिंशोऽध्यायः ।

आतोद्यं सुषिरं नाम ज्ञेयं वंशगतं¹ बुधैः ।
वंश एव विधिस्तत्र स्वरग्रामसमाश्रयः ॥१॥

---

रागात्मकं स्थापितवान् निबद्धं
यश्छिद्रवंशस्वरलब्धसारम् ।
कालात्मकोऽसौ परमेश्वरस्य
स्याद्विग्रहोऽस्मद्भवबन्धनाय ॥

एवं प्राक्तनेनाध्यायेन प्रस्तुतनाट्यविषयगान्धर्वोपयोगप्रतिपादनपरतया आदि-विनियोगो वर्णालङ्कारादिलक्षणं ततातोद्यस्वरूपं प्रसङ्गतः शुष्कस्वरूपं प्रतिपादितम् । तत्र ततादनन्तरं यद्यप्यवनद्धस्यैवोद्देशो युक्तस्तथावनद्धयोर्गेयमानकक्ष्यापूरणहेतु-त्वात्तथापि विनियोगे वंशगतानां स्वराणां वश्यस्वभावमागम उपयोगं गच्छतीति ततानन्तरं सुषिरस्यैव लक्षणं युक्तमित्याह । आतोद्यं सुषिरं नामेति । नामशब्देनैतदाह । यथा-तोद्यमिति पूर्वं भगवन्महेश्वराराधनसाधनं भरतमुनिप्रभृतिभिर्वेणुर्निर्मितः ततो वंश इति प्रसिद्धम् । वस्तुतस्तु छिद्रात्मकसुषिराभिव्यक्तस्वरविशेषरूपतयैवास्योपयोग इति । खदिरादिनिर्मितोऽप्यसौ भवत्येव । तथा चोक्तम् ।

वंशी सृष्टा यथा पूर्वं वंशजा तु वैणवी ।
वंशास्तु खदिरं रौप्या कांस्यजा वा सकाञ्चना ॥

इति । अत एव सुषिरयोगात् प्राणसंयोगेनातोदनीयत्वादातोद्यं वाद्यम् । तोद्यते पात्यते हन्यते वाद्यते इति चतुर्णां धातूनाम् । केवलमस्य तोदननिष्पन्नं स्वरैस्तत-सुषिरयोरुपकारित्वं वर्णानुप्राप्त्यनुयोगेन त्ववनद्धघनयोः शरीरं तु यथावदर्पित-क्रोडीकृतं समुल्लसितशक्तिकर्तृकमिति तत्तत्स्थानाभिघातजातस्वरद्वारेणास्यो-

---

१ KSS कृतं ।

[1][नव वशास्तु विज्ञेयास्त्रिस्थानस्वरगोचराः ।
तेषां चैव हि वशानां स्थाने स्थाने त्रिकत्रयम् ।
यथा बन्धलयस्तेषां स्वरा ज्ञेयाः समासतः ।]

---

पयोगमपि तदातोद्यमुच्यते । तदा तुदति अभिहन्ति वादयति चेत्यकृतककर्मशक्ति-मुद्रितस्वातन्त्र्यमवभाति । ज्ञेयमिति । वीणातो विलक्षणतया । कश्मा च स्वरतत्त्वस्य धातो लाभात् ।

टीकाकारैः पूर्वरङ्गे वशस्य फूत्करणैकस्थादसत्कार्यता तत्र चेह चानुपयोग इति महता प्रयत्नेन पूर्वपक्षयित्वा पूर्वरङ्गे कुतपस्य तु विन्यास (भ० ना० अ० ५-१७) इत्यादौ वशस्याप्यस्ति सत्कार्यत्वमित्युत्तरपक्षीचक्रे । तद् केवलं ग्रन्थभूयस्त्वकरणरसिकताविजृम्भितम् । अस्मत्क्यो न खलु शुष्कवादेनाभिरुचितमित्यास्ताम् ।

वंशगतमिति । वशप्रकारस्य ( लोह )खदिरादेरपि सग्रह । ननु द्व्यधिष्ठानाः स्वरा वैणाः शारीराश्चे( भ० ना० अ० २८-१२ )त्यत्र वशाना नामापि तत् किं न श्रावित वशाभिधानेनेत्याह । बुधैरिति । यथाश्रुतमेव तदन्यनिरोधनपर वच । किं च शारीरस्वरवैपरीत्य वैणानामिति तथाभिधानमेतच्च तत्र व्याख्यातम् । ननु यदि ज्ञेय तद्वंश्योच्यता लक्षणम् । आह । वैण एव विधिस्तत्रेति । स्वरग्रामग्रहणमुपलक्षणार्थम् । यद् किञ्चिदुक्त आद्येऽध्यायद्वये तत्सर्वं वशेऽपि बोद्धव्यमित्यर्थ । तथाहि मतङ्गमुनिना चत्वारो धातवो वश इत्यादिना धातुविनियोगोऽपि प्रदर्शित एव ।

यत्त्वत्र टीकाकृता स्वगतपरगतत्वे धर्मस्यातिदेशस्य विकल्पलक्षणाभिधानलाघवोपयोगित्वमतिदेशस्याभ्यधायि तदेवमेव । सर्वत्र ब्राह्मणवद्राजा द्रष्टव्य इत्यादावप्यतिदेशस्वरूपनिर्वाह इवेहापूर्वतया मन्तव्यम् । यत्त्वतिदेशेन न सिध्यति तत्प्रातिस्विकम् ॥१॥

अस्य लक्षणमाह । द्विकत्रिकचतुष्कास्तु ज्ञेया वशगता इति । प्राननच्छिद्रेष्वाधारेषु गान्धारादि(षी)त्याशयेन स्वरोत्पादकस्वरूपमुक्तम् । कम्प्यमानार्धमुक्तास्च

---

1. ग्रन्थान्तरेषु नोपलभ्यते । वृत्तिकारेणापि न व्याख्यातम् । तथाप्यय मुनेरेवेति बहुभिरुक्तम् ।

द्विकत्रिकचतुष्कास्तु ज्ञेया वंशगताः स्वराः ।
कम्प(म्प)मानार्ध(र्धं)मुक्ताश्च व्यक्तमुक्तास्तथैव च ॥२॥

---

व्यक्तमुक्तास्त्वित्यनेन छिद्रोपरि दीयमानाङ्गुलिगतच्छिद्रनिवेशित इङ्गुलिना क्रियया तीव्रातीव्रमध्यरूपप्राणपूरणप्रभवो हि वंशे स्वरविभागः । तत्र गान्धारादितया मध्यमस्वरोऽन्यो भवति । तदपेक्षया गान्धारे द्वितीयम्(त्वम्) । तत एव च सामसु गान्धारो द्वितीयो मध्यमो हि तत्र प्रथमः । आह च ।

यः सामगानां प्रथमः स वेणोर्मध्यमः स्वरः ॥
(नारदीयशिक्षा १ ५ १)

इति ।

यद्यपि च न षट्सु कुड्यादिषु भव इति क्रमो पुनरस्तथापि षड्जस्य चतुः-श्रुतित्वात् मध्यमत्वेन प्रत्यभिज्ञानम् । नन्वत्र वंशे कः स्वरविभाग इत्येवमाशयेनाह । द्विकत्रिकचतुष्का इति । स्वरस्वरूपोपयोगिषु छिद्रेष्वत्र स्वरशब्दः । तेन सर्वतोऽत्र नवच्छिद्राणि । वंशोऽभिधाने वाद्यमानस्य । मुखि(ख)गतमन्त्यं च पश्चिमं तत्तावत् पूरकतया पूर्णतया च मुखमारुतप्रवेशप्रतिघातोपयोगात्मैव नान्तश्छिद्रं स्वरविभागाय नोपयुक्तम् । तत्सप्तकं तु स्वरविभागकृतम् । अत्रापि हि वंशाऽभिधानच्छन्दो भावः । वामहस्तेन त्रयः स्वराः । दक्षिणेन चत्वार इति । तथा चोक्तम् ।

षड्जस्त्वनामिकाङ्गुष्ठयोर्मध्यमो मध्यमाङ्गुलौ ।
निरङ्गुल्यां च गान्धारो मध्यमः कम्पितो यथा ।
वामहस्ते त्रयो ह्येते चत्वारो दक्षिणे पुनः ।
पञ्चमोऽनामिकायां तु धैवतो मध्यमाङ्गुलौ ॥
प्रदेशिन्यां निषादस्तु मध्यमः कम्पितो यथा ।

पञ्चमोऽनामिकायामिति वचनात् मध्यमस्वरे कनीयसीत्याह । निरङ्गुलीति । कनीयसी तर्जनी वा । स्थानं चाङ्गुलीनामुक्तम् । कर्कन्धूफलबीजवदङ्गुलीनां निवे-शनमिति । मध्ये बहिरन्तरं कार्यं छिद्रादन्यादनन्तरमिति नवच्छिद्राण्युच्यन्ते । तत्रैव भवन् छिद्राङ्गुलीयोजनम् । षडङ्गुलीना तु कः क्रियाभेद इत्याह ।

तत्रोपरि यथा ह्येक स्वरो वैणस्वरान्तरे[1] ।
प्राप्नोत्यन्यत्वमेवेह[2] तथा वशगतोऽपि हि ॥३॥

---

कम्प्यमानार्धं(ध)मुक्ताश्च व्यक्तमुक्तास्तथैव च ।

इति । नैव द्विकादिक्रमेण कम्प्यमानादियोग । अपि तु तेनैव प्रकारेणार्धेन समत्व येन तत्र व्यक्तमुक्ता इति पृथगन्तेऽभिधानादन्ते चतु श्रुतौ तावदय विनियोग। तदुक्तम् ।

ये चतु श्रुतयोऽप्येषां पूर्णा रन्ध्रास्तु ते स्वरा ।

इति । ततो द्विश्रुतेरवस्तादर्धमुक्ताङ्गुलित्वमध्यवस्यन् पारिशेष्यात् त्रिश्रुते कम्प्य मानाङ्गुलियोग । तदुक्तम् ।

कम्प्यमानार्धमुक्ताश्च विज्ञेयास्ते त्रिकद्विका ।

इति । एव वंशस्य स्वर प्रथमोत्पत्तिक्रमश्च स्वराणा दर्शित । यत्वन्येषा तु साङ्ग्-लादिक्रमेणाङ्गुलीनिह्लासदिशा च ब्राह्मणक्षत्रियादिजातिविभागस्तदनुसारेण चोक्त प्रकृत्यादिविषयो नाटयोपयोग कथित स निस्वर इति हृदये गृहीत्वा मुनिना दर्शित ॥२॥

न चेव छिद्रेषु स्वराणा व्यवस्थितत्वमुक्तम । दृश्यते चैकैकत्र स्वरसप्तकोप लम्भ । तत्कथमित्येतदाशङ्कयाह ।

तत्रोपरि यथा ह्येकस्वरो वैणस्वरान्तरे ।
प्राप्नोत्यन्यत्वमेवेह तथा वशगतोऽपि हि ॥

इति । शारीरे दारव्या च यथैक एव स्वर आधारभूत स्वरान्तरविषयमन्यत्व प्राप्नोति यथोक्त द्विविधैव मूर्च्छनासिद्धिरिति (भ ना २८-३४) यथा स्वराणा सतत मध्य मस्वरा(मध्यस्वर) विदुर्बुधा इति तथैव वशगतस्वरोऽपि स्वरान्तरविषयमन्यत्व प्राप्नोति । तथा च धैवताशकृतोऽपि । गीयमानेऽपूर्णवाच प्राहु । धैवताद्वा निषादाद्वा स्थायो......वांशिका इति । पूर्णवाचस्तु षड्जऋषभगान्धारा स्वराणामन्यतमात् । एतदाह । तत्र यथा वीणाया सार्यमाणाया प्रतिक्षण मार्दवाय तत्त्वसम्पादनेव सैवान्या सम्पाद्यते । तेन तथावदिति दर्शयति । तत्रोपरि(रीति) । न सामानाधि-

---

१ NS स्वरोत्तरे ।

२. KSS., NS चेवाह ।

द्विकस्त्रिकश्चतुष्को वा [1]श्रुतिसङ्ख्यो भवेत् स्वर ।
प्रनोरणात्तु शेषाणां स्वराणां श्रुति(मपि) सम्भवम्(व) ।
[2][स्वराणां च श्रुतिकृतं चतुर्द्वित्रित्व(त्त्व)लक्षणम् ।]
[3]अङ्गुलीवादनकृतं तच्च मे सन्निबोधत ॥४॥

---

करणतया विभक्तिनिर्देश । अन्यथा तस्योपरि तस्या सेन तत्रैवोर्ध्वरूपतयाऽऽधेय-रूपतयाऽवस्थिते स्वरे सतीत्यर्थः । एतदुक्तं भवति । प्रथममन्यमकाले ह्यङ्कारपूरणतया स्वरोत्पत्तिक्रमो य उक्तस्तस्यैव स्थिते सति स्वरान्तरस्यात्र वलनम् । यथा वचनादत्र विपञ्च्यामिव श्रुतिक्रमलाभ अस्फुट । षड्ज वदन्ति(ति) मयूरा (र) (नारदीयशिक्षा १ ५ ३) इत्यादिवत् स्वगमकमध्यमवच्छारीरवदेव वा विशिष्टस्व-निस्वभावत्वात् । अत एव शारीरवद्वस्थानामारोहणमवरोहणं चेति विशाखिला-चार्यः ।

ननु यद्येवं दृष्ट स्याद्वंशस्य पृथगभिधानं शारीरे(ऽप्येवमेव स्यात्तत्र स्वरं) मन्यविधि (वि) स्वीकृतत्वादित्याशङ्क्याप्रकरत्वे(त्त्व प्रकारत्वे)नाह । तत्रोपरीति । शारीरविषयाद्यस्योपरिभाव उत्तीर्णत्वादनन्तर्भाव इति यावत् । यथा च वाद्यरूप-तयाऽत्र क्वालित्यं नाम स्वाभाविको धर्मो न स त्व(तु)पक्व शारीरके भावाभावमार्द-वपारुष्ययोगात् । तथा हि वदन्ति । वंशो गीतमिति । तत शारीरतोऽप्यस्योत्कर्षो वीणातश्च । उभयं ह्यनेन पूरय(यं)ते वशेन गीति भावयतीति च व्यवहार शारीर-मारुतस्यान्तरबाह्यप्रयत्नाच्च व्यापारयोगात् । शारीरे तु गायत्येवेति व्यवहारः । आन्तरस्यैवात्र प्रयत्नस्य भावात् । वंशच्छिद्रपूरणप्रयत्नो हि बाह्योऽसम्भवी । वीणायां तु वादयत्येवेति बाह्यस्यैव तन्त्रीहननकारिण प्रयत्नस्य भावात् । इत्युभयविलक्षण-मुभयधर्मानुगतं च वंशस्य रूपमित्यवश्य वक्तव्यमिति तात्पर्यम् ॥३॥

द्विकस्त्रिकश्चतुष्को वा श्रुतिसङ्ख्यो भवेत् स्वर ।
प्रनोरणात्तु शेषाणां स्वराणामपि सम्भव ॥

अस्यार्थं टीकाकारस्तावदाह । इह वंशस्य च्छिद्रपिधान मुखवाय्वासयोगाद-ङ्गुलिसंयोगक्रियायाश्चेति यत्तावत् स्वरनिष्पत्तौ कारणम् । तथा चाह ।

काशी त्रिधा मूर्च्छना स्याद्द्विप्रयुक्ता हि सर्वतः ।
तारमन्द्रादिका चान्या मुखमारुतमूर्च्छना ।
तृतीया करशाखा(:)मा(त्म)स्वरोत्पत्तिप्रदायिनी ॥

---

१. KSS स्वर स्या च्छ्रुतिसङ्ख्यया ।
२. इदमर्धं ग्रन्थान्तरेषु न वर्तते ।
३. KSS. स्वराणि च श्रुतिसृत । NS अङ्गुलीवादनकृतः ।

व्यक्तमुक्ताङ्गुलिस्तत्र स्वरो ज्ञेयश्चतुःश्रुतिः ।
कम्प(म्प्य)मानाङ्गुलिश्चैव त्रिश्रुति परिकीर्तितः[1] ।
[2]द्विकोऽर्धाङ्गुलिमुक्तः स्यादिति[3] श्रुत्याश्रिताः स्वराः ॥५॥

इति । तत्रेयतापि स्वरजाता प्रथम न ग्रामविभाग भजन्ते । स हि च श्रुतिचर्चामपेक्षते । सा च प्रथमोत्पत्तौ नास्ति । अनेनैव क्रमेण यावता च गान्धार इति । एष चार्थ( ) फल्गुप्राय । न हीयता वीणाया श्रुतिचर्चा काचिद्दर्शिता भवति । मुखवलनगतिस्वरतादि तु प्रयत्नबलेन भवदपि न श्रुतिभेदमाधत्ते . .वीणादिष्वपि स किं न स्यात् । एतच्च श्रुतिनिरूपणप्रस्ताव एव वितत्यास्माभिर्विवेचितमित्यास्ताम् ।

तस्मात् प्राक्तनश्लोकोक्त एवार्थोऽनेन परिष्क्रियते । तत्र ह्युक्त तत्रोपरिस्वरान्तरेऽन्यत्वमेवेति । तच्च कथ क्रियतामितीदमारभ्यते । य स्वरो द्विक(श्रु)-त्रिक(श्रु)चतुष्को वेति नियत स्वरस्थापनया छिद्रविशेष प्रसिद्ध इत्यर्थ. । प्राधान्यता वाताश्लोऽप्यर्थ । नयति व्युत्पादयति । नदयमर्थ । तत्राप्यन्यस्वच्छिद्रे शेषाणामेषामप्यर्धस्वराणामिव या श्रुतिसङ्ख्या भवेत् । क्व सा भवेत् । आपूरणादानयनादीरण प्रनादरप्रपूरणाच्च । तत्र नयनमुभयास्तीव्रातीव्रतया । रणन तु प्रपूरणेन शब्दोत्पादनम् । पूरण वायो तीव्रस्थिरतोदेन वदनजात् । वाय्वनुसारसम्पादकतीव्राद्यापूरणादिदीर्घ्र्यादिनिषेधात् क्रियते । तत्राप्येव मपि स्वराणा तत्र नियतस्वरेऽपि छिद्रेऽस्ति सम्भव । (तुकारेण द्विकत्रिकस्वराणामितरेऽप्यतत्पूर्वतया पूरणनिषेध ।) न चेयतैव स्वरसम्भव इत्याह । अङ्गुलीवादनकृत चेति । अत्र प्रवृत्त अङ्गुलीभिर्वादन शब्दोत्पादनप्रकार । सम्यगित्याह । तच्च मे सनिबोधतेति ।।४।।

व्यक्तमुक्ताङ्गुलिस्तत्र स्वरो ज्ञेयश्चतु श्रुति ।
कम्प्यमानाङ्गुलिश्चैव त्रिश्रुति. परिकीर्तित ।
द्विकोऽर्धाङ्गुलिमुक्त स्यादिति श्रुत्याश्रिता स्वरा ॥

इति । स्वराणामनेन प्रागुक्त एव क्रम उक्त । न च पुनरुक्तता पूर्वनिष्पत्त्यभिप्रायेणाधारस्वरविषयत्वेन परमार्थतोऽस्याभि(स्यभि)धानम् । अधुना तु तत्रोपरोत्येप्रसङ्गात्ततदुत्पत्तिस्वरविषयस्तत्र वीणाया यथा मूर्छनान्यत्व तथा छिद्रेष्वङ्गुलिसारणाविशेषोत्कर्षेणैव छिद्रेष्वङ्गुलिवैचित्र्यात् स्वरसप्तकविभागो वर्णयिष्यते । अन्ये त्वङ्गुलिशब्देनात्रोर्ध्वमन्द्रमाहु ॥५॥

१ त्रिश्रुतिश्च स्वरो भवेत् ।
२ KSS, NS द्विकार्धा ।
३. KSS स्तु एव ।

एते स्युर्म(तु म)ध्यमग्रामे भूयः षड्जाश्रिताः पुनः ।
व्यक्तमुक्ताङ्गुलिकृताः षड्जमध्यमपञ्चमाः ॥६॥

[1]ऋषभो धैवतश्चापि कम्प(म्प्य)मानाङ्गुलीकृतौ ।
अर्धमुक्ताङ्गुलिश्चैव गान्धारोऽथ निषादवान् ॥७॥

---

ननु कुत्राय श्रुतिविभाग इत्याह । एते तु मध्यमग्राम इति । मध्यमस्वरस्तावत् प्रसिद्ध इति तदपेक्षया चतुस्त्रिद्विसंख्यासारेण मध्यमपञ्चमधैवतनिषादानामेव सम्भवति । षड्जग्रामे तु न तारगत्या न मन्द्रगत्येति मध्यमात्रिश्रुतिसंख्याक्रमानुरोधात् अधो मध्यमग्राम उक्त ।

अथ षड्जग्रामेऽप्याह । भूय षड्जाश्रिता पुनरिति । पुनःशब्दः पूर्वस्माद्विशेषद्योतकः । भूय इत्यनेनेदमाह । मध्यमग्रामे यदुक्त तद्यथा द्विश्रुतिर्गान्धार इति तद् षड्जग्रामेऽपि न सुसङ्गच्छत इति तामाह ।

व्यक्तमुक्ताङ्गुलिकृता षड्जमध्यमपञ्चमाः ।

चतु श्रुतिरत्र पञ्चम इति यावत् । षड्जमध्य योस्तु दृष्टान्ततयः विवक्षितसमकक्षतया निर्दिष्टः (ष्टौ) ॥६॥

ऋषभो धैवतश्चापि कम्प्यमानाङ्गुलीकृतौ ।

धैवतस्त्रिश्रुतिरित्ययं ।

अर्धमुक्ताङ्गुलिश्चैव गान्धारोऽथ निषादवान् ।

चकारेण मध्यमग्रामेऽरीत्यभूतमन्नयोरित्याह । अत एव ग्रामोपेक्षया रूपान्तराभावादेव कारस्यैव । अथवा लौकिकगीतपञ्चककारस्यपरिग्रहात् । उक्तमन्यत्र ।

मध्यमं पूरयेत्तत्र सप्ताङ्गुलिविधानतः ।
पञ्चस्वराणि कुर्यात् पञ्चभेदविकल्पनात् ।
कम्पितां चलितां मुक्तामर्धमुक्तां निपीडिताम् ।
यत्र... यशस्वरस्य प्रकम्पयेत् ।

---

1 KSS, NS धैवतश्चाथभश्चापि (वर्षभ)

स्वरसाधारणे[1] चा(एवचा)पि[2] काकल्यन्तरसंज्ञके(या) ।
निषादगान्धारकृते[3](तौ) षड्जमध्यमयोरपि ॥८॥

---

कम्पिता या गति प्रोक्ता वर्णालङ्कारगामिनी ।
अङ्गुल्याश्चलता यत्र स्वरसम्पादने यथा ।
सञ्चारिवर्णसंयुक्ता चलिता नाम सा स्मृता ।
स्वरमुक्तेन रन्ध्रेण मुक्ता नाम प्रवर्तते ।
अर्धमुक्तेन चाप्यस्या(स्या)अर्धमुक्तानुजायते ।
सुषिरैः सर्वथानेकं (पिहितैः सर्वै)रङ्गुलीभि समन्ततः ।
यदा पूरयते वश ज्ञेया सा तु निपीडिता ॥

इति ॥७॥

अथ स्वरसाधारणोत्पत्ति दर्शयति ।

स्वरसाधारणश्चापि काकल्यन्तरसंज्ञया ।
निषादगान्धारकृतौ षड्जमध्यमयोरपि ॥

इह स्वरसाधारणे......प्राधेयरूपतया पृथक्छिद्रता न सम्भवति केवलमाधारस्वररूपतया... .भवेत् । तत्र वीणाया पूर्ववत् स्थितसाधारणाया स्वरसाधारणे क्रियमाणे गान्धारनिष्पादनतन्त्र्योरेव द्विश्रुतिकतायामायतत्वेन पीडनं क्रियते न तु मध्यमषड्जतन्त्र्यो । शैथिल्यमुपयोगि । गान्धारनिषादोत्कर्षा ए(दे)व त(द)पेक्षत्योभया(यो) । वशे तु शारीरैरेव न पूर्वसिद्धा । केश्चिन्न तन्त्रीष्विव स्वरा अपि तावतैव प्रयत्नेन निष्पाद्येयु(या इत्यु)त्कृष्ट गान्धारे निषादे ह्रीयमानेऽवश्यं निकृष्टौ मध्यमोऽयत्नेन निष्पद्यते । अन्यथा षड्विंशतिश्रुतयो भवेयु । तेन व्यक्तमुक्ताङ्गुलिस्वरौ अर्धमुक्ताङ्गुलिश्च मध्यम इत्येवमन्तरस्वरौ निष्पद्यते । एव काकल्यामपि वाच्यम् । तदेतदाह । निषादगान्धारकृतौ विकारकरणे षड्जमध्यमयोरपि चेद्विकारस्तत् साधारण सम्पद्यते । चशब्दोऽप्यर्थे । नन्वेके स्वेकस्मिन् स्वरेण विकरणयोर्द्वयो किमर्थं विकृतिरित्याशङ्क्याह । न स्वरसाधारणत्वेन तस्य काकल्यन्तरत्वमात्रस्वरद्वयस्य सम्यक् स्थितिर्यतो भवति द्वयोर्विकार । एतदुक्त भवति । एतदेव च स्वरसाधारणत्व यदेतस्माद्रूपाद्ध्वसन स्वरान्तररूपोपजीवनमिति ॥८॥

---

१. NS साधारण ।

२. NS ल्यन्तरस्वरसंज्ञया ।

३ KSS वशाश्रिता ।

विपर्यया सन्निकर्षे श्रुतिलक्षणसिद्धित ।[1]
[2]वैणकण्ठप्रवेशेन सिद्धा एकाश्रिता स्वरा ॥९॥
[3]य य याता स्वर गच्छेत् त त वशेन वादयेत् ।
शारीर [4]वैणवस्थानामेकीभाव प्रशस्यते ॥१०॥

---

ननु समग्रमध्यतारविभाग कथम् । ननु च स्वराणा न ह्येकविंशतिरत्र वीणामिव स्वरा स्थानत्रय च शारीरवदुपलभ्येतेत्याशङ्क्याह—

विपर्यय सन्निकर्षे श्रुतिलक्षणसिद्धितः ।
वैणकण्ठप्रवेशेन सिद्धा एकाश्रिता स्वरा ॥

इति । सम्भावितस्तावद्वर्णे चाविद्धगतिभावो यावदभ्यासान्तर्गतो धार्यस्तावद्दृढस्वर जनयति । प्रथम छिद्रकस्य सस्कारमात्र जायते । न स्वर । तत्र वस्थानेन य स्वरो निष्पद्यते स तावत् मध्यम । तदाह । सिद्धा सन्तो ये स्वरा कण्ठाश्रिता मध्यमसप्तकरूपा इत्यर्थ । अत्र हेतु । वेणुषु प्रधानसप्तककृतेषु मूर्च्छनानिर्वर्तकारिषु मध्यमेषु कण्ठेषु शारीरेषु मध्यमसप्तककृतषु प्रदेशादेकीभावापत्तेरेव । यदो बन्ध इति सक्ष्यता व्यवहार । तारमन्द्रसप्तक तु कथमित्याह । तच्चासाधारणे स्फुटत्व तस्य सिद्धिर्वतो भवति स श्रुतिलक्षणसिद्धि ओष्ठमुद्राविशेष । तमवेक्ष्य यो वशस्य सन्निकर्षो......तेन छिद्रान्तगतमारुतस्य वशस्य स्वोत्कर्षत्वेन छिद्रस्य स्पष्टत्व तस्मिन् सति विपर्यय कण्ठसप्तकान्तर्गतलक्षणमुखसयोगेन सङ्कटे छिद्रे विकारोदयो विकटे-नामन्द्रसम्पत्तिरिति यावतैव (यावत् । एव) त्रिस्थानसिद्धिपादे निवद्धे । अत शारीर वैणस्वरविषयलक्षणपोषणमनेन सम्यक क्रियताम् ॥९॥

य य याता स्वर गच्छेत् तत्तत्(त त) वशेन वादयेत् ।
शारीरवैणवशा(स्था)नामेकीभाव प्रशस्यते ॥

गच्छेदिति । य गमिष्यति यो न च गच्छति स च गतवानिति कालसामान्येन वर्णितम् । अतो वशस्य प्रदर्शकत्व पूरकत्वावयो धर्मा दर्शिता । यातेति । ध्रुवागान-स्थाप्यत्र प्राधान्येनोपयोग उक्त । शारीरवैणवस्थानामिति । तद्बितेनाप्यनावेशेऽप्ये-कत्र स्वरनिष्पत्तिर्दर्शिता । इतरेतरयोगभूतभेदत्व सूचयता पृथगुपयोगो दर्शित तथा च श्रीमन्मतङ्गमुनिना वशवाद्यस्य स्वरसम्याश्रयो विनियोग उक्त ।

प्रच्यन्यागमने चैव कामिन्या निर्जितस्य च ।
शोकार्तस्य प्रकुर्वीत मध्यम मधुमिश्रितम् ॥

---

१ NS सिद्धिव ।

२ KSS वेणुदण्डप्रवेशेन....NS वैणक तु प्रवेशेन सिद्धा कण्ठाश्रिता स्वरा ।

३ NS येय गीता । KSS य य गता ।

४. KSS वशवैणाना ।

अविचलितमविच्छिन्नं[1] वर्णालङ्कारसंयुतं विधिवत् ।
[2]ललितं मधुरं स्निग्धं वेणोरेवं स्मृतं[3] वाद्यम् ॥११॥
[4]एवमेतत् स्वरगतं विज्ञेयं गानयोक्तृभिः ।
अतः परं प्रवक्ष्यामि घनातोद्यविकल्पनम्[5] ॥१२॥

इति भरतीये नाट्यशास्त्रे सुषिरातोद्यलक्षणं नामाध्यायस्त्रिंशः ॥

---

शृङ्गा(ङ्गा)रे वा वियोगत्थ्यमत्यन्तललितं मृतम् ।
क्रोधे चेर्ष्याभिमाने च स्फुरितमुत्कम्पितम् ॥

इत्यादि । एकीभाव इति । अनेककारस्येव शारीरादिरस्ति रूपस्येव स्वरचयस्य निपुण-निमित्तसंचित्रपानगन्धवर्णैकतयावभास इत्यर्थ तत्र भावशब्देन दर्शित । प्रशस्यत इति । स्फुटस्फुटविभवसिद्धिप्रदत्वादिति भाव ॥१०॥

अथास्य वंशवाद्य(स्य) सर्वथोपयोग इति दर्शयति ।

अविचलमविच्छिन्नं वर्णालङ्कारसंयुतं विधिवत् ।

अविचलितमिति । स्थिरो ह्यत्र स्वर इत्युक्तम् । अविच्छिन्नमिति । वीणातन्त्रीवद् दुष्प्रहतार्थसम्भावनेन साधारणक्लेशाभावेन निर्विघ्नम् । वर्णालङ्कारः सर्व एव..... शारीरान्तर्गतैः संयुक्तम् । अत एव सर्वान् वाद्यविधीन् तत्त्वानुगतान् लययतिप्रभृतीन् अर्हतीति विधिवत् । एवं तावद्गीतिभागोऽनेन पूर्वेत इत्युक्त्वा हृद्यतमं स्वेतदेवेत्याह ।

ललितं मधुरं स्निग्धं वेणोरेवाश्रित(वं स्मृत) वाद्यम् ।

इति । ललितमिति । स्वभावतो हर्षोद्दीपनेन रसचर्वणोपयोगि । मधुरमिति । गानप्रयुक्तं परुषमपि स्वरं स्वावस्थापनया हृद्यतामापादयतीति । वेणोरिति सुषिरोपलक्षणम् ॥११॥

अध्यायत्रयार्थमुपसंहरन् भाविना सह सङ्गतिं करोति । एवमेतत् स्वरक(ग)तमिति । शारीरवैणवस्यादिस्वरा एवेति तेनोक्तं स्वरपूर्णमिति । स्वरगतस्यैवोप-

---

1. NS अविकृष्ट ।
2. KSS. मन्द विघिलनितमधुर वेणोरेव स्मृत वाद्यम् ।
3. NS विध ।
4. KSS एवमेतत् सुषिरस्वरकृत वधयोक्तृभिः ।
5. NS तालवाद्यविकल्पनम् ।

सहारः । गानप्राधान्याच्च गानयोक्तृभिरित्युक्तम् । रूपे च स्वरे निरूपिते घनस्यनिरूपणावकाश इत्याह । अतः परं घनातोद्यविकल्पनं प्रवक्ष्यामीति शिवम् ।

शास्त्रोपयोजनवचस्करकल्पमेव
यद्वंशरन्ध्रचरणं तदुपास्य सम्यक् ।
स्पष्टीकृतोऽभिनवगुप्तपदाभिधेन
तस्यैव लक्षणविधिः स गम्भीरभावः ।

॥१२॥

इति महामाहेश्वराभिनवगुप्ताचार्यविरचितायां भारतीयनाट्यवेदविवृताव-
भिनवभारत्यां सुषिरातोद्यविधिरध्यायस्त्रिंशः ॥

# नाट्यशास्त्रम्

## अथैकत्रिंशोऽध्यायः

[1]वाद्यं तु यद्घनं प्रोक्तं [2]कलापातलयान्वितम् ।
कालस्तस्य प्रमाणं हि विज्ञेयं तालयोगतः ॥१॥

---

॥एकत्रिंशोऽध्यायः॥

यस्यां कलाकाललया(य)प्रमाणात्
साम्यं परं भाति जगत्क्रियाणाम् ।
मायात्मिकां तां तनुमष्टमूर्तेः
वन्दे त्रिधा योगपदं दधानाम् ॥

ननु स्वरकृत रूप वीणाशयोरिवावनद्धेऽप्युपलभ्यते सद्ध(द्द्)घ)नेऽपि । नादात्मना हरस्य शब्दन्येन नित्यव्याप्यत्वात् । अतश्चैव तवाऽवनद्धे मार्जनाना स्वरविशेषयोजनात्मनः वक्ष्यमाणत्वात् । सत्यम् । अनुहारेण पर स्वराणामवभासोऽत्र न स्फुटो नाक्षरात्मना । तथात्वे हि रसभावाद्यभिव्यक्तिरपि न भवेत् । तेन ह्यनुहारमात्रेण केवलमत्र स्वरात्मका(कता)ऽक्षरयोरवबावत् । अक्षराणां हि यद्यपि स्फुटत्व स्यात् करन(ज)करततकरय(ट)गतकरिकरटकतटकटकाभरणकेलिकाल इति श्रूयमाणाना च यथा वाद्यप्रतिपत्तिर्भवति तथा वाद्यमानादपि स्यात् । तस्मादनुहारमा(त्या)त्मवृत्तित्वादन्यत्र स्वराणां वक्षनिरूपणानन्तरमेवोपसंहारो युक्त । तदुपसंहारानन्तर चोक्तम् । घनातोद्यविकल्पनं वक्ष्यामीति (अ० ना० अ० ३०·१२) । तत्र हन्यत इति घन कठिनतैकरूपः । तत एव नमनोनम(न्म)नन्(न)मै(शी)त्यादियोगा-भा(वा)दक्षरवैचित्र्य स्वरवैचित्र्य चानुरुध्यमानमात्रेणोपयोगी कास्यतालिकादिरुच्यते । मूर्तो घन इति मूर्तिकाठिन्यमिति युक्तम् । तस्य घनस्य यदातोद्यं तोदन हनन तस्य विधिवच्चरत शीघ्रत्वसमत्वादिरूप यद्विकल्पन विभागस्तत्र चच्चत्पुटादिगतद्रुतलघुगुरुविभाग एव निमित्त इति स एव चातोद्यविकल्पनशब्देनोक्तोऽत्राध्याये वक्ष्यमाणसैषा प्रक्रान्तः । तस्य सङ्गतिं कर्तुमाह ।

---

१. KSS ताले घन इति प्रोक्त । NS. वाद्यं तूर्यायन प्रोक्तं ।

२ KSS कलपात .

वाद्यं तु यद् घनं प्रोक्तं कलापातलयान्वितम् ।
कालस्तस्य प्रमाणं हि विज्ञेयं तालयोगतः ॥

इति । अत्र क्रिया च तालः कालो वा । ताल इत्याक्षिप्य गान्धर्वनाट्यभेदेन यो विषयविभागः कृतः स तुच्छ इत्यस्मभ्य न रोचते । इदमत्र । न कालः क्रियाव्यतिरेकः अपि तु सर्वेषां परिच्छेदहेतुः काल इत्युच्यते । परिच्छेदश्च क्रियैव । क्रियैव क्रियान्तरस्य कालाभ्युपगमेऽपि वा कालावच्छिन्नेन कालः द्रव्यमिति । तदभावेन चापि क्रियाविच्छित्तिः । तेन घनेनेति किमत्र निबन्धे(न्धने)न । सर्वथाऽभावे तु(गा)ने गान्धर्वे वा क्रियया विना परिच्छेदो न सम्भवत्येव । एतावांस्तु विशेषोऽत्र सङ्गच्छते यद्गान्धर्वे कुत्रचित् परिच्छेदे परिच्छेदविधेयस्य साम्येऽप्याकुञ्चनाद्यन्यतमा काचिदेव क्रिया कस्मिंश्चदेवाङ्गुल्यादिप्रदेशे वर्तमाना परिच्छेदहेतुत्वेनाश्रीयते तथैवाऽऽप्रसिद्धे गाने तत्परिच्छेदमात्रस्य साम्यादायातं तद्वारेण सम्पादमस्योद(त)रनिदानस्य साध्यत्वात् या काचित् क्रिया गानवादनसवादिनो परिच्छेदहेतुरुपादीयत इति । तत एवाह । तत्र प्रतिष्ठाकरण इति । अप्रतिभापरिच्छेदाद्वागालपनगत्यादिक्रियाविच्छेदभावेनारम्योऽप वर्गं इवाभिनेयोऽन्योन्यं च विशीर्णविश्वरूपतया एकपरिच्छेदात्मकसाम्याकाङ्क्षा(काङ्क्षा)भावे शास्त्रस्य प्रतिष्ठानविशेषेण यत् प्रतिष्ठानसम्पादनं तत्र हेतुः क्रियाखण्डस्तालः इति तात्पर्यम् । तत्र च घनातोद्यमिति(रि)च्यत इति । यद् घनं नाम वाद्यमातोद्य प्रोक्तमुद्दिष्टं तस्य तालेन भाविना शम्यादिसशब्दावापनि शब्दक्रियाविशेषणयोगेन सति यत्तावत् परिच्छिन्नत्वात्मककालखण्डे क्रियारूपो द्रव्यात्मा स एव गीतक्रियाप्रमाणपरिच्छेदोऽनय । एतदुक्तं भवति । कांस्यतालिकारणक्रियाया प्रसिद्धाया मात्रापशम्याधीना साम्ये सदेतदावापादिपरिच्छिन्नं गीतं गेयमिति न तत्रावापादय तत्परिच्छेदका । किं चास्य तालयोगेनेत्याशङ्क्याह । कृताभिप्राये सविशेषमाह । कलापातेति । कलाऽऽतोद्याऽऽत्मना न विषयतया । कालः परिच्छिद्यते मात्रापातक्रियया सा कला । पत्यते शब्दश्रवणादिको(सो)ऽपरत्र चाद्दितादिव्यागमणोचरीक्रियते स कालविशेषो येन शम्यादिपाते. । लीङ् श्लेषणे (पा० धा० ११३१) इत्यस्य लय इति रूपम् । तेन स्वरो वर्णोऽन्यो वा यस्यापादितस्तत्रैव या लीनता विश्रान्ति तत्सम्पादनेऽत्यन्तेऽपि तदनु रसानुरूपचैकृतध्वनिसम्भवासम्भवकृत स लयः । यथाह । अशनत्या पादन्यासं विधाय मध्ये विश्राम्यतीति विलम्बित गच्छतीत्युच्यते । एवं च कार्न(शब्द)मुच्चार्य तदनुरणने तावन्तमेव कालं विश्रम्य यस्तु शब्दमुच्चारयति स विलम्बितं वक्तीत्युच्यते । यस्तु तद्वर्णकालं विश्रम्य स समलयेन वक्तीति । यस्तु वर्णमुच्चार्यानुरणे(णने)ऽविश्रम्यैव वर्णान्तरोच्चारणं करोति स द्रुतलयेनेति । अत एव द्रुतायां वृत्तौ यत्र न च तालिकास्तत्र मध्यमायां द्वादश विलम्बितायां षोडशेति

या(सा) लौकिकी कला काष्ठा निमेषश्च स्मृता[1] बुधैः ।
न सः तालकला ज्ञेया ह्यन्यैवा [2]तालगाः(गा) कलाः(ला) ॥२॥

---

पादान्ताधिकत्व जानीयादिति । वृत्तानामशेषं तु तत्त्ववेदी भगवानेवाह भाष्ये । द्रुतमध्यविलम्बितेषु तत्र सर्वत्र तत्परम् । मार्ग(न)भेदेषु अध्यायान्ते च प्रकर्षातिशयेन वक्ष्यते । स तु मध्यलयं प्राप्य सन्निपातद्वयम् । (भ० ना० भ० ३१।३८७) इति । एतदपि तत्पार्श्वे वक्ष्याम इत्यस्तां तावत् ।

तदेवभेदेषु कलापातलयेषु अन्वितमनुयातीत्युपयोगी । ततो गानवाद्यस्य तालेन गोग इत्यादयः । तेषां तथापि प्रतिष्ठाऽऽस्पदत्वात्तामभ्यवेत । अत एव तालयोगोऽभिप्रक्रम । तालं भवत्ताल इत्यपि निरुक्तमुक्तम् । येन प्रधानेनैव । एतदुक्त भवति । यथा पूर्वरङ्गादावदृष्टसिद्धयै संयतगीतकवर्षमानादि प्रयुज्यते । यो गायको यतीनामा-(वा)र्वावलिप्रयोग करोति । नर्तकवादकादयस्तदवलोकन विना तत्परिमाणसम न लयं कथञ्चिच्चरति(न्त) । प्रयोगस्य साम्य न स्यात् । सशब्देऽपि पाते करशब्दस्य तथा स्फुटमाकर्णनं न भवति यथा घनशब्दस्य । एकलयविधौ निरनुपातयोगेऽपि द्विकल-चतुष्कलविधौ तु कालशब्दहितपातयोगे परिच्छेदकारी । पतदूजंत इति सर्वपरिच्छेदो घना......उक्त प्रयोगसाम्योपयोगीति च । अनेन च गीतकाविनाना(गान)प्रवृत्तावन्य एव कालपरिच्छेदकारी कास्यतालपट इति धर्मि(ध्वनि)तम् । ध्रुवागाने तु दृष्टफले गायनस्यैव सोऽस्तु व्यापार । आवापादीनां तत्रानुपयोगात् । गीतकादौ गानात् कास्यतालिका क्वचिदुपयुज्यते । दक्षिणपातादयश्चोटिका या हस्ततलाभिघातेन वा सम्पन्नत्वान्नोपयुज्यन्ते । कनिष्ठाङ्गुलिनियमित गीतेन चावापादे सम्यक् सम्पादन तद्वत्तेनाशक्यमेव । वाद्यनृत्तगीतादिप्रयोगानुभावेऽमुगामिदृष्टफलसिद्धौ गीतके गायकैश्च यथा न प्रमाणतयावापिनएव(पेनैव) प्रयोगसिद्धिः । तत्र घनापेक्षयायुक्तैव । विशाखिलाचार्यादयोऽप्यानुवृत्ति तालसाम्य सुसम्पादमित्याशयेन क्वापि पृथगेव तालकलाना विच्छेदे लये वाऽवधानवशामात्रक्रियाया आवापादिक्रियया च सम्पादनया प्राणीभूतस्य गातु प्रसादपरीक्षणप्रयोजन कास्यतालं मन्यन्ते । इत्यल बहुना । अत एव तद्विशेष तदवधानैकसारत्व क्रियान्तरावधानव्यग्रत्वात् सूचयति । हि यस्मादयं । यस्मादेवमुपयोगि घनातोद्य तस्मात् तद्विकल्पन वक्ष्यामीति युक्तमुक्तम् ॥१॥

तत्र कलाःहिते तत्रत्यकालस्वरूपविज्ञासायामाह । सा लौकिकीति । लोके

---

१. KSS निमेषाश्च स्मृतो ।
२. KSS , NS तालजा ।

[1]त्रिविधा सा च विज्ञेया त्रिमार्गनियतात्बुधैः[2] ।
चित्रे द्विमात्रा कर्तव्या वृत्तौ सा द्विगुणा स्मृता[3] ॥३॥

चतुर्गुणा दक्षिणे[4] स्यादित्येव त्रिविधा कला ।
[[5]निमेषाः पञ्च मात्रा स्यात् मात्रायोगात् कला स्मृता ।]
निमेषाः पञ्च विज्ञेया गीतकाले कलान्तरम् ॥४॥

तत्र कलाकालकृतो लय इत्यभिसंज्ञितः ।
त्रयो लयास्तु विज्ञेया द्रुतमध्यविलम्बिताः ॥५॥

---

तावद् या कालस्य काष्ठा परा सोऽस्यसमा सा कला । सा च कियतेत्याह । निमेष इति । स एव हि लोकेऽतिसूक्ष्मः कालः । न च सा यदि तालकला । अपि त्वन्यैव ॥२॥

शास्त्रीया (अ)स्या न निमेषाः (अ)तिप्रसिद्धा निमेषषट्काष्ठकदशकं कलेति वा स्यादित्याशङ्कयाह । निमेषाः पञ्च इति । गीतकालस्य परिच्छेदकालान्तरं प्रमाणं पञ्च निमेषा ह्रस्वाक्षरपञ्चकं यावत् । कखगघङ इति व्यञ्जनकालस्य पृथगवभास इति प्रतिपादनात् कलाविशेषत्वमेवेत्याशयेन तदन्तर्वर्तित्वात् पुनः पुन-(नर्त)क्षणमिति ॥४॥

कलापातलयान्वित इ(मि)त्यत्र (अ० ना० प० ३१ १) यो लयशब्दः स व्याख्येय इत्याशयेन कलाया एव च लय विना न स्वरूपलाभो लय एव हि तालः (अ० ना० ३१ ३७०) इत्यग्रे वक्ष्यामीत्यभिप्रायेणाह । तत्र कलाकालेति । ततो विस्तीर्णं कलानां कालकृतो विलम्बितादिकालभेदसम्पादकः सोऽभिसंज्ञितः । ततो विश्रान्त्या समासमज्ञान रूढिगतोऽर्थो लयानां मध्यविश्रान्तिः । तदवश्यमेव विरामिति यावत् । अथ लयानां विभागमाह । त्रयो लया इति । न च विशेषलक्षणमेषां वक्तव्यमित्याह विज्ञेया इति । लोकत एव । विभागस्यातिव्याप्त्यात एव । अपतो लक्षणं तालसामान्यलक्षणप्रसङ्गे विततं भविष्यति । इह तु कलापातलयान्वित इति सूत्रार्थोद्भेदकमात्रमेतदित्यपौनरुक्त्यमात्रम् ॥५॥

---

१ ग्रन्थान्तरेष्वयं सार्धद्वयश्लोकानन्तरं पठितः ।
२ KSS त्रिमार्गा नियता बुधैः । NS त्रिमार्गनियमा बुधैः ।
३ KSS वार्तिके द्विगुणा तु सा ।
४ KSS दक्षिणा ।
५ NS does not read

यस्तत्र तु लयो मध्यस्तत्प्रमाणा कला भवेत्[1] ।
कलाकालप्रमाणेन ताल इत्यभिसंज्ञित ॥६॥

[त्रिविधा सा च विज्ञेया त्रिमार्गनियताऽवृधुतैः ।
चित्रे द्विमात्रा कर्तव्या वृत्तौ सा द्विगुणा स्मृता ।
चतुर्गुणा दक्षिणे स्यादित्येव त्रिविधा कला ।][2]
[3]त्र्यश्रश्च चतुरश्रश्च स तालो द्विविधः स्मृतः ।
द्विविधस्यापि तालस्य ह्येका प्रकृतिरिष्यते ।
तथा योनिद्वय [4]चात्र कीर्त्यमानं निबोधत ॥७॥

---

लयान्तरेण कलापातप्रयोगाद्वृत्तिम विशेषाभिधाने प्राथम्याद्द्रुतलयप्रसङ्गादित्थ-माह । यतस्तत्र(यस्तत्र तु)लयो मध्य । तत्प्रमाणकालमितेषु लयेषु मध्ये स्यातेति । लोक एव प्रसिद्धिरित्यर्थं । तालयोगत (भ० ना० अ० ३१ १) इत्यत्र यस्ताल उक्त स चेह कलाभ्योऽन्यस्तथा तद्योगे सति कलादिषु चान्वित घनमिति काल भवति । ययान्य शब्दस्तालशब्देनाधिक किञ्चिदिरयुक्तमित्याशङ्कयाह । कलाकालप्रमाणेन ताल इति । कलाना य कालो लयत्वसंज्ञितस्तस्य यत् प्रमाण परिच्छेदस्तेनोपलक्षित-स्ताल । एतदुक्त भवति । घनपरिच्छेदव्याप्तकलासमूह एव चच्चत्पुटादिस्तालो नाम्य इति समूहाभिप्रायेण प्रथमसूत्रे (लक्षित)स्तालशब्दः । उपात्तकालशब्देन सङ्ख्योपादानम् । मानाधिक्येऽपि कलासङ्ख्या कालादन्यत इति वर्तमितु प्रमाण-शब्देन व्यवच्छेद सूचयता षोडशकलाचच्चत्पुटोत्कर्षहेतुस्तालयोग इति स एवाव-र्यते । एव सूत्रे *तालशब्दस्यार्थं* । पुनरुपादान समर्थयतश्चिचन्तित *सामान्यलक्षण* तद् तालस्य(स्या)घ्या(या)न्ते स्थापयिष्यते । क्रियाविशेषावच्छेदाद् यो नियमोऽनु-वर्तमान स्थिरशीघ्रमध्यरूपो लयस्ताल इति । इति ॥६॥

एव कलैनात्र क्रियासमूहरूपता यता ताल इति प्रसङ्गादुपपाद्य कलामेव देव (न) विभागान्तरिता विभजति । त्रिविधा ना(सा)चेति । चकाराल्लयत्रयभेदोऽपि समुच्चरतस्तस्य त्विह तावन् मार्गनियमो न दर्शित । मार्गत्रयेण यो नियमात् त्रैविध्यहेतुस्तमाह । चित्रे द्विमात्रा कर्तव्येति । मात्राशब्देन तत्रोक्तनियमपरि-माणमुच्यते । यथा तैलस्य स्तोक स्तोक पतत षोडशबिन्दुपातकाल । इय......मा

---

२ NS स्मृता ।
२. टीकानुसारेणास्य श्लोकक्रम ।
३ KSS चतुरश्रश्च त्र्यश्रश्च तालो द्विविध एव हि ।
४. KSS चास्य NS चान्या (स्य?)

[1]चच्चत्पुटश्च(स्तु) विज्ञेयस्तथा चापपुटो बुधैः ।
[2]चतुरश्रस्तु विज्ञेयस्तालश्चच्चत्पुटो बुधैः ॥८॥

.. .. द्रुतिजापादीनामागमेषु यतिमाहेति । इतश्च नियत परिमाणमुक्तम् । पञ्चलघ्वक्षर तदेव द्विगुणं तद्द्विगुणं क्रमेण मार्गत्रयमाविर्भवति । तेन मात्रासंज्ञा कर्तव्येति नाशङ्कनीयम् । यत्र तु न द्वैगुण्याद्यमूलभूतत्वात् ध्रुवकमार्गमुच्यते तत्र पञ्चलघ्वक्षरद्वैगुण्य खण्डकलया गान्धार्यामन्यत्र च दृश्यते । यदि हि द्रुहिणि द्रुहिणि द्रुहिणिमत्यस्यस्य गुरुत्वाद् केवलं द्रुतचतुष्कविभागतो गान्धार्यां सिद्धये पञ्चम विश्रान्ताऽप्यस्य विदारिस्वैनोपकल्प्य चतुर्भिः स्वरैस्तावद्भिश्च द्रुतैः वर्णाङ्कताल इति व्यवस्थामकार्युरिति तैव व्यवस्था (ना)न्या लोके प्रसिद्धा । तथापि च द्विपदीशर्याङ्काद्यो पञ्चत्वरैव कला वक्ष्यते वर्णलेख्येषु नोपलभ्यते ।

एव कला विभज्य तत्समूहात्मक ताल विभजति । त्र्यश्रश्चेति । त्र्यश्राया भागा यत्रेति । यस्य मात्रर्थीयोऽकार । स इति पूर्वपक्षित । द्विविधस्यापि तालस्य स्वैका प्रकृतिरिति । अनेनेदमाह । यदि कश्चिद् द्वयोरप्यनयोश्चत्वार एव भागा भविष्यन्ति तद् कथमेनद् वदयति । तन्नोत्तरम् । एकाप्रकृतिरिति । गुरुरूपो यो भेदः सोऽत्रैकस्वभावे मध्यमादिच्छेदविभागशून्यः सोऽत्र प्रकृतिमूलभूत । तदपेक्षया च रूपान्तरविभागम् । विशाखिलाचार्यस्त्वाह । द्वयेऽपि पादानामक्षराणां च सङ्ख्यासाम्यादेवात्र प्रकृतिरिति ।

ननु यदि गुरुद्वय गुरुचतुष्क चात्र मूलप्रकृतिर्वक्ष्यमाणा तर्हि इच ने प्रधाननिरपायञ्च्याह । तथा योनिश्च चेति । चोऽप्यर्थ । तथेत्यन्तरम् । तथापि योनिकदम्बदृष्टिविशेषस्य हेतुभूत कोऽयंमात्रमाणमे प्रसिद्ध यद् वक्ष्यमाणभेदद्वयमत एव प्राधान्यं तदेव मूलप्रकृतितमेह निरूप्यमाणं गुरुलघुप्लुतद्रुतबिन्दुवैचित्र्यादीना सङ्ख्याभेदस्य द्वैगुण्यादिना च तालभेदस्य योनिभूत जानीत यद्यपि मूलभूत गुर्वक्षप्रस्तारे इत्यर्थः ॥७॥

तदाह । चच्चत्पुटे(ट)ति(स्त्व)ति ।
वैदपत मिनिश्चासंस्क्षरराणां चत ष्टयम् ।
उदीयं तस्यातीते तु विश्रान्तो गिरिजापतिः ॥
प्लुतान्तत्यासतो मायमुत्तमाना विधीयते ।
द्वितीयो न तथा तेन ह्रुयमाणो प्रतीयते ।

---

१. NS. चञ्चूपुटस्तु । KSS चञ्चत्पुटस्तु विज्ञेयस्तथा चापपुटोऽपि च ।
२. KSS चतुष्कलोऽथ द्विकलस्तालो यस्मात्प्रवर्तते ।

[1]त्र्यश्रश्चाचपुटः[2] प्रोक्तो गुरुलघ्वक्षरान्वितः ।
आदौ गुर्वक्षरं ज्ञेयं लघुनी गुरु चैव हि ।
त्र्यश्रः स खलु विज्ञेयस्तालश्चाचपुटो बुधैः ॥९॥

आदौ द्वे गुरुणी यत्र लघु च प्लुतमेव च ।
स विज्ञेयः प्रयोगज्ञैस्तालश्चच्चत्पुटाश्रयः ॥१०॥

सन्निपातस्ततः शम्या ताल शम्या तथैव च ।
एवमेककलं(लः)शुद्धो(द्धो)योज्यश्चच्चत्पुटो बुधै ॥११॥

---

चतुरश्रस्तु विज्ञेयस्तालश्चाचपु(स्तालश्चच्चत्पु)टो बुधैः ।
त्र्यश्रश्चाचपुटः प्रोक्तो गुरुलघ्वक्षरान्वितः ।।
आदौ गुर्वक्षरं ज्ञेयं लघुनी गुरु चैव हि ।
त्र्यश्रः स खलु विज्ञेयस्तालश्चाचपुटो बुधैः ।।
आदौ द्वे गुरुणी यत्र लघु च प्लुतमेव च ।
स विज्ञेयः प्रयोगज्ञैस्तालश्चच्चत्पुटाश्रयः ।।
सन्निपातस्ततः शम्या तालः शम्या तथैव च ।
एवमेककलः शुद्धो योज्य(ज्य)श्चच्चत्पुटो बुधैः ।।

इति । पुरा वै चागमादौ भगवतो महेश्वरस्य वक्त्रचतुष्कोद्भूतमेतदक्षरचतुष्कभेद-भावसंभावनमभ्युदयकारीत्युक्तम् । तदभिप्रायेण चच्चत्पुटश्चा(श्चा)चपुटे(ट इ)त्याचार्य-निर्दिष्टम् । तत्प्रस्तारमार्गसिद्धये तस्याप्यतो लाभात् तत्स्वरूपं वितत्य निरूपयति । चतुरश्रस्तु विज्ञेय इत्यादिना तालश्चच्चत्पुटाश्रय इत्यन्तेन श्लोकत्रयेण । ततश्चाचपुट इत्यक्षरोदीरणमभ्युदयाय । चच्चत्पुटस्यात्र प्लुतस्वभावस्तद्वक्तव्यताप्रसङ्गेन गुर्वादि-निरूपिते चाचपुटेऽपीति शङ्काशमनार्थं पुनस्तन्निरूपणम् ॥८-१०॥

प्रधानयोर्भेदेन प्रत्येकं त्रैविध्यमुपयोगं सन्निपातादुद्देशनिर्देशाभ्यामाह । सन्निपातस्ततः शम्येत्यादिना चाचपुटे पूर्व (ग)त्यन्तेन सार्धचतुष्टयेन । शम्यादिश्चाचपुट-(चच्चत्पुट)मेव प्रासारितप्रयोगेषु विशिष्टे सन्निपातादिरित्युपयोगकथनम् ।

---

१. KSS. पञ्चम गुरुणी कृत्वा लघुनान्त्य प्लुतं तथा । कुर्यात् चच्चत्पुटश्चैव बुधश्चाचपुटस्य तु । इत्यादि पठितं ।
२. षट्पितापुत्रश्चैव ।

शम्यातालौ द्विरभ्यस्तौ तालः शम्या तथापि वा ।
सन्निपातादिके ज्ञेयः शम्यादिश्च तथा परः ॥१२॥
[1]तालादिश्च त्रिभिर्भेदैर्युतश्चच्चत्पुटो भवेत्[2] ।
शम्यादिकस्तु विज्ञेयस्तज्ज्ञै रासारितादिषु[3] ॥१३॥
तालादिकस्तथा प्रोक्तो विद्वद्भिः पाणिकादिषु ।
[4]चच्चत्पुटस्य ये भावाः सन्निपातादयश्च ये[5] ।
त एव भेदा विज्ञेया बुधैश्चाचपुटे पृथक्[6] ॥१४॥
सन्निपातादिकस्त्वस्य बलवानितरो तथा ।
[[8]षट्कलोऽष्टकलश्चैव तालो ह्यस्मात् प्रवर्तते ॥१५॥

एककल इति । एका असहाया निष्क्रामादिकलिशब्दविहिता कला पातात्मिका । च-ञ्चुत्पुट इत्युक्तौ नाम्नाऽपि निरूप्ये(प्यत इ)ति यावत् । तेन मात्राविशेषोपादानम् । तद्यथा । चच्चत्पुटपरिवर्ते शम्यादि (अ० भा० ३१-९५)रित्यादौ । तत्रैककलस्यैव ग्रहणमित्युक्तं भवति । द्विरिति वा अभ्यस्ताविति केवलोपादानं प्रत्येकमपि द्विर्भाव । शाता शाता ताल इत्येव रूपोऽस्या इत्यनयो(रु)पादानम् । अभ्यस्तो यथाक्रमं एमुदितो द्विरित्यर्थः ॥१२-१४॥

एवं च सन्निपातशम्यातालादिभेदानां नि(वि)धानं चच्चत्पुटचाचपुटप्रस्तारः । स ता ता स ता स स ता सता सता स स सं ता सताता स सं तालम् । द्विक । तस्य द्विक । तस्य सन्निपातादिकस्त(स्य)स्य बलवानिति । चाचपुटे सन्निपातादि(वे)रेव भेद प्रचुरप्रयोग । तत्रैव निष्क्रामप्रवेशौ । एवं भेदत्रयसम्भवेन चाचपुटस्येतरेषु साम्यमुत्पाद्य विशेषं दर्शयति । सन्निपातादिविक्षेपैर्द्विकलचतुष्कलसिद्धिः । तथाऽ-पार्श्विकाशश्लिलार्दिभिः स एवास्य भेदो दर्शितः । एक योग प्रथमवारो द्विविधकृतो गुप्तेति यदुक्त चच्चत्पुटचाचपुटयोर्भेदान्तरप्रसूतित्व दर्शयति । षट्कलोऽष्टकलश्चेति । चकारो विविधभेदान्तरसूचक । अस्मादिति । द्विविधादिति सम्बन्ध ॥१५॥

१ KSS तथा तालादिभिर्भावैर्युग्मश्चच्चत्पुटो भवेत् ।
२ KSS सन्निपातादिके नाम्ने चतुरस्रो भवेत्ययम् । इत्यधिकम् ।
३ KSS रासादिकेषु च ।
४ NS चञ्चूपुटस्य ।
५ KSS सन्निपातादयस्तथा ।
NS सन्निपातादयस्तु ये ।
६ NS चञ्चूपुटस्य च ।
७ NS न्नेतर । KSS नितरेऽपि च ।
८. KSS does not read

द्वि प्रकारः पुनश्चाथ नि शब्दः शब्दवांस्तथा ।
अनयोर्मिश्रभावात्तु मि स्ताल प्रकीर्तितः]॥१६॥
शम्यातालप्रवेशेन ऽन्योऽन्योऽपि विधीयते ।
षट्पितापुत्रककृतः पञ्चपाणिरुदाहृत ॥१७॥
आद्य प्लुत द्वितीय च लघु यत्राक्षरं भवेत् ।
तृतीय च चतुर्थं च गुरुणी पञ्चमं लघु ॥१८॥
प्लुतान्त षट्पितापुत्रो गुरुलाघवसयुतः ।
[पञ्चपाणिः स विज्ञेय षट्पाता(त)स्तु षडक्षर ] ॥१९॥
[1]सन्निपातस्ततस्ताल शम्यातालस्तथैव च ।
शम्या चैव हि तालश्च षट् पातास्तस्य कीर्तिता. ॥२०॥
तालादिस्त्र्यश्रभेदोऽन्यः सम्पक्वेष्टकसज्ञित.[2] ।
[3]गुरुपञ्चाक्षरारम्भस्तप्लुतमात्रासमन्विता(त) ॥२१॥

निःशब्द इति । आवापादियोगाद्देतेन तु न किञ्चित् स(गृ)हीत भविष्य-दीत्याद्यपैनोपाध्याया मन्यन्ते । शब्दवानिति । गीतवाद्याङ्गत्वेन ।.. . . स्व-कण्ठेनादर्शि(र्शि)त । भेदश्च प्रेक्षणकादितालभङ्गलयकलानिष्क्रामादियोगेऽपि सूच्यते ॥१६॥

षट्पितापुत्रक इति । अक्षरे या सख्या क्रियत इति । षट्पात इति यावत् । उदाहृत इति । सहानामत्रम(त्र)ध्येत्य(य)म् । नत्वत्र प्रपञ्चनार्थो नापि ना (चा)ग्व-(पा)र्थ इति ॥१७॥

शम्यातालप्रवेशेनेति यत् सूत्र तदेव स्पष्टयति भाष्येण श्लोकत्रयेण आद्यस्त-(स्य)प्लुतमित्यादिना षट्पातास्तस्येत्यन्तेन । षट्पितापुत्रकोऽन्वर्थं । सतासतासा ॥१८-२०॥

भेदान्तर त्र्यश्रस्याह । तालादिस्त्र्यश्रभेदोऽन्य इति । सम्पक्वेष्टा(ष्ट)क इति । सज्ञामात्रमेतदित्याह । सज्ञित इति । सम्पक्वा इष्टाला(ष्टका) अत्रेति । सम्पक्वेष्टक इत्यत्राक्षराणीत्येके । अन्ये पाठक्रमात्र मिथित इति । तथाहि ।

१. KSS अस्यादौ सन्निपात स्यात् तालशम्ये तत परम् ॥ तालशम्ये च तालश्च षट्पातश्च प्रकीर्तिता ।
२ NS सम्पत्केष्टकसज्ञित । KSS सपर्केष्टाकसज्ञित ।
३. KSS गुरु सर्वाक्षरो यस्तु प्लुतान्त प्रकीर्तित ।
सन्निपात। तत शम्या ताल. शम्यैकतालक ॥
इति पद्यमत्र श्लोकार्धस्य स्थाने ।

अथ सर्वगुरु कृत्वा निष्काम त्वत्र योजयेत् ।
शम्याद्वय ततस्त्वेष [1]उद्घट्ट कथितो बुधै ॥२२॥
[2][त्र्युदस्य युग्ममोजश्च पञ्चतालो भवन्ति हि ।
मिश्रा गोलाङ्कसयुक्ता ज्ञेया ह्युद्घट्टकादय ॥२३॥
कला पञ्च तथा सप्त पुनर्नव च कीर्तिता ।]
दशैकादश चैवैते सङ्कीर्णा समुदाहृता ॥२४॥

---

पञ्चपाणौ लब्धात्मनामाभिप्रायमत्र यदभूत्तस्तदभिहित यद्योर्नहु पञ्चस्वक्षरेषु स्थितेष्वाद्यन्तयो प्रथमपञ्चमस्थानया प्लुतकारिण्या मात्रया समन्वित । गुरुपञ्चग्रहणाद् पञ्चपाणिरपि सन्निपातभेदेनेति तावत्या(ता) मात्राभिधाने असन्निपात-नियमो लब्ध । तेन नास तास ता तामस्यैव भेद ॥२१॥

तमाह । अथ सर्वगुरु कृत्वा । पणद्वये चाचपुटस्यैक गुरुभूत कुर्वीतयर्थ । यदि वैकक नैविक्तो निष्क मस्याप्यत्र यदाक्षरेऽपि त कुर्यादिति तस्माद्गर्थ । योजयेदिति । निष्काम यद्यपि न स्वमार्गोक्त तथापि प्रकर्षाक्षेप एव प्रथममार्गे चित्र एवोक्तो यथा हि तथा निवर्तयेदिरयथ । प्रस्तार उद्घट्टस्त्रिगुरुमराद्यमक्षरोघ । मतश्च गुरुत्रयात्मना वाद्योपभेद इति ॥२३॥

उद्घट्टसञ्ज्ञस्य त्र्युदस्य युग्ममोजश्चेति कला पञ्चेति चास्य श्लोकद्वयस्य केचिदर्थमाहु । चञ्चत्पुटचाचपुटयोरुक्त गुर्वादिसन्निवेश त्यक्त्वा कलासङ्ख्याभ्या-मिश्रणया वक्ष्यमाणप्रवृत्ताङ्क्य सप्त पञ्च नव दशैकादशेति पञ्च ये तालास्ते उद्घट्टयो(का)दय इति प्रत्येक सञ्ज्ञा परिस्यक्तु विमज्य(ज्य)न्ते वैरेतन्न मनोज्ञ तद्विदाम् । तथाहि । पञ्चानामिति सञ्ज्ञाकरणे प्रयोजन न किञ्चित् । आवर्तिन्यो हि उक्ता । न चानया क्वापि व्यवहार । पञ्चकले कथ मिश्रता । न हि द्विकले तालकार(ण)स्य किञ्चिदुपयुक्तम् । सङ्कीर्णा इति चाभिधान न समर्थितमेव । उक्त च न ह्यवामुपयोग इति । न क्वचित प्रयोजनमस्य स्यात् । तस्मादनयो श्लोकयोर्भिन्न एवार्थ । तत्र गम्यस्तावदयमर्थ । चञ्चत्पुटचाचपुटपञ्चपाणीना तावद् गीतकेषु बहुलप्रयोग । तद्द्वारेण ध्रुवास्वपि । सम्पक्वेष्टाकस्यापि पूर्वरङ्गे विनियोग उक्त । उद्घट्टप्रयोगस्य क्वेत्याशङ्क्याह । त्र्युदस्य युग्ममित्यादि । इहोल्लोप्यको नाम यो

---

१ NS उद्घद्द ।

२ KSS does not read

मल्लाद(गीतविशेषरत)स्य त्र्यश्रचतुरश्रभेदेन त्रित्वम् । त्रिष्वपि च प्रकारेषु प्रवृत्तकम् । त्रीण्यङ्गानि स्थित प्रवृत्त माहाजनिकमिति । तत्र चतुरश्रके प्रवृत्त नाम यदङ्गमष्टकल तस्योद्घट्टास्यकलात्रयमादौ वक्ष्यते ।

भावाद्युद्घट्टक कार्यं परिवर्तक एव च ।
(भ० ना० म० ३१ २६५)

इति । प्रावेशिकेऽपि द्वादशकलान्तरेऽप्यन(र)लक्षणस्याङ्गस्याप्यनुप्रवेश भविष्यतीति । चत्वारस्तावदेते प्रवृत्ताख्याङ्गता मतास्तत्सभूतमवेक्ष्यन्ते । उद्घट्टकादयश्चतुरश्रकास्य च यदङ्ग तस्य चतुरश्रान्तर्गतप्रवृत्ततालमक्षणमेवातिदेक्ष्यते ।

अन्तरस्य चतुरश्रस्य प्रवृत्त यो विधि स्मृत ।
त्रिविधाङ्गेन तेनैव चतुरश्रकमिष्यते ॥
(भ० ना० म० ३१-२८७)

इति । एव पञ्चता(ता)श्च उद्घट्टकादयो भवन्ति ।

ननु

सप्ताङ्गे द्वादशक(कल) द्वादशाङ्गे यथैव तु ।
निष्क्रामसादित कृत्वा शम्यास्तित्र प्रयोजयेत् ॥
(भ० ना० म० ३२ २७७ २८६)

इति वक्ष्यते । तेन तत्राप्यायातमुद्घट्टकादित्वमित्याशङ्क्याह । व्युदस्येति । यत्र कथञ्चिदपि युग्मौजभेदो नानुप्रविशति तत्कलापसरणे उद्घट्टमा(का)दित्व वक्तव्यम् । मा भूदनन्तर्भावकृता लक्षणवाऽव्यवेनासाधुत्वातेन सन्निविष्टके च कलात्रये व्य(श्या) प्तास्ते सप्ता ङ्गा)ना मिश्रत्व नवातालो त्र्यश्रत्व च ताला भाव्यमिति । न तत्रोद्घट्टादित्वेनोपतेन किञ्चित् । प्रवृत्ते(षु) चतसृषु पृथक् क्रियासु पञ्चकलार्धकि(श)कस्य पुनर्भागामर्हतीति स्यादसाधुत्वाशङ्का । न त्वेवमस्तु । न तथाप्युद्घट्टि(ट्ट)पृथक्त्वातीते स(ति) स्यादाशङ्का । तस्यैव पुनरुद्घट्टस्य पृथक्कालता किमर्थम् । ततो प्रवृत्तो ह्यष्टकल एव विशेष स्यादित्याशङ्क्याह । मिश्रा इति । यथा हि पुनरुद्घट्टकेनाभिधास्यते तदेकरसा वा । असावष्टकलस्ताले गीयते । यदा पृथगुक्त तथापि ध्रुवा च कला पञ्चधा विच्छिद्य तत्र शामायामावाय यद्भिन्नसङ्गत त मिश्रीकृत्य प्रयोगार्हता कर्तव्या ।

ननु भवतु विशेषलक्षणबाह्यत्वाशङ्का । तत को दोष । सम्यगुपता तु सामान्यलक्षणेन सङ्गृहीतत्वादित्याशङ्क्याह । गीताङ्गसयुक्ता इति । गीतेषु यद्

न ह्येषामुपयोगोऽस्ति सप्तरूपे ध्रुवासु वा ।]
[1]प्रवृत्तादिषु कर्तव्या एते भूय प्रयोक्तृभिः ॥३५॥

---

द्रव्यं वृत्त तत्रैते शम्या उक्ता (संयुक्ता)। न च तालसामान्यलक्षण(ण) सङ्गृहीत विशिष्टोपयोगवस्तुप्रयोगार्हं यथा वाचकसामान्यलक्षणयोटक्तो(योक्तो)पि तत्कर्ता सा(सो)पि पात्र वैदिकेषु कर्मसु । ततो विशेषलक्षणेनावश्य सङ्गृहीतव्योऽयमर्थ इति तात्पर्यम् । तत्रैव त्रिपञ्चसप्तनवदशैकादशचतुर्दशेष्वेवरूपताभावे (विशाला) या च सप्तकल मध्यमे सुनन्दाया चोपोहन नवकल विशालाख्यचञ्चमातीयकण्डिका दशकला सम्पिष्टकमेककल मद्रके द्वादशकमे द्विर्भावादौ वस्तुन्येककलत्वात् प्रत्युपोहन-स्य तण्डिष्टमेकादशकल तालरूपमास्थितम् । तस्यापि विशेषलक्षणं चच्चत्पुटादिवच्च पृथक् सज्ञा कस्मान्न कृतेति चोद्यत्वे प्रथम परिहरति । कला पञ्चेत्यादि । समुदाहृता इति । सम्यग् लक्षणक्रमेणोदाहृता । ननु नोक्ता । यच्चात्रावसरे कस्मान्नोक्ता इत्याशङ्क्याह सङ्कीर्णा इति ॥२३-२४॥

न ह्येषामुपयोग इति । नात्रैवोपयोगिन । तल्लक्षणस्यामिश्रत्वेनैव तेषा कल्पिता इति । न विशेषसज्ञाकरणं तेषा नोपयोगीति । न ह्येषा वस्तुप्रयोगोऽस्तीति सज्ञाकरण व्यवहाराय यदि कल्पित विषयादन्यत्रापि चच्चत्पुटादीनामिव गीतकेषु सम्पिष्टकवेण्यादीना ध्रुवासु तव(त्वावा)पयो शम्यालाघवेन येणि(वेणी)लक्षणोपयो-गितया पृथक् सज्ञाः क्रियेरन् । तत्त्वेन न तदस्ति तत् किं विशेषसज्ञाभि । एतदेव व्यति-रेकेणाह । प्रवृत्तादिषु कर्तव्या एते भूय इति । आदिशब्द प्रकारे । गीतकवर्धमाना-सारितपाणिकाणा(ना)च्छन्दकनिर्गीतादिषु भूय कुर्वते च चच्चत्पुटादय कर्तव्या इति । भूयो भूयो(य ऊ)पयोगाद्धतस्तेषा व्यवहाराय विशेषसज्ञाभि प्रयोजनमिति । भट्टदत्तुमनसा तु श्लोकद्वयस्याय वाक्यैकवाक्यतया महता प्रबन्धेनार्थो व्याख्यातो मिश्रणामिश्रणात् । तद्यथा । तिस्रो द्वे इति पञ्चधा ह्यत्र ऽपभ्रंशतोऽयमिति तद्वि-घटिता । चतस्रस्तिस्र इति सप्त । तिस्रस्तिस्रस्तिस्र इति नव । यद्वा तिस्र. सप्त इति दश । अष्टौ तिस्र इत्येकादश । तत्र प्रवृत्तस्योद्घट्टकादयो नोद्धातस्य । दश-कलस्य तद्योगे सप्त । । द्वादशकलस्य नव । यद्यपि दशानामेकादशाना चोद्घटावि-करणं नास्ति तथापि बहुवचनात् तावत् सिद्धत्वात् द्वादशकलावधि च तद्भावाद्भे-दादेकादशेत्युक्तम् । एके च गीतकेषु ध्रुवा नोपयुज्यते तवा.. .. केषु प्रवृत्तादिषूप-योगिन आरम्भका इत्यर्थं । सम्पिष्टकस्य दशकलस्य गीतकध्रुवोपयोगो यद्यस्ति तथाप्युद्घट्टकादितया सप्तकल एवासौ । सा नाम(मा)स्मद्गुरुतया व्याख्या विवेकार्थे-वेय तुलयतेत्यलम् ॥२५॥

---

१ KSS एवमेककलो ज्ञेय शुद्धश्चञ्चत्पुटादिक ।

यथाक्षरोऽथ द्विकलस्तथा[1] चैव चतुष्कलः ।
(एवमेककलो ज्ञेयः शुद्धश्चच्चत्पुटो बुधै(बिक)।
त्रयो भेदा हि तालस्य द्विगुणाः स्मृताः ॥२६॥

एके(ते) न भूयसोपयोगिन इत्याह ।

यथाक्षरोऽथ द्विकलस्तथा चैव चतुष्कलः ।

इति । एककलशब्देन चच्चत्पुटस्यैव व्यवहारो युक्तः । एकैव साधारणी कला यस्येति । चाचपुटस्यापि पादभागकल्पना(या)मपि कलाद्वयचतुरस्रविकल्पत्वाद(द्वि)गुणरूपत- येव स्फुरति । तत एव चच्चत्पुटस्य प्राधान्यं प्रथमं निर्देशः । तथा हि । एक(व)- मेवैककलः शुद्ध(श्च)चच्चत्पुट इति । शुद्धशब्दोऽत्र यथाक्षरशब्दः । स सर्वत्र साधारणाद्(ण) । चच्चत्पुटश्चाचपुट षट्पितापुत्रको(क उ)द्घट्ट सम्पक्वेष्टक इति सर्वत्राक्षर सङ्ख्या तु तुल्या । अर्थात् पातानाम् । चच्चत्पुट इति । अमुना च गुरुद्वयेन कलाद्वयलक्षितचच्चत्पुटरूपं द्विर्यत्र चच्चत्पुटः । चाचपुट इत्यनेनाप्येव कला लक्षिता सा चाचपुटरूपेण द्विरिति द्विकलः । अक्षरशब्देन प्रकृतिरूपा अतस्तादृक् कला लक्ष्यन्ते । ति स तथा । तस्यैव पञ्चपाणिरिति हि तालः । तथा हि । करतल- परिच्छेदरूपत्वात्तले भवतीत्यपि तालशब्दः केचिन्निरुक्तः । दत्तिलोऽप्याह । तत्र तालं च पाणिं च प्राहुरेकमिति (दत्तिलम्—१५३) । तं पञ्च ताल, यते(था)। तथाहि । षड् द्वादश चाप्यत्वारिंशत् पण्णवती(तिरि)ति त्र्यश्रस्य भेद एव । एवं प्रकारवट्केऽपि षट्कलत्वं मन्निधीयते । इयतीत्यसलं इति तस्य व्याप्तिगु(गुं)तत्र- यरूपे च षट्टन प्रकृतिरूपत्वात् पूर्वभावोत्पूद्घट्टमानत्वाद्घट्टन वाद्यम् ।

नन्वेवं सम्भाव्यत्र्यश्रभेदः पूर्व वाच्यश्चतुरश्रभेदस्तु गुरुलघुप्लुतरूप(प) पर वाच्यमि(इ)ति । अत्रैके स(मु)चते । इह पातविभागस्यैतत् प्रयोजनम् । यावन्त पातास्तावन्त्य एव कला यथाक्षराणि परिमाणेन भवन्तीति । तेन यावन्त्येव यथाक्ष- राणि चच्चत्पुटगतानि चाचपुटे तावन्त्येव । अतो यावन्त्येव गुरूणि तावन्त्येव लघूनि पाताश्चेति ।

नन्वेवं च त्र्यश्रचतुरश्रविभागो गुरुलघुप्लुतविभागश्च विघटित इत्युच्यते । लयभेदकृतो ह्यसौ । विलम्बिते प्लुतो मध्यमे गुरुर्द्रुते लघुरिति । चच्चत्पुटे च प्राधान्य- मुक्तं वक्ष्यते च । तत्र चेत्स्य सत्यप्रधानता निर्व्यूढा भवति यदि समस्तं तालसर्वस्वं तत्रैव झटिति प्रदर्शितं भवेत् । तालसर्वस्वं तालसारमात्रा । अत्र मध्यलयस्य सम्प्र-

1. NS तथैव च ।

तिष्ठानत्वात् प्राथम्यम् । प्राधान्याच्च द्विरुपादानमिति । प्रथम गुरुद्वय प्लुतस्य च च्छन्दोमध्याप्रसिद्धत्वाद् गुरुलाघवाभिधाने लभ्यत्वाल्लघुस्वरूपमिति । पूर्वं(वज्)ज्ञेय-मिति । गुरुद्वयानन्तर तत् । ततो हि द्रुतलयविलम्बितप्लुता इति । ते चच्चत्पुटे । पादाक्षराणि घिघिटघिसघिघिगुघिङ् । मध्यलयेन गुरुद्वय करजद्रुतेन लघु । रद्दघि-ड्घिट । लघुविलम्बितेन प्लुत । एव चच्चत्पुटे चतुष्पाते तदनुपपत्ति । षट्टभेदोऽपि चतुष्पात एव पूर्वमुक्त । तेनोद्धट्टकस्यादौ माभिधानादपि गुरुचतुष्कात्मकस्य चतुर-स्रस्य तच्च(त्र) याथाक्षरजातो ध्रुवकमार्ग इति । एतदपरेऽन्तर(न्य)मित्याहु । दर्शनान्तरसमुन्मिषितेन पुनरेवमाहु । लय एक एव चच्चत्पुटस्य याथाक्षरात्मनाधि-कतया गुरुलघ्वादिविभाग ।

अत्र प्राधान्यमित्य प्रदर्शित भवति । यदि सर्वसम्भवी प्रकारस्तत्र सूत्रेण शास्त्रेण दृश्यते । असम्भवी यदीयानेव प्रकारो गुरुलघुप्लुता इति । द्रुतो नाम लय-पात । तस्य यथाक्षरमूलभूतेन मानमात्रेण प्रदर्शनम् । अस्य प्लुत कथ धर्मस्त्विति सस्थित एव । ननु हल्मात्रस्य ..(स्य) न द्विलघुपरिमाणत्वाद् यथाक्षरेऽप्यस्ति द्रुत मैवम् । हल्मात्र सन्निवीयमान पूर्वस्याभो गुरुपरिमाण दर्शयति ।

ननु स्वात्मीय काल काने चापि व्यञ्जनमिति तकाराकार(रादय) एव गुरु-काले लघ्व(न्य)न्ते । अत एव भगवत्(वान्)भाष्यकारस्तत्रभगवद्भतृंहरिप्रभृतय स्वरकालानतिरिक्तावभासस्य व्यञ्जनकालस्य तत्र कथयन्तीति गुरुलघुप्लुतानामसम्भवो यथाक्षर इति शिष्टप्राकपक्षेण समानत .....तलभग्ना लघु .. तावन्य(न्तो)क्षरभेदा अपेक्ष्यानन्तर्यं । एतर्हि यथाक्षरारम्भकमूलतयावलम्ब्य तद्द्विगुणकालतया लयभेदादि-कालभेद । द्वे कला(ले) यत्रेति (द्विकल) । तत्रैव च यथाक्षरप्रकारेण लयभेदाच्च-तुर्गुणभूतेन चतुष्कलो भेद । (न वा)द्व्यष्टगुणादिभेदःवैनानवस्था कस्मान्न भवतीत्या-शङ्क्याह । त्रयो भेदा हि तालस्य । तालस्य (द्विगुणाद्) द्विगुण इति ।

अथ तावद् वाक्यार्थं । यत्र या(वा)वदन्यप्रकारो न स्ति विलम्ब शीघ्रमिति हि तत्तद्व्यवहारो लोके । न च मध्यापेक्ष । तत्र शीघ्रताद्रुतत्वानुग्राहकतनापेक्ष्यं-(तापेक्ष ए)ककल । मध्यापेक्षो द्विकलः । विलम्बितापेक्षश्चतुष्कलः । न चास्य लय-रूपस्य भागत्रयात्मकत्वमेव । न हि लये वृत्तरोत्तरद्वैगुण्यम् । त्रिभागाधिकत्वमस्य तत्र दर्शितत्वात् । मार्गभेदे तु द्वैगुण्यमेव केवलम् । तत्र तद्भव इति वीप्सा । तद्यथाक्षर-स्यापि द्वैगुण्य प्रसक्तम् । न च त्रिषट्प्रकारस्तु चर्मभा(र)पत्वादिगुण इति पठितव्य ।

चतुरश्रस्त्रिभिर्भेदैस्तालस्तु परिकीर्तित. ।
चतुष्कलो ह्यष्टकल. कला: षोडश चैव हि[1] ॥२७॥

---

तत्र केचिदाहु । द्विगुणास्तु गुणा: (स्मृता इ)ति । द्विगुणा द्विगुणा । सर्वं बाक्षेप । सङ्ख्याति व्यपदेश.। तद्यथा । अक्षा भक्ष्यन्तामिति । तत्र हि प्रथमप्रकारास्तावद् द्विगुण । अन्यो क्रमद्विगुणो । एव सति सर्वे गुण(णा)द्विगुणा इत्युपक्रमः ।

उत्पलदेवपाद(दा)स्त्वस्मत्परमगुरवो व्याचक्षते । तालस्य यस्मात् त्रयो भेदास्त्रिगुणा इति त्रिगुणपरस्परलक्षणधर्माणस्तस्मात् त्रय स्मृता । द्विगुणत्वे हेतुद्विगुणा इ(वि)ति । यथाक्षरस्य व्याख्या गुणगुणनीयत्वाद् द्विकलत्वम् । तस्यापि द्वाभ्या गुण्यमानत्वाच्चतुष्कलत्वम् । चतुष्कलत्वाद् भेदाभावाच्च नास्य पुनर्गुण्यमानत्वमस्तीति ।

वय तु मन्महे । वीणायामपि यथाक्षरे द्वैगुण्यस्यासम्भवाभाव । असम्भवस्यापेक्षितत्वाद् द्वैगुण्यस्येति ।

मद्रकासारितवर्धमानगीतकपाणिकाच्छन्दकप्रभृतीना तावत् तालात्मकत्वम् । तालस्य चामी त्रयो भेदा इति । सर्वं यथाक्षरस्य वक्तव्यम् । ध्रुवागुरुप्रस्तारवर्णनाद् द्विकलचतुष्कलादिचच्चत्पुटादिवदक्षरकल्पना कस्मान्न कृतेत्याशङ्कामवधूत्य त्रयो भेदा हीति । आसारितादयस्तावच्चच्चत्पुटादिपाता । परमार्थतस्तत्र पुनर्यथाक्षरक्लृप्त्या तस्यैव च द्विगुणकालत्वेन द्विकलचतुष्कलादुदित(वुचिता) इति तयोरपि नान्याक्षरकल्पनावकाश । एतच्चाग्रे वितस्य भविष्यतीत्यास्तामेतत् ॥२६॥

अथ प्रयोगाभिप्रायेण तालयोर्व्याप्तिमाह । चतुरश्रं(श्र)स्त्रिभिर्भेदैरिति । तानाह । चतुष्कलो ह्यष्टकल कला: षोडश चैव हीति । नियते कलाद्यभिप्रायेण मन्तव्यम् । पुनरुक्त हि स्यात् । वक्ष्यमाणस्य्यश्रभेदद्वादशेभ्योऽभ्यधिकस्य भेदत्रयस्याभिधानमसङ्गत स्यात् । चच्चत्पाणा(ण्या)द्यपेक्षया चतुर्विंशतिकल एव चतुष्कलो भेद स्यात् । न द्विगुण । भेदद्वयोपादान त्वसङ्गतमेव । तस्मात् प्रयोगाभिप्रायमेतत् । प्रयोगश्च न सर्वसमुदायात्मकतया । असौ वाक्यस्थानीयैरवान्तरसमुदायैरारब्धतया प्रकरणशब्देन नात्यध्याय (भ० ना० अ० २८) उद्दिष्ट.। एव ह्यासारितेषु द्वात्रिंशच्चतुःषष्टिकलायोगोऽप्युक्त । सन्निपात सचिवोऽस्तीति षोडशादेव विरतिर्न स्यात् । प्रकर्षा षण्णवतित्रिगुणिताद्यर्थानि चत्वारि वा वस्तूनि वपुरिति समावसमायैव । कथ विरति । वीर्यकान्ते भङ्ग्याभिश्रणतयाऽऽसारितकण्डिका दशपरिवर्त-

---

1. KSS कलषोडशक पुन ।

ञ्यश्रस्तालस्तु षड्भेदस्त्रिकल षट्कलस्तथा ।
कला द्वादश चैव स्यात् चतुर्विंशतिरेव च ॥२८॥

चत्वारिंशत्तथाष्टौ च तथा षण्णवतिः कला ।
तालो [1]नवविधस्त्र्यश्र समासात् परिकीर्तितः ॥२६॥

---

विध्याकलनया च पिण्डीकरणेन कश्चित् सङ्ख्याया नियम इति कस्मादवान्तरसमुदायस्य प्रयोगाभिमत । तेनेदमुक्त भवति । चतुरश्रषोडशकलाविभागो यावच्च सम्भवति ताले तावदस्य चतुरश्रभेद एव कल्पनीय । तेनाष्टकलोऽपि तावत् प्रयोगे चतत्र कलाश्चच्चत्पुटे । न वाह्यानुचितका त्वेका कलैव चकारेणावगृहीता । एव नवकले द्विकलव(श्च)चच्चत्पुट । सप्तदशकले चतुष्कल । ततो द्विगुणे चतुष्कलस्यैव द्वैगुण्यमिति मन्तव्य मान्यताइ(ये)त्येवकारेणोक्तम् । हिहेतो(हेतु)पर(र०) । एवं तालस्य त्रयो भेदा इति तावच्चतुरश्रस्य व्याप्ति ॥२७॥

त्र्यश्रस्य तूच्यते । त्र्यश्रतालतु(लस्तु)षड्भेद इत्यादिना तथा षण्णवतिः कला इत्यन्तेन । त्रयेति । द्विकलत्रयेत्यर्थ । कला द्वादश चेति । यथा चाचपुटस्य चतुष्कलो भेदान्तर समुच्चिन्नेति चकारेणैवकारेण(च) । तत्र व्याप्ति समापयति । चतुर्विंशतिरिति । चकारेण पञ्चपाणिश्च षटकलभेदान्तर समुच्चिनोति । [2]एवकारेण तस्यापि परिसमाप्ति दर्शयति । षट्चत्वारिंशत्ताला इति । तालस्तु यो मद्रकस्य प्रस्तुत प्रयोग । तत्र वयस्यावान्तरविभागे षोडशकलात्मनि मात्राभिधाने चतुरश्रयोग एव । एव हि पादभागमात्रादिति चेद् भेदस्य चतुरश्रपर्यवसानाच्चतुरश्रस्यैव प्राधान्यम् । तथापि तावत्त्रिभि खण्डैरवान्तरविच्छिन्न । तत एवम्भावस्य विदारीविच्छेदे(दै)रारभ्यो व सोऽपि माननीय । विदार्यां त्र्यश्रमेव विधेय इति तस्य समुदायस्य भागतया कृत्वाऽष्टचत्वारिंशत्कलत्र्य(त्र्य)श्रभेद इत्युक्तम् । एव षण्णवतिकले प्रकर्षाः प्रयोगे बहिरवान्तरभागे षोडशकलाभेदैरारभ्य इति सोऽपि त्र्यश्रभेद एवेत्यन्तरे चतुर्विंशतिकला वस्त्विति तावद्वस्तुनिबन्धेषु नाधिका व्याप्ति । चतुर्विंशतिरेव द्विगुणा द्विगुणे कस्तुल्याद्विक्षेपणत्व मार्गश्च तिसृणा षण्णां द्वादशाना चैककलद्विकलचतुष्कलोचिताना चतुर्विंशत्यष्टचत्वारिंशत्षण्णवतिकलासु निष्पत्तये त्र्यश्रभेदतैव युक्तेति षण्णवतिकलावधित्वात् त्र्यश्रस्य व्याप्तिरिति युक्तमुक्तम् । षड्गनिषिद्धेऽप्युल्लोप्यकोत(र)रोविन्दकत्रयेणाङ्कैरपि व्यवहार इति वक्ष्यते । तावन्मात्रा च

---

1. KSS. नवविधिस्त्र्यायमयुग्म परिकीर्तित ।

[1]तत्रावापोऽथ निष्कामो विक्षेपोऽथ प्रवेशनम् ।
[2]चतुर्विकल्प इत्येव नि:शब्द: परिकीर्तितः ॥३०॥

---

षोडशकला। ततो यदि यथास्वमङ्गविभाग एव कलातिरिक्त: पूर्व(र्व)रेवेति। षोवेणकेऽपि चतुर्विंशतिकल: पादस्ततश्चैतदुक्तरूपतालातिरेकेण न क्वचित्ताले कश्चिदस्तीत्युपसंहरति।

तालो नवविधश्चायं समासात् परिकीर्तितः ।

इति। को भिन्नक्रमः। नवचतुरष्टषोडश‍ञ्यश्रति: षड्द्वादशचतुर्विंश: षट्च चारिंशत् षण्णवतिरूपो नवविधश्चत्पुटचाचपुटषट्पितापुत्रकाणां त्रयाणां द्विकलचतुष्कलरूपः परिकीर्तितश्च नवविधः। समासादिति सङ्क्षेपात्। शिष्ट वेन द्विमष्टात्मकः तालवं पित्र्यमित्युक्तं भवति। अत एवैतेषामेव प्रकीयमाणतया प्रक्रियमाणतया च म द्रका विरवेन स्थितिरिति मद्रकादिप्रकरणं श्रुत्योद्दिष्टपूर्वकं मात्राप्रकरणाङ्गानीति (भ० ना० २८ २६)। तेन दक्षिणमार्गेण षण्णवते: कलानाम ते त्र्यश्रकेऽपि तत्रात्मनि द्वादशकलासङ्ख्यापर्यवसानमिति कत्वा यदि त्र्यश्रस्य षण्णवत्या व्याप्तिस्तदा तस्य द्वाविंशत्युत्तरा चतुरश्रस्यापि व्याप्तिश्चतस्यैति ॥२८ २६॥

तन्निराकरोति तत्रत्यनेन। स्थिते प्रयोग इत्यथ। एतदुक्तं भवति। मानवैर्गन्धर्वे स(सा)वलौकिक। इत्युक्तानुसारेण

दूराद् दूराभिगन्तव्या नियमात् ताल(ला)कला।

सङ्घपाया प्रनियमाद् गा धवस्य वेदवदनादिसिद्धत्वेन नियतप्रयोगाङ्गं वात्तत्र च षण्णवतिकलावान्तरसमुदाय: षोडशकलात्मकपादभागसमुदाया तरभागषट्कलप्रधानं प्रत्ययालयमद्भुता तालरूपसहृतान्तरान्तराऽऽरम्भको यथाऽस्ति तदेवमष्टविंशत्युत्तरशतात्मक इति।

एवं नवविधस्ताल इति तावत् तालस्वरूपे व्यवस्थिते तदुपयोगि यत्तालगत मुद्दिष्टं भवति तेषामधिकारारम्भेऽष्टाविंशाध्याये

ध्रुवस्त्वावापनिष्कामौ विक्षेपोऽथ प्रवेशनम् ।
शम्यातालः सन्निपातः परिवर्तः सवस्तुकः ॥
मात्राप्रकरणाङ्गानि विदारी यतयो लया ।
गीतयो लयमार्ग(ऽवयवा मार्गा) पादमार्गा (मार्गा)सपाणय ॥
इत्येकविंशतिविधं ज्ञेयं तालगतं बुधैः ।

---

१ इत ऊर्ध्वं का० पुस्तके द्विप्रकारस्त्वयमित्यादि श्लोकमधिकम्।
२ NS चतुर्द्विकल इत्येव।

शम्या तालो ध्रुवश्चैव[1] सन्निपातस्तथा परः[2] ।
इति शब्देन संयुक्तो विज्ञेयोऽपि चतुर्विधः ॥३१॥

एतेषामेव[3] वक्ष्यामि हस्ताङ्गुलिविकल्पनम् ।
[4]उत्तानाङ्गुलिसङ्कोच आवाप इति संज्ञित ३२॥

---

इति । (भ० ना० अ० २९-१८-२०) तन्निर्णेतव्यम् । तत्र क्रिया चात्र परिच्छेदोपयोगिनीत्युक्तमस्माभिः । सा च गान्धर्वे विशिष्टैवेति दर्शनात् । यथाक्षरद्विकलचतुष्कलविभागोपयोगि तदुद्दिष्टानुवादकपूर्वकमाह । अ(तत्रा)वापोऽथ निष्काम इत्यादि ।

एतेषामेव वक्ष्यामि हस्ताङ्गुलिविकल्पनम् ।

इत्यन्तम् । ध्रुवस्य सर्वकलान्तर्गतत्वादुद्देश(शो)पूर्वोपादानमिति वामदक्षिणकरान्यतरप्रयोज्यत्वात् सशब्दत्वाच्च तज्जातीयशम्यातालान्तरमुपादान पातमार्गयोश्च वस्तुत उद्देश एवैत्याख्यास्यते । सन्नासाम्य......लोकस्य तावत् क्रमहेतुकमात्रा चतुष्कलमार्गस्यैव प्रचुरप्रयोग इति तदुपक्रमवादित(म)......प्रयोगस्य तस्यैव प्राधान्यमित्यावापादीनामानन्तर्यमथेत्युक्तम् । दत्तिलाचार्योऽपि

मनाथेते तु सर्वत्र कर्तव्य. स चतुष्कलः ।

(दत्तिलम् १५१)

इति परिभाषे । चत्वारो विकल्पा भेदा अस्येति (चतुर्विकल्पः) । तालात्मकक्रियासामान्यरूपो ह्यस्य पदार्थ । नि.शब्द इति । शब्दशून्य एव । एते चत्वार इति प्रयोज्या इतिकर्तव्यान्त निरूपणम् । शब्देन संयुक्त इति । अनेनापि शम्यादेश्चतुष्टयस्येतिकर्तव्यताशेष उक्त । तत्र हस्तक्रियेति परिच्छेदसुलभ उपायः । तयोर्हस्तयोः क्रियैव ताल इति सामान्यलक्षण तले भव इति कृत्वा । तत्र चाष्टावेव विभागरूपा(द्विचत्वारि)दक्षिणमार्गपर्यन्तोचिता इति भाव । आवापादिभिरेव क्रियाभि सकलाभिर्भवति । (यथा)ध्रुवकापेक्षया हि चित्रवार्तिकदक्षिणाना क्रमाद् द्वैगुण्याच्चाष्टगुणत्वम् । दक्षिणस्यैकक्रिया सकलात्मकतात्मकला विषयश्च ध्रुवकमार्गो ध्रुवस्यानीयत्वादिति वक्ष्यते । अत एवात्रापि चतुष्टयसङ्ख्येति क्रियाकलायेन परिमिततालकालकलितमेव दर्शितम् । तत्र केवलमदृष्टप्राधान्यभावाभावाद्यनादरेणाङ्गुलीदनाविरह्योपनत सुकरललितरुचिरकरक्रियात्मकत्व दर्शितम् ।

---

१. KSS. चेति ।
२. NS परे ।
३. KSS अथ NS चैव ।
४. KSS. सर्वाङ्गुलिसमाक्षेप.. ।

ध्रुवकापतिता चित्रे ध्रुवकासर्पिणी यथा ।
पताकापतिता चेति वार्तिके गुरवः स्मृता ॥

ध्रुवकासर्पिणी कृष्या वर्तिन्यथ विसर्जिता ।
विक्षिप्ता च पताका च पतिता चेति दक्षिणे ॥

इति । तथाऽन्यत्र ।

अङ्गुलिप्रथमावापो विक्षेपस्तर्जनीकृत ।
प्रसारणं कनीयस्या विक्षेपः स्यात्स्व(स्व)धोगतिः ॥
क्षेपः प्रो(त्)क्षपणं स्वयं वामके ।
अधोगतिस्तु विक्षेपस्तर्जन्यां तिसृणां समम् ॥
निष्क्रामस्त्वथ प्रवेशस्तस्तथोगतिः ।
एवमष्टौ समासेन मात्र(त्रा)भेदास्तु दक्षिणे ॥
प्राग्द्वय तथा त्वे वृत्तौ नित्यं चतुष्टयम् ।
प्राग्गतद्वितय चात्र . ॥

इति । गान्धर्वे स्वरप्रधानतया शम्यातालगणनायामनामिकाङ्गुलिस्पर्शनदेशावामदक्षिणकरविभागादभ्युदयिनी(दयी)ति नियता एवावापादयो दर्शिता । हस्ताङ्गुले क्रिया स्मकताल इति तद्विशेषाभिधानमेवावापादीनां विशेषलक्षणमित्युक्तम् । हस्ताङ्गुलिविकल्पनम् । तद्गताया क्रियाया हस्ताङ्गुलिशब्द उपचरित । हस्तस्य हस्तयो अङ्गुले अङ्गुल्यो अङ्गुलीनां चेति समास । एवकारेण ध्रुवकासर्पिण्यादीनामदृष्टहेतुकत्वाभावान्न लक्षणं वाच्यम् । परिच्छेदमत्र हि शिरःपरिवाहादिनाऽपि गाने सामान्यस्य च सम्यादिसिध्द्युदयात्मना क्रियता को दोष इति भाव । तन्न यत् टीकाकारैर्गानैव तत्पूर्वकत्वात् सर्पिण्याद्यपि सह गृहीतं भवतीत्युक्तं तत्प्रयासमात्रमेव । अत्र तद्विशेषलक्षणमाह । उत्तानाङ्गुलीति । जात्येकवचनान्तेन समास । तेन सङ्ख्यायामनैयत्यम् । उत्तानपदेनोर्ध्वाग्(ग्र)स्तिर्यक्त्वा(त्व)भ्युदास । सञ्जितमि(त इ)त्यनेनेदमाह । यत्रोत्पत्तिक्रमे यथाक्षरे द्विकलं ततश्चतुष्कलं इति व्यवस्था तत्र (चित्रे) इति व्याप्तिमर्यादा वा । ततोऽपि वृत्ते रूपमाह । तेन द्विकला तरव्याप्त्ययमपि तदधिकवचनम् । अत्र प्रयोगवशात् सम्पादकतया बीजतया म ततनतुल्यनिरूपणम् । तदेवभूतया करक्रियया वशनीय इति समयोऽदृष्टसिद्धि इति ॥३०-३२॥

निष्क्रामो[1]ऽधोगतस्य स्यादङ्गुलीनां प्रसारणात् ।
तस्य दक्षिणतः क्षेपो[2] विक्षेप इति संज्ञितः ॥३३॥

निवर्तनं च हस्तस्य प्रवेशोऽधोमुखस्य तु ।[3]
यदा चतुष्कलो योगस्तदा स्येष विधिः स्मृतः[4] ॥३४॥

निष्क्रामोऽधोगतस्येति । अनागतावेक्षणे तन्मयुक्तिरिति वा सूत्रेषु सम्भाव्य लौकिकव्यापारो(रा) वेदितव्यम् । व्यवस्थया वर्तित च । हस्तस्येति । अधोहस्तस्येहा पेक्षणीयम् । तेनाधोगतस्य हस्तस्य या अङ्गुल्यस्तासां साम्यमर्थात् मुष्टीभूताना यद् प्रसारणं स्वावयव...तलिकासयोगकारणभूतपूर्वोक्तसंकोचनक्रियाविपरीतरूप कर्म स निष्क्राम· स्यादिति । अस्यायमाशय । अक्षासरगतायां एव कलायां यद्वैतद्य- द्विकलसम्पादनमुक्त तन्निष्क्रमणमुच्यते । निष्क्रान्ता नटतीति यथा । तच्च समुचितेनैव वैताङ्गुलिनिष्क्रमणेन यथो(थोच्य)त इति । तस्य दक्षिणत क्षेप इति । तस्येति । प्रसारिताङ्गुलीकस्योत्तानभूतस्येति । तस्य ग्रहणं दूरस्थोत्तानत्वाद् वामस्यान्यथा निष्क्रान्ताङ्गुलीकस्याधोमुखस्य स्वदक्षिणपार्श्वेन विक्षेप इति स्यात् । द्विकलगता कला क्षिप्यते विस्तार्यतेऽनेनेत्यनेन सामयिकेनाभिधानेन सूच्यत इति संज्ञित(त)ग्रहणम् ॥३३॥

निवर्तनं च हस्तस्य प्रवेशोऽमि(धो)मुखस्य तु ।

अङ्गुलीनामिति वर्तते । अधोमुखग्रहणेन निष्क्रामवैपरीत्य प्रवेशनस्य प्रकाश्यते । अन्यथा दक्षिणतो निवर्तन प्रतीयते । तेनेत्थ प्रयोजनम् । निष्क्रामकालेऽ- धोमुखस्य हस्तस्य या अङ्गुल्य प्रसारिता अभूवन् तासां यन्निवर्तनं सम्प्रवेशन तत्पूर्वस्याव्यतिरिक्तसूचनायेद सामयिक विक्षेपवत् सज्ञामात्र विक्षेपाभिधानमित्याह । यदेति । योऽधिकाया कलाया अनुप्रवेश तत्प्रवेशेनैवोचितमित्यौचित्यमस्ति । चतुर्णा कलाभिनयाना विषयमाह । चतुष्कलो योगस्तदा स्येष विधिरिति । एकैव कला गुरु रूपा चतस्र कला विततीभाववशाद् यदा सम्पद्यते तदा एष आ(आ)वापनिष्क्राम- विक्षेपप्रवेशात्मको यथाक्रम कलाप्रमाणाऽभिव्यञ्जकश्चतुर्धा विधिरिति सामान्यरूप- लक्षण इत्यर्थ ॥३४॥

---

१ KSS अधोगत सव्यादङ्गुलीना प्रसारणम् ।
२ KSS क्षेपात् विक्षेप परिकीर्तित ।
३ इतोऽग्र काशीसोरिज पुस्तके 'कृत्वाङ्गुलीना' पद्यमधिकम् ।
४ KSS भवेत् ।

निष्क्रामश्च प्रवेशश्च द्विकले परिकीर्तितौ ।
[[1]आवापनिष्क्रामकृतो द्विकलो योग इष्यते] ॥३५॥
एषामन्तरपातास्तु पातसंज्ञा प्रकीर्तिता ।
[2]शम्या तालस्तु विज्ञेय सन्निपातस्तथैव च ॥३॥

---

निष्क्रामश्च प्रवेशश्च द्विकल इति । या त्वेकैव गुर्वात्मिका वा कलाद्वयपरिमाणं वैतत्यमेवेति तदा प्रथमकलाकालो निष्क्रामेण द्वितीयकलाकालप्रवेशेन व्यङ्ग्य इति सामान्यलक्षणम् ।

अन्ये पठन्ति ।

अ(आ)वापनिष्क्रामकृतो द्विकलो योग इष्यते ।

इति । तत्र व्याख्यातम् । पार्यन्तिको विलर्को भवेत् चतुष्कलात्मकत्वाङ्कामावादावापो-(पो) यदाऽतिव्याप्तस्तदाऽऽवापोऽन्योऽप्यत्र युक्त । तथाभूतपार्यन्तिकविततीभाव-सूचिते चात्रावनिक्षेपकलेऽत्र पार्यन्तकमवधिक सूचयत । तत आवापशब्देनोक्ते तयोर्निष्क्रामोऽपसरणं तदोपलक्षितमेव यदा विधिर्भवतीति तदा द्विकलो योग इति ।

अन्ये तु पूर्वशेषत्वेन श्लोकार्धमाहु । यो द्विकलगतो योगो निष्क्रामरूप स एवाहितो यत समाकुन्चनायतया च प्रवेशो विक्षेपसहित । ततो द्विकलद्वैगुण्याच्चतुष्कलोऽय विधिरिति । अत्र तु निष्क्रामो द्वे कले इति । ततो विशेषोऽनुवादाभावेऽपि स्यात् । प्रवेशस्य नामाऽपि न श्रुयत इति । न किञ्चिदेतत् ।

अन्ये त्वेककले भाष्यते यथा निष्क्रामस्तथा द्विकलनायामपि भवत्वावाप इति मन्यमाना यथाभूतमेवावापनिष्क्रामात्मकद्विकल मन्यन्ते । तेऽपि पूर्वापरग्रासमान्तर गुरुपरम्परालक्ष्यविरोधादुपेक्ष्या एव ॥३५॥

अथ तच्छब्दताविषयप्रदर्शन तावद् करोति ।

एषामन्तरपातास्तु पाठ(त)संज्ञा प्रकीर्तिता ।

इति । एतच्छेषा ये प्रकीर्तिताः शम्यादयस्तेषाम(मा)वापादीनामन्तरे समये प्रबङ्गे मध्ये च । एतदस्यापवादरूपतयेति । अत पाता उच्यन्ते । अनेन द्विकलचतुष्कल-विषयेष्वेतेऽपवादत्वाद्भूयन्तीत्युक्तम् । तथा येषामावापादीना यदन्तर कालपरिमाण तद् पात्यते ऊनाधिकभाव गम्यते येषु गुरुलघुषु तेषु ते पाठ(त)संज्ञा पादै (तै)स्त व्यवहार समयकरनिपतनस्वभावात् संज्ञा यत इति द्योत्यते(न्ते) पातोन्यन्त इति

---

१. KSS, NS do not read
२ NS do not read

[1]सव्यहस्तनिपात स्याच्छम्या तालस्य वामत ] ।।
हस्तयोऽस्तु सम पात सन्निपात इति स्मृत. ।।३७।।

---

यावत् । आवापादीनां चतुर्णामभिनयानामेकरूपैव कला परिच्छेदनीया द्विकलचतुष्कलभागयो सर्वत्र कलापरिच्छेदस्य सम्मतत्वात्यथाक्षरे तु नैवमिति यथाक्षरात्मा एककल पातानामेवे युक्त भवति । यथा च एते पातास्ते द्विकलस्य चतुष्कलस्य वा यदि योग शाश्वतो नास्ति तत्रेय परिभाषा । तदुपपत्तिलिङ्गत्व चास्या पाठे द्विकल इति तदाऽनन्तरपाठा । एषा निष्क्रमादीना मध्ये पतन्तीति ज्ञेयमिति परिभाषेयम् । तेन

शम्या तु द्विकला कार्या तालो(ऽपि)द्विकल एव च(म स्मृत ) ।
(भ० ना० शा० ३१ २६२)

इत्यादौ पूर्वरङ्गोक्ते भाविनि निशनिता शम्यादिप्रस्तारे लभ्यते । यत्र द्विकलचतुष्कलोपपत्तिर्नास्ति न तत्रेय परिभाषा । तदुपपत्तिलिङ्गत्व चास्ये चाद्ये पाठे द्विकल इति चेति । चतुष्कलमूलकल्यानुवृत्या द्विकलो योग इति पाठेऽपि योग इत्यनुवृत्यै तत् । त्रिशम्योपरिपातो इति (भ० ना० प्र० २९-८७) तथा तालस्त्रिकलस्तथा(स्था)द्वौ शम्यैककला (भ० ना० प्र० २६ ६१) इत्यादौ च तदुपपत्तिर्नास्ति । तत्रैवमान्तरपाठत्वम् । एतच्च दर्शित दर्शयिष्यते च ।।३६।।

एव पातानां विषयमुक्त्वा लक्षणमाह । सव्यहस्त सन्निपात(स्यनिपात स्यात्) इत्यादि । सव्योऽत्र दक्षिणो वामशब्दस्य निधानात् । निपात इत्यधोगमनम् । यनेदमुच्यते तत्र उदाञ्चमानागतेऽपि लक्षणादपिनोत्तपूर्वाच्च शब्देन सयुक्त इति वचनात् । तत्र तयोश्छोटिकापातस्यैवासाधारणो भवति । मुख्यतमा वा एव ग्राह्यो हस्तान्तरसयोगतो ह्रासो भवेद् द्वयोरपि साधारण. स्यात् । अन्ये तु सव्यस्योत्तानरवाभारतोचिते शब्दहेतुसयोगकारणत्वसन्निपातनमिति व्याचक्षते । एव तालोऽपि द्विविध शम्याख्याप्य शम्यापि । यद्यपि तालो हस्ततलनिवत्यत्वाद् दक्षिणदिग्घोऽभङ्ग. लघूचने शम्याया । यद्वा शमीत्यत्रार्य साधु । शम्येति व्युत्पत्तिकृतेन शब्देन तस्या अभिधानात् तलद्वयनिपातनस्य चासाधारणेन सन्निपतनादिति निर्वचनादनेन सन्निपातेन शब्देनाभिधास्यमानत्वात् परिशेषाद् वामहस्तसन्निपात एव ताल । सम इति । तुल्यकालमधोगमनम् । अनयोपतयोस्तिर्यक स्थितयो सम्मुखयोरुभयकर्मजशब्दहेतु संयोग । सम पात इति सशब्द समार्थ ।।३७।।

---

१ KSS does not read

[1]कला या त्रिविधा प्रोक्ता तस्याः पातो ध्रुवः स्मृतः ।
यथाक्षरस्य तालस्य स च गुर्वक्षरः(रे) स्मृत. ॥३८॥

---

तत्र ध्रुवपातस्य मूलभूतत्वं संज्ञाध्यायोद्देशे (अ० ना० ३२-२) प्राधान्याद् दर्शितम् । एतदध्यायपठितानुवादश्लोके तु शम्याताळादनन्तरमभिधानाद् वामदक्षिणाभ्यंतरकरप्रयोज्यता न तूभयसवात्वं प्रयोजनाभावादिति सूचितम् । सर्वथाऽलक्षणकरणेन तु यथाक्षरद्विकलचतुष्कलविषयोक्तपूर्वशम्यानिष्क्रामावाहिपा(वापा)दिमध्यपातित्वमस्य नास्ति । अपि तु तद्विविक्त एव । उपोहनध्रुवागतिरस्य विषय इति सूचितम् । तथा च वक्ष्यते ।

अथ तत्र मुखप्रतान(स्तं ताल)ध्रुवपातैरेव नियमितात्मा(त्मा)नम् ।
(अ० ना० ३१-१००)

इति । ध्रुवत्व यत्र गच्छन्ति तद् ध्रुवे(वमि)त्यादि च वदन्ति । दत्तिलाचार्येणापि

उपोहनस्याद्वैतस्याः (नं च तत्राद्य)स्मृतं ताल(चार्य)विवर्जितम् ।
(दत्तिलम् १६६)

इत्युक्तम् । अतो ध्रुवस्य लक्षणमाह ॥

कला या त्रिविधा प्रोक्ता तस्याः पातो ध्रुव. स्मृत ।

इति । इव(ह) तावत् कालस्य यस्य विपरिमाणो(णामो) परिमाणान्तरोद्देशाद् वैधाधपसर्पणं तदभिव्यङ्ग्योपलक्षणो नाम स एव प्रयत्नपरिच्छेदस्वरूपत्वात् समुदायात्मकत्वाच्चाम्यस्य कलापरिच्छेदव्यवहारस्य प्राधान्यादनपेक्षिततज्जातीयत्वेन च स्थैर्याद् परमार्थितो ध्रुवकस्तथापि नासौ व्यवहार्य इति न तेनास्माकं प्रयोजनम् । ह्रस्वस्य तु व्यवहार्यत्वमतज्जातीयत्वं च निरवत्वात् । यथोक्तम् । अल्पीयसाऽपि यत्नेन शब्दमुच्चारितमिति । यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटमिति । वर्णाश्च ह्रस्वा एव । दीर्घादयोन्ति धर्मत्वादिति । तथापि न तस्य ध्रुवत्वम् । संयोगादिपरस्य तत्कालेन यस्य प्रतिभासाभावात् व्यञ्जनवल्लघुकालेन नास्ति व्यवहार इति गुरुकाल एव ध्रुव । तदाह । कला या त्रिविधेति । यस्या कलाया द्वैगुण्यक्रमेण चित्रवार्तिकदक्षिणमार्गगतत्वेन त्रैविध्यमुक्त तस्या इति । लघुरेव(क)कलात्मकत्वात् कालपरिच्छेदमयी तमाश्रित्य य पातश्छोटिकापूर्वकमधोगमन तस्या लक्षणभूता(या) ध्रुवो

---

1 KSS कला या त्रिविधा प्रोक्ता तासा पातो ध्रुव स्मृत ।

नाम लक्ष्यभूत स्यात् । अतो ध्रुव स्वयं (पा० बा० पा० १४०१) इति स्मृतिलक्षणमावो ह्येत्थमेवावतिष्ठते । सामानाधिकरण्यनिर्देशात्तु लक्षणप्रायेण छोटिकाशब्देनास्य पुनरुक्तिरित्यतो लभ्यते । पूर्वत्व चास्य विशेषणत्वादेव गम्यते । शाक(शाक)शानावलम्बनत्वेऽपि विशेष्ययोरेकविकल्पग्राह्यत्वे वृत्तेरौचित्यस्य च विशेषणस्य पूर्वनिपातात् तस्यैवोचित पूर्वत्व युक्तमिति छोटिकाशब्द एवोचितोऽत्र न तालशब्द इत्यभिप्रायः । अन्ये तु दियोगे तु पञ्चमीप्रकरणासच्छब्दग्रहणमाहु । पातात् पूर्वं स शब्द स ध्रुव इति । सर्वं चैतद् व्यक्तम् । या लघ्वक्षरकालमध्ये छोटिका शब्दपूर्वक हस्तपतनमाश्रित्य वामदक्षिणविभागो ध्रुवपात उच्यत इति ।

ननु यत्तु लघुपरिमाणत्वात् कथ ध्रुवत्वम् । गुरुकालो ध्रुव इत्युपपादित इत्याशङ्क्याह ।

यथाक्षरस्य मालस्य स च गुर्वक्षर.(रै) स्मृत ।

इतीह गुरुरेव ध्रुव । तस्य केवलमर्धमात्राविश्रान्त्या विना प्रयोगान्तरगमन न सम्भवति । सर्वत्र हि विशेषान्तरावगाहेन मध्ये(ध्ये) तदुभयविशेषशून्यविश्रान्तिसम्भवो विशेषस्ताले तदवधानादेवोच्यते । तालज्ञश्चाप्रयासेन मोक्षमार्गमिति (याज्ञवल्क्यस्मृति ३-११५) । तेन गुरुद्वये मात्राचतुष्कात्मनि समीहय मात्राकालो विश्रान्तिरिति । एव कालपरिमाणकला व्याख्याता । या च पञ्चमी मात्रामध्ये श्वासविरामादिविश्रान्तिसिद्धये शून्यरूपैव तावद्गीता(त) माद्यं (च) क्रियते । चतुर्भि स्वरैश्चतुर्भिरेव च मात्राविशेषैर्गान यादा च विदधते । गीयमान यदवगन्तव्य व्यञ्जनयोगाद् वाद्याक्षरमवश्यम्भावि हकारादिव्यञ्जनवशाच्च । तत्रापि सा पञ्चमी मात्रा चतुष्कलान्मस्फुटतयाऽन्तर्वाहित्वेन भात्येव । स्फुटा न च । सा हि व्यञ्जनकालानवभास उच्यते । न त्वनवभासपूर्वा अस्य भाग इत्यनयोरस्युच्चारणे वादने वा स्वसंवेद्य एव कालभेद । अत एवास्फुटावभासविलक्षणस्फुटाभासतत्त्वरूपतामाय लक्ष्ये स्फुटा एव । ववचन पञ्च मात्रा वाद्याक्षरेषु लक्ष्यते(न्ते) । यथा खण्डकेट टिट्टुटु चचुचाचा गिगिगिगिगि इति । यद्यपि त(ता)नप्रसा(स्ता)रे लघुत्वमस्य तथापि चित्रापेक्षया स । ध्रुवकाश्रय तु गुरुत्वमेव केवलमत्र विश्रान्त्यभावात् । प्राणायामवन्निरन्तरवाहित्वाद् गात्रवादकयो प्रयत्नविशेषोपयोग । खण्डके टटिट्टुटौ स्वत्र विश्रम्यैव द्वितीयो लघु प्रयुज्यते । मुट्टिटिहसनोति विश्रान्तिकालस्यैव.. पञ्चलक्षणसिद्धये चटुलाद्या गिगिगिगिगि इत्येतल्लघुप्रस्तारादिकामात्रलघुद्वयोचित कालविशेषावधि शून्यकलोपक्रम गिगि इतीयता मात्रान्तरेण लघ्वन्तपूरण ततो विरत् इति गुरुत्वे मात्राद्वय विश्रान्त्या च मात्रे त्रिमात्रायोगिभिन्ना यो इति(रिति) मात्रासम्पर्केण मात्रादशरूप भवति । एव तु चतस्र एव वाद्याक्षरमात्रा । अत्र स्फुट एव

विभान्तिकाल । यथा हेलाकुटिलावो ग्र विग्रम्भमस्य. तुङ्ग हिङ्गमगडव्ययस्मटिकविद इत्यादौ । एव स्थिते गुरुरेव यद्यपि ध्रुवस्तथापि गुरौ ग्र इत्युदिते गीयमानेऽवश्य गीतवद्यादेवाकर्षणेन भाव्यम् । आकर्षणं च सूप (ष्टि)प्रलयवदुच्चारणमकालमेवेति शक्यं नियन्तुम् । ध्र(आ)वापादीना कियदा(द)पकर्षणं शम्यादे कियत्पात चित्राविवधादिरयुक्तौ कि चित्रे(क)कला वार्तिके दक्षिणे वेति मूले पर्येष्यमाणे ध्रुवागान एवोपलक्षितकान्तत्वान्न नियमे हेतु । अत एव ध्रुवपातनियन्त्रितकलाकलास(लित) स्वाभावत्वात् तन्मार्गोऽपि ध्रुवक इत्युक्तो मूलभूतश्च । दत्तिलादिभि प्रथममार्गायोद्दिष्टमूल तेषा (प्रथ मार्गा य उद्दिष्टास्तेषा मूल) ध्रुव इति (दत्तिलम् २४०) । तेन ध्रुवकद्वय चित्रेत्यादिनियमलाभ । मुनिना चैतद्ध्रुवकाभिधानमूलमार्गसिद्धये *निमेषा पञ्चे (अ० ना० ३१ ४) इत्युपक्रम्य । द्विमात्रा स्यात् कला चित्रे (चित्रे* द्विमात्रा कर्तव्या) (अ० ना० अ० ३१-७) इत्येवमायुक्तम् । अन्यथा निमेषवश मात्रा स्यात् कला चित्रे द्विगुणा वार्तिक इत्यादि ब्रूयात् । निमेषा पञ्चवे—(अ ना० ३१ ४)त्यादिनिबन्धनमूलादेव ध्रुवत्व लब्धमिति मार्गचतुष्क सिद्धम् । तदनुसारेणैव बिन्दुद्रुतलघुगुरुप्लुतव्यवहारो लक्ष्यवेदिभि कृत एव । एतदाह । यथाक्षरस्येत्यादि । (द्वितीय) चच्चत्पुटचाचपुटेत्यादेर्यथाक्षरस्य तालस्य ये [illegible] गुरुरूपलक्षिते अक्षरे चच्चदिति पुट इत्यादौन स ध्रुवक । *तस्काल लित्वा त्रिवेदर्षमात्रा स इत्यत्रापि ।* अत एव तु लघुत्वात् द्वे मात्रे । एव द्वितीयेऽपि चकारे तस्य च ध्रुवस्थानकस्य न पृथक् कला । साहित्येन हि पूर्वो लघुर्गुरुत्व प्राप्त इत्येव । अन्तर्यामिस्थानीयत्वात् मुक्तस्फुटारवतश्चो ह्यमात्रा ध्रुवकला । तत्रेह कलेति परिच्छेद्यापरिच्छेदेषु त्रिष्वपि मुनिना प्रयुज्यत इति दर्शयिष्याम । नियतकालकलासम्पातस्य मार्ग उच्यते । परिच्छेदोपयोगिक्रियामात्रपात इति ध्रुवाया आतोद्य एव मार्गाद् ध्रुवकादि । एतस्मिन् गुर्वक्षरे सति गीयमानक्रिये किमविश्रम्यतामिति पुनरपि ध्रुवकस्य मूलमात्रपात(त) इत्याशङ्क्याह । स्मृत इति । स्मरण स्मृत तत्रास्तीति । एतदुक्त भवति । यथा (चित्रतो) वार्तायामतश्चतुर्गुणा देहीत्युक्ते स्फुटस्मरण न भवति । एतदेव त्वन्यद् देहीति स्फुटमेव स्मरण भवति । एव नियता छोटिकाशब्द कुर्वतावचेव पातन हस्तस्येति स्फुटमेव स्मरण भवति । ध्रुवो मूलभूत इत्युच्चारण एव त्रिगुणम् । एतत् सप्तगुणम् । एतेन पञ्चगुणम् । हस्ताङ्गुल्या कृत्वा ना(दा)दिक कुर्वीतेत्युदन्तमनुस्मरण भवतीति ध्रुव एव मूलभूत । तेन परमार्थत एको गुरुर्ध्रुवो भवति । अत एकगुरुकालनिरन्तरचोटिकापातपरम्परात्मा बलीति कदापि च ध्रुवपात एवोच्यते । अक्षरानुसारि-

यथाक्षरकृतैः पातैस्तालो[1] ज्ञेयो यथाक्षरः[2] ।
गुर्वक्षरैश्च विश्लिष्टैः स एव द्विकलो भवेत्[3] ॥३९॥
[4]द्विर्भावाद् द्विकलस्यापि विज्ञेयोऽथ चतुष्कलः[5] ।
त्र्यश्रश्च चतुरश्रश्च षट्कलोऽष्टकलः स्मृतः[6] ॥४०॥

त्वाच्चात एव यथाक्षरत्वं भवति । एव(ष) एव च गभीराभिप्रायो मुनिना गुर्वक्षर इति प्रथमाद्विवचने सप्तम्येकवचने च श्लिष्टं प्रयुञ्जानेन प्रकटितः इत्यलं प्रकटितलक्ष्य-लक्षणोपलक्षणमित(र)जनहृदयावर्जकेन बहुना प्रसक्तानुप्रसक्तप्रसङ्गेन । गुर्वक्षरः स्मृत इत्यन्ये पठन्ति । गुर्वक्षरस्मृतस्मरणं यत्र तु नानुभवपूर्वकं च तदिति द्वितीयमनुभूय-मानमपि लभ्यत एव ॥३८॥

एवं कलापातस्वरूपं इति निर्णीय यदर्थमेतदुक्तं तद्यथाक्षरादिपूर्वोद्दिष्टं लक्षयितुमाह । यथाक्षरकृतैः पातैरिति । यावन्त्यक्षराणि तावत्सङ्ख्याकैस्तथाऽक्षर-सदृशकलोपेतैरिति बाहुल्याभिप्रायेण । उद्दिष्टे हि यथाक्षरे निष्क्रामोऽप्यस्ति । अनति-वृत्तौ सादृश्ये च यथाशब्देनाव्ययीभावः । तेन चच्चत्पुट इति चतुर्भिः पातैर्गुरुत्रयप्लु-प्लुतकृतकालैर्यथाक्षरः चच्चत्पुटः भास्तेहत्र परत इत्युक्तम् । एवं चाचपुट इति वाच्यम् ।

गुर्वक्षरैश्च विश्लिष्टैः स एव द्विकलो भवेत् ।

केचिदक्षरकृतस्य विश्लिष्टत्वं स्यादित्याशङ्क्य कलासगुरुप्रस्तारात्मककलमभिप्रेत्य तदुक्तमिति व्याचक्षते । तेन गुरुषु चचर्षु त्रिषु षट्सु पञ्चसु स्थापितेषु विश्लेषो यदा क्रियते तदा सप्तकलवद् द्विकलनवद् द्विकलविरामस्य प्रकृतितादात्म्येनावभासो यथा तदेवेदं काष्ठं भस्मेत्यादावपि स एवेति निर्देशः । स तु कथम् । विश्लिष्टैरित्याह । विभावातीतैः श्लिष्टैरिति । यावद् द्विकपञ्चकमतीतं वैगुण्यं द्विर्भावशब्देनोपलक्षितं तस्यैकस्य पुनरावृत्तिरेकद्विकलस्यापि गुर्वक्षरे विभागाद् द्वैगुण्येन विततया श्लिष्टैः स एव यथाक्षरश्चतुष्कलः । अव्यवहिते कार्येऽपि कारणतादात्म्यकापदेशात् तदेवेदं क्षीरं तक्रमितिवदेकैव कला द्वे चतस्रश्च यत्र भवति स द्विकलश्चतुष्कलश्च ॥३९॥

एतदाह ।

द्विर्भावाद् द्विकलस्यापि विज्ञेयोऽथ चतुष्कलः ।

इति । अन्ये त्वाहुः । विशिष्टैर्द्विकलस्तत्र विश्लेषो विभागपदेन दत्तश्चतुर्गुरुप्लुतविषयमेव

१ NS तालो ।
२ KSS यथास्थित ।
३ NS स्मृतः ।
४ NS द्विर्भावा द्विकलस्यात्र KSS द्विकलस्यैव ।
५ इतोऽग्रे सार्धचतुष्टयश्लोकमधिकं का० पुस्तके ।
६ NS तथा ।

सम्भवति । तयोरल्पीयसेति न्यायेन विभागासम्भवादनेन गुरोर्वि(र्वि)भागे द्वौ लघू प्लुतस्य त्रयो लघुरविभक्त स एव । तदुक्त दत्तिलेन ।

गुरुप्लुतावपि हित्वाथ द्विमात्रान् परिकल्पयेत् ।

(दत्तिलम् ११०)

पादभागादीनि त्रीणि हित्वैव मात्राकालत्वद्विकलचतुष्कल न प्राप्तमिति । (अथ) ये च ते विश्लिष्टात्मानो लयवस्ते गुर्वक्षरस्वभावकलापरिमाणा कर्तव्या । लघुर्यद्यपि स्वात्मनि विभागाभावान् न विश्लेष्यस्तथापि समयन् नत एवासौ विश्लिष्टरूपत्वे-ऽस्यापि गुरुत्वमेव लभ्यम् । एव द्विकलस्य चतुष्कलतापादनेऽपि मन्तव्यम् ।

ननु स्पष्टमेव कस्मान् नोक्तमेताभिर्गुरुकलाभि षड्दशभिश्चतुष्कल इति । नैवम् । विभागसिद्धेर्ह्यर्थेन भवति । तथा च मात्राविभागा । चकारपदेनागममात्रेऽपीति वचन वस्तुविभागश्च । एतच्च गीतकलक्षणे स्पष्टयिष्याम ।

किञ्च गत्यध्याये (भ ना प १२) गतेर्विचित्रकरत्वेनोक्तत्वाद् तदनुसारेण लक्ष्ये प्लुतगुरुलघुद्रुतकल्पना या चतुर्था साम्येन विशेषेण सूचिता तथापि यथाक्षरे तावद् गुरुलघुप्लुताना सम्भव । ततो द्विर्भावाद् द्विकलाद् द्रुतो लभ्यते । योगाक्षराणी-द्रुतलघुपूर्वं ततोऽपि द्विर्भावाच्च चतुष्कलाद् बिन्दुर्नाम द्रुतार्धभूतो लभ्यते । य मात्राख्या न लभ्य स एतदर्थमेव । य चाह स्वा कलेति ध्रुवकेऽपि विभक्त । एको हि मात्रे विभाज्यत्वादित्युक्तम् । तेन मात्राकालो बिन्दु द्रुतकालो द्रुत तद्द्वयकालो लघु चतुष्कलकालो गुरुरिति चेष्टसिद्धि । एतदाह ।

त्र्यस्रश्च चतुरस्रश्च षट्कलोऽष्टकल स्मृत ।

ध्रुवाणा च भवेत् ताल ।

इति । त्र्यस्र इति । यथाश्रित एव यत्र त्रय पाता । षट्कल इति । द्विकद्विगुण-लघुपात । चकाराद् द्वादशकल । तद्द्विगुणद्रुतपातश्चतुर्विंशतिकलश्चतुर्द्विगुणपात । तत एव नास्ति भञ्जन पञ्च । चतुरस्रोऽपि स एवविधस्तास प(प्र)सादाक्षेपान्तर-निष्क्रामादिगानेष्वस्ति । तत्र क इति चेदाह । त च वक्ष्यामि तस्वत इति ध्रुवाध्याये ।

ध्रुवाणां च भवे[1]त्तालस्तं च वक्ष्यामि तत्त्वतः।
कनिष्ठाङ्गुलिनिष्क्राम शम्या चैव ततो भवेत् ॥४१॥
कनिष्ठानामिकाभ्यां तु निष्क्रामोऽतो विधीयते।
ततश्च ताल कर्तव्य शम्या चैव तु पञ्चमी ॥४२॥
प्रवेशो[2] मध्यमाषष्ठ कर्तव्यस्तर्जनीकृत।
निष्क्राम सन्निपातोऽन्ते[3] नित्यमष्टकलो भवेत् ॥४३॥
एष युग्मे [4]कलापातविकल्पोऽङ्गुलिभिः कृत.।
कनिष्ठाङ्गुलिनिष्क्राम, प्रथमा तु कला भवेत्[5] ॥४४॥
शम्यापातो द्वितीया च तृतीया ताल एव च।
शम्या [6]ततश्चतुर्थी तु पञ्चमी तर्जनी क्रमात् ॥४५॥
षष्ठश्च सन्निपात स्यादेव वं षट्कलो विधि।
[एष त्र्यश्रे कलापातविकल्पोऽङ्गुलिभि. कृतः ॥४६॥

एव प्रसङ्गतो .. .....द्विकलचतुष्कलविषयो य पूर्वमुक्तक्रमो निष्क्रामश्च प्रवेशश्च द्विकले इति (भ ना २१ ३५) यदा चतुष्कलो योगस्तदा त्वेष विधिरिति (भ ना ३१ ३४) च (य)देव विभक्त ग्रन्थान्तर... .. ...स्तु निष्क्राम इति तत्प्रयोज्य इति यावत्।

अन्ये तु त्र्यश्र(स्त्र)चतुरश्रत्ये(स्त्रे)त्यस्यामुमर्थमाह(हु)। चत्र्यश्रो द्विकलत्वात् षट्कलश्चतुर(श्र)श्च द्विकलत्वादष्टकल स ध्रुवाणा गीतकादिसमुदायारम्भकाणां वर्णानाम्। यस्यास्तालो भवति तस्यास्त कनिष्ठाङ्गुलिनिष्क्राम इत्यादिना वक्ष्यामि। प्रसङ्गतश्चतुष्कलमपि हतुरत्र ध्रुवत्वात् स्थैर्येण या कला क्रिया ध्रुवमुच्यते। अङ्गिन्यवयवविभागनावयवरूपमेव यदङ्ग परमाणुवदित्याशयेन ध्रुवमङ्गमुच्यते। तदङ्ग ताल युक्ते गीतकादीनि व्याप्तानि न तद् द्विकल वक्तव्यम्। तत्र त्र्यश्र इति सामान्यलक्षणम्। द्विकल यावद्द्वागचतुष्काभ्या च चतुरश्रस्तत्र प्राधम्य कनिष्ठपाऽ-निष्पङ्क्य पादभागन्यत्यादौ यद्यपि मुख्य नियमादृष्टजपाङ्गुलिपर्य(न्त)कमपि शेषवत्तया न्यायादनाङ्ग इ(पि)त्याहु। कनीयसी हि प्रथमा लोके गणनायां वे(वै)दिके... . पर्णाया यजुषि ऋचि वा स्वरितप्रदर्शन कनिष्ठात आरभ्य स्वराणा कुर्वते। एव याव

१ KSS ताल NS ताले।
२ NS ह्यष्टमो षष्ठ। KSS मध्यमाङ्गुष्ठे।
३ NS सनिपातान्ते। KSS सनिपातेऽन्त्ये।
४ KSS NS कलापाते।
५ NS प्रथम तु कलो भवत्। KSS प्रवेशश्च तथा भवत्।
६ NS तत्र अत्र सार्धं पद्यमधिक च ॥

कनिष्ठाङ्गुलिनिष्कामः प्रवेशश्च ततो भवेत् ।
कनिष्ठानामिकास्थानं ततस्तालस्तृतीयक. ॥४७॥

शम्या तालश्चतुर्थो तु निष्क्रामो मध्यमाकृतः] ।
षष्ठस्तालस्ततो[1] ज्ञेयो निष्क्रामस्तर्जनीकृतः ॥४८॥

शम्याष्टमी ततस्तालो नवमी तु कला स्मृता ।
कनिष्ठिकाप्रवेशस्तु[2] दशमी तु दशा भवेत् ॥४९॥

निष्क्रामश्चैव तर्जन्या सवमन्तरमिष्यते ।
सन्निपातस्तथान्ते न कलाद्वादशके भवेत्[3] ॥५०॥

---

स्वयं(व)त्वेनान्यस्व पादभागस्य तर्जन्याऽभिव्यज्यते पादभागत्रय चच्चत्पुट इति प्राधान्यं कनीयस्यत् द्वितीयमनामया नान्यतस्तृतीयत्वेन न कश्चिदयं इत्यनाभिव्यक्तो-ऽस्पष्टसामर्थ्यात् तर्जन्येव गृह्यते । मध्यमा तु त्यज्यते । पञ्चपाणौतु षट् पादभागा. । तत्र चतुर्थंतर्जनीभिरङ्गुलीभिर्द्योत्यते । पुन. पुन प्राधान्याद पञ्चमे कनीयस्येवाङ्गुल्यन्त-राभावात् प्रतिष्ठेति । एके वदन्ति(मध्यमा)त्यक्त्वाऽन्यस्याभिव्यक्तौ.........तदुक्तं दत्तिलाचार्येण ।

आद्या द्वितीयमाद्यन्तात् पादभाग(गा)न्विदुः क्रमात् ।
कनिष्ठानामिकाय(यु)क्तमध्यमाद्दे(वे)शिनीकृतान् ।
अयं मध्यमहीनः स्यादाद्यन्ताधिक उत्तरः ॥
(दत्तिलम् १३६)

इति । विदुरिति क्रमादिति स्यादिति पदैरेवदाऽ्शमत्व सूचितम् । यत्र तु पातोपपाद-स्वेन गच्छति तत्र साङ्गुलिर्ध्वंज्यते ।

अन्ये तु तदङ्गुल्यङ्गुष्ठस्य हस्तान्तरस्य वा संयोगात् छम्यादिपातो विधेय इत्याहु. । एवं चतुष्कलेऽपि मन्तव्यम् । तदेतदाह । कनिष्ठाङ्गुलीत्यादिना प्रागुक्ता-ङ्गुलिभि कृत इत्यन्तेन । तत्र भाविपातानुसारेणावापनिष्क्रा(मा)दिषु वामदक्षिण-विभाग । तद्यथा । शम्याया भाविन्यां दक्षिणेनैव निष्क्रामो मध्याङ्गस्तुल्यप्रयोगे स्तु(तु)ल्य इति मध्यमपदलोपी तर्जनीनिष्क्राम इति सम्बन्ध ।

[उपसहरति । पञ्चस्वेव कलाना निष्क्रामादीना पाताना च शम्यादीना विकल्प प्रथमादिरूपत्वमङ्गुलीभिरुपलक्षणभूताभिर्निरूप्य द्विकलचच्चत्पुटद्वितीयरूपेण प्रवेशन-

---

१. NS तथा ।
२. KSS. प्रदेशस्तु ।
३. KSS. कलद्वादशके विधि । NS कलाद्वादशक भवेत् ।

एव त्वावापविक्षेपव्यवधानेन[1] पण्डितैः ।
विधिश्चतुष्कलो ज्ञेयः प्रागुक्ताङ्गुलिभिः कृत ॥५१॥
[द्विकलश्चतुष्कलश्च पादभाग- प्रकीर्तितः ।
चत्वारः पादभागास्तु मात्रेति परिचोद्यते ॥५२॥

---

सूचिका कला शम्यापातरूपा कार्या प्रवेशन तथैव सूच्यभिरर्थः ] एव सर्वत्र । पञ्चमी तर्जनीक्रमादिति । क्रमप्राप्तो(प्ते) निष्क्रामे तर्जन्यत्र युक्तेत्यर्थः । उपसहरति । एव व्यंश(व्यश्च) इति । प्रस्तार निश ताश निश ताश इति द्विकल चाचपुटम् । कलाद्वादशेति(शक इ)ति द्विकलपञ्चपाण्युपसहार । तदय प्रस्तार —निश ताश निश ताश निस इति ॥४०-५०॥

एव चच्चत्पुटचाचपुटपञ्चपाणीना द्विकलस्वरूपमुक्त्वा तत्रैवादिमध्ययोर्यथा-सङ्ख्यमावापविक्षेपौ यदि क्षिप्येते तच्चतुष्कलत्व भवतीति सक्षेपेणाह । एव त्वावाप-विक्षेपव्यवधानेनेति । एव लिखति । एष एवेत्यर्थ । यो(यौ) निष्क्रामप्रवेशादिकौ तस्यानिकौ वानिप्रयाप्रनिताताप्रेत्यादीनामन्यतयोपाधिरितिरि(तौ)होवत स पाद. । यदाऽऽवापविक्षेपाभ्या व्यवधीयते स्थानादपसार्यते तदा पण्डितै पूर्वानुसन्धानकुशलै-श्चतुष्कलविधिर्ज्ञेय । ततश्चावापेनान्यस्थानमाक्रम्यता निष्क्रामोऽपसार्यते द्वितीय-स्थान नीयत इति व्यवधानार्थ । प्रयोगस्य च व्यवधान विस्तरीकरणमिति यदा-(दा)वापयोगेन निष्क्रामस्य विक्षेपप्रयोगेन प्रवेशस्य च प्रयोगो व्यवहित । कार्य । मावापविक्षेपाभ्या तयोश्च व्यवधानमिति व्याख्यातम् । सर्वथा नावापविक्षेपौ निरन्तरौ निष्क्रामप्रवेशयोर्मध्ये(अन्ते आदौ वा क्षेप्यौ) इति मन्तव्यम् । तथा च दत्तिलाचार्यः स्पष्टमवोचत् ।

विन्यस्य मध्ये विक्षेपमावावा(वा)पमेव च । (दत्तिलम् १३४)

इति ॥५१॥

ननु द्विकले चच्चत्पुटे चत्वार पादभागा इत्युक्तम् । प्रोक्ताङ्गुलिविभागे तु चतुष्कले तद्द्वैगुण्यमत कथमुक्त प्रागुक्ताङ्गुलिभि कृत इत्याशङ्का शमयन् पादभाग-लक्षण व्याकरोति । द्विकलच(श्च)तुष्कलश्च पादभाग इति । तेन चतुष्कलेऽपि चत्वार पादभागा इति यावत् ।

ननु पादात्मा भाग । पादश्चतुर्भाग । तस्य विधि निर्णीय त्र्यश्रेऽपि चतुरश्रस्यैव प्राधान्य दर्शयति । मात्रालक्षण चत्वारः पादभागास्तु मात्रेति ।

---

१. NS व्यवधानश्च ।

चच्चत्पुटस्य तालस्य तथा चाचपुटस्य च ।
पञ्चपाणेश्च विहिता भेदा ह्येते पृथक् पृथक्] ॥५३॥
एवमेष[1] कलातालः समासात् परिकीर्तितः[2] ।
आसारिते वर्धमाने [3]गीतेष्वपि हि(सकेषु च)य. स्मृत ॥५४॥

---

तेनाष्टौ द्विकले चतुष्कले च षोडशकला इति मात्रा । तस्या अय तुर्यो भागः । त्र्यस्रेऽपि च प्रकर्षादौ मात्रा षोडशकलैव भवतीति । तस्याश्चतुष्कलविधिना स्वरूपलाभात् । गीतकादिवस्त्वात्मनेककलद्विकलाभावे प्रकरीगीतकत्वचतुष्कलत्वव्यवहार उपपन्नतान । त्र्यस्रत्व च तत्र तथाभूताङ्गपट्कायोगादित्युक्तचरम् ॥५२॥

न चैव त्र्यस्रचतुरस्रयो साङ्कुर्यादिभेदस्वरूपो भेदस्योक्तत्वादित्याशयेन समर्पयितुमाह ।

चच्चत्पुटस्य तालस्य तथा चाचपुटस्य च ।
पञ्चपाणेश्च विहिता भेदा ह्येते पृथक् पृथक् ॥

इति । यथाक्षरनिरूप(प्या) इत्यर्थ । उद्भटोऽपि यथाक्षरस्य चाचपुटस्यैव रूप क्वचित् प्रयोगाद् रूपभेदेनोक्त । एव सम्पक्वेष्टाको भेद पञ्चपाणेरेव । इत्येव च तयोर्न पृथग् द्विकलभावो लक्षणे लक्ष्ये च दृश्यते । इत्येवमेनत्तालाभिधाने सर्वमभ्याहारेणोक्त भवति । तेन यदन्यत्राप्युक्तम् ।

ऋचो वै ब्रह्मगीताश्च ब्रह्मणाभिहिता किल ।
वक्षेण पाणिकाश्चापि गाथा(था)वै कश्यपेन तु ॥
मातृभिश्च कपालानि सामान्युक्तानि नन्दिना ।
गीतकाधि(दि) तु सप्तैव नारदेनोदितानि वै ॥५३॥

तदिद रूपसप्तकमत्रापि नासङ्गृहीत भवतीत्याह । एवमेव(ष) कलाताल. समासादिति ।

षष्ठाष्टगुणपर्यन्त द्वात्रिंशच्चतुरादित. ।
ऋग्गाथा ब्रह्मगीताश्च कपालानि त्रयोदश ॥
पाणिकातिपाद साम तद्भेदेनापि च क्वचित् ।
मुख प्रतिमुख चैव द्वात्रिंशत् समुदाहृतम् ॥

---

१ KSS एव ।
२ KSS समुदाहृत ।
३ KSS गीताङ्गेषु च ।

गीतं द्वादशकं प्रोक्तं त्रिपुराविदहे यतः ।
अष्टषष्टिकलोपेता ह्येकैका पादिका स्मृता ॥

इत्यनेनैव सङ्गृहीत सर्वम् । जातितालो ह्यनेनैव स्वीकृता । यथा च—

स्याद् द्वादशकला षाड्जी षड्जोदीच्यवती तथा ।
मध्यमा रक्तगान्धारी कैशिकी षड्जकैशिकी ॥
इतरा षोडशभिश्च यथाऽन्ध्री धै(घै)वती तथा ।
गान्धारोदीच्यवा चान्या तथा गान्धारपञ्चमी ॥
मध्यमोदीच्यवाख्या(न्या)ऽपि तथा कार्मारवी मता ।
आर्षभी चैव गान्धारी तथाऽन्या षड्जमध्यमा ॥
द्वात्रिंशत्कलिका चापि नन्दयन्ती प्रतिष्ठिता ।
षडाभिः पञ्चमी ज्ञेया कलामान तु जातिषु ॥

तेषु च स्वररूपत्वेऽपि क्वचिदन्योऽन्यो प्राग्वदष्टकलविहित इत्याशयेन य(प)दयशो-(प)वत्तालयोजनं कार्यं गान्धर्वरूपतासिद्ध्यर्थमिति (न) केवल सप्तस्वरूपमत्राधिकम-दृष्टोपयोगि । यथोक्तम् ।

सकृत् प्रयुक्तो(क्ता)ऽपि हि नन्दयन्ती
यथाविधि ब्रह्महणं पुनाति ।
यतश्च तालोऽनुकलाङ्गमात्रः
... ... . . ॥

तेन विना गान्धर्वत्वमिति समनोचकलाधिवशेऽपि न तालस्य हानि । सप्त(मस)-दशाकलासारि(त)वद् । तद् सर्वमनेन सङ्गृहीतम् । तद् कथमित्याह—

आसारिते वर्धमाने गीतकेषु(च)यः स्मृत- ।

इति । न ह्यनेन ब्रह्मगीतादि व्यावर्तयितु शक्यम् । ननु युक्तम् । न चेह शास्त्रगेता-वल्लक्षणीयमात्रम् । अत्रा(त्र ताला) देरपि लक्षणदर्शनमुपलक्षणार्थमेव । मध्यतग्रयो-पादान युक्त न त्रयाणामिति । उच्यते । यावदिद जगति कालविजृम्भित तद् सर्वंगुवत पूर्वादेव तालमार्गाद् । तत्र तथा परमाणुचतुष्कात् गुणत्रयाद्व्यस्तोऽप्यवदयमेव । आवर्तकादिक्रमेणान्योन्याभिभवादिक्रमेण वा प्रसृतमिति स एव क्रम. प्राधान्याद्

[1][अथासारितकानां तु सम्प्रवक्ष्यामि लक्षणम्]
छेदश्च(मेव च)ञ्चत्पुटस्यादौ कृत्वा तु गुरुलाघवम्[2] ॥५५॥

---

स्वकण्ठेन वचनाह । इहाऽपि तथाविधसन्निवर्शेनावस्थान द्विधातध्यमधिकप्रक्षेपणा- दासारमित्युच्यते । आङ्मर्यादाभिविध्यो (अष्टा २ १ १३) । स च वैलक्ष्यात् तया सारणं स्थापन मर्यादाया च क्षेपण नाधिक्यमिति न तदासारितदिशा दर्शितम् । चच्चत्पुटपञ्चपाण्योर्मर्यादया स्थापन मार्गभेदादिना यतस्त प्रागुक्तस्य चाधिक्यस्य क्षेपात् । षट्कले च सर्वान्तर्भाव परिवर्तितादीनां च वृद्धिगमनमिति वर्धमानेन सूचितम् । अत्राऽपि चासारणं स्थितमेव । तथा विजातीयसजातीयबहुप्रकारविचित्र- शकलक्रमोतानभेदरूपवैचित्र्य गीतकमार्गेण प्रकटितम् । एवमधुना त्रिधाह्वेनासारित- क्रमेण समस्तजगद्वृत्ति भेदसूचनमित्याशयेन त्रयाणामेव प्राधान्येनोपादानं कृतम् । प्राधान्यादेव च वृत्ते पूर्वरङ्गतया तस्यैवोपयोग उक्त । गीतानां मद्रकादीनाम् । (भ ना ५ १३) इत्यादि । वर्धमान एवासारित प्रविष्टमिति त्रितय तावदिह लक्ष्यते निर्णीतस्य पूर्वरङ्गे प्रयोगात् । लक्षणं पाणिकादिर्बूपयोगो वक्ष्यत इति त्रयस्यो पादानं कृतम् । यथा च पार्थिवपरमाणुतया घटपटनीरप्रावाणं इति नैषामस्य रूप- साङ्कर्यमवान्तरभेदात् त्रिभेदभिन्नता । त्रित्वेऽपि गीतकवर्धमानासारितादीनामिति सर्वं सुस्थम् । किञ्च द्व्यश्रचतुरश्रादिकलाभिन्नौ (अनुगतिकाल) केवलमाह । वर्णानमक्रियासारितेष्वासारकृत्य स्थानेऽप्यस्य सञ्चारणं चतुरन्ते पञ्चपटे षोडश- कलघूने एककलतानमञ्चारणामासारणमात्रमिति सकलतालानुप्रवेशसहिष्णु- चतुष्कनचच्चत्पुटमात्ररूपत्वप्रधानमेतदिति । तदल बहुना ॥५४॥

तत्र ताण्डव(य)पत्र युज्यते (भ ना ५ १३) इति वर्धमानप्रयोगस्य प्राधान्यात् तदुपयोग्यासारितलक्षणं पूर्वमिह वक्तव्यम् । दत्तिलादिभिस्तु गीतकलक्षणानन्तर तल्लक्षणमुक्तमवयवयव(वावयवि)भेदत्वादिति । तल्लक्षणं प्रतिजानीते । अथासारित- कानां त्विति । वर्धमानानां बहिर्भूतानां वेत्यर्थं । प्रकर्षेण व्याससमासादिना तदाह । मेव चच्चत्पुटस्येति । ननु वर्धमानादबहिर्भूतस्य कनिष्ठासारितप्रसूतेरासारित- त्रयस्य लक्षणं वर्धमानबहिर्भूत किं लक्ष्य तत्र न सम्भवतीति वक्ष्याम तत्र चच्च- त्पुटस्यैव प्राधान्य पूर्वमुपदिष्टम् । तस्य यो विततभाव स एवात्रावितत्रिकविततभाव- श्चतुष्कलत्वेनेति षोडशकले तावदायात । तासां च सकलस्वरूपसंनिवेशमहत्वप्रति- पादन कर्तव्य नान्यदिति मेव चच्चत्पुटस्येत्यादिना दर्शितम् । तथाहि चच्चत्पुटस्य तावद्भेदो विभागश्चतुष्कलरूप षोडशकलात्मक । स हि छेद । एव तत्र

---

१ KSS does not read

२ NS तथा गुरुलघुप्लुतं ।

[1]ताल शम्या(म्यां)च ताल च शम्यातालौ तत परम् ।
एव एव द्वितीयेऽपि पञ्चपाणौ विधि स्मृत ॥५८॥

[2]प्लुतच्छेदे तु तस्यैव सन्निपात प्रयोक्तृभि ।
एव यथाक्षर ज्ञेय कनिष्ठासारित बुधै ॥५९॥

---

त्यादि । सर्वत्रग्रहण स्यानिवत्त्वावप्राप्तकलानामेतावच्छम्यादिकलावैविकल्पसमुच्चयगमनार्थं सर्वेष्वेतेषु षोडशत्वम् । यथावदिति । पाठक्रमेण चेदमित्य निवेशयेत् । किं तदित्याह । शम्यातालमित्यादि । पुनश्चैवेति । यस्यापि मुख्यथाक्षरावस्थायामय विविक्तस्तथापि वस्तुदशाया न प्राप्नोतीति पुनरस्याभिधानम् । न च क्रमात् नामवे (मानी) त्येवकार । यथापि चेति । अथ यमनन्तर पञ्चपाणेरादेशत्वेन न कृतस्तस्य पदाऽन्यमक्षर प्लुतरूपमत्र सन्निपात योजयेदिति सम्ब न्ध ॥५६ ५७॥

शिष्टासु पञ्चकलास्वपि ताल शम्यां चेत्यादि । द्वितीयेऽपि पञ्चपाणा विति । विकाररूप इत्यर्थं । एव एवेति । य प्रथमे वस्तु यथाक्षरे सन्निपातमित्यादि ॥५८॥

एव षोडशैव कला आसारितस्य स्वरूपम् । या तु सप्तदशकला सा अधिका वा पात । तस्मात् तत एव मध्यमज्येष्ठदशाया तासामेव द्विगुणानामिति न त्यागा इति वर्णयति । प्लुतच्छेद इति । छेदे ग्रहणे प्रयोक्तृभिरिति प्रयाग । एवमितिकर्तव्यतातच्छरीरमाक्रामति । यथा परमेश्वरवन्दनप्रयोगे एव क्रम । तच्चरणोपरि निजशिरोनिवसनम् । न तु तावता तच्छिरस्तदङ्ग मे(वे)ति । एवमपोहनमप्यक्रमरूपोनेतिकर्तव्यतारूप मन्तव्यम् । येनोपक्रमोपसहारवच्च (च) षोडशकलाधम एव मन्तव्य । एतदुपसहरति । एव यथाक्षर ज्ञेयमिति । एवमिति । परिदृश्यमानविकाररूपयोगम् । यथाक्षर प्रकृतिदशोचितचतुष्कलरूपम् । तत्प्रकारभूतए(मे)तद् कनिष्ठासारितम् । अन्यद् द्विकलचतुष्कलरूपसम्भवाद् बालगम्य च भवति । प्राकृतरूपो मित्यासार । तदासार एवमङ्गस्वादित सरति । ज्ञेय लक्षणमात्रमयोपयोगि च । यतस्तस्याय प्रकार कनिष्ठासारिते ।

अत्र केचित् शम्याताल च इत्यादिक यथाक्षरस्याक्षरं इत्य त ग्र थमुपेक्षन्ते ऽस्य दर्शनपरमायत (तो) बध्यमानेऽसम्भविनोत्तानतया पौनरुक्त्य मन्यमाना । तत्र प्रथमो ग्रन्थ शम्यातालमित्यादिरपुनरुक्त एवेति व्याख्यातम् । ग्रन्थान्तर तु योज्यते ।

---

1 KSS शम्याताल च ताल च शम्यातालयत परम् ।
२. KSS प्लुतस्यान्ते कृतस्येष्ट ।

इह तावत् परमार्थतस्त्रीण्येवासारितानि भवन्ति । तथाप्येककलद्विकलचतुष्कल-प्रयोगोपपत्तिर्नाम्यता । अत एवान्यनालमध्येऽनुप्रवेशान्न तत् सम्भवतीत्येव तावत् त्रिधैवासारितक्रिया । तथा च पूर्वरङ्गे बहिर्गीतलक्षणे स्वकण्ठेन त्रयाणामेव नाम-ग्रहणम् । लयान्तर तु रागप्रयोगवैचित्र्यमात्रसम्भवम् । तच्च प्रयोगवैचित्र्य तात्का-लिकप्रयोगान्तरापेक्षया समाश्रयितु युक्तम् । अन्यथा द्विगुणत्वमक्षरलयादीनामवश्य भवापेक्षया चित्र इत्यादि लघ्वपेक्षया गुरोरित्यादिना च न्यायेन सर्वमस्तीति सर्व-(र्वं)लयान्तर भवेद् । तात्कालिकत्वप्रयोगान्तर यदपेक्षणीय तद्धर्मानान्तर्भाव एव भवतीति तदपेक्षया यदि नाम तथाप्यप्रत्ययेन वा मनसश्च नान्योन्यविक्रियमाणेन वा व्यवहारयोगेन बहिर्भावेऽपि लयान्तरव्यवहारः । अर्थतस्तु वर्धमानमुख्यस्तद्व्यवहारो युक्त । अत एव वर्धमानमासारितानां कारणमिति प्रतीयते । तथापि नवकला-विधानाविलगनार्थकलाऽन्त्यवर्ज ध्रुवकप्रयोगवैचित्र्य यदि नान्तर्भ(र्भ)विष्यद् तत कनिष्ठासारित स्याद् । तदभावेऽष्टकलो द्वितीयाप्रथमाकण्डिकाशाद्दित्येन । अत्रापि त्रिखण्डत्वमेव गीततालयो । द्वादशकला आद्यखण्डे । द्वितीये षट्कला । तृतीये चतस्र कला । आसां तालविधिमाह । तालस्त्रिकलश्चेति (भ ना २९-९१) । आदौ तृतीयस्या कलाया तालम् । एकस्या शम्याम् । द्वितीयस्या तालम् । द्वितीयस्या शम्याम् । द्वितीयस्या तालम् । अन्ये तु तालोऽपि ह्येककात्मक स्यादिति पठन्ति । ते शम्यानन्तरमेव तालमाहु । तृतीयस्या सन्निपातम् । शेष तु विश्र इति परिपाट्या द्विकलपादभागानुसारेण युता । पितापुत्रकश्च षट्पूर्व (भ ना २९-९२) इति द्विकल एव पञ्चपाणि । चच्चत्पुटस्तथा द्विकल एव । तेन नीप्रताप्रशतादसतानिप्रतिस-पसतिस इति केचिद्व्याचक्षते । अत्र क्रमादय शब्दा मा(सा)रणार्थे वर्तयितव्या-स्तावत्य यो(ऽवन्तिमो)ऽस्ति तत्र मध्य च विकलोचितेन पूर्यते । ननु चाचपुटच-(श्च)तुष्कलोचितेनेति प्रमाणाभाव । यद्पितापुत्रकोऽत्र द्विक (भ ना २९ ९२) इति प्रकरणे प्रमाणमिति चेदन्योन्याश्रय । द्विकलो द्वि पञ्चपाणिरिति च त्रिकलश्च सन्निपात (भ ना ३१ १६६) इत्यतोऽनन्तर भूम एवमिति बाधकत्वे त्रिकलश्च सन्निपात (भ ना ३१ १६६) इत्यतोऽनन्तर पितापुत्रक च(कश्च)षट्पूर्व (भ ना २९ ९२) इति च न प्रयोजनम् । तथा चासारितेषु चच्चत्पुटपरिवर्ते शम्यादी द्वे(द्वौ)च पञ्चपाणियुताविति (भ ना ३१ ९५) वक्ष्यति । द्वात्रिंशति(त्) कला-स्सङ्ग्रारतीये यद(दा)पदगणविभागा । तस्मात् तालस्त्रिकलश्(श्च) (भ ना २९ ९१) इत्यादौ । त्रशम्योपरिपाणं विति (भ ना २९ ८७) निरन्तराये कलाद्वादशके पाता ।

यथाक्षरस्याक्षरैश्च तान्पातान्निबोधत ।
[1]चत्कारे तु प्रवेच्छम्या द्वितीये[2] ताल एव च ॥६०॥

---

शम्याताश ताताश्च ताताशदम् । तालो द्विकलश्चेदिति(श्चेति)तु (भ ना० ३१ ६१) पाठे सनि(पात)द्वयम् । अत्र त्वन्ये तु तमेकेनैव सन्निपातेन भार्य(व्य)मिति । यदि सा विशालपरिवर्तक्रमेण न स्यात् कुतो लयान्तरम् । एवं द्वितीयाचतुर्थ्यया साहित्यात् तत्पूर्वकण्डिकाप्रयोगे मध्यमयष्ठयोरुद्भव इति । तथाऽऽसारितानि यदि भवेयुस्तस्य परिणामापेक्षया कण्डिकाविभागस्य तदभावेऽफल । द्वितीया च(वृत्त) कथ दश परिवर्ता । एकस्मिन् मूलवृद्धिकृत कलापरिवर्तकलावृद्धिभ्यां साहित्यात् कृत वर्धमानमित्यनयोर्बीजाङकुरवदन्योन्यव्यंजकत्वात सारितासयस्य वर्धमानस्य . अनयोर्वर्धने । इह तदेव स्थिते वर्धमानान्तर्गते आसारितविधावुत्पत्तिसिद्धये तावद्वर्ण्यते ।

प्रथमां कण्डिकां कृत्वा बालतालप्रयोजनम्(जिताम्) ।
अग्निमार्धकलाहीन (कुर्यादेव) कनिष्ठिकम् ॥
द्वितीयां कण्डिकां कृत्वा(प्रथमा सकला यदि) ।
योज्यते पूर्वतालेन तदा(तत्)स्याल्लयान्तरम् ॥
(भ ना ३१ ८१ ८२)

इत्यादितश्चैतावतैव कनिष्ठलयान्तरितरूपसिद्धि । बालस्य हि यस्ताल शम्यादिचच्चत्पुट इत्यादि । स एवाष्टासु विभागतासु । ध्रुवकाया षोडशीकृताच्च तेन तुल्येन ध्रुवक्रमेण युक्तासु न पुनर्गुरुलघुप्लुतकोट(ट्ट)ने ॥८६॥

नियममाह ।

यथाक्षरस्याक्षरैश्च तालपातान् निबोधत ।

इति । च एवकारार्थे । तदयमर्थ । यथाक्षरस्य कनिष्ठलयान्तरितासारमन आसारितस्यैव बालतालप्रयोजितामित्यादौ (भ ना ३१ ८१) ताम्(स)शब्दवाच्या पाता वक्ष्यन्ते तानक्षरैश्च चच्चत्पुटमुत्पक्षरगतगुरुलघुप्लुतैरेव संयुक्तान् निबोधत । न तु केवल गुरुरूपकलामात्रेण प्रदर्शयितव्या । अक्षरैश्च संयुक्तास्तेऽपि च प्रयोज्या इत्युक्ते चच्चत्पुटचाचपुटषट्पितापुत्रकोद्घट्टसम्पक्वेष्टाकाक्षरसा च बहूनामसम्भव इति न निश्चय कश्चित् प्रकरणात् चच्चत्पुटषट्पितापुत्रकयोलभिऽपि.... ग्राह्य ।

ननु पादस्याप्रामाण्यादिरेव प्रापकत्वेन प्रामाण्यादिति यदि क्रमव्यत्ययो भवती-

---

१ KSS, NS चकारे तु ।
२ KSS द्वितीयस्ताल एव च ।

पुकारे तु पुनः[1] शम्या र(ट)कारे ताल एव च ।
एवं [2]चच्चत्पुटो ज्ञेयः पञ्चपाणिरतः परम् ॥६१॥

[3][षट्कारे सन्निपातः स्यात् पिकारे ताल एव च ।
[4]ताकारे तु भवेच्छम्या [5]पुकारे ताल एव च ॥६२॥
त्रकारे तु भवेच्छम्या ककारे ताल एव च ।
द्वितीयोऽप्येवमेव स्यात् सन्निपातस्ततः परम्] ॥६३॥
गुर्वक्षराणां [6]विश्लेषादेवमेव तु मध्यमम् ।
[विश्लेषितानामथ तु द्विर्भावे या कला भवेत् ।
पातान्ते सा प्रयोक्तव्या यथावदनुपूर्वशः] ॥६४॥

---

स्थाणद्वय वचनेनैव क्रममाह । चका(त्का)रे तु भवेच्छम्येत्यादिना द्वितीयोऽप्येवमेव स्यादित्यन्तेन । द्वितीय इत्यवशिष्टे कलाषट्क इत्यर्थः ।

ननु सप्ताविशिष्यन्त इत्याशङ्क्याह । सन्निपातस्ततः परमिति । एवमाशा-रितस्यापि लक्षण(ण)कृत भवतीति केवलस्यकण्ठेनास्याभिधान वर्धमानान्तर्भाव एव । तदुभयस्य स्फुटत्व यदुक्तम्याथादित्यलं बहुना ।

तुरेवकारार्थे । चका(त्कार)र एवैयमनुक्रान्ता शम्या गुरावेवेत्यर्थः । एवं तावद् द्वितीय गुरावेव शम्या । पुन प्रकारे । पुनः शब्देन पूर्वतो विशेषो द्योतितः । तालस्त(ट)कार एव प्लुते । एवमेवेत्यन्योन्य योज्यम् । अन्ये तु

चका(त्का)रे तु भवेच्छम्या द्वितीये ताल एव च ।

इति पठित्वा चच्चत्पुटमन्वन्विनश्चतुर पातान् पठित्वा एव चाचपुटे ज्ञेय इति पठन्ति । पञ्चपाणेस्तु पुटद्वक्षरानन्तर चतुष्पातानाह । ते विशालायां माद्रत्व मध्य-मानामेव पठन्ति । तथान्तरमेव केवलमभिप्रेत्य तत्र द्वितीयस्यां कण्डिकायामष्ट-कलाया च चच्चत्पुटषट्पितापुत्रक इत्यक्षरयोजनया समाप्तया प्रथम विशालतो गृह्यते । तत्र च (चञ्चत्) इत्याद्यक्षरद्वयम् । तत्र चच्चत्पुटशेषभूतमेव कृतमिति पूर्वकस्तु पाठ । कनिष्ठलयान्तरोभयानुग्राहिप्रयोगमथोचित चेत्यलं बहुना ॥६० ६३॥

एवं कनिष्ठे लक्षिते मध्यमस्य लक्षणमाह ।

गुर्वक्षराणां विश्लेषादेवमेव तु मध्यमम् ।

---

१ KSS, NS
१ NS चञ्चुपुट जय पञ्चपाणें ।
३ NS षडारे ।
४ NS तकारे ।
५ NS प्कार ।
६ KSS विक्षपात् ।

[1]द्विर्भावान् मध्यमस्यैव ज्येष्ठमित्यभिधीयते[2] ।
मध्यमस्य विधानेन न्यसेच्च द्विगुणा कला ॥६५॥

इति । आदौ तावद् विश्लेष कार्य । स च योग्यत्वाद् गुरुप्लुतगत एव । तत्र गुरुणो द्विधा विश्लेषणम् । प्लुतस्य त्रिधा । तत्र विश्लेषण(णे) कृते द्विर्भावाद् द्विकलोचितेन पादभागविभाग (उक्त) दिशा कार्यं । कृते च पादभागविभागे द्विर्भावे द्विकलेोचिताऽनुपूर्वंश' परिपाट्याऽऽयाता निष्क्रामकला प्रवेशकला सा (वादौ) पादस्य यथाक्षरतालत(स)म इति तस्यान्ते प्रयोक्तव्या । यथावदनुपूर्वश इति । तत्रैव मध्यम गुरुणा सम्बन्धि । विश्लेषकला सर्वा अविश्लिष्टगुरुरूपा इति यावत् । अन्ये सन्निपातश्चानन्तर्भावाद् यथास्थित एव । एव च श्लोकयोजना । विशेषाद्वेतोर्मध्यमन्त च गुर्वक्षराणा सम्बन्धि । एवमेवेति विकारे प्रकृतिरूपप्रत्याभिज्ञानाद् तत्र च तालविधि । द्विर्भावे द्विकलविभागे भागरूपे कृते द्विर्भावे वा कलादे शब्दरूपा सा पातस्यान्ते प्रयोज्ये ते(ति) । तदय प्रस्तार । शनितानिशताशनिप्रनिताशनितानिशातप्रनिसनि प्रताशनिताशताप्रनितप्रताशम् । सन्निपातोऽन्त इति यचनाच्च । सामान्येन प्रनि इत्यादि प्रस्तीर्य विशेषतयान्त आदौ प्रयोज्य इत्येतदाह यथावदिति । ज्येष्ठे च प्रनिनिवि इति पादभागे प्रस्तार ।.... । ततो विक्षेपपात । गुरुणि च पादभागो लघुन्यय पादभाग । प्लुते कार्य इति स्थिते पादे चेवा(चैवे)तस्तत कला एव च क्रमम्नु(म उ)त्तरत्रानुवादे स्पष्ट इति ।

ये पूर्वमङ्ग(ङ्ग)लिकृता प्रवेशनिष्कामसतया गदिता ।

(अ ना ३१ १६८)

इति व्याख्यास्यते चैतदग्र एव ॥६४॥

अथ ज्येष्ठ लक्षयति । द्विर्भावान् मध्यमस्येति । एव तेषामित्यभिधीयते । गुर्वक्षराणाम(मि)तिवर्तते । मध्यलयानि गुरुणि तेषा द्विर्भावात् ज्येष्ठमभिधीयते इति । अतो हेतोश्चतुष्कलस्थादिति यावत् । अस्य तालविधिमाह ।

मध्यमस्य विधानेन न्यसेच्च द्विगुणा कला ।

द्विकलापेक्षया द्विकलश्चतुष्कलो विधि । तद्विषयाश्च कला अपि द्विगुण(णा) इत्युक्ता । तावचावापनिष्क्रामविक्षेपप्रवेशात्मिका उत्सर्गत । ताश्च मध्यमस्य । यद्विधानक्रम पातास्ते सम्प्रयोक्तव्ये (व्या इ)ति तेन क्रमेण न्यसेत् । तदय प्रस्तार ।
.... ............ .........................॥६५॥

---

१. KSS द्विर्भावो ।
२ KSS ज्येष्ठ इत्यभिधीयते ।

सन्निपातैर्निपातैश्च तथा वस्तु प्रकीर्तितम् ।
[1][समासलक्षणं चैव वदतो मे निबोधत] ॥६६॥

[अष्टौ तालास्तु षट् शम्या( · ) सन्निपातास्त्रयस्तथा ।
आसावि(रि)ते विधिर्ह्येष एकक परिकीर्तितम् ॥६७॥
चत्वारस्तु गुणा युग्मे ह्यथ षट् परिकीर्तिताः ।

द्वितीये पञ्चपाणौ तु सार्धा षट् परिकीर्तिता ।
अन्ते च सन्निपातः स्यात् सर्वेषामप्ययं विधि ] ॥६८॥

---

अत्र विभक्तभङ्गे सन्निपातस्य मुक्तकमार्गरूपत्वे चच्चत्पुटे चतुर्भि पञ्च-पाणिवर्गं षड्भि पातैरिति(त्यासारे) विंशति पञ्चपाणौ शम्ये(म्यै)वेति पुनः प्रथमशम्यायामुक्तकल्पना वजस्या पञ्चपाण्या(णौ)च सन्निपातमोक्ष पूर्वंपूर्वं ताव-विशेषत्व प्रवृत्तोर्मुक्तके च पञ्चपाणिशेषभूते सा प्रवेशकला षड्भवा तस्मात् पञ्च-पाणेरिति वक्ष्यते । ननु कनिष्ठ(ष्ठ)मध्यम ज्येष्ठमिति च या सप्ताशी निरूपिता सि शम्या कृताऽन्या कनिष्ठकेवला मध्यमज्येष्ठयोर्निपातसहिता । वस्तिस्वस्ति विशेष-रूपलक्षणमित्यर्थः । सप्ताशेन सामान्येन य( यल)क्षण तत् निबोधत ॥७६॥

अष्टौ तालास्तु षच्छ(षट् श)म्या सन्निपातास्त्रय इति । एव द्वैत्वमेकप तद्रूपमिति यावत् । मध्यावस्थाद् बलवत्त्वमिति न्यायादेव क्रम भावित । नात्र चच्चत्पुटपञ्चपाणिवृद्धि कर्तव्या । अपि तु वर्तनविधि कार्यो यथा । अष्टौ ताला इत्यादिना क्रमेणासारितरूपसिद्धिरित्युक्तमप्यन्येन ॥६७॥

केचि(कंश्चि)दत्र(त्रा) रिचत(म् ।) चत्वारस्तु गुणा युग्म वि(इ)ति (ना. शा. ३१ १०६) श्लोके आसारि(त)पदविधि स्पष्टस्मरणार्थं विधीयते । तत् स्थाने च एव व्याख्यास्याम ।

---

1 NS समासलक्षण । KSS does not read.

आसारितानां सयोगो वर्धमानकमुच्यते ।
उत्पत्ति लक्षणं चास्य वदतो मे निबोधत] ॥६६॥

---

अन्ते च संनिपातः स्यात् सर्वेषामप्ययं विधिः ।

इति केचिदर्धश्लोकमप्यत्र सन्निपातस्यौत्सर्गिकमन्त्यत्वं दर्शयितुं पठन्ति ॥६८॥

ननु नृत्तोपयोगे प्राधान्याद् यदुद्देशेन लक्षणं तद् वर्धमानस्यैव प्रथमलक्षणं वाच्यम् । अथासारितानां समूहात्मकं तदिति । एवमादौ वर्धमानस्य कथं पृथगुपादानम् । पूर्वमकारिते आसारिते वर्धमानाहितैव च चित्रतैत्याशङ्क्याह । आसारितानां सयोगो वर्धमानकमिति । इह च प्रत्येकमासारिते वर्धमानरूपता । न समुदितेषु । तथाहि । श्रीण्यासारितानि समस्तानि अयस्त्रिंशत् पञ्चषष्टिरिति पञ्चदशोत्तरं शतम् । कलानां वर्धमानं तु दशपरिवर्तक्रमेण चतुर्विंशत्युत्तरं शतम् । नवाष्टौ ततो नवाष्टौ नव षोडश द्वात्रिंशत् षोडशाष्टौ नवेति । यथा(दा) परिवर्तविहीनकण्डिकामात्रगणनं तदा यद्यपि पञ्चषष्टिकला त्वाद्येष्वा(माद्यास्वा)सारितरूपता सम्भाव्यते तथापि नवाष्टौ षोडश द्वात्रिंशदित्येवम्भूतस्य विच्छेदस्यात्राभावात् त एव रूपतामापाता केवलज्येष्ठासारिते । प्रभञ्जनपदकल्प्यमानरूपविशेषे वैचित्र्याभयसाबल्यादिभिः कण्डिकाश्रयत्वाद् वर्धमानाभयत्वं स्यात् । नन्वेवमासारितानां किमादौ लक्षणे नेत्याशङ्क्याह । सम्यग् विविनेत्य प्रयोगेणायोगः । परस्परसङ्गतिः । तत्प्रमाणं वर्धमानम् । तथाहि कनिष्ठे गीयमाने कण्डिकाद्वयं सयुक्तं भाति । तस्मिन्नेव कला नान्या कण्डिका । मध्यमे च त्रयम् । ज्येष्ठे चतुष्टयम् । एवं परिवर्तदशकण्डिकासम्मितिर्मासारितेषु भाति गगनतलभ्राम्यत्व(त्वा)च्छलसत्यार्थमिह व्याप्रादिवैचित्र्यन्यायेन ततोऽद्भुतत्वादासारितानामादौ लक्षणं कृतम् । वर्धमानस्य च पृथगेव वक्तव्यम् । तत्र नृत्ताश्रयत्वेनास्य भगवदुपक्रमेण प्रवृत्तिरिति पूर्वमुत्पत्ति वाच्येति दर्शयति । उत्पत्ति लक्षणं चास्येति । तत्रोत्पत्तिस्ताव(दा)दौ नवमिति ताण्डव [प्रयोगो] स्त्याभिरताण्डवाध्याये (भ० ना० अ० ४) दर्शित इत्यर्थः ॥६६॥

ननु नृत्त यदुपपादितं वर्धमानस्य किं तत इत्याशङ्क्याह । अथ भूतचरै (गणै)रिति । अनुचरगणैरित्यर्थ । तस्मिन् काल इति । नृत्यप्रयोगकाले । इदमि-

[1]निहत्य दानवं घोरं रुद्रेणामिततेजसा ।
नृत्तमुत्पादितं पूर्वं चित्रं ताण्डवसंश्रितम्[2] ॥७०॥

अथ भूतगणं सर्वैस्तस्मिन् काले महात्मभिः ।
वर्धमानमिव [3]दृष्ट्वा पिण्डीबन्धविभूषितम् ॥७१॥

परितुष्टश्च तद् दृष्ट्वा सपत्नीको वृषध्वजः ।
प्रददौ च वरं श्रेष्ठं सह देव्या गणाधिपैः[4] ॥७२॥

लक्ष्यलक्षणसम्पत्या[5] मार्गयुक्तिविधिक्रमैः ।
वर्धमानप्रयोक्तारो यास्यन्ति शिवगोचरम्[6] ॥७३॥

---

सुन्दरपूर्वासारितलक्षणतिप्रयोजनात्मकं दृष्टमालोचितम् । आलोचने हेतुः पिण्डीबन्धै-(बन्धै)रिति । तदुत्थानविधानभूतकरणाङ्गहारप्रयोगसहे( हिते )रिति यावत् । एतदुक्तं भवति । अगवा(भ वि )धया विचित्रं नृत्तमकार्षीत् । न चानुचरवर्गसमुचितं विचित्रं गीतमुत्प्रेक्षाच्चक्रे । विचित्रत्वादेव परिवर्तादिवैचित्र्यमुक्तम् । तत्र वैचित्र्यो त्प्रेक्षणेऽङ्गपरिवर्तादिवैचित्र्यमेव पर्यालोच्यमानं हेतुरिति भगवता वस्तुतो वर्धमान-मुत्पादितम् न तु . .....॥७०-७१॥

किमिदानीं तदत्र प्रयोगेण । यदुक्तं

वर्धमानमथापीह ताण्डवं यत्र युज्यते । (भ ना ४ १३)

इत्याशङ्क्याह । परितुष्टश्च त (तद्) दृष्ट्वेति । सपत्नीकः ------ परितुष्टः सन् तादृशमेव वरं ददौ ॥७२॥

कथमित्याह । लक्ष्यलक्षणसम्पत्येति । मार्गास्चित्रादयः । युक्तिर्योजनम् । परिवर्तात्मिका(त्मको) विधिः । यथाक्षरद्विसङ्ख्यातत्रिसङ्ख्यातरूपक्रमपरिवर्तनेच्छा सारितोत्पत्तिलक्षणा (णा.) । एतैर्लक्षणस्य च सम्पदा सहितैरुपलक्षणं वर्धमानं ये प्रयुञ्जते ते शिवगोचरं स्वाशास्त्रपरं श्रेयःप्राप्तिलक्षणं यास्यन्ति । भविष्यप्रयोगेण विविधफलानां चिर फलमुन्नततत्वकारणमित्याह । बहुवचनप्रयोगेण गातृवादकनर्त-कानां तुल्यफलत्वमाह ॥७३॥

---

१ इत पूर्वं काशीसोरिजपुस्तके "अत परं प्रवक्ष्यामि सवान्तरितलक्षणम्" इत्यादि १२५ श्लोका अधिका ।

२. KSS संश्रितम् ।

३. KSS सृष्ट्वा ।

४ NS देवगणाधिपैः ।

५ NS सम्पन्ना ।

६ KSS वर्धमान प्रयोक्तारो यास्यन्ति शिवगौरवम् ।

एवमेतन् [1]मया दृष्टं पिण्डीबन्धनिमित्ततः ।
अधुना तु प्रवक्ष्यामि लक्षणं शृणुत द्विजाः ॥७४॥

वृत्तिदक्षिणचित्रेषु मार्गेषु विनियोजितम् ।
द्विविधं वर्धमानं स्यात् स्वप्रमाणविनिर्मितम् ॥७५॥

अतालं च सतालं च वर्धमानं द्विधा स्मृतम् ।
चतस्रः कण्डिकाश्चैव तास्वप्यासारितानि तु ॥७६॥

---

एवमेतदिति । यतो भगवद्धरदारादेव(व)भूतं नृत्तमतो हेतो पिण्डीबन्धस्याङ्गहारप्रयोगवैचित्र्यात्मनस्ताण्डवस्य निमित्तेन तत्पूर्वेण रूपसमुत्पत्तये मयेति भरतमुनिनैतं नृत्तं दृष्टम् । पूर्वरङ्गे मयाऽऽलोचितमित्येवमुत्पत्तिमभिधाय लक्षणस्यावकाशमाह । अधुना तु प्रवक्ष्यामि लक्षणमिति । जाते पूर्वरङ्गे योगे युक्तमस्य लक्षणमित्यधुना(नेत्य)स्याभिप्रायः । तुर्भिन्नक्रमः । यद्यपि सम्पत्तिरम्युपयोगिनो(न्यु)क्ता तथापि भाष्याकारेण प्रतिनियोजितम् ॥७४॥

द्विविधं वर्धमानं स्यात् स्वप्रमाणविनिर्मितम् ।

मार्गानुभवसूचने आसारितानामाधाराधेयभावस्तावदस्ति । स (त)च न स्वतन्त्राणाम् । अपि तु वर्धमानरूपं गतानाम् । तथाहि । वर्धमानरूपादुन्मीलितं पञ्चषष्टिकले ज्येष्ठासारितान्तरमासारिते आधारभूते कनिष्ठादि(दि)ताऽऽधेयताऽवतिष्ठते ॥७५॥

नन्वेवमासारितानां द्वैविध्यमाधाराधेयभावेन वर्धमानमित्याशङ्क्याह । यस्मिन् वर्धमानरूपत्वे यत्प्रमाणप्रक्षेपोऽन्तर्भावे कण्डिकाङ्कलासम्याविभागश्च तेन यतो विनिर्मितमिदं द्वैविध्यं ततो वर्धमानस्यैव चतूरूपम् । न हि वर्धमानरूपत्वानासादने पञ्चषष्टिकले ज्येष्ठे आसारितान्तरमाधीयते । तस्य विदिग्दष्टतालयुक्तरयाख्यरूपासहिष्णुत्वात् ।

ननु वर्धमानतायामपि कथं तस्यैवाधारत्वम् । आधेयतश्चोपाधिकृतादभेदादित्याह । अतालम् । चो हेतौ । चेत्यादि । यतस्तस्य वर्धमानस्य यत प्रमाणं कालविभागस्तदतालम् । केवलसङ्ख्याभेदपरिच्छिन्नस्वरम्यात्विहितकण्डिकाचतुष्कमात्रं रूपं सतालम् । शम्या तालं पुनः शम्या (भ ना ३१.१४४) इत्यादि वक्ष्यमाणस्वरतालयुक्तं श्रुतम् । तस्मादाधाराधेयभावोपपत्तिः । एतदुक्तं भवति । कण्डि चले(कडि भेदने पा धातुपाठ १५८३) कण्डिका । चतुष्कलमात्रे पञ्चषष्टिकलेऽनु-

---

१ KSS पुरा सृष्टं पिण्डीबन्धाय शम्भुना ।

ध्रुवकेण कलाभिश्च कण्डिका देवकल्पिता ।
वर्धमानशरीरे तु क्रियते मार्गयोजना ॥७७॥

आद्या नवकला तु स्याद्दशाभिस्तत्परा स्मृता ।
दश षट् च तथा चैव तृतीया कण्डिकेष्यते ॥७८॥

चतुर्थी कण्डिका चैव द्वात्रिंशत्तु कला[1]( ) स्मृता ।
कलाभिरेव निर्दिष्टा कण्डिका वर्धमानके ।
केवल मार्गसम्भूतास्तालयोगाङ्गवर्जिता( ) ॥७९॥

---

लिखितस्वकतालवैचित्र्ये प्रभग्नपदमिति प्रश्ये चत्वार्यासारितानि पूर्वोक्तस्वकताल-योगेन प्रयोगे योग्यानि । तेन कण्डिकामात्रस्वाधारत्ताऽऽसारिततालप्रयोगसहितया-ऽपघे(ताऽऽध्ये)यता । अन्ये तुपाहुनाङ्गस्याय तत्र मुखतालमित्या( स्य )तालस्वमेक-त्वाद् प्रतिमुखादेकसतालत्वावङ्गवैचित्र्याद् द्विविधमित्याहु एतत्तु न युक्तमित्यन्नैव पश्याम । तत्र यद्वतालरूप लाल दर्शयति । चतस्र कण्डिकाश्चैवमिति । कण्डाना नियतविभागात्मिका कण्डिका । अन्ये तु काण्डमवान्तरप्रकरणमिति मन्यमाना दीर्घं पठन्ति काण्डिका इति । कण्डिकैव केवला न तु तद्गतशम्यादि । चतस्र एव नाडिका । अतो हेतोस्तावन्त्येव चत्वार्यासारितानि तत उपपन्नाधाराधेयतेति यावत् । तुर्विशेष द्योतयति । वर्धमानान्तर्गतानि यदि तानि तदा चत्वार्यन्तर्बहिर्भूतानि पुनस्त्रीण्येव । एतच्च प्राग् दर्शितम् ॥७६॥

न च कण्डिकाना स्वकतालाभावे स्वरूप एव लोप एवेत्याशङ्कयाह । ध्रुवकेण कलाभिश्चेति । देवेन कल्पिता भगवता योजिता । कण्डिका इति ताव‍न्मात्रमासा रूपम् । ततो ध्रुवपातयोग शम्यादिकलाविशेषयोगो वा ।

एतदुक्त भवति । नियतकालकला कला चास्य ...कण्डिका धमरूपा धर्म-स्थानीय(य ) तत्र पातयोग इति ॥७७॥

ननु शम्याद्यभावे रूपसयोजनबलेनोत्पत्ति क्रियते । कि तत् कण्डिकात्मक वर्धमानशरीर यत्रैव मार्गयोजनेत्याह । आद्या नवकला तु स्यादिति । दशपरिवर्त-दशाहा(द्या)सारितरूपतायां यद्यप्यनियतमादित्वमाभा तथापि कण्डिकारूपे प्रयोगे-ऽयमेव क्रम इति दर्शयितुमाद्येति तत्परेति चोक्तम् । तृतीया तथैवेति । तत्परे-त्यर्थ ॥७८॥

चतुर्थी कण्डिका चेति । तत्परेति यावत् । एवकार क्रम नियमयति । एव नवाष्टौ षोडश द्वात्रिंशदिति चतसृणा स्वरूपम् । एतच्चासारिते । आसा स्वरूपमुप-

---

१ KSS, NS द्वात्रिंशत्कलिका ।

एकद्वित्रिचतुर्योगात्ताभिरासारितानि तु ।
वर्धमाने प्रयुज्यन्ते मार्गतालाङ्कयोगतः ॥८०॥

[1]प्रथमां कण्डिकां कृत्वा बालतालप्रयोजिताम्[2] ।
अन्तिमार्धकलाहीनं कुर्यादेवं कनिष्ठकम्[3] ॥८१॥

---

सहरति । कलाभिरेवमिति । एवमित्युक्तसङ्ख्याभिः कलाभिर्मार्क्षिता मार्गेषु चित्रादिषु सम्भूतानां सम्भाव्यमानस्वभाव केवल कृत्वा निर्दिष्टाः शब्देन स्वेन रूपेणोक्ता( ) । अत एव लास्ययोगेन स्वैरङ्गैश्चासारितमुखप्रतिमुखदेहसंहरणविभागयोर्गैरासारिततालैर्वर्जितास्तत एतदवस्थाया मात्रारूपता उक्ता इति भाव. ॥७६॥

नन्वाश्रियत्व तर्हि कथमित्याह ।

एकद्वित्रिचतुर्योगात्ताभिरासारितानि तु ।
वर्धमाने प्रयुज्यन्ते मार्गतालाङ्कयोगतः ॥

इति । ताभिः कण्डिकाभिर्हेतुभूताभिरासारितानि जायन्ते । कथम् । योगात् । योगो मार्गतालाङ्कतः । ततो हेतो ।

एतदुक्त भवति । एकयोगा त्रिमात्राश्रिता कनिष्ठासारितोत्के(तके) ते(ता)-लेऽङ्केषु च योजितेषु कण्डिकासारिणि प्रयुक्त एव । द्वियोगान्तेष्वेव तालेषु लयान्तरम् । क्रिया(त्रि)योगात् वार्तिकाश्रितमध्यासारितोचिततालयोगयोश्चने मध्य । चतुर्योगाद् दक्षिणतः स्वोचितः । तालाङ्कनिवेशने ज्येष्ठम् । बहुत्वमावेशयनया त्वक्ष्यधर्मेयाह । वर्धमान इति । प्रयोगापेक्षा गगनतलविचरउअलदक्षकलवटनसिंहादिवुद्धिवदद्भुत-फुल्लकल्पा(ल्पा) तदानीन्तना चेयमासारितवुद्धिरिति चेत्(च,प्रयुज्यत(न्त) इत्यनेनोक्तम् । प्रयुज(न्ते) प्रयोगक्रमे सत्येव ज्ञायते(न्ते) इति यावत् । अत एव लक्ष्यमेव प्रधान न तु लक्षणम् । नेद मुष्कुम बुद्धावारोहतीति लक्ष्यसम्पत्तिरुक्तपूर्वापि पुनरत्र सूचिता ॥८०॥

नन्वेकयोगान्न कस्यचिदासारितसवाद पश्याम । एकत्र च कीदृशो योग इत्याशङ्क्याह ।

प्रथमा कण्डिका कृत्वा बालतालप्रयोजित(ता)म् ।
अन्तिमार्धकलाहीनं कुर्यादेव कनिष्ठकम्॥

इति । नात्र द्वित्रि(द्वित्रि)पट्कृत्वा कुर्यादिति वचनार्पितप्रयोग(ः) । किन्त्वयमर्थचि-

---

१. KSS प्रथम
२ NS प्रयोजितम् ।
३ KSS बालमासारित तु तत् ।

द्वितीयां कण्डिका कृत्वा प्रथमा[1] सकला यदि ।
[2]योज्यते पूर्वतालेन तदा तत् स्याल्लयान्तरम् ॥८२॥

(विच)त्रमार्गेण । नत्वहि(त्वादिमा)भिरकला हि कार्या । प्रथमा(मां)ख(क)ण्डिकानां (कां) कृत्वेति बुद्धौ गृहीत्वाऽऽश्रयत्वेनालम्ब्य । कस्येत्याह । बालेति । कनिष्ठासारिते यस्ताल उत्कटचच्चत्पुट( ) पञ्चपाणिर्वेत्येवरूपा चे(चै)वरूप । ध्रुवकानि मार्गं चतुष्कचगाथा(बाला)द्या-प्रयस्याभिव्येव(प)देश । ततश्च बाले ताले ध्रुवकताल । एवं चित्रमार्गगा न च कला प्रतिकलद्रुतमात्रेण द्वाभ्यां पाताभ्यां योज्य शब्दकालत्व यथा हि बालदशाया कनिष्ठकमभूत् । तद्वद् वधमानान्तर्भावे । एवमिति । इमा ध्रुवकमार्गाश्रयलयणावस्था(स्था) प्रा(ह्रा)स कुर्यात् । तत्रान्तिमा कला चित्रमेव केचिदाहु । अन्ये मार्गभेदमसहमाना न चाभ्या अवे(र्वे) सन्निपातोऽर्धा(र्धा)न्तरे च पातस्यानुक्तत्वादयं (च) स्यादित्याह(हु) । एवात(अत एव) एवमित(एव)मित्या चक्षते । अत एव तत् कनिष्ठासारित(ते) यच्चित्रमभूत् तदस्या दशायामप(पं)-भूताभि कलाभिर्हीनं न भवति । विचित्रस्य ध्रुवकर्वैगुण्यात् तथा विकलाना मद्य(ध्य)मावभागत्वे शम्यादिरूपेण स्थितमेवैतत् । पृष्ठरूप मन्त्रिमत्रे(यमं तममे)व कलानार्थ-(र्थं)हीयते । ततोऽप्याह । अन्तिमार्थ(र्थं)कलाहीन(म्) इति । आदिमाभिरर्थ(र्थं)कलाभि कलानामर्थ(र्थं)हीनमित्यर्थ । एव च बालशब्द( ) कनिष्ठ एव व्याख्येयो न ध्रुवके । तेन व्यस्तस्य द्रुत एव लक्ष्यत्वात् । एवमेकस्यामपि कण्डिकाया योजनात्मकप्रयोग उपपादित । तथा हि । चित्रे तावद् हीयमाने एकस्मिन् पादे पद तदेवात्र ध्रुवका-श्रितो(ते)प तद्वये इत्येकयोगात् कनिष्ठप्रसवो व्याख्यात ॥८१॥

प्रतियोग कीदृक ततश्च कस्योत्पत्ति(त्ति) कथ चेत्याशङ्क्याह ।

द्वितीया ख(क)ण्डिकां कृत्वा प्रथमा सकला यदि ।
योज्यते पूर्वतालेन तदा तत् स्याल्लयान्तरम् ॥

बाल इति वर्तते । बालश्च कनिष्ठ एवेत्युक्तम् । वक्ष्यति च बाल नवकल ए(ये)षाम् (भ ना ३१ ६६) इत्यत्र । एव कनिष्ठस्य यस्ताल उत्कटचच्चत्पुटपञ्चपाणिद्वयात्मा स सन्निपात । त मध्यावद(ध्याद्)ष्टासु कलासु साभि चच्चत्पुट षट्पितापुत्र इत्यन्तो-ऽन्तरपातो विद्वि(धि) । तावता बालतालेन प्रयोजिता स्थिता यामष्टकला ख(क)ण्डिका प्रयुज्य प्रमाणव(त्) कला अप्रमाभिरेव नवभि कलाभिर्युक्ता यदि पूर्वेणोपक्रान्ता समाप्तेन तालेनावनिष्टेनात्र षट्पितापुत्रकयुक्त सन्निपात चेत्येव रूपेणोपोह्यते । तदेति । तस्यामेव दशाया न हि बहिर्भावयदिति कनिष्ठ यदभूत् तल्लयकृताद्विशेषा-ल्लयान्तरवाच्य सम्भाव्यते । तदाह । स्यादिति ॥८२॥

---

१ KSS प्रथम ।
२ KSS पूज्यते ।

[वर्धमानं विना चित्रे न हि वृत्तौ लयान्तरम् ।
बहिर्वा वर्धमाने वा कनिष्ठं न हि दक्षिणे] ॥८३॥

---

नन्वक्षरपातविधौ तावन्न कश्चिद्विशेष उक्तः । कण्डिकाऽपि भावोऽपि च पूर्व(र्वं)द्वितीयप्रथमेति सोऽप्येकासारितप्रयोगत्वे हस्तामावाल्ललितकल्प(ल्प)तत्कनिष्ठस्वभेदेन नेतुर्वाच्य इत्याशङ्क्य तयोर्भेद

वर्धमानं विना चिचि(चि)त्रे न हि वृत्तौ लयान्तरम् ।
बहिर्वा वर्धमाने वा कनिष्ठं न हि दक्षिणे ॥

टीकाकृत् तावदाह । लयान्तरमिति । कनिष्ठमेवोच्येत तदाश्रयत्वादुपचारेण । तदयमर्थः । वर्धमानं विना ततो बहिर्भावे कनिष्ठं चित्र एव भवति । ननु का(कदा)चिद्वृत्तौ वर्धमाने लयान्तरत्व धर्मा(-न्तर)वति(तिं)बहिर्भावेन कदाचन लयान्तरमिति तात्पर्यम् । कनिष्ठं तत् स्वतन्त्रं वा वर्धमानगतं वा न जातु दक्षिणे भ्रुवमति । किं ने.. .स्मा स कनिष्ठावपि ज्येष्ठस्य व्यक्ति स्यात् । चातुर्युग्यसहत्वान्न स्वेध । सा हि मध्यमासारितादिति । अन्ये तु वैववृत्ति(त्तौ)श्वा-यथा व्याचक्षते । कनिष्ठं स्वतन्त्रं वा वर्धमानस्यान्तर च । अन्तरस्व दक्षिणेनापि वृत्ते । वर्धमानं तु विना चित्रम् । चित्र तु वर्धमानान्तर्गतध्रुवकेणैव च । स्वातन्त्र्येण तु चित्रमार्गेण भवनीयम् । लयान्तर च स्वतन्त्रवर्धमानगतं वा चित्रेण दक्षिणे किन्तु वार्ता एव वेल (वृत्तिरेव वा लय) एव च मध्यमज्येष्ठयोर्मार्गत्रयविषेयत्वमित्युक्त भवतीति । एवं च मार्गभेदावनयोर्भेद इति तात्पर्यमिति ।

गुरवस्तु स्पष्टमेव व्याचक्षते । एको हिशब्दश्चार्थे । अपर शब्दार्थे । इत्थं च योजना । लयान्तरं नाम तद् वर्धमानं विना न चित्रे च वृत्तौ न दक्षिणे भवति । मार्गत्रयेऽपि स्वतन्त्र तत्राहित । वर्धमानान्तर्गतं हि चित्रेऽपि हि भवति यदा चित्राऽऽश्रिता नवकला विचालध्रुवकेण कनिष्ठं व्यनक्ति । वृत्तावपि भवति यद्वा(दा) सद्वृत्तिमार्गाश्रिता चित्रेण कनिष्ठाभिव्यञ्ज(ञ्ज)का । दक्षिणेऽपि भवति यदा सा दक्षिणमार्गाश्रिता वार्तिकेण कनिष्ठं व्यनक्ति । न हि कण्डिकाना मार्गभेदनियमः कश्चित् । तथा हि सामान्येनोक्तम् । वृत्तिदक्षिणचित्रेषु विनियोजितं वर्धमानमिति (भ ना ३१ ७५) । एवं विना चित्रे वृत्तौ लयान्तरं नापि दक्षिणे । कनिष्ठं बहिर्वा भवति वर्धमाने वा भवतीति पारतन्त्र्यनियमादनियतस्य कनिष्ठस्य सिद्धो लयान्तराद्भेद इति ॥८३॥

द्विगुणाक्षरसंयोगादन्यमार्गनियोजनात्[1] ।
[2]नृत्तकालविशेषाच्च तालादन्यल्लयान्तरम् ॥८४॥

तृतीया स(च)द्वितीया च प्रथमा चैव तत्कला[3] ।
द्विकलं योगमाश्रित्य मध्यमासारितं तु तत् ॥८५॥

---

ननु भवत्वेव तथापि यदा वर्धमानान्तर्भावस्तदाकृता(त)पारतन्त्र्य तदातो भेद इत्याशङ्क्याह ।

द्विगुणाक्षरसंयोगादन्यमार्गनियोजनात् ।
नृत्तकालविशेषाच्च तालादन्यल(ल्ल)यान्तरम् ॥

यावन्त्यक्षराणि पदसम्बन्धीनि कनिष्ठासारितकलायां तानो(तो) द्विगुण(णानि) लयान्तरगतायाम् । ध्रुवके यदि कनिष्ठलयान्तरश्चिह्नं नृत्तं च विशेषोऽस्ति । यथा-न्तरे गीयमाने न द्विकलाय(या) कनिष्ठाया आवृत्तिर्भवतीति । यदा गीतवशादस्मा भूयो निवृ(व)र्त(तं)ते तत्राप्यभिनेयं स्यात्तत्रैव नृत्तं तत्प्रोजयदिति । यथाक्षरद्वैगुण्या-(द्) मार्गभेदाच्च कोऽन्या(न्य) कालविशेष । अक्षरद्वैगुण्यमपि लयवशात् । स एव कालो न तु मार्गभेदे तस्मात् कालोऽत्र नर्तकीप्रवेशवाद्यग्रहणादिरवसर ॥८४॥

अथ कथं त्रिन(त्रि)योग किं च तत प्रयोगत इत्याशङ्क्याह ।

तृतीया च द्वितीया च प्रथमा चैव तत्कृता(त्कला) ।
द्विकलं योगमाश्रित्य मद्य(ध्य)मासारितं तु तत् ॥

पूर्वेक्षराणां त्रिस्तेशाश्रि(विश्लेषादि)ति (भ ना ३१-६४) पूर्व(र्व) यो द्विकला-(लो) योगा(ग) उक्त समाश्रित्य षोडशाष्टौ भवेति यदि काकुतालमद्य(ध्य)मासारितं तेन सनिसासनिशावनि इति चचत्पुटम् । शम्प्रिताशनिताभीति पाणिगता यन्ता इत्येव षोडशकलाय)त्वादौ कण्डिका । तत्र षट्काल(कला)दिशाया(या) ताताश्रम् इति प्राप्या वि(वी)चिषु का(क)लाच्च । चतुष्क पञ्चपाण्य-तरगत च कलाचतुष्क शनिवता इति ततो नवकलाया शनिवतानि शनिशानि प्राप्यवशिष्ट कलाष्टकमुष्ठक च सन्निपात इति ॥८५॥

---

१ KSS अन्यमार्गाच्च प्रयोजनम् ।
२ KSS वृत्तकालविशेषाच्च तालतालसयान्तरम् । इतोऽग्रे 'कनिष्ठासारिते' त्यादि पद्यमेकमधिकम् ।
३. KSS तद्भवेत् ।

मुख प्रतिमुख चैव देह सतरण[1] तथा ।
प्रज्ञायेतानि चत्वारि सर्वेष्वासारितेषु च[2] ॥८८॥

उपोहन मुख तेषां युग्म प्रतिमुख भवेत् ।
प्रोत शरीरसहारा[3]वयमङ्गविधि (धि)क्रम ॥८९॥

इत्येव चतुरङ्गानि प्रयोगास रितानि तु ।
[चतुरासारितंबह विज्ञेय वर्धमानकम् ॥९०॥

---

समूहसज्ञाया गा(कया)प्यभिनेयपदार्थवस्त्वर्थवत्ते( ) । स खल्वित्यादिवर्णादिति प्रकटित-मुपक्रम उपत्वाद्धि मुखमिव मुखम् । प्रतिमुखसज्ञ चञ्चत्पुटे वैशाखस्थानकेनेति यो नर्तकीप्रवेश उक्त सोऽपि च विचित्र एवाभिनयोपक्रम । प्रथम पञ्चपाणौस्तु शरीर सज्ञाया प्राधान्याभिनयभूतस्य सर्वस्येव तन्मयीभावात् । द्वितीये तु यथा पाणौ सहरण-रूपत्वम् । अत्य नवरूपि न)यतोऽभिनयन्यूनतापादने नृत्तप्राधान्यमिति । तदाह । प्रयोगास्त्विति । एतामासारितानां पिण्डीबन्धे(न्धं )नृत्ताङ्गहारैरुपलक्षितो य प्रयोग ( ) पूर्वोक्त स यतो हेतोर्विधिमया पृथक् पृथक् कल्प्यते ततो हेतो प्रत्येकमङ्ग-विधानस्तेषामुच्यत इति शेष । इति हे(ही)ति वर्धमानानर्तनतया नृत्ताश्रयत्वे एतान्यङ्गानि न तु स्वात न्त्र्येण प्रयोग । तेन तत्रोपोहनाभाव एवान्ये । तन्नाति तञ्च च... स्येव तदर्थ एतदभावाय इति हि वते (उक्ते) पृथक पृथगिति सर्व स्वरसत कोहृत भवति । प्रङ्गचतुष्काभिप्रयङ्गनर्तकीप्रवेश इत्यादिकमोऽवतिष्ठते । ताण्डवा-ध्याये (भ ना श ४) च स्वत-त्रासारितष्वपि प्रयोगोऽतिदिष्ट । एवमेतेस्त्विति गीतेष्वासारितेष्विति (भ ना ४ ३०२) ग्रन्थेन बयमान तथापीति (भ ना ४ ११) चापिर्वैर(रा)मूयाश्रितमपि प्रयोगस्थानत्वेनोक्तमिति । एतच्चात्र विचारयिष्यते मुख्य इ(त्रि)ति । चञ्चत्पुट प्रोक्तावि च पञ्चपाणि( ) । प्रोत( ) शब्दो-ऽकारान्ते(न्तो) विश्रमाद्यवतरङ्गताया च । वस्तुत मयारयमिविष्टसन्निपात-चञ्चत्पुटादिक नीयते(न्ते) कनिष्ठ । अन्ययोस्तु पञ्चास्यादिभूत इति स्वरूपेऽप्यस्ति विशेष ॥८७ ८९॥

एतदुपसहरति । इत्येव चतुरङ्गानीति । उक्तपूर्वेण प्रयोजनेन प्रत्येकमासा-रितप्रयोगेष्विव को एकातत(किमेकताल)स्ततो योगे(ग)तो कण्डिकाचतुष्कम् । तद तु , परिवतते नै प्रसारितप्रसादा वधमानवेति स्पष्टरा(का)थत्व दर्शितम् ॥९०॥

---

1 NS देहसहरण ।
2 NS प्रासारितेष्विह ।
3 KSS वेवमङ्गविधिक्रम ।

वर्णतालनयप्रत्यया[1]द्यादिनमवर्धनात् ।
पात्राणां वृत्तियोगाच्च वर्धमानकमुच्यते ॥६१॥

[2]वर्धमानशरीरस्य अपेदासारितस्य च ।
कार्यकारणभावेन परस्परविकल्पनम् ॥६२॥

यथा वृक्षात्(क्षो) भवेद् बीज(जात्) बीजाद्वृक्षस्य(वृक्षाद्बीजस्य)
सम्भवः ।
अन्योन्यहेतुसयोगात्[3] प्रत्येतव्यस्तथेह तु ॥६३॥

---

ननु यदि नाम चतुरासारितनिर्वहन न णीयता (निर्वहणीयता) वर्धमानता [सा का]र्या कुत इत्याशङ्क्याह । वर्णतालेति । सा तत्र यथा येयमासारितानां तत्पेक्षया वर्धमानोभावलक्षणा वर्णादिवृद्धियोग । तथाप्युपयोग[वशे]न योगात् नृत्तवृद्धिरिवाभिनयवृद्धि । पात्राणां नर्तकीनां वृद्धियोगश्च । चतुर्थेऽध्याये दर्शित-मेष्का,तु प्रथमं पुष्पाद्(पोत्या)ढे (भ ना ४ २८९) इत्यादिना । वर्धमानकमिति सज्ञया क ॥६१॥

एवमियमन्यथा(ना) यद् फल सम्पन्न तद्दर्शयति । वर्धमानस्य(न) शरीरस्येति । वर्धमाने कनिष्ठकाया मर्यामामेव चतुरस्रतालयोगेन कदाचित प्रयोग इति वर्धमान-शरीर चतरस्रमासारितशरीरमत्येव । पश्चपालि हि(हि) ।त्रिविकारया कृतोपवस्तु योजकलत्वमस्य रूपमित्युक्तम् । प्रागासारितस्येत्येकवचनप्रयो यतु वहिरिति न परमार्थभेद इति दर्शयति । स एव हि निष्कामकलया विकसीभवतीत्युक्तमेव । ज्येष्ठासारितप्रत्ये च सर्वमेतद् स्थितमिति । अतोऽप्येकवचनम् । एवमासारितस्य वर्धमानस्य देहस्य योऽन्योन्यकार्यकारणभावस्तेन वैचित्र्यरूपकल्पना जायते । तथा हि । वर्धमानदशाप्रभावादासारित मङ्गचतु वष्टिरिति न परमार्थभेद इति दर्शयति । स एव हि निष्कामकलया वर्धमानदशाया प्रभावादासारितमङ्ग चतुष्कला(ल)-याङ्गुनयोगनृत्तं प्रयोगवैचित्र्यादासारित भवति । आसारितप्रयोगरहितस घानवस्ताच्च परिवर्तयोर्हन्द्वान्तता जायते । अन्यथा कनिष्ठक चतुष्कलया मात्र(त्रा)रूपमेवेति रस-भावगतपरस्परमाध्यमानकभावश्चापि मन्तव्यम् ॥६२॥

अन्योन्याश्रयदोषानुभयासिद्धिरित्याशयदृष्टान्तद्वारेणोपपादयति । यथा वृक्षो भवेद्बीजादिति । यावन्मात्रानुप्रविशति वृक्षमेव बीजमेव स्थितेरेव पूर्वसिद्धमासारित-मपेक्ष्य वर्धमानता जायते । वर्धमाने च निरूप्यमाणे पुनरासारितबुद्धिर्जायते ॥६३॥

---

१. NS. वाक्मिनय ।
२. NS वर्धमाने शरीरस्य ।
३ NS सयोग प्रसर्तव्यस्तथैव तु ।

योगावेककलात्(लां) सूचे(ते) कनिष्ठकलयान्तरे ।
द्विकलान्मध्यमं चैव ज्येष्ठं चैव चतुष्कलात् ॥६४॥

चञ्चत्पुटपरिवर्तं शम्याविं द्वौ(द्वौ) च पञ्चपाणिकृतौ ।
अन्ते च सन्निपातः पात(काल)विधिरयं कनिष्ठस्य ॥६५॥

---

मासारितात् सम्धा(वर्धमा)नमपि य(यज्) जन्यति सैव । तृतीयवृद्धेर-भावादन्यहेतुकत्वमुक्तमिति तदेव दर्शयितुमाह । योगादेककलामित्यादि । एतद् पुनरुक्त(त)योपकारकरूपमिति केचित्। युक्तम्। पूर्वं हि वधमाना(र्धा)सारितप्रसु-(सृ)तिरुक्ता । प्रथमा कण्डिकामिति । (भ ना ३१ ८१) तृतीया सद्वितीया चेति (भ ना ३१ ८५) चतुर्थीमाविंत. कृत्वेति (भ ना. ३१ ८६) च । अनेन स्वासारिता(द्) वर्धमानोत्पत्तिरुच्यते । कथम् । यथा प्रजावता(ती) प्रसूके(ते)ति पुत्रवद् प्रमुच्यते । एवमिहापि ।

तदयमर्थः । कनिष्ठक कला च सुते फले कुतो त   माह । योगा देककलामिति । एककला आधारभूत (ता) यस्य यागस्य पातरतद्द्वन्द्वसम्बन्धरूपस्य तत्कार्यभूताद्धेतो ।

एतदुक्त भवति । यदि सप्तम्नाकलि(क)कनिष्ठ सारित प्रयक्ति(युक्त)तमन-(म)भविष्य(ष्यन्) न च कलाकण्डिकासप्तदशपादयोगलक्षण(णा) वृद्धिना(र्ना)-ऽभविष्यद् यदि च लयान्तरम् । यो(लया)ऽन्तर नाभिसन्धयेयन काण्डका प्रथमकण्डिका नाना भा(भ)वेदिति प्रथमकण्डिकाया परिवृद्धिलक्षणे कथ वृद्धिभवदिति । एवमेते(तु) वृद्धिरासारिताभ्या सङ्घातैद्विव(द्व) कलात्मका(त्मा)यंभूताद्धनोमध्यासूक्त सफल(म्) । एव चतुष्क कलाज्येष्ठम् । इदमत्र(त) त्त्वम् । यद्यत्र मध्यम(मा)-सारितस्य प्रयोगे(गो) नाभीष्टो भवे(द्) द्विकल योगमाश्रित्य (भ ना म ३१ ८५) यदुक्त सतृतीया द्वितीया च प्रथमा चेति (भ ना म ३१ ८५) द्वितीयाप्रथमयो-रेकद्वितीयपरार्द्धलक्षणा कुतो वृद्धि स्यात् । ज्येष्ठानभिसन्धौ च कथ चतुष्कल योगमाश्रित्य कथित चतुर्थीमादितः कृत्वेति (भ ना ३१ ८६ । तृतीयाद्वितीया-प्रथमानामेकद्वित्रिपरावृद्धिरूपत्व सत( ) स्यादिति सा वृद्धिराभ्या जाता द्विकल-चतुष्कलशब्दवत् सहचारिण्याम्(भ्या वृ)द्धौ मन्तव्यो ॥६४॥

अतो वर्धमानान्तर्गताना यद्यपि स तत्र दशाविहित एव नान्तवि(वि)धिस्तथा-प्यस्ति कश्चिद् विशेष इति दर्शयितु कनिष्ठासारितस्य तावदाह । चञ्चत्पुटपरिवर्तं

प्रथमेव तालयोगो विशेषसिद्धिस्तु पूर्वनिर्दिष्टा ।
भवतीह लयान्तरिते शब्दाद्भेदो लयाच्चैव ॥६३॥

उत्तरता(का)लात् कृत्वा द्वौ(त्वादौ) तिस्रः सकला (कला) परित्यज्य ।
एतत्पातविधानं मध्यमकासारिते प्रोक्तम् ॥६७॥

---

इति । च शब्दो यद्यपीत्यत्रा(स्या)र्थे । तेन यद्यपि कनिष्ठस्याथमेव कालविधि स्तथाप्यस्मिन् कश्चिद्विशेष इति दर्शयितु कनिष्ठासारितस्य वक्तव्यप्रतिमुखदेहसंहाररूपाङ्गविभागेन नृत्तविशेषसिद्धय विदारि(री)षि शुद्धस्तत्कालविरामे वर्णाङ्गसमृद्धमुचितत्वापन्यास(स)योजनं पृथक् स(स्वो)कार्यमिति यावत् । तथा चोदाहरणं देवम् । देवै संस्तुतममितमित्यप्रो विष्कम्भश्च उज्ज्वरपुट(टे) । दंष्ट्रयंसंनाशं पितृभि प्रणमितचरणमिति पञ्चपाणौ । संसोपयहेतुमीश वर शरणमहमुपगत इति समुद्गके । तद्वे चारि(चा)सारिते नानियम इत्युक्त भवति ॥६५॥

लयान्तरेऽप्येव(व) दर्शयति । प्रथमेव तालयोग इति । परिच्छ(च्छि)न्नरूपवृद्धिरिति यावत् । कस्तर्हि भनयोर्भेद इत्याह । विशेषसिद्धिरिति । द्विगुणाक्षरसंयोगादित्यत्र (भ ना ३१ ८४) श्लोकार्धमेव संक्षिप्य च । शब्दाद् भेदो लया च्चेति । अस्यापि य शब्दपातस्तत्कृतो भेद कनिष्ठेऽप्य(प्य)र्धकलायां शम्या(म्याया) लयान्तरे तु कलायामेव । प्रत्यगतलयान्तरित कस्मादित्याह । लयाच्चेति । लयकृताद्भेदाल्लयान्तरितमित्यर्थ । एव कारेणेदमाह । लयान्तवंशादेव कनिष्ठ वक्षिण प्रयोगाभावो लभ्यते नतो गुणलयस्य मार्गान्तरस्याभावो लयान्तर इव स्यादुभयापत्तेरिति ॥६६॥

एव कनिष्ठस्य स्वतन्त्रभेदमुपदश्य मध्यमस्यापि दर्शयितु उत्तरकाला(त्) कृत्वा तिस्र. कला परित्यजेदिति । (त)मन्तरा द्विकलपञ्चपाणिबहुवचन प्राधम्याद् त्रित्वक(कत्वम)पि नालभेत्(त) इतिवद् द्विकलपञ्चपाणित्रयादाद्यकलात्रयमपास्य त्रय खण्डा करणीया । ते नवकलो आद्यखण्डो द्वितीयो द्वादश तृतीयोऽपि द्वादश ततश्च(श्च)ञ्चत्पुटो .निष्ठा(क्रा)मादि सन्निपातान्त एव । आद्या केवलमधिका शम्या मुक्तकर्स निशातकला । अन्यास्त्विट्वा(द्धा) र(कं)वलो खण्डनिष्क्र मादिसन्निपातान्तावेव । अत एककलद्विकलो(लो) विधिरनुगृहीतो भवति । तत्र निष्क्रामस्याद्य-

ज्येष्ठस्य भवति नियमाद्वादौ सैका चतुष्कला चात्र ।
मात्राद्वन्द्वयुतान्यत् कृत्वा तौ द्वौ च परिवर्तौ ॥९८॥

बालं नवकलं येषां न तेषां साधु सम्मतम् ।
[1]सन्निपाताङ्गविन्यासो घटेत(टते) न हि शास्त्रतः ॥९९॥

---

स्वेन दर्शनात् स्वातन्त्र्ये तु शम्यादिनिष्क्रान्तावसाने द्वौ । सन्निपातादिनिष्क्रामावितामन्तक च(स्तच) सन्निपात इति विशेषतो न सन्निपाता । अत्र यथाच्छेदार्था-(र्थात्) सन्निपातादो(दु)च्चम ण्डाहे न(हेनं)तंकोप्रवेशादेरपि भेद इति ॥९७

अत स्थानान्तरावस्थातो नव(निय)मान्तर्भूतस्य ज्येष्ठस्य विशेषम् ह । ज्येष्ठा-(ष्ठस्य) भवति नियमाद्वादौ संका चतुष्कला । सा चेति चतुष्कला या मात्रा चतुष्कल-रूपा षोडशकलेति यावत् । स ता (सैका) भवति । सारम्भरेके(सग्रहे)ण न वर्तते । कला चैकपात इत्याहावी ।

एतदुक्त भवति । मात्रापादिकन्निपात षोडशकलारूपोऽत्र । चतुष्कलचक्र-स्फुटादौ तु चम्पक मुक्तकपस्याऽन्तरवद् द्वौ परिवर्तौ चतुष्कलामात्रा(त्रौ) नो(तौ) - षोडशकलावे(देव) कुर्या(त्)। तौ च कृत्वा तयोर्मात्रा यस्या (स्या) क्षेपणीया सा तु सकला । कथमित्याह । द्वन्द्वेन परिवर्तद्वयेन युक्ता ।

एतदुक्त भवति । क्षन्(क्षिप)क्षेपे (प्रेरणे) पा धातुपाठ ११३१, १२८९, १६४२) (इ) त्याचाह । मात्राचतुष्कला(:) क्षेपा इति । नो क वोधो गकिनि(नी) । एव तु विगन्धेन । मात्र(त्रा)वादौ सन्निपातो द्वावन्यौ मण्डाविन्युक्त भवति । स्वतन्त्रेषु तु ज्येष्ठासारिते शम्यादिविक्षेपनवकचतुष्कमण्डसन्निपातादिविक्षेपान्तो तु पञ्चमागिमण्डो पूर्वकस्त सन्निपात इति विशेष । पात्रादस्वे(क्षिप्ति)पता स्यादिति पाते(र)पा(प) कार्यादित्यस्याहायंम् । अ यथा कृत्वा तदन्तेन तत्पवतुके स्यादिति । एवमय ग्रन्थ सर्वथैवापुनरुक्तार्थो लक्ष्यलक्षणपरिचयशाऽत्ततो(ते) पुनरुक्त इत्युपेक्ष्य तद्वशीकृत स्मारकोऽन्यो न च पुनरुक्त(क्तो)ऽन्न इत्याहना तावत् । एव कार्यकारणता च दर्शिता ॥९८॥

अधुना च निष्टस्य यद्रूप प्रथमा कल्पितो कृत(कृत्वा) (भ ना ३१ ८१) इत्यनेन दर्शित तदेव पूर्वपक्षशङ्कानमनद्वारेण स्फुटीकर्तुमाह । मा(बा)न त(न) वकलमिति । तत्रेय पूर्वपक्षशङ्का । कश्चिद्धि ब्रूयात् । इह चतुरश्रासारितो बनो(बाल)-

[1] NS Varies

पुनश्चैवाङ्गविन्यासः कलानियमतः कृतः ।
अथ तत्र मुख तालध्रुव(मति)पातैरेव नियमितान् मानम्] ॥१००॥

---

वर्धमान चतस्र कण्डिकाश्चैव । वर्धमान एकद्वित्रिचतुर्थमान्ताभ्यासारितानि ।

प्रथमा कण्डिका कृत्वा बालतालप्रयोजिताम् ।
अन्तिमार्धकलाहीन कुर्वीत(त) कनिष्ठकम् ॥
(भ ना. ३१ ८१)

इत्युक्तम् । तत्र स्पष्टमेव यथासङ्ख्ये(ङ्ख्यमि)ति नाश्रीयते । नवकण्डिकाकनिष्ठमिति सप्तदशपातानां षोडशद्वितीय(क्षार्धहीन) पातयित्वा म(न)वपातमिह कनिष्ठमुख्य-(मुष्ट)तामिति । अत्राह । न तेषां साधु सम्मतमिति । अत्र हेतु । सन्निपातेति शब्देन वस्तूच्यते । भूयसा तस्य सन्निपातान्तत्वात् । तेन वस्तुनो विन्यासद्वित्रत्वेन कल्पन तत्र घटते । अङ्गविन्यासश्च प्रतिमुखादिरूपो न घटते ।

ननु किं तेन घटितेनेत्याह । शास्त्रत हि लक्षण मन्त्रमधमाणोम(णमत्र वर्धमानमिव) कर्तव्यम् । तत्र चतुर्द्वन्द्वमु(मु)क्तमिति ।

ननु कर्लका द्वे तिस. समुद्गका(ता) इति । क्रियतां विभाग इति । नेत्याह । पुनश्चैवेति । अङ्गविन्यासोऽपि पुन. शास्त्रत एव कलानियमेन कृतो नाम विभागे न स्वेच्छा प्रमाणमिति यावत् ।

केचित् घटते तत्र शास्त्रत इति पठन्ति । तेन बालाम्न(न म)वकल ए(वे)षां ते [तै] हा(त्य)त्र च्छेद कृत्वा ते(ए)षां साधु सम्मतमित्यभ्युप-गम्यते । तदिदमत्र हेतु । सन्निपाताङ्गविन्यासो न घटते । तत्र शास्त्रत इति व्याचक्षते ॥९९॥

अपोहनं मुख तेषामिति (भ ना ३१ ८६) यदुक्त तदिदानीं वक्तव्यम् । अङ्गविन्यासो हि शास्त्रेण चतुर्थ कृत( ) । तन्नीण्यन्यानि शातानि । चतुर्थ तु ज्ञातव्यम् । तदाह । अथ तत्र मुखं ना(ता)लयति- । तालोऽत्र मुख (ख्य) । षोडश-कल तत्रान्तर्भूतत्वात् तालमुखम् । तत्र ध्रुव एता- शम्यादिविशेषहीना । प्रयोगेऽपि च ध्रुवकमार्गेण कृता ॥१००॥

तस्य [1]कलामात्राक्षरगुरुलघुवर्णांश्चाथ वक्ष्ये ।
ज्येष्ठस्य कला ह्यष्टौ ध्रुवे भवेन् मध्यमस्य सप्तकलम्[2] ॥१०१॥

षड्भिर्लयान्तरे स्यात् पञ्चैव कला कनिष्ठस्य ।
प्राद्यावन्ते गुरुणी मध्ये च लघूनि चालस [3] प्रभृति ॥१०२॥

अष्टौ द्वादश षोडश विंशतिरपि चाक्षराणि स्युः ।
आसारितोपवहनेष्वावाप(सा)रणानि युक्तानि ॥१०३॥

तान्यक्षराणि वक्ष्ये यानि पुरा ब्रह्मणोक्तानि ।
[4]झण्टु जगति दिगि गिगिगि झण्टु प्रथम(मे)लयान्तर(रे)वा(वा)पि ।
तितिझल कुचझल मध्ये तितिकुचकुट्ट मवेत्यंथेष्ठ ॥१०४॥

---

तस्य मुखस्य का(क)लादि वक्ष्ये । तत्र कलाना प्राधान्यात्तास एव तावदाह । ज्येष्ठस्य कला ह्यष्टावित्यादि । अष्टा(ष्टौ) सप्त षट् पञ्चेति । क्रमेणोपोहन कलाना ध्रुवमाने(वानुपाते) सति ज्येष्ठ(स्य) पञ्चषष्टि क(ष्टिक)ल(ला)स्तच्च कनिष्ठका-चतुर्षु रूपवधमाना शारीरा-ऽगंतस्य चैव वा(वा)चासारिता वास्याङ्गविभागो नृत्तो-पयोगादेव स्वतन्त्र(न्त्र')सारितेषु नोपवहनमिति कथयितु ज्येष्ठात् प्रभृत्युपक्रान्तम् । तालमालामात्रासङख्यपाक्षरोपयोगोऽस्ति ॥१०१॥

तालप्रथमे(प्रमे)य गीत्याचारत्वादक्षरेषु च लघुभेदादिति मात्राक्षराश्रयवच-गुरुलघुवैचित्र्यमाह । आद्यावन्ते गुरुणीति । एतच्चतुर्ष्वपि । आदौ चिह्नम् । अथ(न्ते) बद्ध । मध्ये त्वक्षराणि कियन्तीत्याह । चालस प्रभृति ॥१०१॥

अष्टौ द्वादश षोडश विंशतिरिति । तालकलाया चतुर्मात्रो गण इत्यनया स्थित्या मात्र(त्रा)विभागोऽन्य तु कलाद्वयनाधत्त्वम् । एका कला द्विमात्रोक्ता । एव-(व) सर्वत्र । अथ दुष्प्रविशेषेऽपि हेतवो ब्रह्मप्रोक्ता गणाः एषा पङ्क्तिक्रमो वक्ष्य इत्यत आह । आसारितेषु आवापातारणानि युक्तानि ॥१०३॥

तान्यक्षराणि वक्ष्ये । आसारितोपवहनेषु यान्य(नि)कर्तव्यान्यक्षराणि तानि वक्ष्ये । कानीत्याह । आसारणे आगमन्सात् स्वरस्वरूपविकारो वाद्येन भविष्यति । उप(व)हन तदर्थं यानि नियुक्तानि । तथा चोक्तम् । उपोहांन्ते स्वरा येनेति ।

नन्वेव भिन्नाकारादिरपि क्रियतामित्याशङ्क्यानादिप्रास्त्र सम्प्रदायप्रसिद्धच-

---

१ KSS, NS कलापा.. ।

२ NS समूलकम् ।

३ KSS साद्यत ।

४ KSS, NS vary absolutely

इत्यक्षरपतनकलागुरुलघुवर्णस्थितिविभक्त [1] ।
पासारितमुखसंज्ञितं उपवहनविधिर्विनिर्दिष्टा(ष्ट) [2] ।
[एवमेतत् सविस्तारं कथितं वर्धमानकम् [3]] ॥१०५॥

चत्वारस्तु गु(ग)णा युग्मे ओजे षट् परिकीर्तिता ।
[4]द्वितीये पञ्चपाणौ तु सार्धा षट् परिकीर्तिता ।
कनीय एव कर्तव्यमक्षरैस्तालसमानत ॥१०६॥

---

शिष्टाभ्युदये हेत्वर्थं केवाञ्चिदेवेत्याह । यानि पुरा ब्रह्मणा गीतानि । ब्रह्मरूपत्वेन च वेदमन्त्रवद्गीतानि । कथोऽपि चैषां नियमो वेत्याशयेनाह । झण्ड(ण्टु) जगति यदि तिरि(गिरिगि) झण्टु(ण्टु) प्रथमे कनिष्ठे लयान्ते चारि । इदमेव विशेष स्याद् । तो(ति)तिकुचवृत्त(झ) सम्य(ग)पिकीभूतम् । मध्ये च लघु(घ्)मीत्युक्तत्वादसि … ……यनन्तर स्हि(हो)ति मचेति लयान्तरे । तदन्तर च(कु)चझ(झ) तेति मध्ये मध्यमासारिते वृद्ध तद(न)न्तर तोति कुचेति ज्येष्ठवृद्ध सर्वत्र त्वन्ये कलाद्वये सघटितुमिति ॥१०४॥

एतदङ्गमुपसंहरति । इत्यक्षरपतनकलेति । अक्षरेषु पतन प्राप्तियासां कलानां तन्निमित्ते गुरुलघूरेगोपलक्षिता य वर्णा झण्ट(ण्टु)मादयस्तेषां या स्थितिर्नियत-क्रमतया प्रविभक्ता । प्रत्यासारितमध्ये यस्य उपोहनविनिवृ(विद)त्तो यस्यासारितेषु मुखसंज्ञेति सम्बन्ध । न चासारितानां लक्षण पञ्चपाणिपुटपरिवर्ते (भ, ना ३१ ६५) (तं इ)त्यादिना कृत येन पुनरुक्त स्यादपि तु वर्धमानस्यैव विधि(धि)प्रतिपादनमित्य कृतमिति दर्शयति । एवमेतदिति । सविस्तारमिति । वृद्धा(विधि)युतमित्यर्थ । वर्धमानस्ये(स्या)य विधिरुक्तेति(क्त इति) यावत् ॥१०५॥

अन्वत्र वर्धमानलक्षणस्योपसंहारोऽयमन्यस्य समाप्तत्वा(त्वा)त् । अथाऽत्र पदगत भेद दर्शयितुमाह । चत्वारस्तु गु(ग)णा युग्म इति । तुर्विशेषद्योतक यद्यप्य-त्यत्र सामगीता(दा)वपवादगतो नियमस्तावा(स्थाना)न्न दमस्या सो(स) इत्यक्षरेण बहुतर व्याप्तम् । तथापि नृत्ते प्रभिन्नगन्ध कर्तव्यता तस्य च गीत्या च गीत्यर्थे भाविते प्रवृत्तेरर्थस्य चातिप्रकर्षविनमाभावादत्याधस्तो च भि(न)त्यय(ल)कारवैधुर्या-पत्तेरत्र मध्यमक्रमो हृदयहारी सहा(द)नुग्राहको नु म(स)ध्य ते(स्ते)न प्रतिकल

---

१ KSS NS प्रतिविभक्त ।
२ KSS, NS समुद्दिष्ट ।
३ NS परिमाणकम् ।
४ NS पञ्चपाणौ द्वितीये तु सार्धषट् परिकीर्तिता ।

यथा ।

देव देवं सम्स्तुतनमितम्[1] ।
दैत्यैर्मक्षैर्नागैः[2] पितृभि प्रणमितचरणम[3] ।
त्रैलोक्यहेतु[4]मीश रुद्र शरणमहमुपगतः ॥१०७॥

अष्टावेव गु(ग)णा कार्या पूर्व(र्वे)ताले यथाविधि ।
द्वादशैव तु कल्या [5]षटपितापुत्रके गणा ॥१०८॥
अथत्रयोदश[6] गणाःतृतीये वस्तुसंज्ञके[7] ।
एवमक्षरवि॰यासो मध्यमन्सारिते स्मृत ॥१०९॥

---

चतुर्थांशा गु(ग)णा म या(न्त्य )या तु कलाया विश्रान्तियोगात् स(द् गान्)र्वगुण-त्वामासाद्यति । अग्य प्(नैत्र) लघुरिव गुरु व(त्व) छन्दा(न्दो)व्यवस्थाया( ) । तदाह । द्वितीय पञ्चपाणौ तु साधमि(र्धा इ)ति । षोडे(डं)वेत्युदाहरणान्निबद्धन(न्धा)दपोहनवन्निवताक्षरनियम इत्याह तदुदाहरणा(नि) ॥१०६॥

देवमित्यादि । भगवान् महेश्वर एवात्र स(से)व्यस्तत्परिवारःवैव तत्प्रवणतया च देवान्तराणा वर्णनम् । यत्र पिण्डीबन्धाना साक्ष्यपिण्डो भवेद् विष्णोरित्येवमादीना (भ ना ४ २५४) सर्वेषा निवृत्त (त्त)प्रति(ज्ञ)ता च(चा)मान्तरविन्यैव इति तथाविधान्यक्षराणि रचनीयानीत्युदाहरणानीत्य(त्या)भिप्राय । उदाहरणादेव गणविभागे सिद्ध कि लक्षणेनेति चेद् गुरुलघुनियमोऽपि वर्णवृत्तवद् सम्भाव्येत । व स्वरूपवित्त । मात्रागणानयैवेष्टत्वा(त्) । न चोद हरणाद्वियती प्रतिपत्तिभवति । कियति भागे कियत्या मात्रा इति लक्षणमपि करणीयमेवेति ।

ननु मुक्तकसन्निपात आद्य पञ्चत्पुटखण्डेन तस्य सन्निपातान्यत्वाद् वस्तुत्रयस्य । तत्कथमुक्त द्वितीये पञ्चपाणौ सार्धा वर्धिति (भ ना ३१-१०६) । अत्राह तालविभागभेदसिद्धये ग(णता)व्रहन चैवमवश्यकर्तव्यम् । अनन्तर तु गीतनृत्ताविधाना( )स तु वीदरस्ता( त्) त्वितग । (तालविभागस्य चैवमुदाहरणम् । अन्त्या च कला त्वश्रान्तिनाहरणीयकला प्रकपद(द्)सम्भाव्यमानपरिपूरणेनाभगणेन कर्तव्या इमतीति तात्पर्यमत्र ॥१०७॥

एवमेककले निरूप्य द्विकले यतिविधि सोदाहरणमाह । अष्टावेव गणा इति ।

१ NS सस्तुत नमितम् । KSS सस्तुतमीशम् ।
२ KSS omits
३ NS नमितचरण ।
४ KSS हित हर त्रा शरणमहमुपगत ।
५ KSS NS कथिता ।
६ KSS तथा ।
७ KSS वस्तुमञ्जिनि । NS वस्तुसंज्ञिता ।

[1]पृथिवी सलिलं श्वसनं(न) पवनं(ना) सूर्यश्चन्द्रो यजमानो
व्योमाख्य कार्यः।
मुनिभिर्यस्य प्रोक्तस्त्रैलोक्यगुरुं तमचिन्त्यमजं (तमज) विद्या-
निलयं भैरवरूपम्।
खट्वाङ्गकपालधरं(खट्वाङ्गधरं)स्थित्युत्पत्तिप्रलयनिमित्तम्।
चन्द्रार्धधरं तिलकार्धधरं मुण्डार्धधरं रजतार्धधरम्।
बहुभिर्विकृतैं विविधैर्विकटैर्वेष त्रि(विधैर) विपुलं (लैरपि)तं।
प्रमथैः परिवृतमहमीशं(तमीश) पुनश्च सततं प्रणतः ॥११३॥

चासारितानां सर्वेषां [2]त्रयो भेदाः प्रकीर्तिताः।
यथाक्षरं द्विसत्यातं त्रिसत्यातमथापि च ॥११४॥

[3]तालच्छेदाद् द्विगुणितैः [4]समवर्णगतैः कृ(र्गीह)तम्।
अनिवृत्ताक्षरपदं यथाक्षरमिति स्मृतम् ॥११५॥

---

त्यादिना गौरीश्वरकपदमस्य। अत एवोक्तं सपत्नीको वृषध्वजः इह देवगणाधिपैः
रिति। पूर्वं चोक्तम्।

वर्धमाने प्रयुक्ते तु रुद्रस्तुष्यति सानुग।

इति। अत एव गणाना स्तुतिर्बहुभिर्विकृतैरेति। इयमेव चैषा स्तुतिर्यत् परमेश्वर-
प्रकरणम् (णे) स्तुवन्त(न्ते)गणन(णा)प्रकाशन हि स्तुति। अत्र देवैः सम्मुतमभि-
(सम्भुतमि)त्यादौ (ना शा ३१ १०७) देवानामपि स्तुतिरेव कृत्या(ता)मन्तव्येति।
विकृतैरिति दिवस्थैरित्यर्थः ॥११३॥

अस्यैव पदगत विशेषान्तरं वक्तुमुपक्रमते। आसारितानामिति। न केवल
वर्धमानान्तर्गतेव इह त्रैविध्य किन्तु स्वतन्त्रेऽप्येयुक्त सर्वेषामपीति। ११४॥

तालच्छेदादित्यादि। इह(हा)निवृत्तिरावृत्तिरुच्यते सा च पदैकदेशस्य पदस्य
तत्समुदायस्य वा। सर्वथा यत्र सा नास्ति तद् (त्र)गीताक्षराणां नातिक्रमणात्वर्तमान-
त्वात् यथाक्षरम्। तथाऽनिवृत्तौ(त्ताक्षर)पदमिति। अक्षर द्वे त्रीणि। एव यथा-
नवृत्तावावृत्तिशून्यस्य। अत एव स(म)वर्णगर्गीहतम्। गणाश्चतुर्मात्रास्ते

---

1. KSS., NS vary absolutely.
२. NS ये भेदा परिकीर्तिता।
३. NS तालच्छेदो।
४. KSS समवर्णे गुणे कृत।

द्विसङ्ख्याते निवृत्तिस्तु कार्या यस्यार्थं(र्धं)योगत. ।
द्विसङ्ख्यातार्थं(र्धं)योगेन त्रिसङ्ख्यातेऽपि चेष्यते ॥१२२॥

[1]न चित्रे द्वित्रिसङ्ख्यात कदाचिदपि योजयेत् ।
न च वृत्तौ त्रिसङ्ख्यात गीत वासारित बुधः[2] ॥१२३॥

त्रिसंख्यात दक्षिणे स्याद् द्विसख्यात च वार्तिके ।
चित्रे यथाक्षरं प्रोक्तमिति मार्गविनिश्चयः ॥१२४॥

यथाक्षर तु सर्वेषु मार्गेषु परिकीर्तितम् । इति केचित् ।
दक्षिणेनैव मत्वादौ निवृत्तौ वृत्तिवद् व्रजेत् ॥१२५॥

---

एव यथाक्षरस्य परीक्षां कृत्वा द्विसख्यातत्रिसख्यातयोस्तामाह ।

द्विसख्याते निवृत्तिस्तु कार्या यस्यार्धयोगत. ।
द्विसख्यातार्धयोगेन त्रिसख्यातेऽपि चेष्यते ॥

इति । पादस्य यथाक्षरस्यार्धयोगे द्विसख्याते निवर्तितावृत्ति । तस्यार्धयोगेन त्रिसख्यातेन(पि) । देव देवं सस्तुतमिति (भ ना २१ १०३) यथाक्षरे चतस्र कला । द्विसख्याते देवमेका कला देव वेदैरिति द्वितीया सस्तुते तृतीया सस्तुतमिति चतुर्थी । एव यावता चतस्र कलास्तावतैव वर्ध(मान)योग । यदा तु देव देवं सस्तुतमतमित-मित्यनेकककलास्याते यावत्या द्विसख्या द्वे कले तदा त्रिसख्यात्पाद दे सख्याते त्रीणि च त्रयस्तथा ॥१२२॥

किमत्ययक्षराणि तालकलायामित्याशङ्क्याह । न चित्रे द्वित्रिसख्यातमिति । चित्रमार्गे यथाक्षरमिति । वार्तिके तु यथाक्षर द्विसख्यातम्(म) च । तत्र तु त्रिसख्यात न भा(भा)ति । दक्षिणे तु त्रयमपि तदा तद् त्रिसख्यात दक्षिणे स्यादिति ॥१२३-१२४॥

तत्र त्रिसख्यातस्य स्वरूप स्फुटयति । दक्षिणेनैवेति । दक्षिणमार्गोचित देव इत्यस्य शब्दस्य वर्णप्रकर्ष कृत्वा वृत्तौ(त्ति) कर्तव्या । तस्यैव देव इति शब्दस्य ततोऽर्धप्रकर्ष कुर्यात् । तदाह । वृत्तिवत् पुनरावृत्तौ च ॥१२५॥

---

१ KSS न च वृत्तौ त्रिसख्यात ।
२ KSS.; NS गीतेष्वासारितेषु च ।

चित्रवच्च यथान्याय त्रिसंख्याते विधिः स्मृत ।
अनेनैव विधानेन द्विसंख्यातमथोच्यते ॥१२६॥

वृत्तौ वा दक्षिणे वापि प्रयोगस्य सदैव तु ।
वस्त्वादौ वस्तुमध्ये वा वस्त्वन्ते वा निवृत्तय ॥१२७॥

प्रयोक्तृया [1]बुधैर्नित्य विचार्याङ्गबलाबलम् ।
निवृत्तौ तु कला न्यूना यदा वस्तुवशाद् भवेद् ॥१२ ॥

[2]प्रकलापातमात्तस्या वर्णं कार्यो निवृत्तिमान् ।
वर्णालङ्कारसौभाग्य विच्छेद करणस्य च ॥१२६॥

---

ततोऽप्यर्थंप्रकपस्तदाह । चित्रवच्चेति । अनेनैव विधानेनेति । यथान्यायमिति । तेनैवात्रैक एवातिदेश । वार्तिकेनैव गत्यादौ निवृत्तौ चित्रवद् भ(व)त्वेदिति वार्तिके । दक्षिणेनैव गत्या(त्या)दौ निवृत्तौ वृत्तिवदिति दक्षिणे । केचिद् ध्रुवकमार्गापेक्षया चतुस्संख्यातमप्यिच्छन्ति । तत्तु मुनिना देहावृत्तमार्गत्रयस्यैव बाहुल्येन प्रयोज्यत्वात् तेन देव इति देवैरिति देव देवैरिति देव देवं संस्तुतममितमिति त्रिसंख्यातम् । देवमिति स देवैरिति संस्तुतेति द्विसंख्यातम् ॥१२६॥

ननु चित्रे तावता द्विसंख्यात नास्ति । यत्र स्व(त्व)स्ति तत्र निवृत्ताश्रयरूपम् । निवृत्तिश्च तस्मिन् स्थाने कार्येति निरूपयति । वृत्तौ वा दक्षिणे चेति । प्रयोगस्य गीतकासारितादेर्यद्वस्तु तस्यादौ मध्येऽप्यन्ते वा निवृत्तयः कर्तव्या ॥१२७॥

अङ्गाना विवधादीना बलाबल विचार्यम । विदारीवशाद्धि निवृत्तयो भवन्तीति यत्र त्रिविधो विशेषः उपदिष्टस्तत्र मामुद्गणसिद्धर्थं आदावन्ते चावश्य निवृत्ति । तत्र निवृत्ताश्रय (तद्रूप निवृत्तिश्च कस्मिन्स्थाने कार्येति निरूपयति । (धृ) ) उपवर्तने मध्यनिवृत्तिरिति । यथात्रोपदेशा तस्माह् । निवृत्तौ तु कला न्यूनेति । निवृत्ताविनिवृत्तौ च चतुर्थं । अस्य प्रयोगस्यालङ्कारादेर्वा सामर्थ्याद् यदा चतुर्मात्रा भवन्ति तदा न्यूनभाग एव कालप्रकर्षवर्णास्वरो निवृत्तिमानावर्तमान कयो(र्यो)ऽवतीत्त(शिष्ट)कलाया पूर्णांतः वर्णान्यवस्था (का)र्या (य)दि का(व)स्य निवृत्तिस्तत्रैव । न्यूनो(ना)ध्यङ्गेऽवस्थानात्मनि वृत्तिनिर्वा(मा)निवृत्ति । तामेव न्यूना कलामाश्रित्य यद्

---

१ KSS , NS प्रयोगज्ञं ।
२ NS प्रकाल...।

¹[यथा ।
झण्टु जगति यवलितकविगिनिगितितिजसकुचजलतिति(झलतिति)
वा ।

उपोह्यन्ते स्वरा येन तेन गीतं प्रवर्तते ।
तस्मादुपोहनं ज्ञेयं शुष्काक्षरसमन्वितम्] ॥१३८॥

²अथवोपोह्यते यस्मात् प्रयोगः सूचनादिभिः ।
तस्मादुपोहनं ह्येतद्गानभाण्डसमाश्रयम् ॥१३९॥

शम्यातालौ द्विरभ्यस्तौ सन्निपातोऽस्य एव च ।
उपोहने विशालास्यास्तालोऽयं परिकीर्तितः ॥१४०॥

---

न द(तत्र) किमयमुपोहनं कस्मान्नो वचनमुच्यत इत्याशङ्क्याह । उपोह्यन्ते स्वरा येनेति । गात्रवीणाया येन वा का(क)रणमात्रेण स्वरा उपोह्यन्ते भाविनीयुपारम्भिण ऊहविषया क्रियन्ते ऊह्यन्ते च यायं ते तत तदुपोहनमुपवहन इ(मि)त्यपि दृश्यते । व्यवहारा येऽत्र च । दारव्या वीणाया गीतं प्रवर्तते । तस्मात् व्यक्तवाक्करणानुकाररूपे गीतप्रतिपत्तिः ।

ननु व्यक्तार्थेरहादिपदद्वारेणैवेत्येव गात्रदारव्वीणागतं यद्वाक्करणमात्रं तदेवोपोहनम् । तच्च द्वरेति ए(ह)काराद्यतमाऽव्यक्तार्थवर्णयोजनाय प्रक्रम्ये(मे) प्राप्तेऽभ्युदयसिद्धौ न यतते । झण्टु(ण्टु)मादिभिर्योज्यते । न तु तावेव । तदाह । शुष्काक्षरसमन्वितम् ॥१३८॥

एवं गात्रदारव्वीणाभिप्रायेण सप्रयोजनं निर्वचनमुक्त्वा ग्रन्थ(न्थ्य)मानं नृत्यमाश्रित्याह । अथं(थ)वोपोह्यते यस्मात् प्रयोगः सूचनामिति(दिभि) । तावदेवविषयोऽयम् । प्रयोगमाश्रित्यैवेत्यादिसूचनाभिनयेन शुष्काक्षरगाने भाण्डसहिते यदुक्तं

येऽपि चान्तरमार्गाः स्युस्तत्प्रोगावकरणं स्मृतः ।
तेषु सूचा(चो) प्रयोक्तव्या भाण्डेन सह ताण्डवम्(वे) ॥
(भ ना ४ ३१८)

इति । तेनोपोह्यते प्रयोगसूचनाभिनयद्वारेण सूचि(च्य)ते यत्र तदुपोहनम् ॥१३९॥

अथवा विधिमाह । शम्य(म्या)तालाविति । द्विरित्युक्तेऽभ्यस्तादि(त्रि) वयुक्तेऽपि प्रत्येकं स्यादिति । सखता इति स्यात् तदर्थमाह । अभ्यस्तौ समुदितौ ।

---

१ KSS, NS, omit
२ KSS, NS vary absolutely

द्विकलः सङ्गतायाश्च तालश्चाचपुटो भवेत्[1] ।
[2]त्रिकलो युक्तलालादिः सुनन्दायास्तथैव च ॥१४१॥

चच्चत्पुटश्च द्विकल [3]सुमुख्याः स्यादुपोहने ।
उपोहने द्विरभ्यस्तैस्तत कार्या तु कण्डिका ॥१४२॥

एतान्युपोहनानीह चत्वारि यदितानि तु ।
आनुपूर्व्यात्(र्व्या) प्रयोग तु कण्डिकाना निबोधत ॥१४३॥

[4]शम्या तालो(ल) पुन शम्या ततस्तालो यथाक्रमम् ।
त्रिकलः सन्निपातश्च विशालाया प्रकीर्तित ॥१४४॥

---

द्वित्रिकाल उदट्टलालादिर्युक्त(वतश)चच्चत्पुट । तथैव चेति । न विशालाया शम्यादिचञ्चत्पुटगतगुरुलघ्वादिविभाग । अत्र तु तद्गतो गुरुलघुप्लुतविभागो न इत्यरगुरुप्रस्तार कलासप्तकमिति यावत् तदय प्रस्तार । शतशताश्रितिशिताश्च निशतिशताप्रश । अथ विप्रयोगमाह । न द्विरभ्यस्त इति सूत्र(यत्) नृत्यप्रयोगभेदद्वारा वृत्ति( ) । अतालततालभेदादित्यन्ये । कथ खण्डो(कण्डिका) कार्येत्याह । आनुपूर्व्येति । न इत्यासारितसम्पाद इव व्युत्क्रमेणेति ॥१४०-१४३॥

तत्र गुरुकण्डिकास्वन्वे योग्यतापर वर्धमानशब्दवाच्ये तालविधिमाह—

शम्या तालो पुनः शम्या ततस्तालो यथाक्रमम् ।
त्रिकल. सन्निपातश्च ।

इति दशनितानि इसताप्रनि दस इति तापनकलाया प्रस्तारः । यथाह ।

मध्यमासारितात्यस्य वस्तुनो यदुदाहृत. ।

इति । प्रस्तारार्थस्तु इह कलादिकद्विकलयुग्मता दृश्यते । तत्र सिस इति प्रस्तारे प्राप्ते आह । प्रकीर्तित(.) । प्रस्तारस्य प्रवेशश्च कीर्ति(त) । प्राधान्यमादित्व प्रतीति । तत्राष्टासु कलासु नृत्तापवादो शम्यतालौ किमविच्छेदेनेत्याह । पुनरिति । विच्छेद

---

१ NS चञ्चुपुट स्मृत ।
२ KSS तथैव सन्निपातोऽन्त्ये ।
३ KSS सुमुख्या ।
४. अत्र श्लोकत्रयस्थाने का० पुस्तके श्लोकचतुष्टयात्मको भिन्न पाठ ।

चच्चत्पुटस्य(स्य) द्विकलः सङ्कृताया अपि स्मृतः ।
चतुष्कल्प (ल.) सुनन्दाया स एव गदितो बुधैः ॥१४६॥

सन्निपातद्वयोपेतो द्विमात्रस्तु प्रयोक्तृभिः ।
कार्यश्चतुष्कलो युग्मः सुमुख्याश्च यथाक्रमम् ॥१४५॥

वर्धमानस्य तालोऽयं [1]कण्डिकानां पृथक् पृथक् ।
मया प्रोक्तः [2]पुनश्चैव संहतानां निबोधत ॥१४७॥

---

पुनरपरस्य दर्शनम् । ततेह(त इह) कण्ठोक्तशम्यातालान्तरबाधितेन विच्छेदो लक्ष्यते । तेन विच्छिन्नौ तावित्यर्थं । ते सनिता पुनरस्ति काकाक्षिवत्तेन प्रनिशम् । एवमर्थं केचिदक्षरोत्थं कर्तुमशक्ता प्रकरणादिबलादमुमेवार्थमाहु ॥१४४॥

चञ्चत्पुटस्य द्विकल सङ्कृत(ताया) इति । चतुष्कल सुनन्दो(न्दा)य (याः) स एवेति । चञ्चत्पुट एवेत्यर्थं । आनिविश आनिविश आसविश आनिविश सन्त चतुष्कलत्वात्मकता(स)मुद्दियोग । द्रुतदि समुद्धाविति (पा घा ५७) हि स्मृत । इयमेव द्विगणिकमुख्यारोपमत एव द्वौ सन्निपातौ भवत ॥१४५॥

षोडशकले तावद् द्वे मात्रे सम्पद्येते । तदाह—

सन्निपातद्वयोपेतो द्विमात्रस्तु प्रयोक्तृभिः ।
कार्यश्चतुष्कलो युग्मः समुख्य(सुमुख्या)श्च ।

इति । किमिति हि( ) सुनन्दा इति । सुमुखीति सन्देहप्रयोगस्य प्रागुपक्रान्तखण्डिकात्मन उपोहनस्य च भेदादपसार्यते तदा प्रयोक्तृभिरिति ॥१४६॥

एतदुपसंहरति । यथाक्रम

वर्धमानस्य तालोऽयं कण्डिकानां पृथक् पृथक् ।
मया प्रोक्त ।

---

१. KSS कण्डिकाया ।
२ NS. मुनेश्चैव ।

पूर्वं विशाला कर्तव्या सङ्कुता तदनन्तरम् ।
सङ्कुतायां ग्रहं कृत्वा विशाला पुनरिष्यते[1] ॥१४८॥

[2][कनिष्ठासारिते तालो यो मया परिकीर्तितः ।
स एव सर्वः(सर्व एव) कर्तव्य प्रथमे कण्डिकाद्वये ॥१४९॥

इति । वर्धमानस्य वृद्धियोगस्य पञ्चवर्षाष्टकलस्य या कण्डिका मागास्तेषां पृथक् पृथगेवाय तालविधिरुक्तो न चैक(त्र) स कदाचिदेता प्रयोगार्हा इति । यथाक्रममिति क्रमेण चतुष्टयप्रयोग इत्यर्थ । तत्र पञ्चपञ्चिकलत्वाज्ज्येष्ठासारितवदवभाति । अत्र तदनु प्रविष्टानि चासारितान्तराणि तन्नान्तरीयकानि च भवन्ति । एवमासारित-चतुष्टयोचितकलासंख्ये चोभये चाहृतचतुष्के प्रयुज्यमाने स्फुट एव तन्निरास । एव कण्डिकारूप वर्धमानमासारितानासवर्धमान चोक्तम् । अथ वर्धमानासारितस्य स्वरूप वक्तुमुपक्रमते । पुनश्चैव सहताम्यामिति । सहतविषय पूर्वविधिरुक्तः । प्रथमां कण्डिका कृत्वा (भ ना. ३१ ८१) । . द्वितीयां कण्डिकां कृत्वेत्यादिना (भ ना. ३२ ८२) । अधुनाऽपि तद्विपयोऽपीति पुनर्ग्रहणम् । न च पौनरुक्त्यमाश-ङ्काद्वयम् । अनवगनपूर्वं इहानार्यो यथोच्यते तदाह । विबोधतेति ॥१४७॥

संहृतत्वे चान्योन्यापेक्षवृत्तित्वे चक्षपरिवर्तयोगे इहोच्यत इत्यादायेनाह । पूर्वं विशाला कर्तव्येति । तस्या च पञ्चकलोपोहनयोग(गो)वतनिष्ठासारितवीस्तावयुक्ट-(दङ्कु)रीभवति । तदनन्तर न केवलेऽपि प्रयोगकलाया कलाद्वय विष्वोकृतनून(तनू)-मय कनिष्ठासारितप्रयोग इति श्रीर्भवति । दृढप्राप्यप्रत्ययप्रभावानुवर्तिमि हि इह उत्तरस्वयये प्रसारितगीनाराकवाद्यविशेषो दृश्यते । इह पुन सवर्ती तद्रूपोपरिगत-स्तद्विशेषो दृश्यते वृद्धौ । अत एव वक्ष्यते । बाल नवकल नेयमिति (भ ना ३१. १५५) । एवं षट् परिवर्तास्ततोऽपि सङ्कुता । तद(न)न्तरं किमित्याह । सङ्कुतायां ग्रहं कृत्वेति । आदौ गृह्यमाणत्वाद्ग्रहः उपोहनम् । तेन षट्कलमुपोहन कृत्वा तदनन्तरं सङ्कुता प्रयोज्या । तत्समनन्तरमेव च विशालेति । नयान्तरमेतद् क्रियापा(सा)वंकाल्यमात्रे प्रतीयते । न तु समनन्तर्य(र)मिति तदनन्तर्य(र)मित्युक्तम् ॥१४८॥

ननूक्त एवायं परिवर्तविधिरित्याशङ्क्याह ।

कनिष्ठासारिते ताले(लो) यो मया परिकीर्तित ।
स सर्व एव कर्तव्यः प्रथमे कण्डिकाद्वये ॥

---

१ KSS सकला यदि ।

२. का० पुस्तके श्लोकचतुष्कस्थाने सार्धं पद्यषट्कम् ।

सुनन्दा सङ्कुता चैव विशाला च यथोदिता ।
सुनन्दाया ग्रह कृत्वा ततश्चैव प्रयोजयेत् ॥१५०॥

मध्यमासारिते तालो यो मया परिकीर्तितः ।
[1]सोऽस्य त्रयस्य कर्तव्यः सुनन्दायस्य योक्तृभि ॥१५१॥

[2]सुमुखी च सुनन्दा च सङ्कुता प्रथमा तथा ।
सुमुख्यास्तु ग्रह कृत्वा यथोक्त सम्प्रयोजयेत्] ॥१५२॥

इति । कनिष्ठासारिततालः कण्डिकाद्वयतालविषयस्तदवयवस्य द्विगुणत्वं प्राप्त कर्तव्यः । तेन सङ्कुताविशालातालकृत्येऽन्यथा(नेन) चाव(चेद) लयान्तरम् । अत एव वर्धमानरूपाङ्कुरितत्वाद्वर्धमानासारितमिदमुच्यते । कण्डिकाद्वयशब्देन तज्जाततालः । मध्ये(ने)न प्रथमे कण्डिकाद्वये यो मया ताल उक्तः स सर्व(·) कनिष्ठासारिते कार्य इति योजयति ॥१४९॥

एव त्रयः परिवर्ता उक्तास्ततोऽपि
सुनन्दा सङ्कुता चैव विशाला च यथोदिता ।

इति षोडशाङ्गो नवेति यावत् । क्रममात्रमेतदुक्तमित्यत्र प्रयोगमाह । सुनन्दाया ग्रहमिति । सप्तकलमुपोहन कृत्वैव तूक्तक्रम यत्र का(कु)र्यादिति ॥२५०॥

अत्र...... तालविधिमाह । मध्यमासारित इति । मध्यमासारिते यस्ताल सोऽस्य सुनन्दाद्यत्रयस्य सम्बन्धिनस्तदधितिष्ठतस्तदाक्रान्तस्ताल कार्य इति । शम्यादिरत्र स्थानीय सम्पद्यते । यदि वा ताल इति तत्स्थानभूतकलास्वस्याधारो भवति । यदि वा त्रय(य)त्र यत्र ताल उक्तस्तेषु मध्यम कार्य इति ॥१५१॥

एव षट् परिवर्तास्ततस्तु सुमुखी चेत्यादि । प्रथमेति । विशालाक्रममुक्त्वा प्रयोगमाह । सुमुख्यास्त्विति । ग्रह उपोहनमष्टकल कृत्वा चनम प्रयोज्यन्ते । ज्येष्ठासारित निष्पाद्यते । उचितोपवहनसिद्धय एव चेत्य क्रम उक्तोऽप्युपोहने तु कर्तव्ये

---

१. KSS सोऽन्यत्र यस्य कर्तव्य सुनन्दा न्यस्य योक्तृभि NS. शम्यात्रयस्य . ।

२ KSS. varies

[1]ज्येष्ठासारितके तालो निःशब्द. शब्दवांस्तथा ।
स सर्व एव कर्तव्यो बुधैश्चतसृणामपि ॥१५३॥

[2]संयोगे कण्डिकानां तु तालोऽथ परिकीर्तितः ।
एवमासां समायोगाद् वर्धमानकमिष्यते ॥१५४॥

तालं नवकलं ज्ञेय [3]दशसप्तकलान्तरम् ।
[4]मध्यमं तु त्रयस्त्रिंशत् पञ्चषष्टिस्तथोत्तरम् ॥१५५॥

---

सुमुरुशा द्यादिभावो यस्मादेव येन षष्ट्यष्टसङ्ख्यापूरणं स्वन्यथापि सम्भवत्येव । एवं पूर्वत्रापि मन्तव्यम् ॥१५२॥

अत्र तालमाह । ज्येष्ठासारितेक इति । ज्येष्ठतालस्य(स्य) तिसृणां सम्बन्धी-स्ययत्न कार्यो(र्यं) । यद्वा चतसृणां तस्तात उक्त ॥ ज्येष्ठासारितके कार्य इति प्राक्(क्)योजना ॥१५३॥

अत एवाह । संयोगे कण्डिकानां तु तालोऽयमिति । तुरवधारणे । आसा-रितात्मनि संयोगे योजनाविशेषाधीने प्रयोगे कण्डिकानामेव सम्बन्धी ताल उक्त इति दश परिवर्ता. । आद्ये कनिष्ठमत एव रूपान्तरेणासारितात्मना परिवृत्तिसहिष्णु-(त्व)त् प्रथमे परिवृत्तिव्यवहार । न तु केवलमावृत्तिबलोचितव्यपदेशद्वितीयादिपरि-वृत्तिसाहचर्यमात्रादेवैकत्वाऽस्यावृत्तिकृतसकृत्प्रबन्धव्यवहारवद् द्वयोर्यान्तरम् । त्रिषु मध्यम चतुर्षु ज्येष्ठमिति विभाग । ततोऽपि समुदिता वर्धमानोत्पत्तिरित्याह । एव-मासामिति । एवमिति दशसु । आसामिति कण्डिकानाम् । प्राधान्यमत्र तत्तालयोगः । सर्वत प्राधान्यताद् योजनया दशकपिपरिवर्तरूपाया वर्धमान चतुर्विधस्युतरकलाश्रया-त्मकमित्यर्थः ॥१५४॥

दशसु परिवर्तेष्वासारितविभाग स्फुटयति । ताल नवकलमिति । नवकले प्रयोगे सम्पिण्डिततद्रूपप्रतिपत्तिरूपोपोहमयोगाद्भूताद् भविष्यतश्च प्रयोगौचित्यादित्ये-तदाह ज्ञेयमित्यनेन । तदनन्तरप्रयोगोपस्कारादेव सप्तदशकलयानान्तर कण्डक (कण्डिका)रूप ज्ञेयमित्यत्रापि प्रयोज्यम् । अन्यथा पूर्वानपेक्षाया कनिष्ठमेव स्याद् ।

---

१. KSS ज्येष्ठस्य सारिते ।
२. KSS संयोगे कण्डिकालोप....परिकीर्तित. । इतोऽग्रे श्लोकसप्तकमधिकम् ।
३. NS दशाधकलयान्तरम् ।
४. NS. पञ्चषष्टिकल ज्येष्ठ त्रयस्त्रिंशत्तु मध्यमम् ।

कलानां वृद्धिमासाद्य त्वक्षराणां च वर्धनात् ।
लयस्य वर्धनाच्चापि वर्धमानकमुच्यते ॥१५६॥

आसारितेषु गीतेषु वर्धमानेषु चैव हि ।
द्विगुणस्तालयोगेन कार्यो ह्य(यंस्त्व)क्षरजो विधि ॥१५७॥

[1]समाप्तावन्तरचित सन्निपातो यदा भवेत् ।
अन्त्यस्य कला द्विमात्रा तु तदा ज्ञेया प्रयोक्तृभि ॥१५८॥

---

मध्यम तु त्रयस्त्रिंशत् । परिवर्तत्रयेणेत्यर्थ । तुर्विशेष द्योतयति । पूर्ववदपेक्षाऽस्तीति । पञ्चचत्वारिंशत्योत्तरम् । ज्येष्ठ परिवर्तचतुष्केणेत्यर्थ । तथेत्यपेक्षाविरहोऽत्र मध्यमा-देव ॥१५५॥

ननु कण्डिकाचतुष्कमात्रमेव वर्धमानमस्तु । किमनेन परिवर्तक्रमेणेत्या-शङ्क्याह । कलानां वृद्धिमासाद्य त्विति । तालस्वरूपविशेषो वर्धमान तालस्य च कलात्मकमिति तद्वृद्ध्यैव मुख्य वर्धमानत्वम् । तद्रूपान्तरमाह सहिष्णुत्वमात्रादेव । सा चेयं प्रदर्शितेन यथा भवति । चतुर्विंशत्युत्तरशतरूपतापत्ते । तद्वृद्धेरेव च प्राधान्यम् । क्रियावशितसामायेति तदायत्ता चाक्षराणां पदवाक्योभयात्मना वृद्धि । तद्वृद्धो यस्य वृद्धिरिति तद्वृद्धिरिति ॥१५६॥

नन्वासारितेषु पदविधिरुक्त । अक्षरास्तु गुणा इति (भ ना ३१ १०६) । अत आसारितवर्धमानद्वि(वि)भागे कण्डिका न लभ्यता नाम । पदविधिकण्डिका-प्राधान्ये तु कथमसावित्याशङ्क्य पदविधेर्व्यापक लक्षणमाह । आसारितेष्विति । सर्वत्र बहुवचनम् । वक्तव्यप्रमाणभेदात् तालयोगेन द्विगुणाक्षरविधिस्तेन । ताल-मात्रायां पदमात्रे द्वे । तालमात्राद्वयोर्न(न)रूपोच(पश्च)तुर्मात्रो गण । अक्षरग्रहण समर्पानर्थकसर्वसंग्रहार्थम् ॥१५७॥

अत्रापवादमाह । समाप्ता(प्ता)वन्तरचित इति । तालकलायां चतुर्मात्रो गणस्तावदिति सर्वस्योत्सर्ग(र्ग)स्तस्याह(य)विशेषोऽपवाद । अन्त्य(न्त्या) असम-स्तस्य गीतकासारितवर्धमानपाणिकाकण्डिकादेर्यस्य या परिसमाप्तिस्तत्काले कला सा द्विमात्रे(त्रा)त्विति द्विमात्रैवेति चेत्येवमादिरूपपद्यते(ति)यस्या सा तादृशी ज्ञेया । तुश्चार्थ । योऽसावन्तरचित इत्यन्ते मध्ये चित ...दित सन्निपात ।

---

1 KSS, NS समाप्तायान्तरयिन ।

एवमेतन्मया प्रोक्तं वर्धमानस्य लक्षणम्[1] ।
आसारितानां वक्ष्यामि विस्तर[2] लघुलक्षणम्[3] ॥१५९॥

---

तद्यथा । आसारिते प्रथमार्धपञ्चपाणावादस्य यदा समाप्ता भवेत् मुख्याङ्गविभागपरिकल्पने तदा चासां सन्निपातकलान्तरसमाप्तगतावितिमात्र इव भवति । अपरथा विभक्ताङ्गस्य विभक्ताङ्गविशेषो दुरुपलक्ष एव स्यात् । मुनिना तूदाहरणे चैव देवैरित्यादि (भ ना ३१ १०७) यदुक्तं तदविभक्ताङ्गमाङ्गमाद्यम् । मन्त्य(न्त्या)कला द्विमात्रेति मन्तव्य इ(ध्ये)त्युपाध्यायाः । टीकाकृतस्तु सन्निपातव्युत्पत्त्या शम्यादिध्यावयवयाऽन्तरतालसमाप्तौ नाय विशेषविधिरिति प्रतिपन्नाः । तेषामन्त्या(न्त्या) कला द्विमात्रेतीयता सिद्धे शिष्टश्लोकभागो व्यर्थं एवेत्यलमनेन । प्रयोक्तुमिरिति । प्रयोगविधान्त्याऽऽयासविदलीभावे सति शेषप्रयोगसौकर्यमिति भावः ॥१५८॥

एवमेतदिति । अपौनरुक्त्यमाह । एवमिति पूर्वोक्तेन प्रकारेण वर्धमानस्य लक्षणं विच्छित्त्यन्तरेणेति भावः । अथेदानीं ध्रुवकासारितलक्षणं वक्तु ध्रुवकस्य सकलमार्गभूतस्य स्वरूपे ज्ञाततत्त्वमार्गान्तरस्वरूपं च सुज्ञातं भवति । किन्तु तथाऽऽसारितरूपेण साकं वर्धमानस्य कार्यकारणभावाधाराधेयताभिज्ञातेयं वर्धमानस्य ध्रुवकमार्गस्याधारात् । उक्तं हि प्राक् ।

कुलिदक्षिणचित्रेषु मार्गेषु विनियोजितम् ।
(भ ना ३१ ७५)

अत आधेयभावाद् वर्धमानलक्षणमुपसंहृत्य ध्रुवकासारितलक्षणमासूत्रयति । आसारितानामिति । वस्त्वादयो वृत्तौ भावप्रधानाः । आसारितानां ध्रुवकलापतानां कापक ध्रुवमार्गस्य लक्षणं वक्ष्यामीति । नित्यसापेक्षत्वादसमासः । तच्च लक्षणं विस्तरं कृत्वा वक्ष्यामि । प्रतिपद शम्यादिपाते निष्क्रामावापादिनाङ्गुलिविभागस्तु विस्तीर्णता । अत्रैव सकलं निरूपितम् । ... त्याशयेनासारितानां च वर्धमानबहिर्गीतानां ताण्डवाध्याये । (भ ना ४१ ४) प्रवर्धित प्रयोगविधिरित्यतिदेशेन—

एव प्रयोग कर्तव्यो(एवमेषविधिः कार्यो) गीतेष्वासारितेषु च
(तेष्वपि) (भ ना ४ ३९२)

इति । तेनाऽस्य ध्रुवासारितविधि स्वत ोऽप्युपदेश्य एव । सकलमार्गमूलभूतत्वा(त्स) चास्याभिधानार्हता ॥१५९॥

---

१ KSS, NS वर्धमानकलक्षणम् ।

२ NS विस्तारं ।

३ KSS omits 29 verses

अन्यूनायां कलायां तु ध्रुव प्राज्ञो निवेशयेत्[1] ।
[2]अथ तालाक्षरवशाच्छेषान् पाताश्च योजयेत् ॥१६०॥

प्लुते लघ्वक्षरे चैव ध्रुवे साम्य न विद्यते ।
न विद्यते त्रिभि पातं समत्वमुपनीयते[3] ॥१६१॥

तालैश्च सन्निपातैश्च शम्याभिश्च ध्रुवेण च ।
कनिष्ठासारित कार्यं मध्यम ज्येष्ठमेव च ॥१६२॥

द्विगुणोत्तरया वृद्धचा ह्यस्यैव तु मध्यम विधातव्यम् ।
प्रस्तारेण कलानां शम्यातालान्तरोपेतम् ॥१६३॥

---

तत एव न्यूनाधिकतालकलाप्रयोगोऽत्र कलासाम्यलाभे तदर्थाविभेदलाभात् तदाह । अन्यूनायां कलायां तु ध्रुवमिति । तुरेवार्थे । ध्रुवमार्गेऽन्यूनायामेव कलायां कुर्यात् । एव हि कलामाने लब्धे तदूर्ध्वं गुण्यादिना विचादिमार्गविभेदो ज्ञातु शक्यस्तदाह । प्राज्ञ इति ।

ननु यद्येकरसगुरुप्रस्ताररूपता तर्हि चच्चत्पुटादिरूपत्वम् । यदासारितप्राणि-(ण)त्वेनोक्त तद्वद् सुज्ञानमित्याशङ्क्याह । अथ तालाक्षरवशाच्छेषान् पातानिति । यद्यपि पर प्लुतादिविभागोऽत्र नास्ति तु चच्चत्पुट इत्यादि तालाक्षरकृतस्तथापि तदाया(य)ता येऽत्र पाता शम्यादय शिष्यन्ते ताने(त ए)व योज्यन्ते न च चच्च-त्पुटादिविक्षिप्त (प्ता) । अथेति यद्यपीत्यर्थे । चोऽवधारणे ॥१६०॥

एतेष्वपि नैव स्फुटयति । प्लुते इत्यादि । ध्रुव इति गुरु । तेन प्लुते लघ्वक्षरे गुरुणि च प्रयुज्यमाने साम्य न विज्ञायते । ते शम्यादिभिस्त्रिभि पातैरुपलक्षित समत्वमुपनीयते बुद्धो निवेश्यते । अनेन ध्रुवकमार्गेणेदि भाव ॥१६१॥

एव हि सत्येवभूतोऽयमासारितप्रयोगो भवतीत्याह । तालैश्चेत्यादिध्रुवेण चेत्यन्तेन । एकरसगुर्वात्मना ये शम्यातालसन्निपाताश्चकारश्चावृत्तिस्तत्र कनिष्ठको-पोहनगर्भितो ध्रुवरचर्त कनिष्ठमध्यज्येष्ठादि कर्तव्यम् । एवशब्दो ध्रुवेणेत्यन्तो(तो)-ऽनन्तर द्रष्टव्य । चकारोऽस्य वृत्ति द्योतयति । विशेषाश्चकारा समुच्चये ॥१६२॥

ननु कनिष्ठे तु योगक्षेमता कथमितरयोरित्याशङ्क्याह । द्विगुणोत्तरयेति । द्विगुणोऽप्यन्त्यादेव द्विगुणत्व गुण पु(पू)ज्य मध्वन्तानामिति । भिन्न मुनीना मतम् ।

---

1 NS निवेशयेत् ।

2 NS अथ तालाक्षरवशास्त्वेषा ये ताश्च योजयेत् ।

3 NS उपदिश्यते ।

पूर्वं शम्या कार्या [1]द्विगुणस्तालः कलाद्वये शम्या ।
पुनरेककलस्तालस्त्रिकलः स्यात् सन्निपातश्च ॥१६४॥

त्रिकलोऽथास्मिंस्तालः शम्यैककला कलाद्वये तालः ।
द्विकला च पुनः शम्या तालः कलिकश्च कर्तव्य ॥१६५॥

त्रिकलश्च सन्निपातो भूयो विधिरेव एव कर्तव्य ।
द्वादश कलास्तृतीये तस्यान्ते सन्निपातश्च ॥१६६॥

प्रथमस्त्वष्टकलः स्याद् द्वादशकलिका(कौ) तथा परे(रौ)ह्येवे(वौ) ।
अन्त(न्त्य)श्च सन्निपातो मध्यस्यासारित. प्रो(स्यो)क्त ॥१६७॥

ये पूर्वमङ्गुलिकृता. प्रवेशनिष्क्रामसञ्ज्ञया गदिता ।
ते सर्वे कर्तव्या मध्ये त्वासारिते तज्ज्ञै· ॥१६८॥

---

शम्यां गुण्यन्ते नोत्तरा प्लवमाना वृद्धिमनुधावन्ति । या वृद्धिस्तयोपलक्षित । यस्मात् मध्यमं विधेय तस्माच्छम्यादयो युक्ता ।

नन्वेवमेकशम्यास्थाने द्वे शम्ये स्यातामित्याशङ्क्याह । प्रस्तारेणेति । कलानां नि शब्दरूपाणां च प्रस्तारो विकल्पविधौ प्रवेशनिष्क्रामात्मा तेनोपेत शम्यातालयोरन्तरे मध्ये ॥१६३॥

ततश्चाय प्रस्तारो भवतीत्याह । पूर्वं शम्या कार्येत्यादि । द्विगुणस्ताल इति । द्विकले यस्याधिष्ठेये । तत्र द्वितीयस्या कलाया स स्वय तालस्तिष्ठति । पूर्वस्या निष्काम निवेदयति स्वरतालतामितिष्ठत इति वामहस्तेन भवति । एव त्रिकल षट्कल इत्यादयोऽपि मन्तव्या ॥१६४-१६५॥

एव ज्येष्ठेऽप्यस्मिन्नवेत्यनेन सन्निपातस्य षञ्चपुटशेषता प्रमेण विभवतामृत्वेन सन्निपातान्तवस्तुत्रयोपेतत्वमस्याह । त्रिकलश्च सन्निपात इति । एते द्वितीयवस्तुपञ्चपाणिना । भूयो त्रिविरेव एवेति । तृतीय तु । तदेव स्पष्टयति । द्वादश कलास्तृतीय इति ॥१६६-१६७॥

ननु प्रथमपञ्चपाणेराद्या सन्निपातकला प्रथमवस्तुनापहृता पञ्चपाणिना च द्वितीयस्येति कथ द्वादश कला भवन्तीत्याशङ्क्याह । ये पूर्वमङ्गुलिकृते(ता इ)त्यादिना

---

१. NS द्विकलस्ताल कलाद्वयम् ।

अथ ज्येष्ठे तु कर्तव्यं शम्यातालकलान्वितम् ।
शरीरं हि बुधैर्नित्यं पञ्चषष्टिकलान्वितम् ॥१६९॥

तस्यावापोऽथ निष्कामो विक्षेपोऽथ प्रवेशनम् ।
अङ्गुलीनां तु कर्तव्यं कलामानं चतुष्कलम् ॥१७०॥

पूर्वं शम्या कार्या चतुष्कलोऽन्त्यो भवेत्ततस्तालः ।
शम्या चतुष्कला स्यात्तालो द्विकलस्तथा चैव ॥१७१॥

कार्यस्य(श्च) सन्निपातोऽपि षट्कल षट्कलश्च ताल स्यात् ।
द्विकला च पुन. शम्या चतुष्कल. स्यात् पुनस्तालः ॥१७१॥

---

प्रवेशो निष्कामो(म) इत्यन्तेन क्रमेण ये गदितास्ते पूर्वं कृत्वा क्रमेण कनीयस्या द्व्यङ्गुलीभि कृताः सम्पादिता कर्तव्या । तेनाविभक्ताङ्गे चच्चत्पुटे द्विकले पादभागे प्रथमे कनीयसीति यावत् । अन्त्ये तर्जनी प्रति पञ्चपाणौ आद्ये कनीयसी स-(प्र)ति चतुर्थे तर्जनी(नि)कादि(वी)नि । पञ्चमे कनीयसी शसा । षष्ठे तर्जनी प्रतीति । एव द्वितीये मुक्तसु(क)सन्निपात । विभक्ताङ्गे तु आद्या शम्या मुक्तिकाख्यानीया । ततो निताविशता प्रनिशता प्रनिषा इति पादभाग । चतुष्के कनीयस्यादयस्तर्जन्यन्ता निप्रताशनितानिप्रतिविस पादभागषट्क पञ्चपाणौ कनीयस्याश्चतस्र पुन कनीयसी तर्जनी चेति ॥१६८॥

एव ज्येष्ठे । एव द्विधा चाङ्गुलिविभागो मन्तव्य । तदाह् । अथ ज्येष्ठे कर्तव्यमिति । प्रतीति । एव द्वितीये मुक्तस्ततसन्निपात । विभक्ताङ्गे ज्येष्ठेऽप्येकमेव द्वैविध्य कतव्यमिति यावत् ॥१६९-१७०॥

तत्र विभक्ताङ्ग तावत् प्रस्तारद्वारेण स्वकण्ठोक्तेन दर्शयति । पूर्वं शम्या कार्येति । कृतविभक्ताङ्गे शम्याद्या मुक्तप्राये(या इ)ति । प्रथमवस्तु-षट्कले पञ्चपाणेराद्य सन्निपात प्रविशति । तत्र पञ्चपाणौ द्वितीयस्याद्य सन्निपातोऽन्त्य भजते । द्वितीये तु मुक्त इति शम्याद्वयेन...... न्त्या बोध्यते । तेनाय प्रस्तार' । स आनिविता आनिवस आतावित्र आनिवस आनिवित्र आतावित्र आनिविता आनिविश आतावित्र आनिविशम तदाह् । पूर्वं शम्येत्यादिना कार्यश्च सन्निपातोऽपि षट्कल इत्यन्तेन ॥१७१ १७२॥

शम्या चतुष्कला स्यात्तालो द्विकलस्ततश्च कर्तव्यः ।
पुनरेव सन्निपातश्च षट्कल. सविघातश्च ॥१७३॥

विधिरेष एव कृत्स्नं पुनस्तृतीयेऽपि सन्निपाते तु ।
पुनरेवंवामङ्गुलिविक्षेपान् सम्प्रवक्ष्यामि ॥१७४॥

पूर्वं शम्या तथाऽऽवापो निष्क्रामश्च तल पुन ।
विक्षेपोऽथ पुनस्ताल पुनरावाप एव च ॥१७५॥

अनामिकाकनीयस्योर्निष्क्रामश्च पुनस्तयो ।
[1]द्वाभ्या सहैव विक्षेप शम्या चावाप एव च ॥१७६॥

मध्यमायां ततस्तालो विक्षेपोऽथ प्रवेशनम ।
आवापश्च तत [2] कार्यस्तर्जन्योर्निष्क्रम पुनः ॥१७७॥

विक्षेपश्च पुनः कार्यं सन्निपातस्तथैव च ।
कला सप्तदशोपेता [3] सन्निपातो भवेदयम ॥१७८॥

---

प्रथम वस्तुवत सन्निपातश्च षट्क (टकल )सविघातश्च इत्यन्तेन । द्वितीय विधिरेष एव कृत्स्नः पुनस्तृतीयेऽपि सन्निपाते तु इत्यन्तेन । द्वितीय सन्निपात इति । सन्निपाते त्विति यावत् । अत्र स्वकण्ठेनाङ्गुलिविभागो नोक्त स नो(चो) त्तीय । तनाद्य शम्या मुक्तमेकीकृत्य पादभागव्यवस्था । तदनुसारेण कनीयस्यादि विभाग । एतच्च सूचित तच्चा(स्या)वापोऽथेत्यादिना (भ ना ३१ १७०) । अथ विभक्ताङ्गेऽपि प्रकारान्तरमस्ति । यत्र शम्या मुक्ता क्रियते अपि तच्छम्यान्त एव प्रतिभागविभाग ।प्रथमवस्तुन्येव यस्तु सन्निपातो मुक्तमेकीक्रियते स च सप्तपदाणि-सम्बन्धेऽत्र कल्पनीय इति पञ्चपाणावावापादिक एव पादभागकल्पनति तदेतद् प्रकारान्तरमङ्गुलीद्वारेण दर्शयति ।पुनरेवंवामिति । एवा विभक्ताङ्गानामिति कला नामङ्गुलीना विक्षेपो विभागेन न्यास शम्यादि ॥१७३ १७४॥

विक्षेपान्ते कनीयसीति छेदकारिणा अथशब्देनाह । एव द्विकलात्मनि चतुष्कलात्मनि पादभागे आद्याङ्गुलि । द्वितीये यावच्चतुर्थं च सजनो । ततो मुक्तकत्वात् पादभागगणनायामनुप्रविष्ट एव सन्निपात । तदाह । कला सप्तदशेति । सन्निपात इति । द्विकलेऽपि । एवंविधकल्पना सन्निपातान्त एव कार्यं इ(यें)ति यावत् ॥१७५-१७८॥

---

१ NS ताम्या ।
२ NS पुन ।
३ NS दर्शवैता ।

आवापश्च पुनः कार्यः कनीयस्या च निर्गमः ।
विक्षेपश्च प्रवेशश्च त्वावापश्च ततः पुनः ॥१७९॥

अनामिकाकनीयस्योस्ततस्तालो भवेत् पुनः ।
विक्षेपश्च पुनस्ताभ्यां ततः शम्या प्रकीर्तिता ॥१८०॥

आवापश्च पुनः कार्यो मध्यमानिष्क्रमात् पुनः ।
विक्षेपश्च पुनः कार्यस्ततस्तालं नियोजयेत् ॥१८१॥

आवापश्च पुन कार्यस्तर्जनीनिर्गम पुनः ।
विक्षेपश्च (पञ्चपाणकः शम्यया सह कीर्तित) ॥१८२॥

आवापश्च कनीयस्यास्ततस्तालं नियोजयेत् ।
विक्षेपश्च प्रवेशश्च पुनरावाप एव च ॥१८३॥

*प्रवेशिन्या च निष्क्रामो विक्षेपश्च पुन. स्मृत* ।
सन्निपातस्तत[1]श्चैव चतुर्विंशतिको भवेत् ॥१८४॥

तृतीय सन्निपातस्य त्वेव[2] एव विधि स्मृतः ।
एवं ज्येष्ठस्य विज्ञेयस्तालोऽङ्गुलिविकल्पित ॥१८५॥

प्रथमः षोडशकलश्चतुर्विंशतिकस्तथा ।
द्वितीयश्च तृतीयश्च सन्निपातकलाधिकः ॥१८६॥

---

अथ पञ्चपाणौ पादभागषट्कविभागमाह । आवापश्च पुनरित्यादिना । निर्गमो निष्क्राम. । चतुर्षु पादेषु भागेषु चतस्रोऽङ्गुल्य । कनीयसी (अनामिका मध्यमा) तर्जनीति तात्पर्यम् ॥१७९-१८५॥

अथाऽविभक्ताङ्गेऽङ्गुलिविभाग सूचयित्वा पादभागविभागमाह । प्रथमः षोडशकलः । तेन चतस्रोऽङ्गुल्य । चतुर्विंशतिकस्तथा द्वितीयश्च । तेन तत्र सन्निपातादि । । एव पादविभाग । सप्तैकविंशतिमात्रा यस्मैव भवति षट्पादत्वात् । स च पञ्चपाण्यात्मा द्वितीयश्च । तथेति । स्वोचितेन पादभागविभागेनाङ्गुलिषु सविभक्तव्य इत्यर्थ । तृतीयश्च सन्निपातादेव । तस्य त्वन्ते भुक्तकलेत्याह । सन्निपातकलाधिक इति ॥१८६॥

---

१. NS पुन ।
२ NS एव ।

प्रत्येकं पतनान्येषु दश सप्त भवन्ति हि ।
शम्यातालकृतानीह सन्निपातकृतानि च ॥१८७॥

षट्शम्यमष्टतालं त्रिसन्निपातं त्रिवस्तु चाप्येवम् ।
सप्तदशयुग्म[1]युक्तं विद्यादासारितं सर्वम् ॥१८८॥

आसारितानामित्येवं गदितं लक्षणं मया ।
गीतानां वस्तुकानां च प्रयोगपरिकल्पनम्[2] ॥१८९॥

---

नन्वेवं प्रयसि वैचित्र्येऽप्यदेव किमपि गीतकपाणिकादिवक्तव्यमेकरसमासारितरूपत्वमित्याशङ्क्याह । प्रत्येकं पतनान्येषु दश सप्तेति । हि यस्मात् सर्वे सप्तदश पातास्तस्मात् सामान्यकृतमेकरसामासारितत्वं वैचित्र्यान्तरयोगेऽपि । एवं ज्येष्ठादिभेदेऽपि वक्तव्यम् ।

ननु सप्तदशपाताः शास्त्र एव न श्रुता इत्याशङ्क्याह । शम्यातालकृतानीति । त्रय एव । वृत्त्या वस्तुत्रितये साप्तद(श)त्व तत् पूरयति ॥१८७॥

तात्पर्यं कथमिति चेदङ्गषट्कत्वमष्टतालत्व त्रिसन्निपात चेति । सर्वमिति । कनिष्ठादिभेदभिन्न स्वतन्त्र वर्धमानतालयोगेन सप्तदशपातत्वम् । तत्र स्वतन्त्रासारित त्रिधा । लयान्तरमपीति चतुर्धेति । अन्येषां प्रत्येकं मार्गे चतुष्टयभेदाच्च षोडशत्वम् । तत्राप्यविभक्तविभक्ततया द्वात्रिंशत् । वर्धमान तु मार्गभेदेन षोढा कृतम् । तत्र चासारिततालेन विभक्ताविभक्ताङ्कतया द्वादश भेदा । एतदासारितवर्धमानम् । आसारिताभासवर्धमानमप्येव द्वादशधा । एव वर्धमानानारिते विभेदा । कण्डिकावर्धमानं चेति सप्तपञ्चाशदमी भेदा भवन्ति । उक्त च पुराणे ।

आसारितं वर्धमानं सप्तपञ्चाशदात्मना ।
सन्ध्यासु प्रमथैर्देव्या सह नृत्यति शङ्करः ॥

इति ॥१८८॥

आसारित एकपाणिश्चेति सप्तकलस्तालमार्गं आसारितानामेव । इतिकर्तव्यताविशेषाद्वर्धमाननिवृत्तिरित्यासारणाया प्राधान्यात् कनिष्ठमेवोपसंहरन्नाह । आसारितानामित्येवमिति । इतिः समाप्तौ । एवं शब्देन भेदात् प्रयोगे वैचित्र्य चाह । कस्मादेषामादौ लक्षणमुक्तमित्यतोऽत्र हेतुमाह । गीतानां वस्तुकानामिति । गीतानां

---

१. NS. पात ।
२. NS. प्रयोग. परिकल्प्यते ।

अतः परं[1] प्रवक्ष्यामि गीतानां वस्तुकेष्वपि ।
विवर्धैककवृत्तानि त्रीण्यङ्गानि समासतः ॥१६०॥

[2][सर्वेषामेव गीतानां वस्तुष्ववयवेष्वपि ।
विवर्धैककवृत्तानि त्रीण्यङ्गानि भवन्ति हि] ॥१६१॥

---

मद्रकादीनां यानि वस्तुकादीनि षण्मात्रादीनि चकारादङ्गादीनि येषां प्रयोगस्ताल-वैचित्र्यपरिकल्पितेनासारितलक्षणेन । आसारितपूर्वं हि तालवैचित्र्यमित्युक्तमसकृत् । एवं केवले ताण्डवे प्राधान्ययोगादासारिताभिधानं । तस्मादिति हेतावित्युक्तं भवति । अन्ये तु वस्तुकशब्देन पाणिकालाख्यगानादीनां संग्रहमाहुः ॥१५९॥

अथ वक्तव्यान्तरमाह । अतः परमिति । गीतका(ना)नां वस्तुकेषु अपि-शब्दादङ्गेषु च कर्माणि । त्रीण्यङ्गानि यद्वशाद्गीतिविकल्पनमिति व्यज्यते तानि वक्ष्यामि । विवि(व)धस्य प्रथमोपादानमाद्ये मद्रकगीते प्राधान्यात् । तथा च वक्ष्यति ।

विवर्धैक(क)योवायो (योः प्रायो) मद्रके तु प्रयोजनम् ।
(भ ना ३१.१६३)

इति । यद्यपि चोद्देशविधावुद्देशो विधा(दा)री यतयो लयाः (भ ना. २८.१६) इति प्रकरणोपयोगात् तदन्तरमङ्गाना विदा(री)वा(दे)श्चे(श्चो)द्देश । तथापि लक्षणा-वसरेऽङ्गनिरूपणपूर्वमङ्गनिरूपणं वक्तव्यमिति प्रोक्त तन्निरूपणम् । ततो ये स्थूला आरम्भकविभागास्ते विदारीत्वे वक्ष्यन्ते ।

अथपरं वस्तपरा विदार्यः परिकीर्तिताः ।
चतुर्विंशतिरेतासां प्रमाणं परमं स्मृतम् ॥
(भ. ना० ३१-१६७-१६८)

इति । अत्र वस्त्वारम्भकानामत्यारम्भो विदारीभेद सोऽङ्गत्वेनेह निर्दिष्टः । अङ्गसंज्ञा च प्रयोजनगीतकरूपतासिद्धिप्रतिपादनमेव । तथाहि । स्थाय्यादयो ये वर्णास्तन्निष्प-(ष्पा)द्यमानं गीतं गीतकमिति तदनुवर्ती विच्छेद कर्तव्यः । परिच्छेदस्य परिच्छेदतनु-त्वाद्विदार्यश्च साम्यात्मतया परिच्छेदनरूपत्वम् । अत एवेयं तालगीतं निर्दिष्टा । एवं च वर्णानुवृत्तित्वादेव वर्णाङ्गकमिति तालाङ्गस्य पृथगेव गीतिवैचित्र्यात्मनाभिधानेन प्राधान्यतयोक्तम् । तदवधारणेन व्यपदेशेन गीतकमित्युच्यते । तत्र तु तालभिघात

[1]एकक तु विदार्येका ते चोभे विवध(ध) स्मृत(तम्) ।
षट्पर त्र्यवर वृत्त द्व्यङ्ग सहरण च तत्[2] ॥१६२॥

विवधैककयो प्रायोर्म(म)द्रके तु प्रयोजनम् ।
प्रकर्याश्चापि वस्त्वर्धे पादे रोविन्दकस्य च ॥१६३॥

---

मासारणाप्रसादादेवैरयङ्गत्वादेव गीतकत्वसिद्धि । आरम्भकाणा च वस्तूना मुख-प्रतिमुखादीन्येवमप्यङ्गतया एव(मेव) लभते(न्ते) । तथा च दत्तिलाचार्येणोक्तम् ।

वक्ष्यमाण(णं) मुखाद्यङ्ग विज्ञेय तच्चतुर्विधम् ।

(दत्तिलम् १४१)

इति । वस्तुनिबद्धाना वस्तुघटनिबद्धाना वा इय वायव(वयव)घटकेषु यतो भवन्ति यत एतान्यङ्गानि । अत एवविधेन सविहितः किं द्वावेकको द्विवि(व)धो वेति । अङ्गतत्वा विदारी तद्विवि(व)ध एवेति निश्चयात् । अस्मिन् विषये तावता(ता)नि भवन्ति सम्भाव्यन्ते यद(दृ)ष्टवो(देशे)नोच्यत(न्त)इति यावत् ॥१६०-१६१॥

अथैषां विशेषलक्षणान्याह । एकक तु विदार्येकेति । एको विच्छेद । एकक दौ(द्वौ)विवध विशिष्टो वधो हनन विभक्ततापादनमिति यावत् । त्र्यवरचत्वार पञ्चविधेष्वपि छेदावृत्त वर्तते । भूयानेव भेदो यत्रेति वृत्तम् । षट्पर त्र्यव(व)र वृत्तमिति । तस्य चावान्तरभेदद्वयमित्याह । द्व्यङ्ग तच्चेति । त्रिविधमपि सहरण कर्तव्यम् । सह्रियते परिसमाप्यते गतिरत्रेत्यत एव वर्णाङ्गत्वम् । स्वगीतिपरि-समाप्तिवचाग्या । तत्स्वरेण तन्व्या वाद्येषु वाद(द्या)न्तरेण न्यासापन्यासेन विन्या-सेनेति तत् स्वरान्तरयुक्त भवति । सहरणमिति । न्यासापन्यासौ तदन्तत्वात् सहरणमित्यन्ये ॥१६२॥

अर्थेषा विशेषतो विनियोगमाह । विवक्षाया युज्यत(त) एव व्यपदेश । प्रकर्या अपि षण्मात्र वस्तु । तत्र तत्रापि षडेककानुवृत्तमिति वा यदुच्यते तदङ्गेन सम्भव स्यैव । प्राग्वत् तेनापि विवधैकके तिसृषु तिसृषु मात्रासु विभज्यते । तदाह । प्रका(क)र्याश्चापि वस्त्वर्ध(धं) इति । एवं षण्मात्रे रोविन्दकपादे वाच्यम् । तदा पादे रोविन्दकस्य चेति । एतच्च सम्भवमात्रेणोक्तम् । न चैव नियम कश्चिद् । अत ये(ए)वापरान्तस्यो(स्यौ)वैणकस्य योऽति(भि)धानेऽपि न दोष कश्चिद् ॥१६३॥

रोविन्दकोत्तराभ्यां तु वृत्त[1]मुल्लोप्यके तथा ।
पाणिकाया बहिर्गीते[2] लास्ये चैव प्रकीर्तितम्[3] ॥१६४॥

प्रवृत्तमवगाढं च द्विविधं वृत्तमुच्यते ।
आरोहित्वादवगाढं प्रवृत्तमवरोहत ॥१६५॥

आरोहणं च द्विविधं प्रवृत्तमवरोहतः ।
आरोहणं च द्विविधं तथा चैवावरोहणम् ॥१६६॥

न्यासापन्यासविहितं मार्गान्तरकृतं तथा ।
अवर्का दशधरा(कावशपरा)विदार्यं परिकीर्तिता ॥१६७॥

---

अपवृत्तस्य विषयमाह । रोविन्दकशरीरे पादोऽङ्गी । तस्य विवर्धककयोकक्त । तेन रोविन्दकशरीरेणोत्तरशरीरेण च सहोल्लोप्यके वृत्त प्रयोज्यम् । तथा पाणिकायां बहिर्गीते । आरम्भादावुक्तलक्षणे लास्य इति च लास्यगाने उक्तवक्ष्यमाणलक्षणे वृत्तमेव । पाणिकालास्यगानोपयोगाविहो...... ता गीतकमध्ये तत्परिगणनाद्वा गीतकसमानयोगक्षेमत्वज्ञापनार्थम् । बहुकावीभाविमिति (भ ना० ५ १३) वचसा पूर्वरङ्गे पाणिकाऽपि प्रयोज्यत्वेनोपदिष्टा । तत एवासो(सौ) अत्याधा(या)दिपरिहारेण वक्ष्यते । ध्रुवोपयोगसूचकलक्षणेऽभिधाने प्रयोजकस्य अत्याधा(या)विभिन्या... .. ...॥१६४॥

प्रवृत्तमिति यदुक्त तदिदानीं विभजति । प्रवृत्तमवगाढं चेति । आरोहणे गात्रसङ्कोचनमित्यवगाढव्यपदेश । अवरोहणे तूत्था( त् ) प्रवृत्तिरिति प्रवृत्तसंज्ञा ॥१६५॥

आरोहणावरोहणे च प्रत्येकं द्विधा ॥१६६॥

न्यासयोगेनेत्येक( ) प्रकार । अपन्यासो विन्यास एवेति तन्मध्य एव निक्षिप्तो न तु पृथक् सङ्ख्यया गणित । अनन्तरमार्गेण सवाद्यनुवाद्य(दि)बलयोगेनेति द्वितीय । न्यासापन्यासावशस्य वादिनो वारोहणावरोहण चेति यावत् । मार्गान्तरमन्तरमार्गो जात्यध्याये (भ ना अ २८) सञ्चारांशे(श)बलस्थानां (भ ना २८ ७५) इत्यत्रोक्तम् । एव वृत्तस्येत्यादि षड्वरविदारीकस्यारोहणेन प्रतिकल-(विच्छेदेन) चतुर्विधेनावरोहणेन भेदात् त्रिंशद्भेदा भवन्ति । अत्र कश्चिद्विशेष उक्त ।

---

१ NS मुल्लोपके । KSS- मुल्लाप्यकस्य हि ।

२ NS गीता ।

३ KSS लास्ये चैव प्रकीर्तिते NS लास्ये वै परिकीर्तितम् ।

चतुर्विंशतिरेतासां प्रमाणं परमं स्मृतम् ।
अध्यर्धाच(र्धं)[1]तृतीयाश्च सन्निपाताः प्रमाणतः ॥१६८॥

---

शुद्धास्वथबलात्तत्र ज्ञेयमन्तरमार्गतः ।
न्यासापन्यासयोगेन विकृतासु च जातिषु ॥
(दत्तिलम् १४७-१४८)

इति दत्तिलाचार्यः । एवं वस्तुनिबद्धेष्वङ्गनिबद्धेषु स(प्र)न्यान्यापेक्षया वान्तरविदारीं समभिधाय ततो गीतिवैचित्र्यादवर्णाङ्गभेदो निरूपितः ।

नन्वेवं सर्वेऽङ्गनिबद्धा एव स्युः । सत्यम् । किन्तु तेषां वस्तुकल्पनात्मनि भागयोगे तदाश्रयाण्यङ्गानि निवेश्यन्ते । वा(व)स्तुप्राधान्यं वात इति तत्कृतो व्यपदेशो(शो)युक्तः । उल्लोप्यकादौ तु वर्णाङ्गनिबन्धनैव भागपरिकल्पना । तथा हि । मद्रकादीनां तालसाम्येऽपि वर्णाङ्गभेदादेवान्यत्वमित्यङ्गान्येव प्रधानानीति तन्निबन्धनतान्यानीयेत । इत्येवं वर्णाङ्गकृतमङ्गनिबन्धनत्वमिति मन्यन्ते । अन्ये तु तालाङ्गकृतमङ्गनिबन्धनत्वं न वर्णाङ्गकृतमित्याहुः । तदेतदिह तावदास्ताम् । प्रकृतं तु ब्रूमः ।

अवान्तरविदारीस्वरूपं तावदुक्तम् । अधुना महाविदारीस्वरूपं वस्तु निबन्धेष्वर्धश्लोकेनाह । त्र्यवरैकादशपरा इति । अत्र वस्तुन्येका महाविदारी तत्र त्रिवस्तुत्व गीतकानां .. ..। तद्यथा । मद्रकस्य प्रकर्यां वा तावत्तत्र तिस्रो महाविदार्य इत्यनुयोगः । भूयोवस्तुत्वं स्यर्य(र्थं)चतुर्थवस्तुत्वप्रभृति यावत् सप्तवस्तुत्वं यदपरान्तके । तत्र प्रतिवस्तु विदारी सप्त विदार्य इति शाखा । अर्थ(र्थं)चतुर्षु वस्तुषु प्रतिशाखेति । तद्गतावधसप्तो विदार्य इत्येकादशेति परयोगः । तेन चत्वारि (एका)दशान्तमत्र मध्यमयोगेन सगृहीतम् ॥१६७॥

मतान्तरमप्याह । चतुर्विशतिरेतासां प्रमाणमिति । अनेनेदमुच्यते । त्रिमात्रे वस्तुनि मात्रार्धे यावद् विदारी कर्तव्या । येन चतुर्थवस्तुके मद्रके पिण्डीकृत्य चतुर्विंशति(:) । प्रतिवस्तु षडिति गणनया । षण्मात्रे तु प्रकृते वस्तुनि नार्धमात्रायां विदारी कार्या । एवं हि त्रिवस्तुके षड्विंशाद्विदारिकाऽधिकत्वऽधिकविदारिकाऽपि प्रकरी स्यात् । एतस्मान्नियमात्तु न भवतीति ज्ञातमात्रायां तत्र विदारीत्युक्तं भवति ।

अपरे सामान्यकालाभिप्रायेण यथासम्भवं विच्छेदसंख्याप्रतिपादनं श्लोकार्धस्य

---

1. KSS तृतीया च सन्निपातप्रमाणतः ।

[1]उल्लोप्यके विदारी तु स्मृता वैहायसे तथा ।
विघ्येन च[2] ताः कार्या युग्मवृत्तेन[3] चैव हि ॥१९९॥

तात्पर्यमाहुः । तथाहि । चञ्चत्पुटे समुदायविच्छेद एका विदारी । प्रतिकलविच्छेदे चतस्र । कलार्धविच्छेदेऽष्टौ । तदर्धेऽपि च त्रिचतुष्कलदक्षिणादियोगेऽपि त्रित्रेऽपि च ह्रस्वमानमित्युक्तम् । तेन कलार्धापेक्षया षोडश । एव त्र्यश्रे वाच्यम् । यावत् पञ्चपाणौ चतुर्विंशतिः । एव......या......रयेव कला..... तावत्स्वेव पदेषु वर्णानुकर्षाद् द्विकलचतुष्कलयोव. चाम्य(म्या)प्रि(प्रा)यः(शक्यप्राय.) । यथा द...अ . ......इत्येकस्यामपि कलायां चत्वारो विच्छेदा. । यावद्वर्णानुकर्षणेति चतुष्कलयोगेऽपि यदेव परं भवतीति गणाधिक्याभावेऽपि द्विकलत्वादिप्रकारान्तरमुक्तं भवतीति ।

अथोल्लोप्यके विदारीस्वरूपमाह ।

अध्यर्धार्धतृतीयाश्च सन्निपाताः प्रमाणतः ।
उल्लोप्यके विदारी तु स्मृता वैहायसे तथा ॥

इति । इहोल्लोप्यकमपरत. सप्ताङ्गं प्रकर्षं पुनर्विदार्यर्थे तत्रोल्लोप्यकमिति मात्रैवाङ्गीति कथ्यते । न च षोडशकलासु तावन्ति वर्णाङ्गानि निवेशयितु शक्यानि । परिमिते हि तत्र मात्रारूपे कथमेककादीनि पौन.पुन्यनिवेशनया प्राप्तामनेकसंख्यामनुवर्तितु मुत्सहन्ते । एव वैहायसे द्वादशकले कथमङ्गानां निवेशनमिति । तत्रानेनोपाय उच्यते । तत्र यथा सप्ताङ्गत्व चिकीर्षित भवति तथा षोडशैव कलाः । तथा वर्णप्रकर्षेण कला सार्धकलारूपेत्यनेन येन गातव्या यथा कलतश्चतुर्विंशति. कला भवन्ति । तत्र सप्ताङ्गानि निवेशनीयानि । कलात्रयेऽङ्गके चतुष्कलाषट्क इति कृत्वा यथा तु विंशत्यङ्गो विधिः स्मृतस्तथा षोडशसु कलास्वेका कलाऽध्यर्ध(ध्यर्ध)कलाद्वयमिति । इयता वर्णप्रकर्षेण गान कर्तव्यम् । यथा मात्रैवमध्यर्धतृतीया मात्रा फलतश्चत्वारि षट्कलारूपाणि भवन्ति । तत्र कलाद्वयेऽङ्गमिति विंशतिर्मात्राः परा . . . .. स्तीति । तथाऽध्यर्धार्धतृतीयाश्च सन्निपाता इति । सन्निपातोऽत्र मात्रा । तत्कृतविच्छिन्नरूपत्वात् । तेनाध्यर्धश्च सन्निपात. । अध्यर्ध(अर्ध)तृतीयश्च सन्निपात इति द्वन्द्व । एव सप्ताङ्गे च परापरयोगेन व्याख्यायते । सपादो सन्निपातत्वमित्यादिरपि भेदो लभ्यते । अन्ये तु प्रतिकलमङ्गमित्यध्यर्धसन्निपातेऽप्यस्ति विंशत्यङ्गत्वेत्याहुः । एवं वैहायसेऽपि वाच्यम् ।

१. KSS. उल्लोल्यते ।
२. NS. तु तत्कार्या ।
३. KSS. वृत्तेषु ।

[1]न ह्यर्धसन्निपातेऽस्या भवेदङ्गसमापनम्[2] ।
(गीतानि सप्त ।)
[3]मद्रकोल्लोप्यके चैव तथा चैवापरान्तकम् ॥२००॥

---

एवं महाविदारीमुक्त्वा मदर्यमय विधिरुक्तस्तान्यङ्गान्यत्रदर्शयति ।

विवि(ध)धेन च ताः कार्या युग्मवृत्तेन चैव हि ।

इति । ता इत्यध्यर्धसन्निपातप्रमाणा अर्धतृतीयसन्निपातप्रमाणाश्च महाविदार्यः ॥१९८-१९९॥

न ह्यत्र(र्ध)सन्निपाते(ऽ)स्या ऋ (भ)वेदङ्गसमापनम् ।

एतैव तावत् मात्रा मुखप्रतिमुखरूपतयोल्लोप्यके विभज्यते । तत्रार्धमात्राया मुखरूपायां कथमङ्गाना समाप्तिः । विशतीनां समाप्तिविषयविरूपत्वम् । अर्धसन्निपात इत्यर्धमात्रा । अन्ये त्वर्धसन्निपाते चेत्याहु. । प्रकृत इति चाध्याहरन्ति । तेनार्धतृतीयमात्रत्वेऽङ्गे नाङ्गसमाप्तिर्भवेदित्यर्थं ।

केचित्तु युग्मवृत्तिसमाश्रयणे हेतुमाह । त्रिविदारीकत्वे चासमच्छेदो न भवतीति तात्पर्यम् । अस्या विदार्या सन्निपाते विषमे विच्छेदाङ्गसमाप्तिरूप समापनं भवेत् । अर्धकेनाप्यपूर्णतावैषम्य लक्ष्यते । अर्धस्य सन्निपातैर्विच्छेद इति षष्ठीसमासः एवमेतेनावान्तरमहाविदारीभेदेन यद् फल तदाह । गीतानि सप्तेति । विदारीवैचित्र्यमूल्ये हि गीतव्यवहारे स्वरालाप पुस्तकवाचनादाविव । तत्र

मद्रकोल्लोप्यके चैव तथा चैवापरान्ति(न्त)कम् ।

इति । तथा चैवेति । एककलारूपमेतेषां त्रयाणामिति । एवकारेण प्रातिस्विक नियतमेषा रूपमित्याह ॥२००॥

प्रकर्यो वैणक चैव रोविन्दकमथोत्तरम् ।

इति । तत्र चतुष्कलत्वमेव । अत्र च कानिचिद् वस्तुनिबद्धानि । अपराण्यङ्गैरिति

---

१ NS नह्यर्धसन्निपाते तु KSS नह्यर्धे सन्निपातस्य ।
२ का० पुस्तके इतोऽग्रे श्लोकाष्टकमधिकम् ।
३. KSS ज्ञेयानि सप्त गीतानि मद्रकश्चापरान्तकम् । प्रकर्यो वेणुरोविन्दा ह्युल्लोप्यश्चोत्तर तथा ।

प्रकर्यौवेणु(वेण)क चैव रोविन्दकमथोत्तरम् ।
द्विविध मद्रक ज्ञेय[१] चतुर्वस्तु त्रिवस्तु च ।२०१॥

शीर्षकेण समायुक्त तत्तु ज्ञेय त्रिवस्तुकम् ।
पञ्च षट् सप्त तानि[२] स्युः शीर्षक चापरान्तके ॥२०२॥

प्रकर्यामथ चत्वारि त्रीणि वाप्यधिकानि वा ।
प्रकर्यास्तु प्रकीर्णत्वात्सा(?)प्यमिति वर्णितम् ॥२०३॥

[३]रोविन्दक तु सप्ताङ्ग षोडशाङ्ग पर स्मृतम् ।
पादौ द्वौ [४]समवर्णौ तु एककावत्र कीर्तितौ ॥२०४॥

---

ताण्डवाध्याये (अ ४) सूचितम् । तच्च तामाङ्गमेवाङ्गम् । तत्र महाशरीरत्वे वस्त्विति व्यवह्रियते । अन्यथा (विदार्यो)ऽवङ्गमिति केचित् । अन्ये तु वर्णाङ्गप्राधान्यतत्स्वविभागैस्तालैरार०भाव्यङ्गनिबद्धान्याहुः । तत्रैक त्वङ्गविभाग विवस्तुवंस्तुनिबन्धादि सूचयति । द्विविध मद्रकमिति । तत्रयैव मद्रकाद्यप्रहृतवस्तुना लभ्यते गीतकमिति ॥२०१॥

शीर्षको यद्वदसकीर्णस्यप्रशप्तिहेतुस्तद्वत् पञ्चपाणि । असकीर्णं त्र्यश्रकत्व महत्स्यावेदयत इति शीर्षकत्वेनोक्तम् । शीर्षकस्तु त्रिवस्तुक एव । न चतुर्वस्तुकत्वेऽपरान्तके पञ्चवस्तुनि षट सप्त वा । अन्ते शीर्षकोऽपरो द्वितीयोऽन्तोऽवयव प्रतिघातात्मा यत्रेत्यपरान्तकम् ॥२०२॥

प्रकर्यास्त्रीणि सार्धानि वस्तूनि चत्वारि । प्रकीर्णत्वात् विक्षिप्तत्वात् । विक्षिप्तत्व च वस्तुन क्रमाश्रमेव क्रियत इति । प्रकरी गौरवादि ङीष (गौरादित्वात् ङीष्) (पा अ ४ १ ४१) । वस्तुनिबन्धेषु वस्तुविभाग ॥२०३॥

अथाङ्गनिबन्धेष्वङ्गविभागमाह । रोविन्दकस्त्वि(क त्वि)ति । इहाङ्गनिबद्धेषु क(कि)ञ्चिदेव तालरूप प्रधान वस्तुनिबद्धेष्विव वस्तु तावत् । व्यवस्थितेन रोविन्दकशब्देन प्रस्तारात्मक शरीरम् । प्रकृष्टस्वराणा वर्णानुकर्षरूप च प्रस्तार च

---

१ NS तत्र ।
२ KSS वापि NS स्युः ।
३ KSS रोविन्दकस्तु । NS रोविन्दक तु सप्ताङ्गे ।
४ KSS समवर्णेन एकैकस्तत्र कीर्तित ।

प्रवृत्तं विवधश्चापि [1]तस्य चाद्यौ प्रयोजयेत् ।
[ततो वेहं ततोऽङ्गानि यथायोग नियोजयेत् ॥२०५॥

आकारश्चास्य मध्ये स्यादाकारश्चान्ततः स्मृत. ।
अविकल्पितमङ्गेऽस्य शीर्षकं सम्प्रयोजयेत्] ॥२०६॥

सप्ताङ्गं द्वादशाङ्गं वा [2]प्रोक्तमा(मो)वेणकं बुधैः ।
तत्र [3]द्व्यन्त तु सप्ताङ्गं [4]त्र्यन्त द्वादशम स्मृतम्[5] ॥२०७॥

पादः सन्निमर्वविधातो वज्रं सम्पिष्टक तथा ।
[6]एककं चतुरस्रं च तथा चैवोपवर्तनम् ॥२०८॥

---

जीवितम् । तेन रसन शब्दनम् । रसनस्य बिन्दे सध्ये रसे वक्षिकपिविन्वेषु(शः) । ततः समासात् सप्तायां कन् (पा. म ५ ३ ८७) । एवमेतद् रोविन्दक सप्ताङ्गमपरता षोडशाङ्गं यथायोगमित्युच्यते ॥२०४-२०५॥

न कला द्वादशकले य इति सप्तपराणि षोडशपराण्यङ्गानि......स्यादाकृत्य वर्णानुकर्षेण कालभूयस्त्वसिद्धार्थमाह । आकारश्चेति । आकरण विततीकरणम् । आकार. घुष्काक्षरस्य । आकार(श्चा)स्य मध्ये चेति । जीवि(वं)कं शिर इव प्रधानम् । तत एवाविकल्पितम् ॥२०६॥

अथोवेणकाङ्गविभागमाह । सप्ताङ्ग द्वादशाङ्ग चे(वे)ति । तत्र मायवाद एवात्र प्रमाम् । तथा च दत्तिलाचार्यः ।

असमानत्वनियत्वे तस्य प्राधान्यकारणे । (दत्तिलम् २०१)

इति । स च द्वादशकल इति कलयाङ्गमासूत्रयन् द्वादशाङ्गानि यावत् क्रोडीकृत्यावतिष्ठते । तत एव मापण द्वादशभागात्मना हनन गुणन यास्य(यस्ये)ति स मायघातः । स एव चोवेणकम् । अस्यते इत्यसमाङ्गमभेदात् । अस्तु वेणयति वेणीरूपा या नैकसंघातरूपा करोतीति अतो विकप् । वेणी प्रातिपदिकार्थंगणिजन्ताद् ण्वुल् षष्ठीसमासः । तत्र यदा सप्त तस्य या एककादीनि तदा द्विविधोऽन्त । तत्र यदा द्वादश तदा त्र्यश्रचतुरश्रमिश्रात्मना त्रिविध ॥२०७॥

तत्र पाद इत्याद्यौन्यस्यैव द्वादशाङ्गादीनि । तालाङ्गवर्तन एत एव । एतम्ध्यात् संपिष्टकमुपपात प्रवेणीद्वयमुपवर्तन च हित्वा स(प्ता)ङ्गता कार्येति । वर्णाङ्ग-

---

१. NS तस्मात्पादौ KSS तस्य त्वाद्यौ ।
२. NS प्राक्षमो...।
३. KSS. द्व्यङ्ग ।
४. KSS. त्र्यङ्ग
५. NS तथा ।
६. KSS. शीर्षकम् । NS varies

उपपातः प्रवेणी(ण्यौ) च द्व्यङ्गं संहरणं तथा ।
अङ्गानि द्वादशाङ्गस्य स्मृतान्योवेणकस्य च[१] ॥२०९॥
[२]संपिष्टकोपपाताभ्यां [३]प्रवेणीभ्यां च वर्ति(जि)तम् ।
[४]उपवर्तनहीनं च सप्ताङ्गं परिकीर्तितम् ॥२१०॥
निवर्तनं [५]च सप्ताङ्गे तुल्यवर्णं च स्मृतम् ।
अन्तयोर्द्वादशाङ्गे तु तथाप्यपवमिष्यते ॥२११॥
उल्लोप्यकेऽपि चाङ्गानामेष एव विधिः स्मृतः ।
प्रवगाढ प्रवृत्तं च माहाजनिकमेव च ॥२१२॥
[६]व्यङ्गोऽन्तः स्यात्तथा द्व्यङ्गो माहाजनिकवर्जितः ।
[७]स्थितप्रवृत्तसयोगावेकाङ्गो वरपि कीर्त्यते ॥२१३॥

---

पादिनश्च तालाङ्गम् । पादद्वययोगेनान्तावभेदगणनया चाविकल्पसप्तपराक्रमपि वा अनत्व मध्यमाना वर्णाङ्गान्येकप्रतिपत्तिबन्धनीयानि । तानि च द्वादश सप्त वा । तालाङ्गानि तु तदाश्रयभूतानि संपिष्टकादीनि । वर्जनं च वर्णाङ्गेषु सप्तसु विधीयते न तु तस्मादेव सप्ताङ्गमित्याह । एकक चतुरस्रमिति । एकाश्रयभूत चतुरस्रमित्य-नियम । ययान्तर(र) (द्व्यङ्ग)संहरणमिति । अन्ताहरणेनान्तेन च युक्तमिति यावत् । एव द्वादशाङ्गे पादाश्च सप्ताङ्गे त एव संपिष्टकतालाशा इति विशेष ॥२०८-२१०॥

विशेषान्तरमप्याह ।

निवर्तनं च सप्ताङ्गे तुल्यवर्णं च स्मृतम् ।
अन्तयोरिति ॥

अन्तयोरिति पदावर्तनं तत्र गीति पदानि चेत्याह । अतुल्यसप्ताङ्गद्वादशाङ्गे तु गीतात्मा वर्णपर । तुल्यपादानि त्वन्यानि । तदाह । द्वादशाङ्गे तु तथाप्यपवर्मिति । एवमन्ते विचारयितु प्रक्रान्ते तस्यान्यमपि विशेषमाह ॥२११॥

तत्प्रसङ्गादुल्लोप्यकेऽप्यतिदिशति । उल्लोप्यकेऽपीति । तदेवैकप्रकरणमेव

---

१ KSS न्यावेणकस्य तु ।
२ KSS सविष्टको ।
३ KSS प्रवेण्या च विवर्जितम् ।
४ NS उपवर्तनहीनं च सप्ताङ्गपरिवर्जितम् । KSS उपवर्तविहीनं च सप्ता-ङ्गमपिकीर्तितम् ।
५ KSS तु सप्ताङ्गम् ।
६ NS प्रागातस्यात्तथा द्व्यङ्गो
७ NS स्थितिप्रवृत्त ।

एकाङ्गे संविधातव्यं माहाजनिकमेव तु (च) ।
[1]द्व्यङ्ग स्थितं प्रवृत्त वाप्येकाङ्गं वा प्रकीर्तितम् ॥२१४॥

[2][द्व्यङ्गे व्याससमासाभ्यां [3]बहुधा तु विधिः स्मृतः ।
प्रोवेणकस्य संहारो व्यङ्ग एकाङ्ग एव च ॥२१५ ॥

एकको विकधो वापि कार्यो द्व्यङ्गे ततः सदा ।
उल्लोप्यके तु चान्तानामेव एव विधिः स्मृत ॥२१६॥

स्थितं प्रवृत्तं च तथा माहाजनिकमेव च ।
त्र्यङ्गोऽन्तः स्यादथ द्व्यङ्गो माहाजनिकवर्जितः ॥२१७॥

---

अवगाढं प्रवृत्त च माहाजनिकमेव च ॥
त्र्यङ्गोन्तःस्यात् ॥

पुनरिदं मन्तव्यम् । अङ्गानामित्यन्तसम्बन्धिनाम् । एव एव च प्रोवेणके । तत्र तावद् को विधिरित्याह ।
इति । अन्त अवगाढमिति वर्णाङ्गस्थिततालाश्रयम् । अन्येषां पाठ । स्थितप्रवृत्तं च तथेति । तथा त्र्यङ्गो माहाजनिकवर्जितः स्थितप्रवृत्तसमयोगाद् । रूपत्याह । एकाङ्गो वेति ॥२१२-२१३ ॥

कथमित्याह ।

एकाङ्गे संविधातव्यं तथा (माहा)जनिकमेव च ।

इति । अथैषा त्रयाणां वर्णानामङ्गविधिमाह । द्व्यङ्ग स्थितमिति । वापीति भिन्नक्रमेण । तेन स्थितं प्रवृत्त च द्व्यङ्गमेकाङ्ग वेति ॥२१४॥

के ते तयोरवे अवाङ्गा इत्याह । द्व्यङ्गे व्याससमासाभ्यामिति । यदा एकक-द्वय तदा समासा(सो)ल्पत्वात् । यदा प्रवृत्त विविध तदा व्यासो विदारीणा बहुत्वात् । माहाजनिकत्वनियमादङ्गाना स्थित एवार्थत्वमेकत्र भामेरयुक्त भवति । एवमन्तर्विधि-स्तावद् व्यपोढितम्(त) । इदानीं प्रकृते प्रोवेणके उपदिशति । प्रोवेणकस्येति । योऽयं संहारोऽत्र स उक्त । प्रोवेणके यदा क्रियते तदाऽऽभ्यामङ्गाभ्यामेकत्वेन व्यङ्गेन व्यङ्गे । एकद्वय विवधद्वय चैकाङ्गत्वनियम इत्युक्त भवति । एवमोवेणक उपदिश्य प्रागुपक्षिप्तमनुदेशमनुसन्धत्ते । उल्लोप्यके तु चान्तानामित्यादिना चतुरश्रस्तदा(था)-त्र्यश्रो मिश्रश्चान्तः प्रकीर्तित इत्यन्तेन । कस्मादयमन्त उच्यत इत्याह । प्रोवेणकस्य

---

1. N.S द्व्यङ्ग स्थितप्रवृत्त वा चैकाङ्ग वापि कीर्तितम् ।
2. KSS does not read
3. NS ह्रवाबातुविधि स्मृतः ।

एकाङ्गोऽपि विधातव्यो बाह्यजनिकसंयुतः ।
एवं व्याससमासाभ्यां बहुधाङ्गविधि स्मृत ॥२१८॥

चतुरश्रस्तथा त्र्यश्रो मिश्रश्चान्तः प्रकीर्तितः ।]
[1]प्रावेणकस्य संहारो व्यङ्ग एकाङ्ग एव च ॥२१९॥

मार्गो न मध्ये संहारे नित्यं चैव प्रयुज्यते ।
[2] एकको विविधो वापि कार्यो ह्यन्ते प्रयोक्तृभिः ॥२२०॥

उल्लोप्यक पदवर विनास्यङ्गं परं स्मृतम् ।
[3]तच्च संहरणे कार्यं मुखप्रतिमुखान्वितम् ॥२२१॥

[वैहायसकसंयुक्त तेनापि च विवर्जितम् ।
त्रिष्वङ्गेष्ववर ज्ञेय परं स्याद् द्वादशस्वपि] ॥२२२॥

---

संहार इति । आदौ मध्ये वायमन्ते न प्रयुज्यते । अपि तु नित्य सहारे । अतेनायमन्त' सहार(च)क्त इत्यर्थं ।

नन्वन्त कस्मादङ्गानि । वर्णाङ्गमध्योऽस्य पठित इत्यत आह ।

एककं(को)विवध(धो)वापि कार्यं(र्यो)ह्यन्ते प्रयोक्तृभिः ।

इति । हिर्यस्मादर्थे । मङ्गाश्रयत्वादङ्गमेतदिति यावत् । अन्ये स्वतिदेशात् सन्धानप्रभ्यं (स्थितमित्यादि) चतुश्लोकात्मक प्रयोक्तृभिरित्यन्त नाधीयते । अन्ये द्विपाठत्वेन पाठ । एके श्लोक विभज्य उल्लोप्यकेऽङ्गानि विभजन्ति । उल्लोप्यकं पदवर विशारदङ्गं परमिति । वर्णाङ्गानामिय परतोक्ता । तत्रोल्लोप्यमिति मात्रा लुप्यते । ऊर्ध्वं शून्यतारूपेण यत्र । एतच्च वक्ष्यामः । तच्च मात्रारूप संहरणान्ते कार्यम् । तावन्मात्रमेवोल्लोप्यक कार्यमिति यावत् । तत्र मात्रारूप मुखमर्थत प्रतिमुखमर्थत इति विभजनीय (यम्) । यत एवोर्ध्वं यद्वैहायसकादि ततस्तो लोप्यकमतोऽपि भवति ततोऽप्युल्लोप्यकम् ॥२१५-२२१॥

तच्च द्विधा वैहायसकेन सयुक्त रहित च । प्राक्पक्षे त्रीण्यस्याङ्गानि वैहायसकेन सयुक्तानि । द्वादशैककानीत्यावृत्या वैहायसके एकमङ्ग पदपरं कार्यमिति यावत् । *अस्य स्थानमाह । अस्य चाङ्गत्रयेऽतीत इति । टीकाकारास्तावद् व्याकुर्वन्ति ।* इह चतुरश्रेऽस्मिन् प्रधानाङ्गो न वैहायसिकेन तारश(स)म्बाव्य । द्वादशकलाश्रितं ततश्त

---

१. KSS प्रावेणकस्य ।
२. KSS एकैकोविवविधोवापि कार्योऽप्यङ्गं बुधैः सदा ।
३. KSS तत्र संहरणं ज्ञेय मुखप्रतिमुखान्वितम् ।

एकार्थं(ङ्ग) षट्पदं ज्ञेयं वैहायसिकमेव च ।
प्रस्य चोश(चाङ्ग)त्रयेऽस्तीते प्रयोगमुपपादयेत् ॥२२३॥

"उल्लोप्यकोत्तराभ्यां तु मुखप्रतिमुखे स्मृते ।
ततोऽङ्गानां समासो वा विस्तरो वा विधीयते ॥२२४॥

मुखप्रतिमुखे चैव ज्ञेये विविधसंज्ञके[२] ।
वृत्तं प्रतिमुखे च स्यादनयोस्तु समासतः ॥२२५॥

उल्लोप्यके [३]तथा शाखा सोत्तरा सापरान्तके ।
प्रतिशाखा तथा चैव [४]सवर्णाऽप्यपदा स्मृता ॥२२६॥

---

चतस्रः कलामात्रान्तरशून्यप्रयोगेन वर्णानुरूपेणान्निर्वाहाम् । तत्र चैककालाङ्गत्रयम् । तदाह । प्रस्य वैहायसिकस्याङ्गत्रये सत शून्यरूपे प्रयोगं कुर्यात् । अत एव विहायसि शून्ये भवमिति वैहायसमिति लक्ष्यं चेत्य वक्तव्यम् । यत्तु तत्र हित कलामात्रान्तराद् दृष्टव्यमिति मन्तव्यमिति ।

अन्ये लक्षणमित्थं पश्यतो(न्तो)ऽङ्गत्रय इति । तन्मर्यादामात्रायामतीतायां वैहायसकं कुर्यात् । कच्च द्वादशकलत्वेऽपि चत(तु)रस्रमेवेति द्विकलैककलत्व चच्चत्-पुटप्राधान्यात् । अत एव तु द्वादशकलतोक्ता । न वा तच्चातुरस्र्यमातृलमस्य । तस्या मानारूपमपारमार्थिकम् । तत एव शून्ये भवमिति वैहायसकमिति मन्यते(न्ते) ॥२२२-२२३॥

प्रसङ्गादुत्तरस्याप्येतद्रूप तुल्यकक्ष्यात्वलक्षणमङ्ग्यान्तविवक्षति । उल्लोप्यकोत्तराभ्यां तु मुखप्रतिमुख इति । चतुर्थीय तादर्थ्ये । तत इति । मुखप्रतिमुखरूपाया मात्राया परतोऽङ्गानि(ना) वैहाय(स)कान्ताहरणादीनां संक्षेपेण विकासेन वा प्रयोग ॥२२४॥

ननु मुखप्रतिमुखाङ्गविभक्तमात्रत्वे त्र्यङ्गत्वमुक्त त्रिच्चङ्ग्र्चयरमिति (भ० ना० ३१.२२२) वचसा । तत्र कानि त्रीण्यङ्गानीत्यत आह । मुखप्रतिमुखे (इ)ति । मुखे विवध, प्रतिमुखे स च वृत्तं चेत्यङ्गत्रयम् ॥२२५॥

उल्लोप्यके शाखाप्रतिशाखा(खे) विधातुमपरान्तरयोश्चातिदेष्टुं तुल्ययोगित्वेनाह । उल्लोप्यक इति । शाखैव प्राधान्यात् । शाखातुल्या तु प्रतिशाखा च । सा

---

१. KSS उल्लाप्यको...वापि ।
२. NS विविधराजिते ।
३. KSS. तु शाखाख्य सोत्तरे ।
४ KSS. समवर्णपदा ।

[1]कलिकं द्विकलं यदि नैव वा प्रत्युपोहनम् ।
[2]द्विर्भावाद् द्विकलस्यैव विज्ञेयं तु चतुष्कलम् ॥२३६॥

सप्तमे लघुनि त्वन्ते द्विर्भावोऽस्मिन् विधीयते ।
चतुष्कलेऽत्र विहितः कलाष्टकमुपोहनम् ॥२३७॥

एका द्वे वा(च)चतस्रो वा(स्रश्च) तथा स्यात् प्रत्युपोहनम् ।
यथाक्षरस्य कर्तव्य मद्रकस्य तु शीर्षकम् ॥२३८॥

चतुष्कलं पञ्चपाणिर्द्विकलः द्विकलः स्मृतः ।
चतुष्कलस्तु कर्तव्यो मद्रके तु चतुष्कले ॥२३९॥

---

द्वे एका वा नैव वा । त्रिषु गुरुषु पातो नोक्त इति पादभागत्रये तदभाव । ऽऽऽ प्रति. इति द्विगुणो द्विकलमद्रक । अर्थतद् द्विगुण चतुष्कलमाह । द्विर्भावादिति । अर्थवावापविक्षेपा । यतो विश्लेषणे कला यत्र पूर्व पूर्वं निवेशयेदिति (भ० ना० ३१ २३५) वचनादादौ सार्धिका कला योज्यते ॥२३६॥

अनया परिभाषया सप्तमे एककलादर्शनदर्शितकलाव(तुष्टय)योगे लघ्व्यावावापप्रयोजना न प्राप्ता आयता इति । अतोऽष्टमे सन्निपातलघ्व्यादौ विक्षेपकलेऽप्यन्ये(न्ते) पादभागे अतानिशमिति प्राप्ते तदपवादमाह । सप्तमे लघुनि त्वन्ते द्विभावोऽस्मिन्निति । द्विर्भवतीति द्विर्भावोऽसा०य(व)विक आगत स चा०स्य इति चतुष्कले ह्यात्र आवापस्तदपेक्षयाऽन्त्यो निष्क्राम स विधीयते । सोऽपि किं तालात् पूर्वं निवेश्य( ) । नेत्याह । अस्मिन्निति । अङ्ग एव स्थान इति यावत् । तेन तानि विंशतिपादभागोऽस्यो जायते । अ ये तु द्विर्भावशब्देन ताल ०याचक्षते । सोऽन्त्य प्राप्त आवापस्थाने विधीयते । तदनन्त(र) त्वर्धान्निष्क्राम इति । कलादेवाष्टमित्यन्ये स्पष्टमेव पठन्ति । अष्टौ कला आद्ये वस्तून्युपोहनम् ॥२३७॥

शेषेषु यथाक्रममेका द्वे च चतस्र इति । अन्ये च स्थाने वाचन्द पठन्त प्रत्युपोहने सर्वेषु वस्तुष्वेकद्विचतु सख्या विकल्पितामाह ॥२३८॥

एककले मद्रके चतुष्कलेन पञ्चपाणिना द्विकलमिति विश्लेषणमिति । चकाराच्चचतुष्कलेन मिश्रेण वा । अन्ये त्वेककले एककलेन द्विकले द्विकलेन चतुष्कले चतुष्कलेन । एव सकलवद् रूपस्फुटीकरणात् सुष्ठुत शीर्षरूपता निर्वहतीत्याह ॥ २३९॥

---

१ KSS कलिका द्विकल चापि भवेच्च NS न वा स्याद् ।
२ KSS , NS vary absolutely

[1]त्रिवस्तु त्रिप्रमाणं च [2]ध्रुवतालसमुद्भवम् ।
इत्युक्तं मट्ठकं पातैस्त्रयोदशभिरन्वितम् ॥२४०॥

गुर्वक्षराणि चत्वारि चत्वारि च लघून्यथ ।
[3][तृतीये च चतुर्थे च शम्याताली लघून्यपि ॥२४१॥

तालं शम्यां च तालं च सन्निपातं च योजयेत् ।
लघ्वक्षरैककलिकैः पातैः सम्यक् प्रयोजयेत् ॥२४२॥

यथाक्षरं कुर्युरेतद्द्विजैरपरान्तकम् ।
आद्यो कलोपवहन विश्लेषाद् द्विगुणं भवेत् ॥२४३॥

---

एतदुपसंहरति । त्रिवस्त्विति । चतुर्थमपि हि वस्तु तच्छीर्षकाङ्गसन्निविष्टम् । तथा च दत्तिलाचार्यः । अथेऽवस्तु कन्यासस्त्वेरमाह (ह) (दत्तिलम् १९५) । इत्यपि मिश्रकत्वेन तदुक्तमेव । चतुर्वस्तुकत्वेन शीर्षकं शीर्षकमप्यत् प्रागेव निषिद्धम् । तेन त्रिवस्त्वित्युक्तम् । त्रीणि प्रमाणानि (इति त्रिप्रमाणम्) । ननु तालान्तराण्येवैतानि सन्तु किं तदनुयायित्व यतो मट्ठकतेत्याशङ्क्याह । पातैस्त्रयोदशभिरिति । यद्वैतदी-र्घतत् त्रिष्वनुरूपेष्वङ्गानि वस्तुनो रूप तदेव च मट्ठकमिति यावत् ॥२४०॥

अथापरान्तकम् । अथ गुर्वक्षराणि चत्वारि । चतुर्णां गुरूणां तृतीये तुर्ये च शम्यातालौ । लघुचतुष्टये तालशम्यातालसन्निपातानयाणि आद्य गुरुद्वयमुपोहन-प्रयुपोहनबीजकध्रुवप्रयोज्यमिति दर्शयति । लघ्वक्षरा एककलिकापाता भवेति स्मार-यन् गुर्वक्षराणि तावच्च कलिका इत्यपि स्मारयति ॥२४१-२४२॥

एतदुपसंहरति । यथाक्षरं कुर्युरेतदिति । एककलमिति यावत् । अपरान्तक-निर्वचनसंख्या च प्रतिशाखा सर्वत्रेति लक्ष्यविद । एतदपि च त(म)द्रकपट्कलस्य-स्वतालमेव । प्रस्तार उदात्ततातात्ताश्च । अथैतद् द्विकलीकर्तुमाह । आद्यो कला(लो) पवहनं विश्लेषाद् द्विगुणमिति । तत्र न(म)द्रकवदेव गुरूणां द्विर्भाव लघूनामेव कलारूपत्व विश्लेषणे कलाद्यात्र यथापूर्वं निवेशयेत् (भ० ना० ३१ २३५) इति सर्वं पूर्वोक्तमनुस्मरेत् । आद्यो यावच्छायत्वादुपोहनत्वेनोक्ता ध्रुवा वा पातत्वेनैव कार्या । तेन प्रथमे पादभागे न विश्लिष्टा कलेत्युक्त भवति ॥२४३॥

---

१. KSS चतुर्वस्तु ।

२. NS. ध्रुवताल

३. KSS. varies

द्विकले कलिक ज्ञेय द्विकलं चाप्युपोहनम् ।
कलिक कलिक चेष्टं तथैव प्रत्युपोहनम् ॥२४४॥

एतदेव द्विगुणित विज्ञेयं तु चतुष्कलम् ।
सप्तक्षरे तृतीये(द्वितीये) तु द्विर्मार्गेऽन्यथा कला स्मृता ॥२४५॥

ध्यश्रतालसमुद्भूत पातैः षड्भिर्विभूषितम् ।
चतु'शाखाख्यमित्येतद्वदन्ति चापरान्ति(न्त)के] ॥२४६॥

यथा शाखा तथैवास्य प्रतिशाखा विधीयते ।
पश्चिमार्धसमा सा तु तथैवाप्यपरा स्मृता ॥२४७॥

शिरश्चैककलेनापि कर्तव्यं पञ्चपाणिना ।
[1][वृत्तौ निवृत्तयोगश्च गते वस्तुचतुष्टये ॥२४८॥

---

तत्र द्विकले कला द्वेधा। उपोहन कलिकम्। कलिक प्रत्युपोहनमिति। ध्यादिवस्तुभूयस्त्वात्। एव द्विकलस्य प्रस्तार। शठनिप्रनिशनिताताशाताशताताम् द्विकलमपरान्तकम् ॥२४४॥

अथ चतुष्कलमाह। एतदेव द्विगुणितमिति। अ(आ)वापविक्षेपयोजनयेति भाव। अत्रापि मद्रकवदस्य पादभाग प्राप्त। पूर्वं पूर्वं निवेशयेदिति (ना० शा० ३१.२३५) वचनात्। तदपवादमाह। सप्ताक्षरे द्वितीये तु द्विर्मार्गेऽन्या(न्यथा)कलेति। तेन तानिविशासमित्यमिन्यापवादो न तु शनिविशमिति। एतच्च श्लोकार्धं प्राग्वदेव व्याख्येयम्। तदय प्रस्तार। शनिविशशनिविश शानिविता शाताविश तानिविसम् ॥२४५॥

गणायन्तरस्यापि प्रतिशाखामाहुः ॥२४६-२४७॥

गते च वस्तुचतुष्टये पञ्चमस्यारम्भेन निवृत्तिरावर्तनं कार्यम्। सा च वृत्तौ मार्गे चकारात् पञ्चपाणिना।

एतदुक्त भवति। चतुर्थवस्त्वन्ते यान्येव द्वादशकलासु गीयन्ते पादानि तान्येव शीघ्रोच्चारणेन पञ्चमवस्त्वादिभूतकलाषट्के गेयानीति तत्र च न्यासोऽर्धसमाप्ति-श्चेत्याचार्याः ॥२४८॥

---

1 KSS does not read

शाखायां प्रतिशाखायां विशेषः पञ्चमे स्वयम् ।
षट्कलापातसंयुक्ते तालिके तु ततः स्मृते ॥२४९॥

तथैककलयुक्तेऽस्ति विधिवत् पञ्चपाणिना ।]
[1]यथाक्षरेणैव मयैवनयोरुपवर्तनम् ॥२५०॥

अपोहनं च वस्त्वर्धे(र्धं) द्विकलं प्रत्युपोहनम् ।
[2]दक्षिणे तु तथा वृत्तौ चतुष्कलमपीष्यते ।
(द्विकलं दक्षिणे कार्यं वृत्तौ चैव चतुष्कलम्) ॥२५१॥

[त्र्यश्रतालसमुद्भूत पाते षड्भिर्विभूषितम् ।
वस्तु शाखाद्वयमित्येतद् गदितं चापरान्ति(न्त)के ॥

---

पञ्चमस्य विशेषमुक्त्वा द्वे वस्तुनी आह । शाखायामिति । शाखायां यद् परिवर्तमन्त्यं वस्तु प्रतिशाखायां च द्वयोर्वस्तुनोर्या अन्त्याः षट्कला विशतानिविष्टमित्येवरूपास्तास्तु(सु)संतालाताला इति पञ्चपाणिपाताः । अन्ये तु पाणिपातास्त एव पञ्चपाणिगतस्तु प्लुतं च प्लुतलघुगुरुद्वयलघुप्लुतरूपतात्र केवलपरिवर्ते पञ्चपाणिम(णिन)त पातविधिरिति मन्यन्ते । यथाक्षरस्तालस्तालिकाख्यातो च वस्तुरूपाक्षीकारात् पञ्चपाणि(कन्ने)न(त)म्यः ॥२४९-२५०॥

अथोपोहनविधिमाह । उपोहनं च वस्त्वर्धमिति । आद्ये च वस्तुनि द्वादशसु कलास्वन्येषु द्वयोर्वि दक्षिणमार्गे वार्तिकेषु चतसृष्वपि । अन्ये तु वस्तुनिबद्धपरिवर्ते समाप्ते पृथग्भूतामेव षट्कला तालिकामाहु । दत्तिलादयस्तु द्वितीयं पादविभागं पानिविधरूपं चतुर्थं पानिविप्ररूपमाहु ।

अष्टमी विंशिका चैव द्वे शम्ये परिकीर्तिते ।
द्वादशाष्टादशी तालावेकविंशस्तथैव च ॥

(दत्तिलम् १७२-१७३)

इति वदन्त । एतस्येत्यर्थः । ॥२५१॥

वस्तु भवतीत्याह । त्र्यश्रतालेत्यादिना वस्त्वित्यन्तेन । वस्तुन एव च भाविप्रतिशाखापेक्षया शाखेति व्यपदेशः । प्रतिशाखायां च स एव प्रस्तार इत्याह ।

---

१. KSS यथाक्षरे तु ।
२. KSS. varies.

यथा शाखा तथैवास्य प्रतिशाखा विधीयते ।
पश्चिमार्धसमा सा तु तथैवान्यपदा स्मृता ॥
शिरश्चैककलेनापि कर्तव्यं पञ्चपाणिना ।
वृत्तो निवृत्तयोगश्च गते वस्तुचतुष्टये ॥]
उल्लोप्यकं तु द्विगुरु द्विलघ्वन्तेऽथ गुर्वथ ।
[1]शम्या तालो द्विरभ्यस्तौ सन्निपातोऽन्त्य एव च ॥२५२॥

प्रत्यक्षरकृतैः पादैः (तैः) षड्भिः समलङ्कृतम् ।
चतुरश्रं सुविच्छेदमेतत् ज्ञेयं यथाक्षरम् ॥२५३॥

---

यथा शाखेति । प्रतिशाखात्वेन च प्राधान्यात् कदाचित् भागोऽप्यस्या इत्याचार्या । प्रतिशाखाया स्वरूपमाह । पश्चिमार्धसमेति ।

विशाखिलाचार्याः प्राहुः । पश्चिमं वस्तु सप्तकाविकल्पत्वमिति तस्यैव यत् पश्चिममर्धं तत् पृथक् प्रतिशाखात्वेन चतुर्विंशतिकलं वस्तुगत्या तद्गतान्यद्वादश- कलात्मा प्रतिशाखेति वस्तुनि मन्तव्यम् । अत्र च लिङ्ग यदोवेणके एककेन पादे लक्षितव्ये प्राच पाद सम शाखाया परस्तु प्रतिशाखाया इति वक्ष्यति (भ० ना० २८१-२८२) । उपपातस्य प्रतिशाखातालः षट् द्वादश कलातालिकः मध्यपतितेऽप्युप- पातो न ततोऽधिको भवितुमर्हति । तत्राद्यतुल्यगीतित्वे चाम्यपदार्थमिति । अग्रे निर्णेष्यते चैतत् । यदि तदेव तत् कथं साम्यमित्याह । (अन्य)पदेति । गीतिताला- भावे चाक्षराण्यस्यामन्यानीति । अनन्तरं ए(मे)ककलेन पञ्चपाणिना शिरः । केचित् तदपि शाखामध्ये ।

अथ शाखाप्रतिशाखाप्रसङ्गागतं वस्तुनिबद्धप्रकरीपरित्यागेनाप्युल्लोप्यकं वा- (प्या)चिकीर्षुराह । उल्लोप्यकं त्विति । अनेन पूर्वस्यत्र्याम्यामचातुरश्र्येणाविशेषं सूचयति । शताशता इति । यथाक्षरमुल्लोप्यकं यथाक्षरं वैहायसकादन्यन्न किञ्चिदिति तत्रोक्तम् । अत एवोर्ध्वं सर्वं लोप्यमत्रेत्युल्लोप्यकम् ॥२५२॥

एतदुपसंहरति । प्रत्यक्षरकृतैरिति । ननु यदि षड्भिः पादैरयं तर्हि कथं चतुरश्रता । आकारविच्छेदगुरुरेकोऽत्र लघुद्वयेन शोभते । तेनापूर्वेण चञ्चत्पुटपरिवृत्तो विभक्त इति यावत् ॥२५३॥

---

1. KSS सम च्छेद वस्तु ।

पूर्वोक्तेन विधानेन द्विचतुष्कलमिष्यते ।
[1]अस्य चाङ्गत्रयेऽतीते वैहायसकमिष्यते ॥२५४॥

तदेकाङ्गावर ज्ञेयं द्वादशाङ्गपर स्मृतम् ।
प्रमाणाद्(ण) द्वादशकल [2]तथा पातमथापि च ॥२५५॥

अस्य तु द्विकला शम्या तालस्त्रिकल(द्विकलस्ताल) एव च ।[3]
द्विकला च पुन. शम्या तालश्चैककलः स्मृत.[4] ॥२५६॥

सत शम्या ततस्ताल सन्निपातस्तत पुन [5] ।
शाखेय प्रतिशाखा तु नित्यमन्यपरा स्मृता ॥२५७॥

---

अथ द्विकलचतुष्कलयोगमुपपादयति । पूर्वोक्तेनेति । द्वैगुण्येन कला पूर्वं निवेशयेदिति च । विधिनेत्यर्थ । तेन निशनिताशनानिस द्विकल । प्रानिविध चतुष्कल । अस्य चेति । अस्यैव द्विकलचतुष्कलात्मनो वैहायसकम् । अङ्गत्रयेऽतीत इति टीकाकार पठति व्याचष्टे च शून्यरूपे पर गीतमात्रात्मनि कलाचतुष्कनिष्ठे वर्णाङ्गत्रये प्रयुक्त उपपादनमिति । तव्यानुसारिणस्तु मात्रागत एव मुखप्रतिमुख-गते वर्णाङ्गत्रयेऽतीतेऽस्य प्रयोग इत्युक्तवन्त । वैहायसकत्व तु यथाक्षरापेक्षया शून्ये स्थानेऽस्य परता ॥२५४॥

तदिति वैहायसकमेकाङ्ग(ङ्ग)वर द्वादशपर प्रोक्तम् । षडङ्गपरमित्युक्त-(प्राक्) । तेन विकल्पोऽत्र व्रीहियववत् । अस्य स्वरूपमाह । प्रमाण द्वादशकलमिति । तथा पातमिति । द्वादशपातमिति यावत् ॥२५५॥

पातानाह । अस्य तु विकला शम्या द्विकलस्ताल इति । त्रिकलत्वमनयो । द्विकला शम्येति । निष्क्रामान्तरगा । तत्र द्विकलत्वे चच्चत्पुटे शम्या सन्निपातकला । अ-तस्यानावेव(क)कनश्चच्चत्पुटवतालशम्ययाऽपसारितद्विकलैककलयोऽप्यय तत्र मध्ये सन्निपात स्यात् । एक सता एकोऽय ताल इति न स्यात् । प्रथस्त .द्विकलगता सप्तकानन्तरं मध्ये शम्यादिरेककलवच्चत्पुटाक्षिप्तस्तदनन्तर सा सन्निपातकला । अष्टम्यपि द्वादशस्थानता । तदेतदाह ।

---

१ KSS अन्ते चाङ्गत्रयातीते । NS. अस्य चाङ्गत्रये गीते ।
२ KSS सप्तपातमथापि च ।
३ NS तालश्च द्विकलस्तत ।
४ KSS द्विकल स्मृत ।
५ KSS अत परम् NS. तत परम् ।

[1]यदा त्वस्य भवेदन्तस्तदन्ता हरणं बुधैः ।
यथाक्षरेण [2]नियमात् सहार्यं पञ्चपाणिना ॥२५८॥

स्वतालेनान्तहीनस्य सहार्यं परिकीर्तितः ।[3]
त्रि(द्वि)प्रकारनिवृत्तस्तु(श्च) त्र्यङ्गोऽन्तस्त्रिविधः स्मृतः ॥२५९॥

त्र्यश्रश्च चतुरश्रश्च मिश्रश्च परिकीर्तितः ।[4]
स्थितप्रवृत्ते तस्याङ्गे महाजनिकमेव च ॥२६०॥

---

द्विकला च पुनः शम्या तालश्चैककलः स्मृतः ।
ततः शम्या ततस्तालः सन्निपातः ॥

इति । (प्रस्तारः) निविशनिविताभिशताशाया वैहायसम् । शाखेयमिति वैहायसम् । केचित् प्रतितालेति । यावत् । नित्यमिति यदि भवति तत् सर्वमेवाप्यपदेति यावत् । अन्ये नी(त्वि)ह नित्यमिति लिङ्गं प्रतिचाखाया अन्यत्रानियतत्वस्येत्याह ॥२५१-२५७॥

यदा स्थिति विशेषो द्योत्यते । अन्तेन हि सहितेनान्ताहरणम् । तद्धि सहार-महंतीति सहार्यम् । अन्तस्याहरणं सूचकमिति यावत् । तच्चैककलेन पञ्चपाणिना ॥२५८॥

यदि स्वन्तो न क्रियते तदाय विधिरित्याह । स्वतालेनेति । स्वतालो वैहाय-सम् । तेनैव सहारं समाप्तिः । तदपि यदा न क्रियते तदा स्वतालेन प्रथममात्राकयैव न समाप्तिरित्यावेदयितुं स्वतालेनेति साधारणोक्त्या व्यवहृतः । यदा त्वस्य(स्या)न्त इत्युक्तं ततस्तदाह । द्विप्रकारनिवृत्तश्च त्र्यङ्ग इति ॥२५९॥

एतत् स्वयमेव निर्णीनीपुस्त्रिविधित्वं तावदाह । त्र्यश्रश्च चतुरश्रश्च मिश्र-श्चेति त्र्यङ्गरवमाह ।

स्थितप्रवृत्ते तस्याङ्गे महाजनिकमेव च ।

इति ॥२६०॥

---

1. KSS. यदास्वस्य भवेदन्त्ये ।
2. KSS कर्तव्यं सहार्यं ।
3. KSS. परिवर्त्यते NS परिकीर्त्यते ।
4. NS अथ त्रिविधस्तथा ।
5. NS. मिश्रश्चापि प्रकीर्तितः । KSS. मिश्रश्च द्विविधः स्मृतः ।

स्यात् पञ्चपाणितालेन वन्त्याहरणं यदा ।
[1]तदा स्थितं भवेद्युग्मं तस्य पातविधिस्त्वयम् ॥२६१॥
शम्याऽपि द्विकला कार्या तालोऽपि द्विकलः स्मृत ।
चतुष्कलः सन्निपात प्रवृत्तमत इष्यते ॥२६२॥
अस्य तु द्विकला शम्या [2]तथा चैककला पुन. ।
चच्चत्पुटस्तु तालादिः सन्निपातस्ततः परम् ॥२६३॥
[3]स्थितं तालेन कर्तव्यं माहाजनिकमस्य तु ।
निवृत्ततालः कर्तव्य [4]प्रवृत्तस्यापि तद्वत. ॥२६४॥

---

त्रिविधस्य प्रयोगपौर्वापर्यमाह ।

स्यात् पञ्चपाणितालेन वन्त्याहरणं यदा ।
तदा स्थितं भवेद्युग्मम् ।

इति । यदेति यत. । तदेति तत । यत्तद(यदातदोर)यमर्थः । आदौ युग्मस्थितं कार्यं वान्त्याहरणे पञ्चपाणि । अयुग्ममिति परभागे न विप्रतिपत्तिर्भवति ।

अन्ये तु यदेति यस्मिन् काल इति व्याचक्षाणाः वन्त्याहरणमन्तेन नियतमपि तु विपर्यय इति । ततश्चान्त्याहरणाभावे यदान्तस्तदाय नियम । आदौ युग्ममिति स्थितमिति नामक्रमात् स्थायिवर्णप्रधानमेतत् ।

अन्ये त्वेकस्याभेदात् स्थितत्वमित्येकक(म)मुक्तमित्याहु ॥२६१॥

शम्या द्वे चेति । द्विकलचच्चत्पुटोऽयम् । निशनिताशनि अनिशस्थितम् । प्रवृत्तवर्णस्त्रयोगाच्च प्रवृत्तम् ॥२६२॥

अस्य तु द्विकलेति । निशताशाशताशस वृत्तम् ॥२६३॥

स्थितस्य ताल. । स एव माहाजनिकस्य किन्तु निवृत्तिरन्ते कर्तव्या । अत एव पुनः प्रवर्तनादपि प्रवृत्तम् । तदाह । अस्य तु निवृत्तस्ताल कर्तव्य इति । निवृत्तिर-स्यास्तीति मत्वर्थीय. । अनि(नि)वृत्तस्ताल इति तालान्तो भाव कलाचतुष्टयात्मा च पुनरावृत्तः कर्तव्य. । आद्यासु चतसृषु कलासु यानि निष्पन्नानि शम्येव पातानि यावत् । न केवल माहाजनिकमेव निवृत्या युक्तम् । यावदुक्तलक्षण प्रवृत्तमपि । द्विमकादो निवृत्तोऽन्त इति । अत एव हि पूर्वमुक्तमित्येतदित्याह प्रवृत्तस्यापि तद्वत ॥२६४॥

---

१. KSS. तथास्थितं भवेद्युग्म प्रथमस्य विधिस्त्वयम् ।
२ KSS तालश्चैककल. पुन. । NS. तथैवैककला पुन ।
३. KSS स्थिततालो न कर्तव्यो ।
४. KSS. निवृत्तस्यापि

[1]यत्र तालविधिश्चेष्ट प्रायशस्तूपवर्तने ।
मावाबुद्घट्टकः कार्यः परिवर्तक एव च ॥२६५॥

युग्मे हि मिश्रतालत्वात् युग्मे(ग्मो)ह्यन्तः[2] प्रयुज्यते ।
विवधैककसंयुक्तः पूर्वं पश्चाद्विधिः स्मृतः ॥२६६॥

यथायवन्त(न्त्य)तालोऽयं युग्मो मिश्रश्च कीर्तितः ।
अत. पर प्रवक्ष्यामि त्र्यश्रमन्यविधिं पुनः ॥२६७॥

---

यत्रेति । यत्र यद् प्रवृत्तमुक्त न तु वर्णाङ्गरूप तस्यापि यस्तालविधिरुक्तः सोऽपि प्रायश उपवर्तने निवृत्तविषये कर्तव्य. । अन्यत्रमावो विषयार्थं. । प्रायश इति । प्रकर्षगमनेनेत्ययमत्रार्थो विवक्षितमि(त इ)त्यभिप्रायमाविष्करोति । मावाबुद्घट्टकस्ताल कार्यं इत्यनयात्मनि युग्मरूपक्रमवशेन द्विकलचच्चत्पुटेऽपि । अत एव प्लुतलघुविभागहीनेऽप्यावत्तमाऽकर्तव्यत्वेनोक्तः । परिवर्तकव्यपदेशश्च द्विकलेऽपि परिवृत्त्यागतत्वादन्यस्तालोऽपि चच्चत्पुटतालः कर्तव्यत्वेनोक्तः । चकाराद् सन्निपातश्च नोपवर्तने प्रयुज्यत इति प्राच्येन सम्बन्ध । तत्र पृथक् सामान्येन चोपवर्तनमिति बहवो भेदाः ॥२६५॥

ननु तालसमुदायरूपं प्रवृत्तं पश्यामः । तत्र कथमेकरसच्छलमुपवर्तनमित्याशङ्क्याह । युग्मो ह्यन्त इति । मन्त्राङ्गप्रवृत्तमात्रान्त.सकलचच्चत्पुटरूपादेक एव ताल इति यावत् । विशेषे किं प्रमाणमित्याह । युग्मे हीति । हि यस्माद्युग्मोऽन्तविधिरत्रोपक्रान्त इति । प्रकरणमात्र इति यावत् । तच्चैकरसो यथायमष्टकलस्तालः । कथमस्योद्घट्टकादिव्यपदेशो भवता न व्यधायीत्याशङ्क्याह । मिश्रतालत्वादिति । उद्घट्टकचच्चत्पुटोचितव्यामिश्रतामात्रमत्रेति यावत् ।

अन्ये तु परिवर्तकमित्यनेन चच्चत्पुटसङ्ग्रहविशेषसन्निपातोऽन्त. प्रयुज्यत इत्यनेन स्वीकृत इत्याहुः । एवमर्थं श्लोक. प्रवृत्तस्योपवर्तनमिति विधिपर्यवसायी श(उद्घ)ट्टादिभिस्त्वेकमर्थमनुष्यमानैरुक्त. । स श्लोकपाठविप्रलब्धै. सर्वमेवाष्टकलस्योक्त. । प्रस्तारस्य वृत्तस्यादौ पृथग्भूत उद्घट्ट । कर्तव्ये नाम्ना तदा तत्तु लक्ष्ये चिरन्तने न दृश्यते प्रक्रान्तयुग्मायुग्मविभाग च विध्वंसयतीत्यनपेक्ष्यमेव । विवधैककसंयुक्तः पूर्वं पश्चादिति । उपवर्तनस्येति विशेष. ॥२६६॥

एव चतुरश्रमुपसंहरति । यथावदन्त्यतालोऽयं युग्म इति । अथ मिश्रः संकीर्णं इति यावत् । उद्घट्टयोगेन संकीर्णतायाः शक्यत्वे साप्यपसारितेति भावः । अन्ये

---

१. KSS. स्थितमाहाजनिकयो प्राय शस्त्रप्रवर्तकम् ।
(NS. प्रायः समुपवर्तनम् ।)

२. KSS. सप्यन्तः ।

शम्या तु द्विकला पूर्वं ततस्तालो विधीयते ।
त्रिकलः सन्निपातश्च प्रवृत्तं चाप्यतः परम्[1] ॥२६८॥

प्रवृत्तमस्य कर्तव्यं यथावत् परिवर्तनम् ।
[2]यथाक्षरप्रयुक्तेन नियमात् पञ्चपाणिना ॥२६९॥

यस्या(त्रा)पि स्थिततालेन माहाजनिकमिष्यते ।
[3]निवृत्ततालः कर्तव्यस्तथाऽत्रापि निवृत्तिमान् ॥२७०॥

[युग्मौजमिश्रतालत्वात् मिश्रोऽप्यन्तः प्रयुज्यते ।
विवर्धैककलयुक्तः सर्वश्चान्तविधिः स्मृतः] ॥२७१॥

त्र्यङ्गमेकाङ्गमपि वा स्थितं कार्यं समासतः ।
तत्र युग्मं भवेद् त्र्यङ्गं त्र्यश्रमेकाङ्गमेव च[4] ॥२७२॥

---

स्वकारप्रश्लेष नैष्क्रान्तो यद्यप्यन्तालेन मिश्रस्तथापि चचत्पुटत्या युग्म उक्त इति व्याचक्षते ॥२६७॥

त्र्यश्रे स्थितमाह । शम्या त्विति । निशताप्रनिस्थितम् । प्रवृत्तमत परमिति वचनात् स्थितमेतदिति ज्ञायते ॥२६८॥

परिवर्तनमिति । परिवर्तनयोगात् तत्र चैककल पञ्चपाणि ॥२६९॥

स्थिततालेनैव निवृत्तियुङ् माहाजनिकम् । तदाह । अत्रापीत्यादि निवृत्त-तालः कर्तव्यस्तथैवान्तम् । एव प्राधान्यादादौ युग्मस्ततस्त्र्यश्रोऽन्तः कर्तव्य इत्युक्त्वा तद्द्वयपूर्वकत्वात् सर्वपश्चात् कर्तव्यमिश्रान्तमाह । अत्रापि निवृत्तिमान् ॥२७०॥

युग्मौजमिश्रतालत्वादियुग्मौजरूपाणां स्थितादीनां वैचित्र्याद्बहुप्रकारमिश्र इत्यर्थः । सोऽपि च पृथक् प्रयुज्यते । न तु पौनरुक्त्याऽऽशङ्कया न प्रयोज्य इति । अत्रापि निवृत्तिस्थाने आवृत्तिरित्यत्रापीत्यर्थः । अथ तस्याङ्गान्याह । विवर्धकेति । स्थितादि त्रयेऽप्येतद् । एतत्समं इत्यर्थं ॥२७१॥

विशेष त्वाह । त्र्यङ्गमेकाङ्गमपि वेति । व्यवस्थितविभाषाविषयमिति दर्शयति । तत्र युग्म त्र्यङ्गं त्र्यश्रमेकाङ्गमिति ॥२७२॥

---

१. इतोऽग्रे पद्यमेकमधिक का० पुस्तके ।
२. NS यथोक्तप्रवृत्तेन विधिवत्.. KSS. यथाक्षरप्रवृत्तेन समासात् ।
३. KSS. प्रवृत्त. काल. कर्तव्यस्तथास्यान्तनिवर्तिते ।
NS. ...तथात्र विनिवृत्तिमान् ।
४. KSS. इष्यते ।

प्रवृत्तमपि विज्ञेयं व्यङ्गमेकाङ्गमेव वा ।
माहाजनिकमेकाङ्ग [1]व्यङ्ग संहरणं स्मृतम् ॥२७३॥
स्थितादिकं [2]प्रवृत्तान्त एवमंतर्विधिर्बुधैः ।
उल्लोप्यके समायोज्य ऊहापोहविशारदैः ॥२७४॥
[3]प्रकरी वस्तु षण्मात्रं पाताश्चैकान्न(कोन)विंशतिः ।
वस्तु प्रमाणं कर्तव्यं तथैव च चतुष्कले ॥२७५॥
न यथाक्षरयोगेन न चापि द्विकलं स्मृतम् ।
माद्यमात्राद्वयस्यान्ते शम्यातालान्वितो भवेत् ॥२७६॥
मात्राद्वयस्य [4]चान्तस्य शम्यैकैकान्तः स्मृता ।
चतुर्थ्यां द्वादशताल पञ्चम्यां चाष्टमो मतः [5] ॥२७७॥

प्रवृत्ति(त्त)विशेषमाह । प्रवृत्तमपीति । प्रवृत्तेऽपि पूर्ववच्चावर्तितविभागैव मन्तव्या । महाजनिकस्तु(क तु)भयमप्येकाङ्गं संहरणरूपं सर्वसमाप्तिकालेऽप्य माहाजनिकं । तद् व्यङ्गं मध्यवर्ति स्वैकाङ्गमेवेत्यपि । अन्ये तु संहरणमित्याहरणं व्यङ्गमित्याहुरि ति ॥२७३॥

एतदुपसंहरति । स्थितादिकं प्रवृत्तान्तं इति । यावदङ्गानां विभागादीनां चैकद्व्यादिरूपतया भूयांसोऽत्र सन्ति प्रकारा इति सूचयति । ऊहापोहेति । ऊहनमनुक्तस्योपवर्तनभेदादेः कल्पनम् । अपोहनं तूक्तस्मान्तविभ्यादेरपसारणम् ॥२७४॥

एवं वस्तुनिबद्धमपरान्तकमभिधाय शाखाप्रतिशाखाप्रकाङ्गबद्धमुल्लोप्यकमुक्तम् । अधुना तु यथाप्रस्तुतो प्रकरीमाह । प्रकरी वस्तु षण्मात्रमिति । प्रकर्यां वस्तु प्रकरीरूपं दास(व)स्थिति समान(ना)कृतौ भावितपुस्तकरवमिति यावद् । पाता एकोनविंशतिः । अन्य(त्य) तु चतुष्कलमात्रासमुचितमाद्विपादी(द्व इ)त्युक्तम् ॥२७५॥

पातानाह । माद्यमात्राद्वयस्यान्त इति । षोडशी कला शम्या मात्रायामाद्यायां द्वितीयस्या तु तालः ॥२७६॥

अन्यत्र अयेऽपि षोडशी शम्या । तुर्यमात्रायां द्वादशतालः । पञ्चम्यामष्टम इति पञ्च मात्रास्तावदुक्ताः ॥२७७॥

---

१ KSS व्यङ्गं संहरणं भवेत् ।
२ NS प्रवृत्ताङ्ग एवमन्तर्विधं बुधैः । KSS प्रवृत्तान्तमेवमन्तं विदुर्बुधाः ।
३ मत्स्य स्थाने का० पुस्तके श्लोकत्रयी पठिता ।
४ NS चान्यस्य शम्यैका तु तत स्मृतः । KSS चान्त्या स्याद् शम्यैका च पुनस्तथा ।
५ KSS, NS चाष्टम स्मृत ।

षष्ठ्यां तु द्विकला शम्या तालश्च द्विकलो भवेत् ।
पुनश्च द्विकलस्तालः शम्या च द्विकला पुनः ॥२७८॥

शम्या तालश्च तालश्च शम्या तालस्तथैव च ।
शम्या तालः सन्निपात इति वस्तु प्रकीर्तितम्[1] ॥२७९॥

यदा त्वर्धचतुर्थानि वस्तूनि प्रकरी भवेत् ।
पश्चिमार्धपदस्यैव तदर्धं प्राङ् निवेशयेत् ॥२८०॥

---

षष्ठ्यां तु चतुष्कलस्योचितौ आप्तावापविक्षेपौ न कार्याविति दर्शयति । षष्ठ्या शिवप्रादि । द्विकलेति । द्विकलोचितावपिनिष्क्रामानन्तरभाविनीत्यर्थः ॥२७८॥

इति वस्त्विति । मात्राषट्कमिति । यावत् । तेनात्र प्रस्तारः । मानिविप्र मानिविप्र मानिविप्र मानिविप्र मानिविप्रता मानिविता मानिविता मानिवा मानिविप्र मानिवि ..मानिविप्र मानिविप्र मानिविता मानिवित निवाता निता नितानि शशता शता (२८) ॥२७९॥

एतदुक्तमन्यैरतो ह्येकलमद्रकय इति यदा त्वर्धचतुर्थानीति सार्धवस्तुत्रयपक्षे प्रागित्याद्य यदर्धं वस्तुनो मात्रात्रयरूप तत् पश्चिमाद्यन्तद्वितीयेनार्धमान्येन मात्रात्रयेण तुल्य निवेशयेत् । तेन चतुर्थ्यां मात्राया यत्ताल प्रथमाया पञ्चमीगतो द्वितीयाया. षष्ठ्यास्तु यत्ताल म एव तृतीयस्या इत्येव वस्तुत्रये गीते ततो वस्त्वर्धं पश्चिमार्ध-रूप प्राधान्यादित्यर्धं चतुर्थवस्तुमित्यमु केचिद्ग्रन्थमनेषु ।

टीकाकारास्तु पश्चिमार्धं यन्मात्रात्रय तदादौ कुर्यात् । तस्य चोपोहनमन्ते न(न्तरेण) ह्येकलमद्रकोऽभियुक्त यत् मात्रात्रय तस्य चोपोहने(न) कुर्यात् । यदाऽर्ध-चतुर्था(र्था)नि वस्तूनि प्रकरी तदर्धमिति । तेनाऽर्धचतुर्था(र्था)नि यदा तदादौ कुर्यात् । तस्य च यत्तालविधिरा(ह)पश्चिमार्धशब्देन ततालस्तमर्हतीति । यत्र तु पक्षे उपोहनत्व यदुक्त तत् कथमिति न विरोधो मुनिमोमत्वात् । दत्तिलादिभिरेव हि

उपोहनं च तत्राद्य स्मृत चार्धविवर्जितम् ।
(दत्तिलम् १६६)

इत्युक्तम् । तेनाधिक यद्वस्त्वर्धं तस्य स्थाने तालविधि (उपोहने)नोच्यत इत्येतावदेतत् ॥२८०॥

---

1. KSS प्रकीर्त्यते ।

कनिष्ठासारितेनास्य(स्याः) कार्यं संहरणं ततः ।
पाद पूर्वः समः कार्यस्त्वपरान्तकशाखया ॥२८१॥

[1]योवेणके द्वितीयेऽ(यो)पि तस्यैव प्रतिशाखया ।
[2]अनित्य. शीर्षके तालो माषघातस्ततः परम् ॥२८२॥

[3]षट्पातो द्वादशकलस्त्वस्य पातविधिस्त्वयम् ।
कर्तव्या द्विकला शम्या [4]तालो द्विकल एव च ॥२८३॥

---

कनिष्ठासारितेति । अस्या इति । चतुर्थवस्तुकाया सार्धवस्तुरूपायाश्च प्रकर्या संहरणं नामाङ्ग कार्यम् । कनिष्ठनासा(ष्ठासा)रितेति । मा(म)हाबदते महावत्त-व्यवहारवत् । वस्त्वर्धोऽत्र य(ग)म्यते । तेन लघीयसा(ता)सोऽतिदिश्यते ।

ननु गुरुलघुप्लुतविभागेनाप्युपोहनमन्त्यसन्निपातस्य च मुक्तत्वादमानतिदेश एव । माधमात्रावत् षोडशकलामात्रैवेयमिति ..मत्रार्धेन प्रकर्षा......षड्कता । एषा च मात्रा द्वैकलमष्टकलाल. षष्ठमात्रास्थाने कार्येति केचित् । अन्ये स्ववस्तुनि सप्तम्यैवेय मात्रेति मन्यन्ते च पञ्चपाणितालानुप्रवेशात् व्यथस्वसुविकाप्रकर्या इयमेव शीर्षकरूपेत्याहु ।

अथोवेणक लक्षयति । पाद पूर्व इति । अपरान्तकं यद्वस्तु सैव शाखाय-(खा तया)योक्त वस्तु शाखाख्यमिति । तेन चतुर्विंशतिकला पाद. ॥२८१॥

द्वितीयोऽपि तस्यैव प्रतिशाखयेति । विशेषवचन तुल्यवीतिरवे मन्यपदत्वा-भाव । यथाह दत्तिलः ।

अथ नान्यपदो पादो तुल्यगोत्यादिलक्षणौ ।
पृथगोवेणकस्यादावपरान्तकवस्तुवत् ॥
(दत्तिलम् २०१-२०२)

इति । अनित्यमिति । शीर्षकमस्य भवति वा न वा । माषघातस्ततः परमिति । षड्दृष्टस्तत एव चाविकल्पित इति यावत् ॥२८२॥

तस्य स्वरूपमाह । कर्तव्या द्विकला शम्येति । तानि तानि पाता प्रसिद्धम् ॥२८३॥

---

१. KSS ताल सवरणे गत ।
२. KSS स एव पानविन्यासो मासघातमत परम् ।
३. NS. मापघातो ।
४. KSS. शम्या च द्विकला पुन ।

[पुनश्च द्विकलस्तालः शम्या च द्विकला पुनः ।]
[1]पुनश्चैककलस्तालः सन्निपातः कलात्रये ॥२८४॥

प्रायेण माषघातश्च विवधाङ्ग प्रकीर्तितः ।
[2]सन्निपातश्च(स्य) पश्चार्धे कदाचिदुपवर्तनम् ॥२८५॥

अन्त्य स्यात् कलिकेनैव तथोज्य पञ्चपाणिना ।
सन्ध्यर्थपाक्षरेणैव[3] कर्तव्य(व्य.) पञ्चपाणिना ॥२८६॥

[4]एककं विवधो वापि तस्याङ्ग समुदाहृतम् ।
[5]अन्तस्य चतुरश्रस्य प्रवृत्ते यो विधिः स्मृतः ।
[6]विवधो(धा)ङ्गेन तेनैव चतुरश्रकमिष्यते ॥२८७॥

---

सन्निपातस्येति । तदुपलक्षितस्यास्य माषघातस्य पश्चिमेऽर्धे पाक्षिकमुपवर्तनम् ॥२८४-२८५॥

तत्र चैककला पञ्चपाणिस्तालः ।

अत्र केचिदाहुः । कदाचित् पूर्वार्धे कदाचित् पश्चिमार्धे । तेन माषघाते यान्यक्षराणि द्वादशकलासु तान्येव लयपरोक्षतया षट्कलासु प्रयोज्यानि । तन्त्वा-(तान्या)दौ पश्चाद्वा माषघातस्येति ।

अन्ये तु माषघातस्य षट्कलासु तैरेवाक्षरैरन्या षट्कला पञ्चपाणिगतप्लुतादिविभागेन नेया । तालस्तु माषघातीय एव क्रमायात इति ।

अपरे त्वाहुः । सन्धिस्तावदेककलेन पञ्चपाणिना कार्यं । तत्र माषघातीयानामेवाक्षराण्यन्यानि चेति कथाचिच्छन्दस्यार्थ इति ।

ध्यश्ररूपे भाविन्यङ्गद्वये वा सन्ध्यायत्वेन सन्धि ॥२८६॥

तस्याङ्गमेककं विवधो वा । अन्तस्येति । चतुरश्र तस्य यत् प्रवृत्तमङ्ग द्विकलचच्चत्पुटमुक्तं तदेव विवधाङ्ग चतुरश्रम् ॥२८७॥

---

१. NS उतः ।
२. KSS. सन्धिपचैव हि तस्यान्ते ।
३. KSS यथाक्षरेणैव ।
४. KSS एकैक विविधो वापि तस्याङ्गे ।
५. NS. अन्त्यस्य ।
६. KSS विधिनानेन ।

सन्निपद् [1]वज्रतालश्च द्विधा स स्मृतक मतम् ।
सप्ताङ्गे द्वादशकल द्वादशाङ्गेद(ङ्गे द)शैव तु ॥२८८॥

निष्कामभावित कृत्वा शम्यास्तिस्र प्रयोजयेत् ।
[2]तालस्त्रय ततश्चैव शम्यातालौ ततः परम् ॥२८९॥

शम्यातालौ तत कार्यौ सन्निपातोऽन्त्य एव च ।
प्रोवेणके तु सप्ताङ्गे सम्पिष्टकमिद मतम[3] ॥२९०॥

द्वि शम्यातालयोगेन द्वादशाङ्गेऽपि चेष्यते ।
पाता नवैकादश वा सम्पिष्टकमुदाहृतम् ॥२९१॥

वज्रवत् सम्प्रयोक्तव्ययुपवतनमेव च ।
युक्ता विवधवृत्ताभ्यां प्रवेणी द्विविधा स्मृता ॥२९२॥

---

सन्नामाङ्ग पुनरपि च सन्निताल इव वज्रमेककाङ्गत विवधाङ्गत्व च । अत्र वज्रस्यान्तेनैककलैकमात्राङ्गम् । तत एवाभञ्जनीयत्वाद्वज्रत्वम् । चतुरस्रव्यवहिता व्यभवो पुनवज्रलेपेनेवानेन वृद्धिकृतेऽपि वज्रम् । सप्ताङ्गे प्रोवेणके सम्पिष्टक दशकल द्वादशकल वा ॥२८८॥

तत्प्रायस्य प्रस्तारमाह । निष्कामभिति । निशशशससससतातातशतशसम् ॥२८९॥

सम्पिष्टक चच्चत्पुटचाचपुटादिरूपस्य स(व)वासचूर्ण इवात्र द्विकलवाद्यसम्पेषणमिव ॥२९०॥

द्वादशाङ्गे दशकलमाह । द्वि शम्यातालयोगेनेति । शम्यायास्तालस्य च यद् विलम्बमुक्तं तदपसाय द्विरव कार्यम् । अत एव नव पाता भवन्ति । निष्कामस्थाने । प्रागेकादशपाता । निशशतात शताश.. दशकलसम्पिष्टकम् ॥२९१॥

सम्पिष्टकाक्षरैरेवैककलपञ्चपाणिमापवतन वज्रवद्वादेकाङ्ग तथा वज्रवदिति । आद्या प्रवेणीति विवधेन । अपरा तु वृत्तेन ॥२९२॥

---

१ KSS वज्रकालस्य ।

२ KSS तालस्तत्र ततश्चैव शम्याताल...।

३ KSS सविष्टकमिति स्मृतम् ।

पञ्चपाणिस्तु कर्तव्य(व्याः) प्रवेण्याश्च यथाक्षरं[1] ।
द्विकलो वापि मिश्रो वा प्रयोगो द्वाव(ऽङ्गुष्ठ)शानुगः ॥२६३॥

[2]प्रान्ते चा(वा)स्याः प्रकर्तव्यं कदाचिदुपवर्तनम् ।
पञ्चपाणिविधानेन यथोक्तेनैव तद्भवेत् ॥२६४॥

[3]द्वितीयपादतालेन ह्यवपातश्च कीर्त्यते ।
वज्रतालेन कर्तव्य[4]मन्ताहरणमस्य तु ॥२६५॥

---

तत्राद्यायास्ताल पञ्चपाणिर्यथाक्षरः । अपरस्या स एव द्विकलः । यदि वा मिश्र इति । एककलद्विकलचञ्चत्पुटसमुदायरूप इति लक्ष्यते । प्रकृष्टा वेणीति प्रवेणी । वेण्या शिरो लक्ष्यते । अनेन प्रधानमिदमङ्गम् ।

ननु यदि द्वयोरपि तालस्तुल्यस्तर्हि को विशेष इत्याह । प्रयोगोऽङ्गुष्ठशानुग इति । प्रथाया विवधोऽन्यस्यां च वृत्तमित्यङ्गभेदाद्भेद इति यावत् ॥२६३॥

पाक्षिक भेदान्तरमप्याह । प्रान्ते वाऽस्या इति । द्वितीयस्या पर्व(प्रवे)ण्या प्रान्ते उपवर्तनमावृत्ति कार्या । कदाचित्तत्र च यथाक्षरं पञ्चपाणि ॥२६४॥

द्वितीयपादतालेन ह्यवपात इति । अत्र वज्र इति द्वादशकलावधिकेन द्वादशेन भाव्यम् । तथाभूतात् प्रकरणात् तन्त्रान्तरेषु च स्वकण्ठोक्तेनैवास्य द्वादशकलत्वोक्ते ।

प्रवेण्या अवपातश्च द्विकले स्युरिहोत्तरे ।

इति । तदत्रान्तस्य द्वितीयपादस्य तावद् द्वादशकलत्वम् । तच्चापरास्तकप्रतिशाखाया द्वादशकलत्वे लिङ्गमिति तदेतत् प्रतिशाख(म) सहन्ते । प्रकरण द्वादशकलतां निश्चिन्वत् द्वितीयप(पा)दतालेनेत्यस्यैव विशिष्टे विग्रहे स्थापकम् । यतो द्वितीय पादस्य द्वितीयपाद । अपरमयं द्वादशकलपादस्य । द्वितीयतृतीयेति (अष्टा २ २ ३) समास । तत्र पञ्चपाणिना द्वितीयपादतालेन द्वादशकलेनेति सम्बन्धे द्विकलपञ्चपाणिताल एव लभ्यत इति । प्रताशनितानिशतानिस उपपात ।

अन्ये तु पञ्चपाणिग्रहण नानुवर्तयन्ति । तत्राद्यपादद्वितीयार्धतालमुपपात प्राहु । अनिषिता पातानिशतानिविश उपपात. । तदुक्त दत्तिलाचार्येण

---

१ KSS यथाक्षरम् NS यथाक्षरा ।
२. KSS प्रञ्ज्' चास्य प्रकर्तव्य ।
३ KSS द्वितीया तालपातेन NS द्वितीयपाततालेन ।
४. NS क्रम सहरणस्य तु ।

रोविन्दके तु षण्मात्रा: पातादेकान्नविंशति[1]।
[2]प्रथार्धेऽन्ते च मात्राणां पञ्चानां पात उच्यते ॥२६६॥

[3]तालः शम्या च तालश्च शम्या तालस्तथैव च।
पञ्चानामपि मात्राणां विधिरेव यथाक्रमम् ॥२६७॥

चतुर्थंशोऽपि पञ्चम्या मात्रायास्ताल उच्यते।
चतुष्कलाऽन्यया तुल्या षष्ठी मद्रकमात्रया ॥२६८॥

---

उपपातद्वितीयस्तु तालः कैश्चिदुदाहृतः ।

(दत्तिलम् २०८)

इति द्वितीय इहान्त्यपातद्वितीयार्धनिविष्ट इत्यर्थं । एतस्यबुद्धया दत्तिले विवरणकृतो भ्रान्तास्ताल विशेष व्याख्यातवन्त । षट्पतालेनान्ताहरणप्रहणादेककलापञ्चपाणि-रेकाङ्कत्व च लभ्यते। चतुर्विते यतस्त विकीर्षित तदेव कार्यमिति । अन्येऽपि नोच्यते नाथान्ताहरणमित्ययमसौ विशेष इत्याह ॥२६५॥

अथ रोविन्दक कलयति । रोविन्दके त्विति । षण्मात्रा इति । चतुर्थंशे(शो)-ऽपि पञ्चम्या (भा ना ११ २६८) इति वक्ष्यमाणत्वात् । चतुष्कला त्रिमात्रा षोडशभि कलाभिः । तत्र षट्सु पातानाह । प्रथार्धेऽन्ते चेति । यथाक्रममिति । तालोऽर्धान्ते च । अन्यस्यान्ते द्वितीयस्ताल । द्वितीयस्या मात्रायामर्धे । त्रिष्वेव चेति चचनाच्चान्ते । एव पञ्च चतुर्थ्यां पञ्चम्या च । तथैव चेति यथाक्रममिति वचनात् सर्वासु मात्रास्वर्धे तालान्ते शम्येति । आचार्यान्तरमतानुसारेण व्याख्या चेति यद् टीकाकारेण कल्पित तालोऽर्धोऽन्ते चान्यासा शम्यार्धेऽन्ते न तुर्यस्या तालो-ऽर्धोऽन्ते पञ्चम्यामिति तदुपेक्ष्यमेव । तथा हि दत्तिलाचार्य.।

तथाऽर्धेऽन्ते च मात्राणा तालः शम्ये यथाक्रमम् ।

(दत्तिलम् २११)

इति । पञ्चम्या चतुर्थंशोऽपि ताल इत्येकादश पाता । पञ्चसु षष्ठी त्वष्टपाता मात्रेत्याह ।

चतुष्कलाऽन्यया तुल्या षष्ठी मद्रकमात्रया ।

इति । चतुष्कलमद्रकमन्त्या योक्ता मात्रा तुल्स(ल्य)तालात्र षष्ठीति ॥२६६-२६८॥

---

१. KSS पादभागैश्चतुष्कलं ।
२ NS प्रथांतोते (च) KSS प्रथेऽन्ते चैव मात्राणा ।
३ KSS तालशम्या च तालश्च NS ताल शम्याथतालश्च ।

[1]इति पाद(त)स्तथा चाष्टौ कला ह्याद्या ह्युपोहनम् ।
ततश्चैव प्रयोक्तव्यं द्विकलं प्रत्युपोहनम् ॥२९९॥

[2]घातश्चेत्(पाताश्च) सन्निपात(ता)श्च विवर्धककयोजिताः[3] ।
वर्णानुकर्षोऽष्टकलस्त्वयं[4] प्रस्तार उच्यते ॥३००॥

तुल्यवर्णोपवहनो द्वितीयः पाद इष्यते ।
शरीरताल. कर्तव्यः प्रस्तारोऽस्य विशेषतः ॥३०१॥

---

पात इति षण्मात्र । अत्राष्टकलमुपोहनम् । अङ्गनिबद्धेन पातस्यैव मात्रा-न्यात् मात्राविभागस्य तत्सम्पादनकृतित्वेन गणितत्वात् । प्रत्युपोहनं द्विकलं यदन्यैः कल्पितं तन्नादृयमतिक्रमतीति मुनेर्भावः ॥२९९॥

प्रतिपातमेकैकं क्रियमाणे सति मात्रान्तात् सन्निपात । स च विदारीक-त्वाद्विपदनिबद्धो भवति । पातद्वयापेक्षिका हि मात्रा । अतस्तथाह—

पाताश्च सन्निपाताश्च विवर्धककयोजिताः ।

इति । एतच्च बाहुल्यातिशयेनोक्तम् । पञ्चम्या हीति पातत्वं षष्ठ्याष्टपातत्वमिति कथं विधि(व)धयोगात् । तत्र पादेऽयं प्रस्तारः । षो षो षो षो षो षो षो षो(८) पानिविप्र पानिविश पानिविप्र पानिविता पानिविप्र पानिविश पानिविप्र पानिविता पानिविप्र पानिविश पानिविप्र पानिविश पानिविप्र पानिविता पानिविप्र पानिविप पानिविप्र पानिविता पानिविप्र पानिविश पाशालिता पाशालिश पाताविप पानिविश सता ।

अथ द्वितीयं पादं निरूपयिष्यंस्तस्याद्य भाग तावदाह । वर्णानुकर्षोऽष्टकल-स्त्वयः प्रस्तार इति । वर्णोऽस्य गीतिवर्णस्य गीतिलक्षणस्यानुकर्षात् प्रथमपदप्रत्या-सत्या प्राप्य पादान्त्यमात्रापर्यन्त कलाष्टकनिविष्टस्य द्वितीयपादप्रथममात्राद्यकलारम्भ-कोपोहनात्मनि पुनर्योजनं सोऽन्य इतर गीतकासाधारण प्रस्तारो नामाङ्गम् । प्रकर्षेण स्तरणं शब्दस्येति । सामान्यत्वं हीति त्रिगीता(तो) भवति प्रथमपादस्यान्ते द्वितीय-स्याद्यन्तयोरिति ॥३००॥

द्वितीयपादस्य स्वरूपमाह । तुल्यवर्णोपवहन इति । सैव गीतिस्तदेवोपोहनं स्तुतिपदानि त्वन्यानीति यावत् । एतत् पादद्वय शकुनिशरीरस्यैवावश्यं सञ्चारक-

---

१. KSS. तथा चाष्टौ कलाः कार्या प्रथमायामुपोहनम् ।
२. KSS पाताः स्युः संनिपातान्ता ।
३. NS. विविधैकप्रयोजिता ।
४. KSS , NS. स्वल्प. प्रस्तार इष्यते ।

द्विकलेनैव कर्तव्यो विशेषात् पञ्चपाणिना ।
कलाद्वादशनिर्दिष्टं प्रमाणं चास्य तत्त्वतः ॥३०२॥

रोविन्दकशरीरं तु षट्कलोपोहनं स्मृतम् ।
[१]विवधो वाऽपि वृत्तं वा तस्यादौ परिकीर्त्यते ॥३०३॥

[२]आकारवृत्तमस्य स्याच्चतुष्कं त्रिकमेव वा ।
त(अ)स्योपरि यथेष्टं स्यादधस्तादङ्गयोजनम् ॥३०४॥

षा(अ)विशेषनिवृत्तं तु शीर्षकं सम्प्रयोजयेत् ।
यथाक्षरेण तच्चैव कर्तव्यं पञ्चपाणिना ॥३०५॥

---

मिति शरीरं वक्तव्यम् । तदाह । शरीरतालं कर्तव्यं प्रस्तारं इति । प्राच्यगीतानुकर्षं इति यावद् । अस्य विशेषतः इयत्तासाधारणेनोक्ता(क्त) ॥३०१॥

ननु कोऽसौ शरीरतालो य पूर्ववर्णाकर्षणेन प्रस्ताररूपं क्रियत इत्यत आह । द्विकलेनैव पञ्चपाणिना कर्तव्यं इति । शरीरतालं इति विशेषः । प्राच्यवर्णानुकर्षात् प्रस्तारक्रिया क्रियत इत्याह । कलाद्वादशेति । अस्येति प्रस्तारस्य ।

एतदुक्तं भवति । द्वितीयपादस्य षष्ठपामल्पासु द्वादशकलासु या गीयमाना द्वादशकला द्विकलपञ्चपाणितालेन गीयमाना उपोहनं च षट्केन प्रागुक्ता । तत् प्रधानभूतास्ता शरीरमित्युच्यत(न्त) इति ॥३०२॥

तदाह । रोविन्दकशरीरमु षट्कलोपोहनमिति । तस्या शरीरस्याविस्तपोहना-ध्यस्तत्र विवधो वृत्तं वेति प्राक्तनं स्मारितम् ॥३०३॥

प्राकारवृत्तमिति व्याख्यातम् । वृत्ताख्य वर्णं प्रा इत्येवभूतं स्तोभैरित्यप्रयुक्तं प्रयुक्तं कार्यम् । यदाह । चतुष्कं त्रिकमेव चे(वे)ति । नातो न्यूनमिति यावद् । अस्येत्याकारवृत्तस्य मध्यस्थितस्याङ्गचतुष्कतस्योपर्यधश्चान्योन्यविशिष्टान्यङ्गानि कुर्यात् । शरीरे प्रस्तारं षोडशाङ्गता चेत्यवधानं सम्पादमित्यप्राधान्या(न्य) विधेयम् ॥३०४॥

तत्रैककलपञ्चपाणिना वर्णाङ्गैर्यथारुचि द्विस्त्रिर्वा या(प्रा)वृत्तमनावृत्तमेव कार्यम् । तदाह । अविशेषनिवृत्तं तु शीर्षकमिति ॥३०५॥

---

१ KSS विविधो वा प्रवृत्तं वा NS विविधं वापि वृत्त...।
२. प्राकारवृत्तमन्यत्...... इत प्रारम्य ६२ श्लोका नि० मुद्रित पुस्तके न पठिता ।

[1][आकारैककमस्यान्ते प्रवृत्त नियमाद्भवेत् ।
इति रोविन्दकं प्रोक्तं स्याद्युत्तरमतः परम् ॥३०६॥

मुखप्रतिमुखे(खौ)स्यातामुल्लोप्यकवदुत्तरे ।
उत्तरं संप्रवक्ष्यामि यथाविहितलक्षणम् ॥३०७॥

यस्यैवमुत्तरस्याथ मुखं प्रतिमुखं भवेत् ।
उल्लोप्यकवदस्यादौ मात्रा चैका चतुष्कला ॥३०८॥

रोविन्दकवदाकारमण्वर्जं प्रयोजयेत् ।
शाखा षडङ्गाऽपरा स्याद् द्वादशाङ्गा परा स्मृता ॥३०९॥

षट्पाता द्वादशकला शाखा ज्ञेया प्रमाणतः ।
तस्यां तु द्विकलस्तालः शम्या चैककला भवेत् ॥३१०॥

पुनश्चं(श्चैवं)कचत्कलस्तालः सन्निपात. कलात्रये ।
शाखावत् प्रतिशाखा तु भवेदन्यथवा तु सा ॥३११॥

अस्य विशेषमाह । आकारैककमस्यान्त इति । वृत्तस्यावरोही प्रवृत्तादयो गेय उक्त । सोऽस्य शीर्षकस्यान्ते नियमात् कार्य । एकाकिन्याकारे स्तोभपदे प्राकार(?) एकको यस्याकारस्तदाकारैककमिति बहुव्रीहिः । एककशब्दोऽशब्देन शब्देति नास्य पूर्वनिपातः ॥३०६॥

एतदुपसंहृत्यान्यदामुखिकं दर्शयति । मुखप्रतिमुखौ स्यातामुल्लोप्यकवदिति । उत्तरे मादौ(दौ)मुखप्रतिमुखविभक्ता षोडशकला मात्रा ॥३०७-३०९॥

अनन्तरं द्वादशभि कलाभि शाखा । तत्र पाता षडुच्यन्ते । तस्यां तु त्रि(द्वि)-कलस्ताल इति कला । द्वादशकलेन प्रवणा द्विकल पञ्चपाणिरादिश्त । न ह्यत्र प्रकरणे चाचपुटचतुष्कल कथापि श्रुत । तेनात्र त्रि(द्वि)कलं विभागोपलक्षणमेव द्विकलत्वादिप्रकर्षान्तमाभावदिति । चतुष्कलत्वध्याह । तथैवेति । प्रतिदिशनिशाखाप्रभृति शाखा । प(पा)ठतोऽत्र वर्णाङ्गानि षट् परतो द्वादश । एवभूतैव प्रतिशा(खा)न्यथवा । अत्र च रोविन्दकानन्तर्याच्छरीरत्वमुपजीव्यत इति वर्णानुकर्षात्या प्रस्तार प्रति-शाखाया कार्यं इत्याह ॥३१०-३११॥

1. इत आरभ्य कोष्ठबद्धोऽयंत्रिशश्लोका निर्णयसागरसंस्करणे न पठिता । काशीसंस्कृतपुस्तके त्वध्यायान्त पाठा विद्यते ।

अविशेषनिवृत्तिश्चाप्यस्यान्तो नियतो भवेत् ।
अन्ते चास्य विशेषेण मध्ये चैव तु शीर्षकम् ॥३१२॥

तालोऽथ दक्षिणे मार्गे सप्तरूपस्य कीर्तितः ।
य एव दक्षिणे तालो वृत्तावपि स कीर्त्यते ॥३१३॥

कलार्धं तु कला तत्र विशेषोऽन्यस्य(न्य)श्च कीर्त्यते ॥
अर्धयोगस्तु तत्कालादर्धकाल प्रकीर्तितः ॥३१४॥

---

तर्हि प्रस्तारस्यात्र कियत् मानमित्याह । अविशेषनिवृत्तिश्चाप्यस्यान्तो नियत इति । प्रतिशाखात्मक एवात्रान्त संहरणकारित्वात् । स चाविशेषेण वर्णनिवृत्तिरूप-वर्तनात्मा यस्यास्तादृक् कार्य । स च नियत । अन्ये तु प्रतिलाधनुसारिणो व्याचक्षते । शाखाग्रे विशाखात्माऽन्त पृथग्भूत सन्नियत । चकारेणाश्रुत्याऽन्तश्च स्थित आवि भूतो यदि भवेद् तन्नियतम् । अनियतोऽन्तस्त्वथावीनामन्यतमो यथारुचि कर्तव्य इति । अस्येति । शाखाप्रतिशाखमपदयन्त इति प्रतिशाखाया समाप्तौ । मध्य इति शाखाप्रतिशाखे । अ तराशीर्षकमिति शीर्षकद्वयम् । अन्ये त्वेकमेव शीर्षकं तथा कार्यं यथा...न्ते मध्ये च कृत भवतीति व्याचक्षते । तेन शाखान्ते शीर्षक कार्यमित्युक्त भवति ॥३१२॥

अथाऽत्र मार्गवैचित्र्यनिरूपणार्थमाह । तालोऽथ दक्षिण इति । सप्तरूपतास परिकीर्तित । स दक्षिणे तावद् बाहुल्येन चतुष्कलत्वात् तद्गतत्वाच्च दक्षिणस्य दक्षिणेन चात्र विलम्बितो लयो वक्ष्यते । तेन विलम्बिते लये तावदय प्रयोग । अथ मध्यद्वयमप्यनुजानीते । य एव दक्षिण इति । विलम्बितलयनिष्ठोऽय ताल उक्त । स वृत्तावपि । न तु दक्षिणेऽसौ ताल ॥३१३॥

तस्य तर्हि वृत्तविषयता विदग्धा ? सा हि द्विकल एवोचितेत्याशङ्क्याह । कलार्धं तु कला तत्रेति । दक्षिणे यत् कलार्धं तत् वार्तिके कलारूप कर्तव्यम् । न च सार्वत्रिकमेतदिति दर्शयति । विशेषोऽन्यश्च कीर्त्यत इति । वर्तमानसमीप्येऽप्यवादोऽत्र वक्ष्यत इति यावत् । कलार्धं तु कलेत्युक्तम् । तत्र स्तुतिपदवर्णाङ्गादेरङ्गीकरण प्रति-कलमिति यो विपरीत बुध्येत् त प्रति बोधयितुमाह । अर्धयोगस्तु तत्कालादिति । योऽयमर्धयोग प्रकीर्तित कलार्धं [illegible] कला तत्रेत्यमुना वचनेन स दक्षिणकलादर्धकालो मतव्य..। स्तुतिपदवर्णाङ्गादिसर्वखण्डमेव केवल कालमात्रमेव भिद्यते । अत एव लयभेदमात्रमिति तात्पर्यम् ॥३१४॥

उल्लोप्यकोत्तरमुखे हित्वा युग्मंकक तथा।
चतुष्कल स्याद् द्विकल त्रिकल च यथाक्षरम् ॥३१५॥

रोविन्दकोल्लोप्यकयोर्मद्रकोत्तरयोस्तथा।
शरीरेषु विधिर्ह्येव शेषेषु प्रकृतिर्भवेत् ॥३१६॥

---

अपवादो वक्ष्यत इत्युक्तम्। तमाह—

उल्लोप्यकोत्तरमुखे हित्वा युग्मंकक तथा।

इति। इह परिमितेऽपि तालशरीरे यत्र वर्णाङ्गभूतस्वनन्त्रविलम्बितलयेन विना तद् सवादम्। एव स्थिते उल्लोप्यकस्य यद्गि अङ्गपरत्वमुक्त तद् प्राधान्यान् मुखे ताव न्निवेश्य तत्र परिमित मात्रास्वरूपत्वादुत्तरेऽप्युल्लोप्यकवद्भावादयमेव विधि। युग्म शब्देनात्रैवेणाकाडग च चतुरश्र नाम। तत्र च स्वरूपेण विविधाङ्गमुक्त लक्षणम्। तस्य चतुरश्रस्य प्रवृत्ते यो विधि स्मृतो(त)। विविधाङ्गेन तेनैव चतुरश्रकमिष्यत (भ० ना० ३१ २८७) इति। तस्यैव च सप्ताङ्गम द्वादशपर(कल)मि। (भ० ना० ३१ २८८) त्यत्रोद्देशे पाद सन्निपातविघात (भ० ना० ३१ २० ) इत्यत्रैक चतुरश्र मेवयुक्तम्। तदेनदतोतपहेणाबपाणिना पा तत्स्वरूपातिरिक्त कायम्। तच्चेत् मध्य-लये न क्रियेत तद्विपमीभवद् प्रयोग। तथाहि। प्रवृत्तसम्बन्धी तत्र ताल। प्रवृत्ते चोढटचक्व पुटयोगस्तालोपलक्षणमात्रम्। न तु त(य)थाक्षरम्। तथापि द्विकल-म यथात्वन चतुरश्र स्याद्। द्विकलमपि तच्चतुष्कलत्वादङ्गिनस्तदौचित्याद्विलम्बित-मेव प्रयुज्यते। एवा च सर्वाङ्गेष्वेककद्विकलतायोगेऽपि व्यवस्था। ने(ना)त्र यदोवेण कपादे मध्यमलयेन क्रियते तदकक तल्लयानुवर्ति चेत् तदङ्गिनस्तदङ्गताङ्गस्येति। तस्माद् पूर्वोपात्ता च स्थिति चेव(द)अ(मु)ज्यु(क्त)तीति। उल्लोप्यक च भूयोऽङ्गा नतीतशरीराणामुपलक्षणम्।

उत्तर तु तस्याङ्गान्यप्राप्यतिदेशादिक स्पष्टमिदमुपात्तम्। युग्मंककमङ्गाना मुपलक्षणम्। एव विलम्बिते मध्ये च सप्तम्प प्रयोज्यम्। तथाहि। यस्तत्र तु लयो मध्यस्तत्प्रमाण(णा)कलेति (भ० ना० ३१ ६) तावन् मध्यम। अत एव तत्र वर्त-मानत्वाद्वृत्तिव्यवहार। विधिरपि भर(व)तु। समस्त वर्णतालपदादि(क दृष्टफले) केवलवैचित्र्या(मा)यमस्य प्रयोगो न चादृष्टफले वैचित्र्य शासितुमुचितमिति। यथा न्यथा मार्गभेदमाह—

प्रकृतावपि नेयं स्याद् द्विकले तु(लेन) चतुष्कलम् ।
कालेनैवं भवेद्वृत्तावयं(यं)योगश्चतुष्कले ॥३१७॥

---

चतुष्कलं स्याद् द्विकलं त्रिकलं च यथाक्षरम् ।
रोविन्दकोल्लोप्यकयोर्मद्रकोत्तरयोस्तथा ।

शरीरेषु विधिर्ह्येष ॥ इति ।

केचित् यस्य येनार्थसम्बन्ध इतीत्थं योजयन्ति । रोविन्दकोत्तरयो प्रस्तारात्मक शरीरं द्वादशकलम् । तद् द्विकलमपि तद्यथाक्षर स्यात् । स(प्रस्तार') । उल्लोप्यकमद्रकयोस्तु चतुष्कल शरीर तद् द्विकल स्यात् । न त्वेककलता तन्नेयम् ।

नन्वेककलं तयोश्चतमेव । सत्यम् । इह त्वस्यद्रूप षड्विका(रा)त्मक नाम । चतुष्कलगताग्यन्यदे(दं)न हि वर्णाङ्गस्तुतिपदानि द्विकलीक्रियन्ते । तथाहि । वैवं चर्च प्रतामामि सवा इति यवचतुष्कल' पादभाग. स एव । नैव गीत्यान्तरिकयोगेन द्विकलः पादभाग क्रियते ।

नन्वसावेककलीकर्तव्य इत्युक्त. । द्विकल त्वेककलीकर्तव्यमित्युक्तमेव । रोविन्दकोत्तरयोस्तु विकाररूपमेककलमस्ति न तु प्रतिरूपमिति ।

अन्ये त्वाहु । द्वादशकलत्वे चतुष्कलत्वमेव । यदाह ।

प्रनादेशे तु सर्वत्र कर्तव्यः स चतुष्कल ।

इति । द्विकलता केवलतालसपातोपलक्षणाय । तेन चतुर्ष्वपि चतुष्कल यदुपरान्ते तु वाचनिक एवाधिकार । तदाह । शेषेषु प्रकृतिरिति । चतुष्कलत्वे चैत्यर्थ ॥३१५-३१६॥

ननु प्रकृतिर्नाम स्वरूपमुच्यते । तच्च मापधातस्य द्विकल द्वादशकलत्वाद्वा(वा)वापविक्षेपाभावाच्च न चाचपुटगता येन चतुष्कला स्यादित्याशङ्क्याह । प्रकृतावपीति । द्विकलेन । अपिशब्दादेककलेन च । उपलक्षितायामपि प्रकृतौ चतुष्कलमेव नेयम् । निर्वाह्या स्यादिति न्यायत एव सम्भाव्यत एतत् । प्रधानानुविधानमङ्गानामिति ।

नन्वपादान्तप्रकर्षणमोवेणकेषु सर्वथैव वृत्तियोगो नास्तीति कथमविशेषणोक्तम् । य एव दक्षिणे ताल स एव । वृत्तावपि स इत्याशङ्क्याह । कालेनैव

वृत्तौ चतुष्कलौ योगो दक्षिणे स्यात् कदाचन ।
न मद्रकोल्लोप्यकयोर्मुखोपवहनेषु तु ॥३१८॥

यो दक्षिणे तालविधिर्वृत्तौ च समुदाहृत ।
चित्र व्यस्ते समस्ते वा तावुभौ परिकीर्तितौ ॥३१९॥

शाखानिवृत्तादन्यत्र चित्र तूभयमार्गिकम् ।
इति मार्गत्रयेऽप्येतत् सप्तरूप प्रकीर्तितम् ॥३२०॥

---

सर्वेविति । चतुष्कले मार्गस्थितानामपरान्तकादीनाम(ना)वृत्तिविषयो योऽयंयोग । एवमिति पूर्वमुक्त । सकलार्थात् परणाद् भवेद् । एव सख्या तु कलानामप्यूर्नवेति न विकार याग ॥३१७॥

वेचिन्मान्तरमप्याह । वृत्तौ चतुष्कलो योगो दक्षिणे स्यादिति । चतुष्कलेऽपि प्रयोगे वचनेन यो वत्तिमार्ग उक्त । तथथा । अपरान्तके

वृत्तो निवृत्तियोगश्च गते वस्तुचतुष्टये ।
(भ० ना० ३१ २४८)

इति । स कदाचिद् दक्षिण स्यात् । यच्छब्दव(य)योगेन दक्षिणस्यापि वृत्तरूपत्व मुक्तम् । स मुखनाम पङ्गे उपोहनप्रत्युपोहनयु च न भवतीनि सोदाहरण दर्शयतीति । न मद्रकोल्लोप्यकयोरिति । न मुखोपोहनेऽस्य विधि । मुख उदाहरणमुल्लोप्यक मुपोहनेषु मद्रकम् ॥३१८॥

अथ चित्रमार्गस्थितस्यैककलस्य विकारमाह । यो दक्षिण इति । दक्षिणे यस्तालविधिश्चतुष्कलवृत्तो च द्विकलस्तौ चित्र एककल क्रमश युगपद्वा भवत । एतदुक्त भवति । एककले मान्तराणि ता येव द्विगुणतालयोगेन । तावत्ये(त्य)व कलारूप निष्क्रामप्रवेशन कदाचिद् द्विकलतया कदाचिन्वापाद्यध्यावापनचतुष्कल तया सैयानाति व्यस्तपक्ष । क्वचिद्भाग द्विकलतया क्वाचन्चतुष्क(ल)त्वनति समस्त पक्ष । ए(अ)त एव चित्रमार्गेण ॥३१९॥

वैचित्र्यात् सामस्त्यस्यापवादमाह । शाखानिवृत्तादिति । शाखानिवृत्त प्रति-शाखातम्त्रेण च निवृत्तमुपवतन तन प्रातिशाखायामुपवनन च चित्रमुभयमार्गयुक्त भवतीत्यर्थ उपसहरति । इति मार्गत्रयेऽप्येति । उक्तेन वचित्र्येण सप्तापि वितस्ता दिमार्गत्रयभाञ्जीति यावत् ॥३२०॥

द्विविधा प्रकृतिश्चास्य कुलकं छे(भे)द्यक तथा ।
एकार्थं कुलकं तत्र पृथक् छे(भे)द्यकमिष्यते ॥३२१॥

निर्युक्त पदनिर्युक्तमनिर्युक्त तथैव च ।
त्रिविध चापि विज्ञेय सप्तरूप प्रयोक्तृभि. ॥३२२॥

बहिर्गीताङ्गशाखाभिर्युक्त निर्युक्तमिष्यते ।
बहिर्गीताङ्गहीन चाप्यनिर्युक्तमिति स्मृतम् ॥३२३॥

बहिर्गीतविहीन तु पदनिर्युक्तमिष्यते ।
इत्येतत् सप्तरूपस्य प्रकृत त्रिविध स्मृतम् ॥३२४॥

षडङ्गाद(ङ्गा) षोडशाङ्गाच्च(ङ्गा च) युग्मौजो(जा) वा प्रमाणत ।
इति युक्ते(स्तुतियुक्ता) तु कर्तव्या मात्रायुक्ता तु पाणिका ॥३२५॥

---

अथ भेदान्तरमप्याह । द्विविधा प्रकृतिश्चेति । अस्येति सप्तरूपस्य स्वभाव । एकार्थपरस्परान्वितार्थवस्त्वङ्गयुक्तं कुलकम् विपरीत भेद्यकम् ॥३२१॥

तत्रापि प्रत्येक त्रयो भेदा इत्याह । निर्युक्तमित्यादि ॥३२२॥

बहिर्गीतेनोपोहनप्रत्युपोहनात्मनाऽङ्गं शाखाप्रतिशाखाभ्या च युक्तं निर्युक्तम् । नि शेषस्वरूपयोगाद्वस्तुशाखामात्ररूपमुपोहनान्तेरङ्गैश्च हीनमनिर्युक्तम् ॥३२३॥

उपोहनैरेव हीन पदनिर्युक्तम् । अर्थप्रतीतिनिबन्धनपरिश्लेषतायोगात् । एतदुपसंहरति । इत्येतदिति । प्रकृत प्रकारो भेद इत्यर्थ । ते सप्ताना भेदा । तद्यथा मद्रकादिति(दीनि) चत्वारि त्रिधैककलादिभेदात् । प्रत्येक पुनर्विकारभेदात् त्रिधा । पुनर्मार्गभेदात् त्रिधा । पुनर्नियुक्तादिभेदादिति त्रीणि शतानि चतुर्विंशत्यधिकानि वस्तुसङ्ख्यया । अङ्गपरावरवैचित्र्यसङ्ख्यायाश्च भेदाद् भूयासो भेदा । ते त्वनुपयोगान्न प्रतिपद लिखिता । अन्येषु त्रिषु मार्गभेदाद्विकारभेदा । सनिर्युक्तादिभेदास्त्वयस्त्रयो-(दास्त्रयो) भेदा इत्येकाशीति । तत्राप्युक्तवद् भूयास प्रकारा । पञ्चाधिकानि चत्वारिंशतानि प्रधानभेदाः । ते च सर्व एवोपभेदा अप्यदृष्टोपयोगिन । अङ्गभूयस्त्वं तु फलभूयस्त्वायेति न्याय ॥३२४॥

अथ सुकुमारप्रायाल्लास्यद्वारेण पूर्वरङ्गोपयोगिनीं पाणिका लक्षयति । षडङ्गेति । प्रकरन षोडशाङ्गेति परत । अङ्गानि दीपकादीनि तालाङ्गानि चैक-

सर्वेषामपि गीतानामन्ते च्छन्दकमिष्यते ।
चतुरस्त्रस्तु सत्(स)त्र्यस्रो नवाङ्गो युक्त एव तु ॥३२६॥

---

कादौ यङ्गपात्रेष्यस्तु .. देहावयववाचिनो ग्रहणान्निर्दिष्टम् । मुख्यत्वमस्या शारीर-मात्राया षोडशकलायास्तदाह । मात्रायुक्तेति । सा च मात्रा षोडा भवति यदा सादयो युग्मा द्विगुणा । एवमस्या असंख्या भेदा ।

अन्ये त्व आर्यास्ता (प्राप्तिकी चैव पाणिकेति पठन्त भ० ना० N S Edition P 521) षड्कुचितमतयो व्याचक्षते । आदौ मात्रायुक्ता मात्रया युक्त(क्त)इयत्स्या तेन रोचि-दकमात्र नानुल चेति द्व मात्रे । ननो देहमाह प्रोऽप्सरयश्रो युग्म पदवन प्रायत्वात् पञ्चपाणियस्या । कियानसो प्रमाणत । प्रमाणानि चत्वारि न्यायभ्रा-पतेर प्यावत्येति (न्यायसूत्रम् १ १ ३) चत्वार पञ्चपाणयो देह इति यावत् । अङ्गा-ङ्गे पादौ वर्णाङ्गे षोडश पञ्चाङ्गे गे यस्या तेनोवेणुके पद षोवकमावघातप्रायस्व-तो वितंसत्रिपञ्चतुरश्रकव्यानन्तर मद्गम सम्भिद्य नटिगने यस्मात् । षोडश वाग्लाहरणम् । कस्मादिय पाणिका । प्राह स्तुतिमुक्ता (क्ता) । तेन पा(प)णि स्तुतानि(वि)त्यतो (पा० ५० ४३६) भावे पुढि(ठक्)मत्वर्था (थ) । पठति च रूपमिति । स्तुतियुक्तेत्यनेन च(क)भोयत्वमस्या कथयति । सुकुमारप्रयोगे हि पूर्व-रङ्गे तदङ्गं वा नारीप्राये नियमे च प्रधान सुकुमा त्वात् । एव च गीतकतुल्यकल्प-तयैवेय लक्षयित युक्ता । एव तावत् प्रधानयोगो व्याख्यात । तदनन्तर तदनुयायिन एव रञ्जनाप्रशनस्याप्रयोगेन भाव्यम् । तत्र यथाकथञ्चिदत्रै(त्रै)वाद्यानुरक्तमेव वंचित्र्य भाव । तत्र गीतकासारितादीना छन्दकरूपमनुयायि । पाणिकायास्तु चतुष्क-लतालाद्याङ्गानम् ॥३२८॥

तदन्यस्य लक्षणमाह । सर्वेषामिति । आसारितवर्धमानगीतानामित्यर्थ । आसारितवर्धमानयोरपि हि वर्णाङ्गकल(लो) योगम(गोऽ)स्त्येव । गीतत्व केवलमा-सारणावृद्धिभ्या व्यपदेश प्रयोगे प्राधा यम् । अत एतन्मूलप्रयोगश्छन्द(ने छन्दत)-इच्छात प्रवर्तितत्वाच्छन्दकम् । जातावेकवचनम् । तस्य च यदा यदा त्र्यश्र शरीर क्रियते तदा तालङ्गाना वर्णाङ्गाना चान्यतमानि चत्वार्यङ्गानि । अथ चतुरश्रमेव तत्र चैव कारेणानेनाधिकव्युदास । चतुरश्रविशेषमाह (त्र्यस्र इति) । प्रधानच्छन्दश्चतुरश्र भावस्यानुवर्तन विशेष ।

अन्ये तु वैचित्र्यातिशयेन वैपरीत्य विशेष इत्याहु । अभ्यधाप्युक्तम् ।

चतुष्पदा तथैकाङ्गा त्र्यङ्गा वा परिकीर्तिता ।
षड्गैर्व्यस्तैः समस्तैर्वा युग्मोजा वा प्रमाणत. ॥३२७॥

एकस्या वा बहूना वा द्वयोर्वाथ प्रयोजितम्(ता) ।
तथा शृङ्गारभूयिष्ठा त्रिविधा स्याच्चतुष्पदा ॥३२८॥

प्रवृत्ताख्या द्रुतलया स्थिताख्या तु विलम्बिता ।
स्थितप्रवृत्तसज्ञा च ज्ञेया मध्यलया तथा ॥३२९॥

लास्यमित्येव यत् पूर्वं मया च परिकीर्तितम् ।
लक्षण तस्य वक्ष्यामि प्रयोग च यथाक्रमम् ॥३३०॥

---

मुखपादा गीतकमहरणान्ता यथाविच्छन्दके पूर्वगीतानुवर्तिन्यथ विपर्यय इति ॥३२६॥

अथ सुकुमारप्रयोगोपक्रमप्रधानपाणिकान्तर्भाविप्रयोगलास्यगान दर्शयितु चतुष्पदा लक्षयति । चतुष्पदा तथैकाङ्गा त्र्यङ्गा चे(वे)ति । तथेह स्वरुच्या तस्या एकमङ्ग त्रीणि वाङ्गानि च व्यस्तान्यनन्वितानि तावत्यस्मराभिधेयपदानि तस्या यदा छेदकरूपा यदा कुलकरूपा तदा विपरीतानि । तथाह । षड्ङ्गैर्व्यस्तै(समस्तै)र्वेति ॥३२७॥

शरीर चास्या चतुरस्र वा शृङ्गारभूयिष्ठमिति भूयिष्ठग्रहणात् कामावस्थादावपि परिग्रहो न हि तदेकरूपत्वे भूयिष्ठव्यवहार । स्थितभूयिष्ठ भोजनमिति द्रुतादिलयद्वाच्च वृत्यादिमश्र । तत्करचरणप्रयोगभेद पक्षे पा(स्मा)त् प्रयोजनम् । तथाहि । द्रुताना प्रयोगस्य प्रकर्षेण वर्तन करचरणक्रियाबहुलत्वाद् विलम्बिता नाम विपर्यये मध्यमाना तु द्वयमिति । तत्र द्रुता त्र्यस्रा खण्डा । चतुरस्रा नकरण.. कमध्या पये । आक्षिप्तिका परिगीतिक विचलितेऽपक्रान्तोऽस्थित इति पादाऽङ्गभेदा द्वादशधाभेदककुलकभेदाच्चतुर्विशतिधा । पद चतुष्कयोगाच्चतुष्पदीति । अनया च विशालिलादिर्लक्षित सवमेव लास्यगान स्वीकृतमुपलक्षित च ॥३२८-३२९॥

अन्ये तु चतुष्पदा तथेति (भ० ना० ३१ ३२७) वचनाद्गीतककारि...... स्कन्दकप्रक . कादीनि मन्वते । न तु नत्र प्रयोगे चतुष्पद युगपत् प्रयुज्यत इति मनसि कृत्वा तद्विषय तद्विविच्य लक्ष्य्यबन्ध च दर्शयितुमुपक्रमते । लास्यमित्येवेति । यदिति यस्मादिति तस्मात् । एवकारो यथाक्रममित्यस्यानन्तर । तदयमर्थ । यस्मा-

लसनाल्लास्यमित्युक्तं स्त्रीपुम्भावसमाश्रयम् ।
एकार्थं(र्यं)पृथगर्थं(र्यं) च तदङ्गं स्तु प्रकीर्तितम् ॥३३१॥

मार्गावच्चेकहार्यं स्याद्वह्यवस्तु तथा भवेत् ।
तत्र गेयपदं तावत् प्रथम परिकीर्त्यते ॥३३२॥

---

स्लास्य पूर्वं कीर्तितं लक्षणं च तस्मात्यथाक्रममेव प्रयोगमधुना वक्ष्यामीति ॥३३०॥

तत्र पूर्वं मत्ताण्डवाध्याये (भ० ना० शा० ४) दशरूपके (भ० न० ध० १८) इह च तदेकीकुर्वन् स्मारयति । लसनाल्लास्यमिति । लसनं क्रीडा विलासश्लेषः स्त्रियः पुंसि तस्य वा तस्या भावः । स्त्रीपुंसेत्यभिधाने तु शृङ्गार एव सङ्गृहीतो भवेत् । तेन लासमर्हति तत्र साधु लास्यम् । अनेन तुर्यध्यायोक्तं स्मारितम् । स्त्रीपुंसयोस्तु सलाव इति । एकार्थं पृथगर्थश्चेत्येतदध्यायोक्तम् ।

ननु पृथगर्थत्वेऽन्योऽन्यमम्बन्धे वैरस्यं स्यादित्याशङ्क्याह । तदङ्गैः पृथगर्थं इति । वचनस्य पश्चात् परिपाट्या वचनान्तरमित्यनेन क्रमेण यद्यपि सङ्गतिर्नास्ति तथापि स्त्रीपुंसभा(पुंभा)वरूपे प्रधानेऽर्थे सर्वमन्वितमेव । तथा च डोम्बिकाद्देशा- (कामु स एवा)र्थं प्रधानभूत इति वृद्धामणौ स्पष्टमेवोक्तम् । चोरिर्ममिकुलमव महु सा कुकुहे मितह (चौर्यमैथुनभव महद् सा कुरु मित्रे) इति । तथा च चिरन्तनोऽप्य ... . दयप्रवाद(द)पढमचूडामलिया (प्रथमचूडामणिना) इति । (तदेतद्) भट्टलो- तेन काम्यकौतुके विस्तरय दर्शितं च प्रासादैस्तु न ध्यत इति श्लोके । शास्त्रान्तरे चैवं प्राधानाङ्गान(ना)त्रानानुयायिनामन्योन्यमनुगम सम्मत एवेति यावत् । तत्र स्त्रिया पुंसि भावो यथा फनादि तरुणी मणसवमो (फलादि तरुण्यनुरक्षय इत्यादयः ॥३३१।

पुंसि स्त्रिया अन्योन्य यथा सिद्धा कदर्थेषु यथा वा सोल्लासा मम इत्यादौ । मार्गावच्चैकहार्यं स्यादित्यनेन सदध्यायोक्तं (भ० ना० ध० १६) स्मारितम् । मार्ग इवैकरूपयोज्यमिति । एकेन पात्रेण हरणीयं निर्वाह्यमिति यावत् ऊह्य(ह्य)वस्तिवात । स्वशान्तर्भिद्दिनव्यद्गयोऽय । प्रधानभिद(ष)रुनोदित्तदृत मिति यावत । तथा

सन्तउपक्खद्द विहुवि(पि)कग्रइवेच्च ग्रळज्जिग्राए हुइ पञ्च ।
सन्तव करुणा कलजि(पी)ग्रमकुविन्दोपउक्खेस्लाए ।
वेरणुलो ग्रग्रो वासलति वेझिमिमग्ररनयसरगुणिहत्त महप्पम् ॥

[सन्तापपक्षे विधुपिकानिवच्चालज्जिताया भवन्ति पञ्च ।
सन्ताप करुणा कलपीनमघुव्रत् दोषोत्प्रेक्षणम् ।
वैरागसरसतो विलसति वैरिरणमिममनवसरगुणहत महान्तम् ॥]

इति । अत्र हि दूत्या स्वशब्देन भावी भाव उक्त । छेकोक्त्या तु नायिकान्तरोद्-भेदेन नायकस्य मूर्खत्व स्वसख्या अनुरागित्व सौभाग्यं सुरक्षितत्व चेति । यदिदं सोल्लासामला इत्यत्र सोत्प्रेक्षयाऽन्योन्यमवियोग शोभावहत्वमौचित्य च (चेति तत्) वस्तूत्थाप्य वस्त्विति वा । एकाहार्यमिति । पात्रान्तरमत्रोक्त पूर्वं नेति भाव । अत्र दश लास्याङ्गानि सन्ध्यध्याये (अ० १६) वंचिदया(शङ्कोपजीवेन) नाट्यसंस्काराय निरूपितानि । इव तेषा लक्षणम् । क्षेत्रमारुह्यासारितवर्धमानगीतिकवर्गस्योद्धतपूर्व-रङ्गोपजीविकाभिनययोगिनो यथालक्षणमध्याये यथासुकुमारपूर्वरङ्गोपयोगिनो लास्याङ्गवर्गस्येति । न ह्यत्र गान्धर्वमात्र लक्ष्म । सामकपाल देरलक्षणात् । नापि प्रुवोपयोगी(गिनो) मागध्यादीना लक्षणाभावात् । न च स्वतन्त्र गान्धर्वमिव लक्षणा-र्हम् । न तु वेदत्वात् तत्र गेयपा(प)व लास्यम् । पूर्वरङ्ग इत्यनुद्भिन्नतत्व वाक्य टीकाकृतः ।

इद स्वत्र तत्त्वमुपाध्यायैर्निरूप्यते । इद द्विविध हि नाट्यम् । उद्धत सुकुमारं च । वीरशृङ्गारयोरेव नायकगतयोरशेषपुरुषार्थसिद्धिषु व्यापारात् । तत्र प्रथमे समुद्धतः पूर्वरङ्गो महेशचरितप्राधान्येन । यथोक्त पञ्चमे (चतुर्थे) । माहेश्वरैरङ्ग-हारैरुद्धतैरिति (भ० ना० ४.३.११) महेश्वरस्य चरितमिति (भ० ना० ४ ३१६) च । शृङ्गारप्रधाने तु नाट्ये सुकुमार एव पूर्वरङ्गो यदि हि प्रायेण पञ्चमे लास्यं सूचितम् । त वागङ्गनिरूपणेन तत्र ह्युद्धत समवकार-सूचित । पूर्वरङ्गो मुनिना भगवदग्रे प्रयुक्तः । तस्यैव परमेश्वरेण चित्रता कृता । तदभिप्रायेणाह । गीतानामि-(ति)श्लोके (भ० ना० ५ १२) । इह समुद्धते गीतक वर्धमानं तत्र सुकुमारमिति दर्शयितुमिहेत्युक्तम् । तेन साधारण्य चारीमहाचार्यो- समुद्धताङ्गाना निरूपणेनोद्धत्यं च वर्धमानादिप्रयोगेण पूर्वरङ्गस्य पञ्चमे निरूपितम् । तदुपयोगी चाङ्गसार्थस्तत्र तन्निरूपणे निर्णीत । अमुना सुकुमारोपयोगि दर्शयितु ग्रन्थान्तरमिति ॥३१२॥

स्थापिते भाण्डविन्यासे पटे चैवापकर्षि(सारि)ते ।
ब्रह्मणस्त्रिषु पार्श्वेषु चासने सम्प्रकल्पिते ॥३३३॥

मार्जितेषु मृदङ्गेषु प्रयुक्ते च त्रिसाम्नि तु ।
मार्गासारितकं कुर्यात् तन्त्रीवेणुविभूषितम् ॥३३४॥

भाण्डवाद्येन संयुक्तं ततश्चासारितं बुधः ।
परिवर्तैस्त्रिभिर्युक्तं ततश्चोपोहनं भवेत् ॥३३५॥

त्र्यश्रेण द्विकलेन स्यात् ततश्च परिधावन(क)म् ।
प्रयोक्तव्यं प्रयोगज्ञैः परिवर्तनमेव च ॥३३६॥

---

तत्र गेयपद तावदिर्युपक्षिप्तस्य दर्शयति । स्थापित इति । पटेऽपसारिते सति माण्डस्य त्रिपुष्करस्य विन्यासे यथास्थानं कृते ब्रह्मस्थानमवेक्ष्य पूर्वदिशि नर्तकीनां पार्श्वद्वये च वैणिकानां गायन्तीनां च ॥३३३॥

मृदङ्गेषु दत्तमार्गेषु चकाराद्वीणायामासारितायामितीयता प्रत्याहारादीनां दृष्टार्थानामवश्यकर्तव्यतोक्ता । यत् पुनरेव तत्परितोषार्थमदृष्टार्थं च बहिर्गीतविधानं तत् सङ्कोचयतीति त्रिसाम्नि प्रयुक्ते तन्त्रीवेणुयुत मार्गासारितकं कुर्यादिति । प्राधान्य-प्रयोगेन मध्यप्रयोगपूरणमाह । अनेन च लास्यात् परमेश्वराधनेऽन्तरङ्गं समस्तादृष्ट-सिद्धये विच्छ(च्छे)दप्रशान्तये च पर्याप्तमिति सूचयति ॥३३४॥

ततो मध्यपातीय आसारितविधि । तं कर्तव्यत्वेन दर्शयति । तस्य कलापातो-त्पत्तिमूलहेतुकरवाद् समुत्क्षिप्तस्य प्रयोग इत्याह । भाण्डवाद्येन संयुक्तमासारितमिति । ए(क)कल विवक्षितम् । तत्र प्राधान्यात् कनिष्ठस्यैव प्रयोगः । बुधैरित्यनेन गीतक-विध्याश्रयस्यान्यस्य बहिर्यवनिकाङ्गस्य(स्त)स्य पाणिकाप्रयोगः । ललितैर्बद्धोद्धृतै-(तै)रङ्गहारैरित्याह (भ० ना० ४.३१२) । उक्तं हि पूर्वम् । गीतकेषु प्रयुक्तेषु देवास्तुष्यन्ति (भ० ना० अ० ५.४७) । वर्धमाने प्रयुक्ते तु रुद्रस्तुष्यतीति (भ० ना० अ० ५.४८) कीर्तनात् । देवतानां च यो ज्ञेयो (च ज्ञेयो) गीतविधिः (भ० ना० ५.२१) । इह चोक्तम् । स्तुतिप्रयुक्ता पाणिकेति (भ० ना० ३१.३२५) । तदेतद्वा-क्यार्थसमितेन स्थाप्यादेरन्तर्भावसम्बन्धत्वमिति ॥३३५॥

एव गीतकविधिस्थाने पाणिका तदनन्तर गेयपद सक्षेपेणोत्थापनपरिवर्तनयो स्थानमित्यवसरमस्याभिधाय लक्षणमाह । त्र्यश्रेण द्विकलेनेति । चाचपुटेन द्विकलेन

परिवर्तनके चैव पुवाक्य प्राक् प्रयोजयेत् ।]
पुरुषोऽत्र त्रिवाक्य स्याच्चतुर्वाक्यङ्गना[1] स्मृता ॥३३७॥

[2]कार्यं तथाऽवसानं च प्रत्ययं परिधानके ।
इत्येतत् प्रथम त्वङ्ग लास्ये गेयपद स्मृतम् ॥३३८॥

स्थितपाठ्यस्य वक्ष्यामि विधान चाप्यतः परम् ।
वृत्तमेकमथ द्वे वा योजयेत् पञ्चपाणिना ॥३३९॥

---

परिधानक नामाङ्गम्। परितो धीयते बुद्धौ धार्यते प्रतियोगोऽनेनेत्यर्थापन्नत्व र्शितम् । अनेन केरपि परिधान(क)लक्षण कृतम् । परिधानक त्वथप्रमपकृत्मेकावर चतुर्वस्तु वा द्विगुणमयोपबहुनमिति यावत् । अपरैस्तु अष्टचत्वारिंशत्कल वस्तु द्वादशोपोहन मध्यो लय इति । तेनैवावर्तमाने विम्बन्दनाय परिवर्तन कार्यम् ॥३३६॥

ननु किं तत्र काव्ये गीयमाने निबध्यत इत्याह । पुरुषोऽत्र इति । स्त्रीपुरुषौ-(षो)स्तावदत्र सल्लापो निबध्यते । तत्रादौ परिवर्तने पुवाक्य तत्प्रेरणारूप तत स्त्री वाक्य तदनन्तर पुवाक्ये द्वे स्त्रीवाक्यानि त्रीणि । त्रिभि केशिवयङ्ग नर्मस्फञ्जो(न्दो) ह्यवसानात्मक इति मङ्गलप्रधानेऽत्र निबध्यते । निवृत्यावृत्त्युपवर्तनवाचोयुक्त्या गीता-वर्तनम् । न तत्र प्रतिक्रमपीह परिवर्तनमित्युक्तम् ॥३३७॥

परिवर्तनाङ्ग इत्यासूचनाय प्रत्ययमिति । वस्त्वन्ते निर्वहणमुत्थापनीयवस्तु-विषयाभिनन्दनविषयमवाक्यान्तरवाक्यार्थसिद्धिसमाप्तिरूप कार्यं स्त्राप्भावसमा-श्रयत्व न त्यजेद् । निर्वहणमन्ताहरणमित्यन्ये । गेयादिपदान्यन्नेति । पाठ्यपाशङ्का व्युदस्य निर्बन्धनमेव । प्रथमग्रहणादङ्गाभिधानाच्च सुकुमारपूर्वरङ्गलास्यस्याङ्गित्वम् । अन्यथा किं तल्लास्य यस्येदमङ्ग स्यात । काव्यरूप किञ्चिदिति चेत्ताव(द्) स्पष्टार्थम् । तथात्वे प्राधान्यतालादिभेद नियमस्यानभिधेयत्वात । अस्पष्टार्थत्वे तु पूर्वरङ्गद्वार किञ्चित् त्यज्यते । अत एव वस्तुप्रधानत्व परमेश्वरशृङ्गारवर्णनं चात्र प्रधानम् ॥३३८॥

स्थितपाठ्यस्येति । तत परमित्यनन नान्दीस्थानिकत्वमस्य इह वृत्तमेकश-(कमथ)द्वे वा योजयेदिति पठेदिति यावत् । वृत्तस्य नान्दीस्थानकत्वात् तद्धर्मकवा-ख्यार्थं मन्तव्यम् । एक द्वे वेति दीर्घाल्पापक्षया । अनन्तर त...... पञ्चपाणिना चच्चत्पुटेन वा गीयमाने अभिनयनृत्ताभ्यां वा योजयेत् ॥३३६॥

---

१ NS चतुर्वाक्य गता ।
२ NS कार्यं तथा निर्वहण प्रत्येक परिधानके ।

ततः परं ते भूयोऽपि युग्मतालेन वा स्मृते ।
अवसानं च कर्तव्यं त्वरितं पञ्चपाणिना ॥३४०॥

द्विकलेनेति [1]विज्ञेयं स्थितपाठ्यं प्रयोक्तृभिः ।
उपोह्य तालं त्र्यश्रं तु बृहद्वृत्तं समस्तया[2] ॥३४१॥

आसीनपाठ्यं युञ्जीत सर्वभावैस्तु पौरुषं ।
गेयं चतुर्भिः पादैस्तु समैरर्ध(र्ध)वृत्तगुणं ॥३४२॥

आसीनपाठ्ये(ठ्य) कर्तव्यं विधिवत् पञ्चपाणिना ।
प्रतीते युग्मतालेन श्लोकं कार्यस्तथाऽपरं ॥३४३॥

---

अनन्तरमवसानं तदर्थनिर्वहणं कार्यम् । द्रुतलयेन द्विकलेन पञ्चपाणिना गातव्यं नर्तितव्यम् ॥३४०॥

इति करोति क्रियासामान्यमिह विशेषनिष्ठीकरोति । अवसानमङ्गसमाप्ति-मन्ताहरणं च । इत्येके मन्त्रवर्णाङ्गम् । वाशब्दः समुच्चयार्थ इति केचित् । प्रविश्य स्थितयैव भूचारीस्थया नर्तक्या पठ्यतेऽत्रेति स्थितपाठ्यम । अथान्यत् पूर्वरङ्गे प्रा-(प्र)वाग्य(न)मिति तत्रैवान्तरङ्गमाह । उपोह्य तालमिति । चाचपुटेन ध्रुवकमुपोहनं कुर्यात् । प्रकरणाद् द्विकलेनेति केचित् ॥३४१॥

तेन चोपवहनेन स्थानके आसने वा आसित्वाऽऽसीनपाठ्यं युञ्जीत । पौरुषं-सर्वलक्षणालङ्कारादिगीतस्वरैरिति यावत् । उक्तं हि पूर्वं पुरुषस्य पाठे त्रैव स्त्रियाः गीतमिति । तत्पठेदित्याह । (वृहदिति) बृहतो न चाक्षरस्य छन्दस समैः सवृत्तगतैः पादैरुपलक्षितम् । ततश्च समुचितार्थां चतुष्पदां (दो) पञ्चपाणिना गायत । तदर्थाश्च नृत्ताभिनयादिप्रयोग । तदाह । गेयं चतुर्भिरित्यादि ॥३४२॥

ततोऽपि चञ्चत्पुटेनैकश्लोकेऽष्टभिर्द्वादशभि पादैरवान्तरवाक्यैर्नात्यु(त्यनु)-चितैर्युक्तं प्रयोज्य । सोऽतीत इत्यतीतग्रह उपरिपाणि कार्य इति यावत् । अतीत इति वृत्ते पञ्चपाणाविति केचित् ॥३४३॥

---

१. NS कर्तव्य ।
२. NS वृत्या तैस्तैः समैस्तथा ।

[1]अष्टौ दश द्वादश वा पदानि तु ततः परम् ।
कुर्याद्वुतरतालेन ततो निर्वहणं पुनः ॥३४४॥

एतदासीनपाठ्यस्य विधानं परिकीर्तितम् ।
स्यात् पुष्पगण्डिका नाम यतङ्गं तन्निबोधत ॥३४५॥

सर्वकं पौरुषं श्लोक समवृत्तं प्रयोजयेत् ।
चतुर्भिः सन्निपातैश्च ज्ञेयं [2]चच्चत्पुटाश्रयम् ॥३४६॥

पादे पादे तु सम्येष्ट वाद्यं नृत्तं तथैव च ।
प्र(स)तन्वाध्ये स्मृतं(ते)वृत्ते खञ्जमर्कटसज्ञिते ॥३४७॥

अन्ते निर्वहणं चास्याः शीर्षक पञ्चपाणिना ।
आविद्धचार्यङ्गहारैरुद्धतैस्तत्र योजयेत् ॥३४८॥

---

[3]वत्पहृत मिश्रपूर्वरङ्गसूचनार्थमिति दीर्घदर्शिनः। अन्ये त्वष्टद्वादशान्तरा-वर्तिनां वसंवर्यैवोभयानुग्राहिणी ग्र(गृ)ह्यते (इति) । एवमन्ये उपान्ते इत्याचक्षते। अपरे पृथगन्यरूपाण्येवैतानि पदानीति मन्यन्ते । तत. पञ्चपाणिना पाणिसन्धिप्रति-पादकः कार्यम् । लास्यप्रस्तावात् सर्वत्र स्त्रीपुंसयो(सो)स्तु तस्त्वाय इत्यादि योज्यम् ॥३४४॥

एव नान्दीस्थानेऽङ्गद्वयमुक्त्वा शुष्कापकृष्टाप्रसङ्गे पुष्पिगण्डिकामाह । स्यात् पुष्प.ण्डिकेति ॥३४५॥

समवृत्तं पुरुषभावाढ्य जनैस्तुतिसमुचितश्लोक चतुर्भिः पादै. प्रतिपद चच्चत्-पुटेन युक्तमस्त एव चतु सन्निपात तावद् गायेत् । सामान्योक्ति समासव्यासवशा-चार्याशुद्धं कलल(स)द्विकलाना यथेच्छ प्रयोग इति सूचयति ॥३४६॥

अस्य प्रयोगमाह । पादे पादे त्विति । एक पदमभिनीय तदनन्तरं तावदेव शुष्कग नम् । तत्र च विचित्र वाद्य नृत्त च । एवं सर्वेषु पादेषु । अत एवोक्तं माहय-प्रपनव ( पुष्पगण्डिका इति (भ० ना० १६ १२६) । ततश्च खञ्जनर्कटकवृत्ते प्रयोज्ये ध्रुवाध्याये (भ० ना० अ० ३२) लक्षण भवति बहुभेदत्वात(स्वाद)स्यास्माभिरिह न लिखितम् ॥३४७॥

ते चान्ते शुष्कापकृष्टायास्ते रङ्गद्वारोक्तप्रयोगसूचके नर्तिगात्व्ये इति यावत् तेन रङ्गद्वारमित्युक्त भवति । एव शुष्कापकृष्टा रङ्गद्वारेऽतिरसप्राया रसवति पुष्प-गण्डिकाङ्गे निरोक्षिते ॥३४८॥

---

१. NS अष्टादश ।
२. NS. चञ्चुपुटाश्रयम् ।
३. NS आविद्धचार्याङ्गहारैरुद्धतैस्तत्प्रयोजयेत् ।

ज्योत्स्नायां मदिरायां वा सलिले दर्पणेऽपि वा ।
छायां सन्दृश्य कान्तस्य प्रहृष्या(हृष्या)य विभूषितम् ॥३४६॥

नृत्त प्रा(प्र)सादकोडार्थं हेलादिभिरलङ्कृतम् ।
[1]स्यङ्ग प्रच्छेदक तत्र विद्याल्लास्यप्रयोगवित् ॥३५०॥

चच्चत्पुटस्य तालेन तस्य प्रकोडित भवेत् ।
मात्रावृत्तसमैः पादैः श्लोकबन्धो भवेदथ ॥३५१॥

बह्वक्षरार्थसयुक्त तोटक पञ्चपाणिना ।
द्विकलेन प्रकतव्य मिश्रेणैककलेन वा ॥३५२॥

---

अथ वारीप्रस्थाने प्रच्छेदकमाह । ज्योत्स्नायामित्यादि । एतत् सम्भोगोचित-कालोपलक्षण प्रत्येक सम्बध्यते । प्रियतमप्रतिबिम्बदर्शनेन तदवियोग उपलक्ष्यते । तेन स्वाधीनभर्तृकोचितमत्र पानगोष्ठीजलक्रीडाऽन्योन्यप्रसाधनविषयमत्र गेयकाव्यमित्युक्त भवति । निवृत्तार्थं तदवकाशसिद्धये यत् ॥३४६॥

प्रसादो मानभङ्ग । तत्र या क्रीडा भङ्गी तत् पाठ्यम् । उक्त ह्येत(त्) ।

यस्मिन्नङ्गे प्रसाद तु गृह्णीयाद् युवति स्वयम् ।
(भ० ना० ४ ३१०)

इत्यादि । हेलादय सामान्याभिनयोक्त (क्ता) । अङ्गजाः स्वाभाविका यत्नजा सर्वे धर्मा । आदिशब्दो ह्यत्र प्रकारे ॥३५०॥

त्र्यङ्गान्यस्य व्याचक्षाण आद्यमाह । चच्चत्पुटेनास्य प्रकीडिताख्यमङ्ग-मन्वर्थात काव्यलाभार्थलाभ । वृत्तमस्य मात्रावृत्त सम च । नन्वत्र समविषमो(म)-पादग्रहणे(ण) आर्यार्धनिवृत्त्यर्थम् ॥३५१॥

अथास्य द्वितीय तोटकाख्यमङ्गमाह । बह्वक्षरार्थसयुक्तमिति । अक्षरमिति तदग्रन्थोपलक्षणम् । बहुवि(वि)पुलो गम्भीर । तेन गम्भीरोऽक्षरेषु योऽर्थो यथा । ...... अत्र हि मितैरक्षरै कपोतलसङ्क्रान्तसखीप्रतिबिम्बावलोकनपरत्व गम्भीरार्थो दर्शित । तेन मयुक्त तोटकमिति भेदवाद्यसंयोगादीर्ष्याप्रायेऽत्र काव्यार्थ इति मन्तव्यम् । तत्र द्विकलः पञ्चपाणिस्ताल । एककलमिश्रो वा द्विकल. । अ ये [illegible] द्विकलैक-मिश्र एककल इति व्याचक्षते ॥३५२॥

---

१. NS छायासदृशकान्तस्य
२ NS प्रङ्गप्रस्वेदक

नाराचकं च कर्तव्यं गुरुप्रायाक्षरान्वितम् ।
यथाक्षरेण क्रमेण सन्निपातैस्तथाष्टभिः ॥३५३॥

त्रिवि(च)धैश्चकसंयुक्तं कैशिकीजातिमाश्रितम् ।
क्य(ग्र)ङ्गवि(प्र)च्छेदकं विद्यायुक्तं प्रकीडितादिभिः ॥३५४॥

अनिष्ठुरश्लक्ष(क्ष्ण)पदं गान्धारीजातिमाश्रितम् ।
चच्चत्पुटेन योजनस्य त्रिमूढं द्विकलेन तु ॥३५५॥

---

नाराचकाख्य तृतीयम् । यावत्या रागाभ नाराचर(क) वेत्यन्वयान् भवनधार । प्राधान्येन मारपर स्यात् ।... इति लभ्यते । गुरुप्रायाक्षरं चात्र वृत्तम् । ताल एककलश्चाचपुट । स चाष्टकृत्वस्तदाक्षरसन्निपातैरष्टभिरिति ॥३५३॥

विचर्चेत्यत्राचत्र वर्णाङ्गी । कैशिकीजातिमि(मा)श्रितमिति । शृङ्गारप्रधाना वृत्तिरत्र गेयकार्याश्रमादिशति । केचिल्लास्यलक्षणादतद्विशेषणाच्चैकार्थमेतदित्यभियुक्ता । तेन कैशिकी जातिरत्र । येन तद्वारूपेण भवत्कैशिकेनाश्र मानमित्युक्त भवति । प्रकरणमप्यत्रार्थे साक्षो लक्ष्यते । अग्रे हि गान्धारीजातिमाश्रितमिति भविष्यति । यद्यपि च पूर्वरङ्गे पाठ्येन गान स्वरवाक्यकला तथापि लास्येन यथा(दा) भवत्यपरिनोषणं तदाऽयदेव प्रधानम् । रागविनियोगादि तु रञ्जनातात्पर्येण । तथा हि । स्वादक स्वरुचिनेन हृद्येर कुसुमधूम(प)विलेपनैर्नैवेद्यादिना भगवन्तं भवानीप्रतिमाराधयेदिति विधौ कण्टककुसुमकन्दुरिक(न्दलित)पूतिकेमनखादीनां तु प र(रि)वर्जनं हृद्यत्वाक्षेपात् । एवमिह तस्मात्लास्यमित्येषमाक्षिप्तो (प्त) परं च कवगतास्यमवाद्दहेतुरिति मन्तव्यम् । अनेनैवाशयेन देवगृहेषु प्रेक्षणीयकप्रयोजना परमेश्वरतोषणं सर्वत्र प्रसिद्धमिति । अथमेवोद्धतपूर्वरङ्गे विचित्रतया मन्तव्य । उपसंहरति । अङ्गप्रच्छेदकमिति । अस्यान्वयं ता व्याचष्टे । युक्त प्रक्रीडिताविभिरिति । प्रकृष्टच्छेदोऽङ्गविभागस्येति । भावजिज्ञासो पृष्ठस्थितस्य मविरावौ निपतितप्रतिबिम्बमयनोत्रय नायिकायास्तन्मदनविकारवर्णनमप्यत्र काव्यार्थम् । तदेव प्रतिबिम्बयोगाद् प्रच्छेदकम् । प्रच्छेदो हि प्रतिबिम्बमप्याचित(चष्ट) इति ॥३५४॥

अथ महाचारीस्थानकं त्रिमूढकमाह । अनिष्ठुरेति । प्रयतोयुक्तकान्तस्य पौरुषप्रधानं गुणनिकरं वर्णयेत् । यत्र काव्यार्थं उत्साहो वा स्या(द)पवति रौद्रस्थानिकत्वकृतोद्धत्यान्तरम् । तत्र च कार्यं पुष्पानुप्रासप्राय सम्बध्यत इति तत्परिहारार्थ-

---

१ NS प्ररोचक । KSS दीपक ।

चतुष्षष्टिः सन्निपातास्तस्मिंश्चैव प्रकीर्तिताः ।
•यथामार्गंकलोपेता विदारीविवधान्विताः ॥३५६॥

अङ्गहारान् सविष्कम्भान् नैव चात्र प्रयोजयेत् ।
केवलं पौरुषंर्भावैर्वाच्य नाट्यायितेन यत् ॥३५७॥

नर्कुटं खञ्जकं चैव त्रिविधं न प्रयोजयेत् ।
सैन्धवीमाश्रितां भाषां ज्ञेय सैन्धवकं बुधैः ॥३५८॥

---

अनिष्ठुरैत्यादि । इलश्मादि व्याख्यात् माधुर्यश्लेषगुणप्रधानान्यत्र पदानि । तालोऽत्र द्विकलश्चच्चत्पुटः ॥३५५॥

षोडशाक्षरस्य आवृत्तस्य चतुर्भिः पादैः । तदाह । चतुःषष्टिः सन्निपाता इति । ते च यथामार्गम् । ध्रुवकादिचतुष्कला......मार्गो गृहीत । तद्युचितेन पञ्चपलच्चकारा-विना कलामात्रेणोपनीता ।

अन्ये तु यथोचितो मार्गो यथामार्गं इति विग्रहेण सुकुमारत्वाद् ध्रुवक एवा-भीष्ट इत्याहु । यथा हि भट्टगोपालेन स्वाभिप्रायेण ध्रुवके विधिरिति भेद (प्रोक्त) तेन भेदे विधये विदारिकेना(णा)न्विताास्तु सन्निपाता.। तेन प्रतिपाद सन्निपाते विदार्यपीत्युक्त भवति ॥३५६॥

पौरुषोचितादुद्धाताङ्ग(द)ङ्गहारा अर्थं ये प्राप्नुवन्ति तेषां कञ्चिद्विशेषमाह । अङ्गहारान् सविष्कम्भानिति । विष्कम्भो विस्तार । तेनातिविस्तीर्णानङ्गहारानत्र न कुर्यात् । लास्यसामान्यलक्षणमनुवर्ण्यमनुगच्छेदिति ।

अन्ये तु विष्कम्भाख्य करणमङ्गहाराश्चात्र न कुर्यादित्याहु । तेन करणैरेव मसृणैरेतत् प्रयुञ्जीतेति ।

नन्वेव पौरुषशङ्कि । आह । केवलमिति । पौरुषसूचका भावा सात्त्विकाद-योऽत्र वाक्यार्थे योज्या । तेन नाट्यायिता नाट्यकल्पा न तु सर्वथा नाट्यरूपा एव । प्रतिबिम्बप्राणप्रस्तावनाकल्प हि नाट्यस्य नृत्तगीतमित्युक्त प्राक् । तन्नाट्यायितं वा । स्येने(तेने) ध्रुवास्वभिनय इति तत्पादश्याच्चात्र तद्व्यपदेश । अवित्यभिषवे नित्यप्रवृत्तिविधिमाह ॥३५७॥

नर्कुट खञ्जक चैवेति । नर्कुटखञ्जकवृत्तबन्ध काव्यम् । त्रिविधोऽभिनयो जायेत । आहार्यस्यात्राभावात् । भाव्य तु किञ्चिद् भवतीति ज्ञापयिष्यते न पाठ्यं स्वल्पमित्यत्रेति (भ० ना० ३१ ३८०) । तेन वाचिकोऽप्यभिनयोऽस्त्येव ।

रूपवाद्यादिसंयुक्तं युग्मतालकृतं तथा ।
विततस्ताऽऽलिप्तमार्गेण सैन्धवं वाद्यमिष्यते ॥३५६॥

---

उपाध्यायास्त्वाहुः । नर्कुटलञ्चके च नायकस्य व्यलीकवन् नायिकास्वेष्टा-(स्विष्टे) । वे(ई)र्ष्याप्रणयभङ्गलज्जादिरिह विधो-ऽो(त्र) वर्णनीय । अत एव नर्माणां मोहात् प्रियमूर्च्छ । नानारूपस्य शृङ्गाररसस्योपपत्तिरत एवेति लास्यसुकुमारत्वा-च्चारीलक्षणद्वयप्रधानं सरसत्वादित्याशयेन तद्गतमङ्गद्वयमन्यदापलक्षणे मुनिश्चा-र्याङ्गत्वम् । तावत् सैन्धवकमाह । सैन्धवीमाश्रितां भाषामिति । सरसकुमारतावर्जि-तम् । भाषेति सैन्धवी । मत्रामिश्रिता । सैन्धवीशब्दान् मत्वर्थीयेण(ऽण्) सैन्धव-मिति रूपम् । एतदुपजीवनादेव लोके प्रेक्षणीयाख्यानि डोम्बिकावि(वो)अकप्रस्थाना-दीनि जात्यैव भाषया कविभिर्निबद्धानि । तत्र त्वङ्गानामेषां दशानां सर्वार्थं च काव्यार्थंवैचित्र्यमिति रूपकं तत् प्रकृतं प्रति ...त्यादि यत तादातोद्यविधौ निरूप्य स पुष्कराध्याये (भ० ना० अ० ३४) वक्ष्यति । तेन युक्ततालोऽत्र चच्चत्पुटः ॥३५८॥

पुष्करवाद्ये विशेषान्तरमप्याह । विततस्तालिप्तमार्गेणेति । वीरादभुतरौद्राणां विततमार्गेण वाद्यम् । योज्य स्वालिप्तमार्गेण इति वक्ष्यमाणत्वात् तदर्थंबन्धोऽपि छायायाऽत्र योज्य । तथा हि ।

रसालूणिकझल्लि ण तु पइमुहहि चव तुम्ह कपन्थी ।
रम्हरा मम रूपराइणिमा ताराम सातश्राम च ।
मत्वरमुपविअइ हुण हणगणकारि विपरिपण्ड ।
[रसालनिर्मललहरि न तु पतिमुहहेश्चारु तव कल्पस्त्रि ।
रक्ताया मम रूपरागिण्यास्तारायाः स्वाश्रयाय च ।
सत्वरमुपव्रजामि शृणु धनगणकार्ये विपरिपन्थिनि ॥]

इत्यादि क्रोधशोकविस्मयोत्साहच्छायया निबद्धं गीतवाद्यप्रधानं च लास्य न काव्यार्थ-प्रधानमिति । काव्यार्थं स्त्रीपुंभावाप्राधान्ये विततालिप्तयोरविरोध इत्यभियुक्ता । अन्ये तु सप्तमी न प्रोचु पठन्त । उद्धतगोमुखगतमत्र वाद्यमिति मन्यन्ते ।

शृङ्गारहास्ययोगे वाद्यं योज्यं तथाऽऽङ्डिते मार्गे ।
बीभत्सभयानकयोरुद्दाढ्य(र्चित्र) कार्यं तु गोमुख्याम् ॥
॥३५६॥

नाऽ(न) पाठ्य स्वल्पमप्यत्र प्रकुर्वीत विचक्षणः ॥
मुखप्रतिमुखोपेत तथा [1]चाचपुटाश्रयम् ॥३६०॥

यथाक्षरे सन्निपातैस्तथा द्वादशमिर्युतम् ।
नैकपुक्तिर्विचित्रार्थं पौरुष भावमाश्रितम् ॥३६१॥

एकाङ्ग शीर्षक गत्या द्विमा(मू)ढ परिकीर्तितम् ।
उत्तमोत्तमके त्वादौ नकुट सम्प्रयोजयेत् ॥३६२॥

[2]श्लोक विचित्रार्थपद तथा चैवोपपादयेत् ।
ततश्च वस्तुक कार्यमपरान्तकशाखया ॥३६३॥

---

अत्र च मनागपि पाठ्य न कार्यम् । अङ्गान्तरेषु स्वल्प कार्यमिति भाव । तथा च लक्ष्येऽपि भाणकादौ तदन्यत्रा॰स्वाव्य प्रसिद्धम् । अथ महाचार्यक्रमाह । मुखप्रतिमुखोपेतमिति । मुखप्रतिमुखे अङ्गे स॰धी(न्धा)य इत्यन्ये । पादचतुष्क चाच-पुटकृतम् ॥३६०॥

त्रिरावृत्त तालोऽत्र । तदाह । सन्निपातैर्द्वादशभिरिति । नैकशब्द प्रतिपदि-कान्तरमनेकार्थाय । अनेकार्थयुक्त्या योज्यमानेन भ्रान्तरछायावन्धेऽविविचित्र प्रकृतोऽर्थो यत्र । प्राधा येन च त्रिमूढ उत्साहः । उत्साहेनात्र वर्ण इत्याह । पौरुष भावमाश्रितमिति ॥३६१॥

एककेन वर्णाङ्गकेन च युक्तमत्र शीर्षकम । तच्च गत्यैवेति नाभिनयप्रधानम् । अपि तु परिवृत्तिप्रधानमिति गतिप्रमाणम् । तेन पञ्चपाणिरत्र ताल । प्रकरणाद् प्रमाणमित्याह । द्वयोश्चात्र न विकानायकया॰र्थामोहाथम् । तत् त्रिमूढकमेव हि तालका॰यवशात स्वल्पशरीर द्विमूढकम् । अथ निगतस्थानिकमुत्तमोत्तमकमाह । आदौ नर्कुटमिति । वृत्तविशेष तच्च नकुटवृत्तम् ॥२६२॥

शेषविचित्रेण वाऽ यादिप्रधाननार्थेन युक्त कुर्यात् । त च तथैवेति पाठमार्ग-णोपपादयेत । न तु गायदित्यय । अनन्तर द्विपदायाजनया यद्वस्तुकाख्य वृत्त तच्चतु-र्विशतिकलन तालेन योज्यम् । तदाह । अपरान्तकशाखयेति । तेन तद्गत एव कला-योगोऽत्र ॥३६३॥

---

१ NS चञ्चुपुटाश्रयम् KSS चाचपुटाश्रयम् ।

२ NS श्लोक ।

यथाक्षरेण कार्यं तु शीर्षकं पञ्चपाणिना ।
उत्तमोत्तमकं प्रोक्तं हेलावृत्तिविभूषितम् ॥३६४॥

कोपप्रसादबहुलं सविक्षेपैस्तथाक्रमैः ।
संलापरचितैर्नित्यमुक्तप्रत्युक्तमिष्यते ॥३६५॥

षष्ठार्धेन प्रकर्यास्तु तस्य तालविधिः स्मृतः ।
ततस्तु शीर्षकं कार्यं सयुक्तं पञ्चपाणिना ॥३६६॥

उक्तप्रत्युक्तमेव हि यथोक्तं परिकीर्तितम् ।
एवमेतद् बुधैर्ज्ञेयं गानं तालप्रमाणतः ॥३६७॥

ऋग्गाथापाणिकादीनां सप्तरूपं प्रकीर्तितम् ।
यस्तु तालं न जानाति न स गाता न वादकः ॥३६८॥

---

शीर्षं कमेकलपञ्चपाणिना । उत्तमेभ्यो लास्याङ्गेभ्य इदमुत्तमं हेलावियोगेनोत्कृष्टतमत्वात् । अन्ये तूत्तमस्यान्यस्योत्तमं लास्यमित्येवमिति । यत्र भावा नियम(मे)नोक्त(क्ता)स्तत्र प्राधान्यात् संस्कृतेन । यथेच्छमित्यन्ये । स्त्रीपुंभावाश्रयत्वात् प्राकृतमार्यैवेत्यपरे । संबध्येति प्रकरणादिति भट्टलोलटः । तदाह काव्यकौतुके । न भाषानियमः पात्रे काव्ये स्यात् संभवी । मि(इ)ति । एष लास्यपूर्वरङ्गोऽयम् । भेदान्तरमपि च पुष्कराध्याये (अ० शा० अ० ३४) भविष्यति । ताण्डवपूर्वरङ्गत पुष्करतालमतमनुसन्धीयते मुनिना । द्विरङ्गविधौ प्रकरणपद्कत्व परिनिश्चोय कुशलमिति । साम्यं तावद् यच्चेदमासारितवर्धमानगीतकच्छन्दकलास्याङ्गरूपं तालवैचित्र्यं तत् मानरूपत्वात् मेयरूपपर्यवसायीति दर्शयंस्तालगानस्य काल(रूप)तामाह । एवमेतदिति । एवं तालरूपप्रमाणमुक्तं तेन प्रमाणेन गानं स्वरात्मकं ज्ञेयम् । बुधैरिति मानमेव(ज्ञै)रि(ति) ॥३६४-३६७॥

ननु अत्र कथमप्यधिकभुगादितालस्वरूपमस्ति । तत् कस्मान्नोक्तमित्याशङ्क्याह । ऋग्गाथापाणिकादीनां सप्तरूपमिति । ऋगादीनां यद्रूपं तत् सप्तैव । गीतकसप्तरूपानतिरिक्तमेवेति यावत् । त्र्यश्रचतुरश्रतालप्रकारातिरिक्तं हि(ऋगा)दि । उक्तं हि प्राक् । षड्भ्योऽष्टगुणपर्यन्तमित्यादि । आदिर्येषामित्युपलक्षणाद्विनियुक्तेन सामकपाना(गाथा)विना (ऋग्गाथा)पाणिकादि हि स्वरूपेणैव लक्षिते(तमि)ति ।

तस्मात् सर्वप्रयत्नेन कार्यं तालावधारणम् ।
अङ्गभूता हि तालस्य यतिप्रा(पा)णिलया स्मृता ॥३६९॥

त्रयो लयास्तु विज्ञेया द्रुतमध्यविलम्बिता[1] ।
छन्दोक्षरपदाना हि समत्व यत्र प्रकीर्तितम् ॥३७०॥

कलाक(का)लान्तरकृत स लयो नाम(नाम)सज्ञित ।
श्रो(स्रो)तोगता च गोपुच्छा(च्छा)समा चात्र विधाय च ॥३७१॥

---

अथास्य ताल(विधे) बहुमानास्पद त्व(त्व)माहाङ्गीत्याग्यनाह । यस्तु ताल न जानातीति । गायन्नपि न गाता वद न्नपि(न) वादक । प्रयोगो हि तालमूलस्थूतो हि नटप्रवेशयोरपा भवतीत्युक्तमसकृत् । गद्यादिनारवद् गीतमन्योन्यविषयि । तालस्य प्राधान्यात् । असकृन् नटोऽप्यतालज्ञ । अत एव तालस्य सामान्यलक्षण वाच्यम् ॥३६८॥

चच्चत्पुटादिभिर्विशयतस्येत्याह । अङ्गभूता हि तालस्य यतिपाणिलया इति । यतिपाणिलयमङ्गह इति तालस्य सामान्यलक्षणम् । तत्र ताल एव तावद् क्रियाणा सर्वासा परिच्छेदक इति प्रसिद्धम् । अतो नटानामपि च क्रियाकालस्य विर-क्षेपणादिति परमार्थं । सोऽपि च (लय) न (ताल)एव पारमार्थिकी(क्रिया) । अपि तु काल्पनिकी । तथात्वेऽपि चान्योन्यापेक्षया तत्कल्पने द्वयोरप्यवकल्पन स्यादिति मध्योऽवधिभूत । अत्र तृतीयोऽत्र प्रकीर्तनीय । ते चैत्र न त्रयो लयाश्चिर विलम्बित शीघ्र द्रुत मध्य मध्यममेवेति ॥३६९॥

लया(य) एव ताल इति मनसि कृत्वा तस्यैव प्राग् लक्षणमाह । त्रयो लयास्तु विज्ञेया इति । लोकसिद्धत्वादिति भाव । उक्तो विभागो लयस्य लक्षण(ण)-त्वाम्न(त्वत्र) ।

छन्दोक्षरपदाना हि समत्व यत्र प्रकीर्तितम् ।
कलाकालान्तरकृत स लयो नाम सज्ञित ॥

इति । ह्रस्वकला तस्या(स्ये)यमुच्चारणा कला प्राकृतव्यपदेश्यत्वा । प्रसिद्धा । मन्योन्यमध्यवर्ती काल । तत्कालान्तर तत्कृत सम्पादितोऽत्र एव संकृतस्वभावो लयो नाम सज्ञितोऽत्रपलब्धात्(ब्ध) । ईषद्विश्रान्त्यारमार्थ स लय । तस्य च स्थूल-सूक्ष्मकार्यंगम स्वरूपमाह । छन्दोक्षर इति । यदिति । यस्माद्विश्रान्तिलक्षणाच्छन्द-

---

1 NS. विलम्बिते ।

[लयप्रवृत्तवर्णानामक्षराणामथापि वा(च) ।
नियमो या(यो)यति सा तु गीतवाद्यसमाश्रया]॥३७२॥

---

इच्छन्दोन्तरेण सम तुल्यकाल प्रयुक्तमिति व्यपदेशो जायते तेनाक्षरगत पदगत सकलवाद्यगतश्च लय इत्युक्त भवति । अनेन च यतिभेदस्यास्यावकाशो दत्त । न च लयमात्रस्ताल । सकलक्रियासु तद्भावेऽपि तालाभिमान(ना)भावादिति । तद्विशेषणभूता यति निरूपयति । स्रोतोगता च गोपुच्छा समा चात्रेति । त्रिधा यति । अत्र लये विशेषणतया या यति सा त्रिधा ॥३७० ३७१॥

ननु विभागोऽयम् । अस्या लक्षण तु वाच्यमित्याह—

लयप्रवृत्तवर्णानामक्षराणामथापि च ।
नियमो या(यो)यति सा तु गीतवाद्यसमाश्रया॥

इति । गीतवर्णाना स्थाय्यादीना वाद्ये चाक्षराणा झण्टुकटकथादीना सम्बन्धिना या लयप्रवृत्तिर्लयविशेषो द्रुतादिस्तत्तयोपलक्षितो यो नियम सा यति । क्रमेण गीताश्रया वाद्याश्रया च । पूर्वं यद्गेयाधिकार एवमुक्त शिर.कर्मादिवर्तनाचार्यादीनां लयप्रवृत्त्या नियमो नित्यवाद्यमात्रास्च सा यतिरिति तन्म-तव्यम् । एतदुक्त भवति । लयस्य य कश्चित्तालनियमोऽनुवर्तत अत्र चरितप्रवृत्तिस्वेन सा लघुमपि गुरुमपि लघू...
...त्स विचित्रे नियम न तत्र प्रथमभागे विलम्बितस्य यावदन्ते द्रुतस्य नियम इति स्रोतोवद्गमनात्तथा यतिरुक्ता । एतद्विपर्ययाद् गोपुच्छा तादूप्यादेव । यस्तु प्रथमे तावद्यतिनिर्वाहपर्यन्ता स एव लयो नियम सा समा । तत्रासा क्रमेण द्रुतविलम्बितमध्या प्राधान्याशयेन विषय उच्यते । परमार्थतस्त्रिष्वपि तिस्र इति । एव नियमविशिष्टो लयस्ताल इति तावत् । अत एव नियमांशस्यैव प्राधान्याल्लोके यतिरिति तादूप्यव्यवहार । एव साक्षात्तत्र साम्य वक्ति फल फलसाम्यद्वारेण दृष्टमपवर्गान्तमपि तस्य लौकिकस्यैव लक्षण यदवच्छिन्नलय तालमिति । यत्र तु साक्षाददृष्टमपि फल तत्रान्यदपि रूप वक्तव्यम् । तत्र चिरस्थोध्रतादौ क्रिया यद्यपि या काचिदप्युपायस्तथा नियमादृष्ट(फल)सिद्धये विशिष्टहस्ताङ्गुलक्रियैवोपयोगिनी । सा च पाणिशब्देनोक्ता । तदाह दत्तिल । तत्र ताल(ल)पाणि च प्राहुरेकमिति (दत्तिलम् १५३) । तद्गतया क्रियया क्रियान्तरमपि वीणापुष्करवादनानि(दि) स्वीक्रियते । तेन विशिष्टक्रियापरिच्छेद्यो यदवच्छिन्नो लयस्ताल इति गान्धर्वीयताललक्षणादेर्वीणावाद्यादेश्च क्रियायाः प्रदेशान्तरे लक्षितादिह न पाणे. सामान्यलक्षण कृत विशेषलक्षण वा ॥३७२॥

समपाणिश्च विज्ञेयो ह्यवपाणिस्तथैव च ।
तथैवोपरिपाणिश्च गीतवाद्यसमाश्रयः(या) ॥३७३॥

लयेन यत् समं वाद्य समपाणिः प्रकीर्त्यते ।
ध्रुवाद् यदवकृष्टं स्यात् सोऽवपाणिः प्रकीर्तितः ॥३७४॥

लयस्योपरि यद्वाद्य पाणिः स उप(सोपरि)इ(रि)ष्यते[2] ।
तत (त्र) स्थिति(त)लयो यो वै सन्निपातो विधीयते[3] ॥३७५॥

---

यस्तच्च विशिष्टविशेषस्तमाह । सम(पाणि)श्चेति । ननु साम्य पश्चाद्भाव्युपर्यु-परिभावित्व च । एतदेवात्र विश्राम्यतीत्याशङ्क्याह । गीतवाद्यसमाश्रया इति ॥३७३॥

पृथग्विशेषलक्षणान्युच्यन्त । लयेन यत्सम वाद्यमित्यादिना । काचिन्नियमा-रणा रक्तयतिशया वाऽन्या क्रियाऽवच्छेदिका तया गीतस्य समकालताऽऽगन्तुककालता वा । तत्रेह्यावापादिकाऽऽयात(काल)ता । तया सह यथायोग समकालत पूर्वलकाताऽ-समकालत्वे मन्तव्य । यथाह दत्तिलाचार्य· ।

सम वोपरि वा तस्य यद्वाद्य सम्स्थित भवेत् ।
वाद्य पदाति(नि) पाणौ वा तदेवमभिधीयते ॥

(दत्तिलम् १५३-१५४)

इति । तत्र लय इति तात्पर्यत्वादुणतमुच्यत । तथा च त्रिशम्योपरि पाणौ (भ० ना० २६ ८७) इत्याश्रावणाकाल आदौ वीणादिवाद्यग्रह इति प्रदर्शितमभियुक्तैर्यथायोगं क्रियान्तरेण सह सामर्थ्यस्य चिन्तनात् । तत गीतक्रियाया नाट्यक्रियातुल्यकाला(ल)-समपाणि । स चोद्दिश्यात्समध्यमेव । यथा(दा) तु गीतक्रियाप्राधान्यात्...... तृक्रिया पश्चात् तदा(दा)(ऽव)पाणि ॥३७४॥

* द्रुतलयोचितो यस्यातिशीघ्र गच्छति स प्रथममेव निर्याति स चापरमपि न प्रतीक्षते गीतक्रिया तु यदा न तावत् प्रवर्तते प्रथममेव वाद्यानि क्रियान्तर तदोपरि-पाणि. । स चोचित्याविलम्बिते लये दोषसत्ता हि सहचरेषु प्राङनिर्गतेषु गतिमारभत इति । सोपरीति । सोऽचि लोपे चेत्पादपूरणमिति (अष्टाध्यायी ७.१ ११४) लोपः । एव यतिपाणिम्यामुपक्रमणो लय एव ताल इति तस्यैव प्राधान्य दर्शयितु पुनस्त-

---

१ NS अर्धपाणि
२. NS, KSS उपकीर्त्यते ।
३. KSS. भवेदथ ।

[1]स तु मध्यलयं प्राप्य सन्निपातद्वयं भवेत् ।
[2]द्रुतं चापि लयं प्राप्य सन्निपातचतुष्टयम् ॥३७६॥

यावत् तत्रोन्त(त्त)रकृता (कला) द्रुतमध्य(एव) लयो हि सः ।
सोऽवपाणिस्तु विज्ञेयस्तज्ज्ञैर्द्रुतलयाश्रयाः(श्रित) ।
अत ऊर्ध्वं प्रमाणं तु कलाना न विधीयते ॥३७७॥

---

द्विगुणमेव वक्तव्यमन्यमाह । तत्र स्थितलयो यो वै इति । वैशब्दोऽतिशये । तदयमर्थ । इह द्रुतमध्यविलम्बिता क्रमेणाधिका इति तावदुक्तम् । तत्र यदतिशयो भवति द्वैगुण्य न तत- पर वक्ष्यते । ऊर्ध्वं प्रमाणं तु कलानामिति (भ० ना० अ० ३१ ३७८) । सन्निपात इति । हेयरूपकम् ॥३७५॥

तदेको यदा येन विलम्बितेन लयेन गायतीति तदा तावतैव कालेन परो द्विर्गायति मध्यलयम् । तदाह । सन्निपातद्वयमिति । तृतीयस्तु चतुर्गायति स द्रुतलय.। तदाह । सन्निपातचतुष्टयमिति । ३७६॥

ननु तदाऽपि किञ्चिदष्टकृत्वस्तदेव नि(यमरहिता)दित्यादिलयानवस्थेत्याशङ्क्याह ।

यावत्तत्रान्त(त्रोत)रकला द्रुत एव लयो हि स ।

एवकारोऽभि(भिन्नक्रम) । उत्तरैव या कला ग्रहेत्या(प्राहत्य) स द्रुतलयाश्रयत्वाद् द्रुतो लय.। एतदुक्त भवति । यत् कलात्रर्णाङ्गस्वरूपे तदत पर न निर्वहति स एव द्रुतलय इति । तेन (न) कांचिदनवस्था । अथात्र प्रसङ्गादवपाण्यौचित्यं दर्शयति ।

सोऽवपाणिस्तु विज्ञेयस्तज्ज्ञैर्द्रुतलयाश्रित(सः) ।

इति । अयादवकृष्ट स्यादिति यतो लक्षित । एतच्च दिग्दर्शन मन्तव्यम् । अन्ये त्ववपाणि विलम्बिते (उ)परिपाणि द्रुते विनियुज्यते । तत्तु बाधे प्रधाने गीते चानुयायीति मन्तव्यम् । तत्तु प्राधान्ये ।

अथ प्रकृतमेवाह । अत ऊर्ध्वमिति । द्वैगुण्यादूर्ध्वं विलम्बितादिषु यत् प्रमाणं तन्न विधीयते विधिना शास्त्रेणोच्यते इत्यत्र दृष्टप्रधाने गान्धर्वे इति मागाधिकत्वादारभ्य द्वैगुण्य द्रुतादीनामुत्तरोत्तरमित्युक्त भवति । स्वच्छन्दप्रयोगो तु न नियमः कश्चिदस्तीति यावत् । अतस्तत्र लययतिपाणिभेदानामन्योन्याश्रयानुगुणपौर्वापर्यस्य भावप्रसूतिर्लोष्टप्रस्तरेण भेदः । अत एव लयत्रयस्यैव परमार्थ(त) प्लुतलघुगुरुलघुरूपताऽ-

---

१. इत प्रभृत्याध्याय समाप्ति पर्यन्तस्य पाठ का० पुस्तके सर्वथा भिद्यते ।
२. NS यत ।
३. NS तत्रान्तरकृता ।
४. NS अर्थपाणिस्तु ।

[इत्येव लक्षणविधिर्निर्दिष्टो गानयोक्त्रिभिः ।
अत ऊर्ध्वं प्रवक्ष्यामि ध्रुवाणामनुकल्पनम्]॥३७८॥
इति भारतीये नाट्यशास्त्रे तालाध्याय एकत्रिंश ।

---

विलम्बितेऽपि त्रिभागाधिकत्व प्लुते गुरौ च लघौ द्वैगुण्यमिति मूल एव सकलतालतान-प्रधानभूते भगवत्सावेतोपतिवक्त्रचतुष्प्रयोद्गीते चच्चत्पुटे सुरचितमेव । तथा च गीत-कादावप्यदफन्न तैरेव व्यवहार साम्यमात्रोपयोगिता तालव्याप्ते तु लयवर्ष(ना)त्तेन तदर्थेन बिन्दुना सार्धेन वा द्रुतेन विरामवता अबि-द्रुतेन वा अद्रुतेन वा गुरुप्लुताभ्या-मेवभूताभ्या वा भवन्ति विचित्रास्तानगतय । तत्त एवापरिसख्येयत्वान् मुनिना दर्शिता । लक्ष्णकारेण प्रतिपद लक्ष्य रूप दर्शनीयम् । लक्षणेन [च ते गता(ध्य)-ध्याये (भ० ना० १२) चतुरश्रक्ष(पंक)ल (रा)स्याल्लय(द)र्धकल वा(लमेव च) (भ० ना० १२ ३१) (ऽ)ि । अपराङ्गानुसरण ..नुगो तथा एतेष्वथगतिप्रज्ञविलक्षी-त्यादिना ।

[अपराङ्गानुसरणे ध्रुवापदानुगतौ तथा ।
गतेष्वेव गति प्राज्ञो विकला सम्प्रयोजयेत् ॥]
(भ० ना० १२ ३९)

इत्यादिना] च सगृहीता (पुष्कर)ध्याये (भ० ना० अ० ३४) च सग्रहीष्यन्त इत्या-स्ता तावत् ॥३७७॥

वतमध्यायमुपसहरन् भाविनमासूत्रयन् सङ्गति करोति । इत्येव लक्षणविधि-रिति । लक्ष्यतेऽनेनेति लक्षण ताल । तत्र विधि(धि)दृष्टोपयोगी सास्ति(स्य)त्वक्रम-मागता(स्ता)न । अत ऊर्ध्वमिति । एतदध्यायोबावस्तुताया(ता)वे[ब ध्रु]वा इति प्राप्तावसरत्वात्ता(ता) इदानी लक्षणीया । इति शिवम् ।

पौष्लूयन्ते यदुपरि[परे] पारलामानवाप्ते
य(ये) प्रोक्तताना विमलमपि सन्देहमेवावहेत ।
मायोपाधिप्रकटगहनात्तालतत्त्वाद्यमुष्मात्
प्रोत्तीर्णा-[स्य.]स्मरदमनमभो सस्मरामो ध्रुवाणम् ॥
॥३७८॥

इति महामाहेश्वराचार्याभिनवगुप्तविरचिताया नाट्यवेदवृत्तावभिनवभारत्या
तालाध्याय एकत्रिंश समाप्त ॥

# नाट्यशास्त्रम्

अथ द्वात्रिंशोऽध्यायः ।

[1]ध्रुवासंज्ञानि यानि स्युर्नारदप्रमुखैर्द्विजैः ।
[2]गीताङ्गानि तु (नीह) सर्वाणि विनियुक्तान्यनेकशः ॥१॥

या ऋचः पाणिका गाथा सप्तरूपाङ्ग एव च ।
सप्तरूपप्रमाणं हि तद् ध्रुवेत्यभिसंज्ञितम्[3] ॥२॥

---

द्वात्रिंशोऽध्यायः

प्रावेशिक्यपवगन्तिमहामार्गेषु या क्षेपिका
चित्रात् ससितिरङ्गमण्डलतलादस्माच्च नैष्कामिकी ।
सम्भोगान्तरसप्रसादसुभगश्रीशुद्धविद्यात्मिका
ब्रह्मन् सारमयी ध्रुवा विजयतां स्पर्धात्मिका सा तनुः ॥

उक्तं तावदनन्तराध्याये (भ० ना० म० ३१) ध्रुवाणां लक्षणं वक्ष्यामीति । तत्र ध्रुवाशब्दार्थं व्याचिकीर्षुर्युगलकमाह । ध्रुवासंज्ञानि यानि स्युरिति । पूर्वं नारदाद्याश्च गन्धर्वा गानयोग इति (भ० ना० १५१) । तदय सम्बन्धः । नारदाद्यैर्यानि गीताङ्गानि वर्णाङ्गानि सप्तरूपाङ्गमात्रा मुखप्रतिमुखानि सप्तरूपप्रमाणं व्यस्तचतुरश्राद्वि याश्चर्च ऋग्गाथा ( ) पाणिका इह नियुक्तानि तदेव ध्रुवेति संज्ञितम् । नान्यत् किञ्चिदिति नपुंसकेन गीताङ्गसप्तरूपप्रमाणानां सम्बन्धः । या इत्य(ने)न ऋग्गाथापाणिकानाम् । इहेति नाट्ये । अनेकश इति व्यस्तसमस्तादिप्रकारवैचित्र्येण विशेषोपरञ्जनाय नियुक्तानि । तद् ध्रुवेति संज्ञितम् । कथं सर्वाणि सन्ति । सर्वशब्दप्रकृतं कार्त्स्न्येन प्रवर्तितं यथ रञ्जनातिशयार्थं नियुक्तानि तावन्ति तत्र समुदितान्येका ध्रुवा ।

ननु कस्मादेतत्समुदायो ध्रुवा । आह ध्रुवासंज्ञानीति । स्त्री(न)पुंसकैकशेषः । तदयमर्थः । गीताङ्गसप्तरूपाङ्गसप्तरूपप्रमाणस्य ध्रुवेति संज्ञा । ऋग्गाथापाणिकानां च ध्रुवा हि मूलप्रकृतिरुच्यते । एतावच्च गीतानुपदे सौष्ठवादौ जगद्धितानि गेयमार्गे

---

१ KSS ध्रुवेति संज्ञितानि स्युः । NS ध्रुवासंज्ञानि तानि ।
२ KSS यान्यङ्गानीह वृत्तेषु तानि मे सन्निबोधत ।
३ KSS सा ध्रुवेत्यभिसंज्ञिता ।

एभ्यस्त्वङ्गान्यथोद्धृत्य[1] नानाछन्द कृतानि तु ।
[2]ध्रुवात्व यानि गच्छन्ति तानि वक्ष्याम्यह पुन[3] ॥३॥

---

मूलप्रकृति । तेन कारणेन गतेन ध्रुवेति व्यपदेशेन कार्यरूप समुदायेऽपि भवितव्यम् । या ऋग्गाथा यानि गीताङ्गानीति । (ए)वेति भेदोपक्रम उपजीव्याशस्य विनियोगभेद ज्ञापयति । त च यथावसर दर्शयिष्याम । अ ये तु गीताङ्गानि यानि ध्रुवासज्ञानि नियुक्तानि च तानि ध्रुवासज्ञानीति सच्छन्दाध्याहारेण श्लोक प्रथम योजयित्वा या ऋच इति द्वितीय पृथगेव योजयन्ति ।

ननु कारणे मूलप्रकृतित्वादुन्मीलितायष्टके तावदस्ति ध्रुवाव्यपदेशाम्(श) । यथोक्तम् ।

उन्मीलिता मा(मृ)ता चैव विश(शा)लाविरले तथा ।
उत्सृष्टा विमृता चापि विप्रकीर्णा तयोद्गता ॥
एता ह्यष्टौ ध्रुवास्तत्र वर्णतानेन चित्रयत् ।
अक्षराणि यथाकुडय तद्विद्यादगुरुलाघवम् ॥

।
।
।
।

शशिचूडामणि विरचितशोभ वरदम् ।
शरण गतोऽस्मि भगवन्तमोश्वरम ।
पितृवनरङ्गमहानर(ट)मजित शम्भु नमामि सर्वोत्कृष्टम ॥
शम्भु नमाम्यखिललोकपतिम ।
नमत महेश्वरपदयुगलम ।
प्रणमाम्यह शिव वरदम ॥

एता(इत्या)द्य ॥१ २॥

मलिप्रकृतौ ध्रुवाव्यपदेश(शो) स्ट कार्येऽपि भवतु नाम । कार्यस्य तु स्वरूप वक्तव्यमित्याह । एभ्यस्त्वङ्गानीति । एभ्य इति सम्पराम्रृश्यते । गीताङ्गेभ्योऽपि प्रथमस्य कस्यचिदुद्धार । स एवेहाङ्गमित्युक्तम् । एतानि गीताङ्गादीनि समुदाय-

---

१ KSS अङ्गेभ्य उद्धृत्य ।
२ NS काव्यत्व ।
३. KSS, NS अह द्विजा ।

मुखं प्रतिमुखं चैव वैहायस(सि)कमेव तु ।
स्थितप्रवृत्ते [1]वज्रं च सन्धि: सहरणं तथा ॥४॥

प्रस्ता(स्या)रो मावघातः स्यादुपवर्तनमेव च ।
उपघा(पा)तः प्रवेणी च चतुरथं मुशीर्षकम् ॥[2]॥५॥

रूपाणि या मालम्ब्य यन्त्रियन्ते उत्कभाजो भवन्ति । तथा ध्रुवामव नानाप्रकार रसभावप्रकृत्यादौचित्यात् प्रवृत्त मात्रावृत्तविशेषमाधाम्माश्रित्यायैव सङ्घातवत्ता मवन्ते । यानि कार्यरूपाणि ध्रुवारत्न तद्‌व्यपदेश गच्छन्ति अथ तानि वक्ष्यामीति वाक्यभेदेन सम्बन्ध । अयेति वाक्यभेदेन सूचक । उद्धृत्येति । क्रियारूपमिति भिन्नकर्तृ ताभाव ।

एतदुक्त भवति । यथाऽम्पूहून्मनि सङ्घातेन रसभायमङ्गानि पुरुषभग(ट)- गजादीनि केनचिदुत्कर्षेण स्थितानीति कृत्वा सङ्घातान्तरेण सम्पादमानापूर्वदशा- वैचित्र्येण कारणकार्यात्मभावोऽभिव्यनक्ति तथा गीताङ्गादीन्यदृष्टप्रधाने गीतकादि- रूपसघातोदितानि कुतश्चिद्रसभावकृतान्यौचित्यसमर्पण आत्मकरकजनायोग्यलक्षणा- दुत्कर्षादुचितगीयमाप्रवृत्तविशेषाश्रयेण सङ्घातात्मकरूप प्रतिपन्नकारणत्व प्राव(प्राग् ब)- स्थाया मननुभूय कार्यमौत्तरकालिक भजन्ते करणान्वव्यपदेश्यानि च भवन्तीति ॥३॥

तानि यद्यपि तालाध्याये (अ० ना० अ० ३१)दर्शितानि तथा(ऽपि) विस्मर- णशीलायोपलक्षणार्थं पठति । मुख प्रतिमुख चैवेत्यादिना । पट्कलाप्रमाण पूर्वोक्त- मिति (न)लिख्यते । न चात्रैतदीयमुपकरोति(तीति) लक्ष्यते । तथाऽष्टकलमान सङ्ग- हीतमिति किं प्रतिमुखादिना । एवं मन्धिप्रम्बग्ज्वज्रादौ पौनरुक्त्यं स्यात् । क(स्मि)- श्चिदेवाङ्ग उपजीव्यत्व वक्ष्याम । सहरणमन्त्यम् । चकारा परिगणनाशङ्का व्युदस्य माना गीताङ्गानि वर्णाङ्गादीन्यपि स्वीकुर्वन्ति ।

तदयमर्थ । गीतकानामुगाथापाणिकानामङ्गतो यत् किञ्चिदुत्कृष्टमङ्गरूप लक्ष्यते तद् सामान्यानुगुणं प्रावेशिक्यादिभि पञ्चभि सङ्घाते स्थापयितव्यम् । न नास्ति सङ्घातो यत्र मप्रा(र्वा)णि तानि न व्याप्रियन्ते । रूपरसयम्मस्पर्शा इव . ... भावेषु बाहुल्यादल्पवैचित्र्यकृतस्तु विशेष । तथाहि । प्रधानार्थसूचना मुखात् । तदनु वस्तुसूचन प्रतिमुखात् । पद्मन्या(वस्तुन्य)लङ्कारयोजन वैहायसात् । यथास्थितप्रथित-

---

१ KSS वज्रच ।

२. KSS, NS सुशीर्षकम् ।

[1]सम्पिष्टमन्ताहरणं माहाजनिकमेव च ।
ध्रुवाणामङ्गसंज्ञानि पञ्चानामपि नित्यशः ॥६॥

तानुबन्ध( )स्थिताना(त्) । निवृत्ताना सन्धान प्रवृत्तात् । प्रयोवादन वत्त्वात्मना(नो) ह्यनुसन्धान सन्धेः । वाक्यार्थसमाप्ति संहरणात् । वर्णानुकर्ष प्रस्वारात् । सम्पिण्डिततात्पर्ययोगो मापयातात् । पुनरावृत्त्या गीतमुपवर्तनात् । पूर्वार्थनिगमनमुपपातात् । एकस्यैवार्थस्य वैचित्र्ययोगो वेणीप्रवेणीभ्याम् । द्वैधीकरणं चतुरश्रकात् । प्रधानार्थविश्रान्ति शीर्षकात् । सुन्द क्रमायातगुरुलघ्वादिसपूर्णत्वेन गतिवैचित्र्य सम्पिष्टकात् । भाव्यर्थान्तरसमाक्षेपोऽन्ताहरणात् । मिति पूर्वोक्त म(मा)हाजनिकात् । एवमन्येभ्यो वाङ्गेभ्यस्तद्रूपमनुसर्तव्यम् । तद्यथा । अङ्गिनोऽङ्गेभ्यो गीयमानमुग्य पदविच्छेदस्य गीतमध्यविघट्टमम् । तथा चोक्तम् । सामिप्रथितवस्यातोऽवग्रहो भवेत् इति । गाथाभ्यो हृदयाल्हादकवृत्तोपयोग । यथोक्तम् । नानाच्छन्दः-संस्तुतानि । ह्लादनार्थस्य च्छन्दे कन्द(च्छन्द)स्य इति स्मरत सौकुमार्यादिगुणगणयोग । पाणिकायास्तालविभाग शम्यादिकमपि ह्रीनसप्तरूपप्रमाणम् । तत्र हि तालोऽन्योन्य शम्यादिभिरुपनीयमानससर्गो दृष्ट इति प्रमाणमा(म)त्र एव ध्रुवासु निवेशयन्ति । तदेव प्रतिध्रुव गीताङ्गादिग्य एतदुपजीवितम् । गान्धर्वसंस्कृता नारदाद्या- (नारदीयशिक्षा १-२)गानयोग(ग)विकीर्णवस्तस्य गान्धर्वप्रकृतित्वेन व्यवस्थापयन्तो भोगोपयोगिनमुक्तपूर्वमर्थात नायमस्माभि स्वमनीषिकाकृत किन्तु प्रकृतावपि न दृष्ट इत्यागमप्रामाण्येनोपोद्बलयन्ना(न्त प्रा)रभानुरम(नुसारि) हि दृष्टफलमपि भोजनादि प्राणा (णायाम)मन्थ्यान इत्यागमानुसन्धानतोपबृंहयन्ति । नैतन्न वाच्यम् । किमिति एते साक्षाद्धर्मार्थ(र्थ)साधनोगाना । किमनया कल्पनयेति । ये त्वेतदुगत गत्याद्युपजीव्यमिरयाहुस्ते किमत्र फलमिति प्रष्टव्या । भोजनप्राङ्मुखताविवद् दृष्टफलतायामप्यदृष्टमिति चेत् तत्समस्ताना युगपद्वा विक एनेन वेति सर्वसमञ्जसप्रयासम् । तस्मादुक्तधर्मोपजीवनमेव परमगुरुनिरूपित युक्तम् । यथोक्त श्रीमदुत्पल देवपादै ।

स्थितात् स्थायित्वसम्पन्नात् प्रस्तुतस्येमयोजनम् ।
ध्रुवासु यद्यदन्येभ्यस्तद्वत् प्रजोप(त्र प्र)कल्पयेत् ॥

इति । भट्टमतेनापि ।

गाथाना पाणिकाना च गानमा(न म)सृणमस्पदा ॥

इत्यादि ध्रुवकार्ये कारणवद् धर्मानुगमात् ॥४-६॥

1. NS सम्पिष्टकान्ताहरणं महाजनिकमुच्यते । KSS सविष्टकान्ताहरणे...

[1][एकवस्तु ध्रुवा ज्ञेया द्विवस्तु परिगीतिका ।
त्रिवस्तु मद्रकं ज्ञेयं चतुर्वस्तु चतुष्पदा] ॥७॥

[2]ध्रुवा वर्णास्त्व(ह्य)लङ्कारा यतयः पाणयो लयाः ।[3]
ध्रुवम योन्यमम्बद्धा(न्धा) यस्माद् तस्मात् ध्रुवा( ) स्मृता( ) ॥८॥

---

ध्रुवेति सामान्यव्यपदेशे स्थितेऽपि तालप्रमाणगानमताद् विशेषव्यपदेशेनाह । एकवस्त्विति । यत्रैकेनैव तालेन वर्णाङ्गेन च निबद्धा तत्र ध्रुवेत्येव संज्ञा । यत्र त्वसमवृत्तपादो (युग्मौज इति जि) यमे द्वाभ्यां तेन परिच्छिन्ना गीतिरत्रेति कृत्वा परिगीतिकेत्यपि संज्ञा । यत्र तु त्रिभिरपूर्वैर्वर्णाङ्गैः स्तुत्याङ्गाना निर्वाहे कृते तुर्यस्य भावस्य तन्मध्यादेव केनचिन्निर्वहणं व्यवरङ्गोचितपरिक्रमण इव वादिखण्डत्वमेव खण्डनेति ध्रुवाम् नियमाभावात् तन्मन्द्रकगीतकवत् त्र्यङ्गत्वात् मद्र(द्र)कम् । विषमवृत्तवत् तुर्येऽपि तालेऽन्यतालवर्णाङ्गयोगे चतुष्पा(द)देत्यपि संज्ञा ॥७॥

अन्ये त्वेकद्वित्रिचतुःखण्डकृता एताः संज्ञा इत्याहुः । गीततालपदान्यत्र । एव कारणानुगमाद् ध्रुवेति यो व्यपदेशस्तमन्यथाऽपि समर्थयते ।

ध्रुवा वर्णा ह्यलङ्कारा यतयः पाणयो लयाः ।
ध्रुवमन्योन्यसम्बन्धा यस्मात् तस्माद् ध्रुवा स्मृता ॥

इति गीतकादौ ..पातानां स्थाय्यादीनां (द्रुतादीनां) च आह्लादा(दित्व)न्योन्यमनुवर्त्यानुवर्तकभाव कश्चिद् विनियोगमुखेन प्रकृत्या सर्वदा तत्र भावाद् । ध्रुवाम् तु रसाद्यनुगुणो यो गीयमानस्य व्रतस्यावश्यन्त्राणगुणो य प्राधान्याद् पाता दीनामन्यतम । तदौचित्येना येऽपि प्रयतन्ते । यथा रथगत्यौचित्याद् द्रुतरूपे पाते तदनुसारिणो वर्णावर्णाङ्गादय । करुणरसोचिते वर्णाङ्गे तदनुगुणा गुरुप्लुतादिरूपेण पातादय । एव प्रत्यक वाच्यम् । तत्र ध्रुवा इति पातादयः । एतेषां ध्रुवादीनामन्योन्यसम्बन्धेऽव्यभिचारितया ध्रुवरूपे निमित्त पदम् । आधारत्वाद्यो(द्धो)चित्ययोजनाच्च । न हि निराधारा वर्णादयो(य इति) । दर्शित चैतत् ।

अन्येऽपि कुड्यचित(त्र)दृष्टान्तेन तेन ध्रुवाणामाधारः पदमिति पर्यायात् संहिते यस्या वृत्तजातौ सा ध्रुवेति । अत एव लक्ष्ये गीयमानं रूपकमेव ध्रुवेत्याहुः । अक्षरयोजना(च)ध्रुवा द्रुताद्या लया । तस्याः (वर्णा)द्यपेक्षामाश्रित्यान्योन्यसम्बन्धा भवन्ति(न्ति) । ध्रुवं पद तस्माद्धतो प्रावेशिक्यादयो ध्रुवा इति ॥८॥

---

१ KSS does not read
२ NS वाक्यवर्णा ।
३ KSS लया यस्योपपातय ।

ध्रुवास्तुपञ्च विज्ञेया नानासंस्थानसंश्रयाः[1] ।
[2]एतासां सम्प्रवक्ष्यामि सप्तरूपाङ्गकारणम् ॥६॥
[3]उपवृत्तं प्रवृत्तं च प्रावेशिक्यां प्रकीर्त्यते ।
वज्रं च शीर्षकं चैव शीर्षिकायां विनिर्दिशेत्[4] ॥१०॥

तासां विभागा रसाध्याये (अ० ना० अ० ६) यद्यपि दर्शितास्तथापि तदवान्तरभेदसम्भवाभिधित्सया तदनुवदति । ध्रुवास्तु पञ्चेति । पञ्चैव प्रावेशिक्यादयस्ता एव...नाना ..। यत्र विशेषणद्वारेण हेतु सस्थाने तु गुरुलघुसन्निवेशोऽक्षरमात्रेयत्ता रसभावप्रकृतिभेदश्च तदाश्रयेण प्रकारनानात्वम् । तथाहि । प्रावेशिक्या एव रसादिवशाद् स्थिताकारादिभेदान्तरात्..... च्छन्दोवृत्तभेदाच्चासङ्ख्यभेदा । तासां दव-प्रत्येकं यद्यपि समस्तो रूपादियोगो दर्शितास्तथापि किञ्चिदङ्गं प्राधान्येन निवेशयितव्यमित्येतत् सूत्रयति ।।६।।

उपवृत्तमिति। उपवर्तनप्रवृत्ते प्रावेशिक्याम् । तथाहि ।
प्रविशति दयिताविरहजमतिमोहाश्यामजगुरुकोपम् ।
जलद्र(द)तटि(डि)स्फुतलक्षण कुञ्जरमायो वनम् ॥

इत्यादिक प्रवेशध्रुवया निमित्तानुसन्धि क्रियते । प्रवेशके हनुमतो भविष्यतीति तावदविवर भवति । तत प्रविशतीति हि दूरस्थो सामाजिक(का)गोचर प्रयोगानङ्गत्वात् तदीय सर्वेव प्रावेशिकी निवृत्तानुसन्धान प्रवृत्तावुपजीवति तदवकाशदर्शकस्तु ग्रन्थ ।......द्धि समस्तवस्तुगर्भाधानस्थानीया। (त)च्च वस्तुमात्राश्रयदीप्तता नावश्यमेव युक्तम् । अतिमग्नचित्तवृत्तेरपि सागरिकाया मनोरथकल्पितप्रियतमसमागमालापादेवोत्सुक्यप्रवृत्तस्वराविषयोऽस्त्येव (रत्नावली) । तथा चित्तवृत्तत्वात्(त् तु) प्रायस्त्वधाक प्रयुज्यते । चल हि गुणवृत्तमिति (ब्रह्मसूत्रशाङ्करभाष्यम् २.२.६ योगभाष्यम् २ १५) नीत्या चित्तव्यभिचारिभावानुसन्धि स्थायिभावानामिरयुक्तमसकृत् । (इ)ति तथाविधचित्रतासूचक समस्तमय इत्यादिसिद्धये भाव्य गानेन । तदुपवर्तनानीतमस्थि(स्वस्ति)पूर्वकंव सर्वा चेति । का गतिरिति दोन्ते विलम्बितादिरेकोचित प्रयोग इति सर्वा तावत् प्रावेशकी प्रवृत्तोपवर्तनाभ्याम् । अन्ये तु सुखावबोधाय तु विदारिकत्व वृत्ताविरयाहु । तत्र

शीर्षका चोद्धता चैव अनुबन्धा विलम्बिता ।
अड्डिता चापकृष्टा च षट्प्रकारा ध्रुवा स्मृता ॥
(अ० भा० ३२ ३२८)

---

१. KSS नानावस्थासमाश्रया ।
२. KSS एतासां चैव वक्ष्यामि सप्तरूपाङ्गकल्पनम् ।
३ KSS उत्पात प्रवृत्तश्च प्रावेशिक्या प्रकीर्त्यते । NS प्रावेशिक्या स्मृत तत्र प्रवृत्तमुपवर्तनम् ।
४ ध्रुवाया शीर्षकस्मृते । NS शीर्षकार्थं विनिर्दिशेत् ।

प्रस्तारो मायधातश्च याहाजनिकमेव च ।
प्रवेशो ह्यपपातश्च अड्डितायामथापि च[1] ॥११॥

[2][मुखप्रतिमुखोपेता ह्याव(प)कृष्टा विधीयते ।
वैहायसान्ताहरणे स्थितायां सम्प्रकीर्त्यते ॥१२॥

इदि प्रतिग्रहं षड् भेदा विशेषरूपा रसभावप्रकृतिकथादिभिदा वक्ष्यन्ते । तेन प्रावेशिक्यपि षट्प्रकारा । तस्या सर्वत्र तावत् प्रवृत्तोपवर्ण(तं)ने उक्ते । अधुना तस्या एव च शीर्षकभेदेऽर्थकं कर्तव्यमाह । वक्त्रं च शीर्षकं चेति । चकारेण प्राक्तनोपजीवनं पृथक्कारेण प्रावेषिक्यामेव शीर्षकभेद इत्याह् । तत्र यथाप्रथममन्यत्र पाषमुपक्रान्तम् । यथा सूत्रधारस्य प्रवेशेऽवादेर्वा प्रवेशने शीर्षकं शिरःस्थानमेव । द्वितीयं तत्र मित(त)प्रथा विभावादिव्याकोर्णनेन सोऽर्थो वर्ण्यमानो स्थीकर्तव्य. सामाजिकाना विधि तदेतदवस्थाप्रधाने विश्रान्ति[भन्ति]मशीर्षकात् ।

अन्ये तु प्रावेशिकीभेद एव शीर्षकं अ्र्वायामेतदपि तु पञ्चानामपि शीर्षकभेदे विनियोगोऽप्यमित्याहुरुत्तरत्रापि च ॥१०॥

अथाड्डिताख्ये ध्रुवाणा भेदे विनियोगमङ्गानामाह् । प्रस्तार इत्यादि । शृङ्गारप्रधानाड्डिता । तत्र वर्णानुत्कर्षाद्विभावादिसम्पिण्डीकरणमन्यार्थसमर्पणमर्थस्व वैचित्र्योत्प्रेक्षणपूर्वका (क) चेत्यवश्यकर्तव्या । यद्वक्ष्यति ।

अड्डिता सुरुकटगुणा शृङ्गाररसम्भवा ।
यस्माद् स्थानप्रसन्ना च तस्मादेशा(षा)ऽड्डिता स्मृता ॥
(अ० ना० अ० ३२.३३४)

इति । तदेतद् प्रस्तारादेरपवा(या)तान्ताद ॥११॥

अथापकृष्टाये भेदमाह । मुखप्रतिमुखोपेतेति । अपकृष्टमाकृष्ट वर्ण(न)म् । मिताक्षराण्येतस्या प्रधानम् । तदनुगामि सूचनीयम् ।

अथ विलम्बिताभेदमाह । वैहायसान्ताहरण इति । वैहायसान्ताहरणे स्थितायां द्रुतविलम्बितायां शून्यालङ्कारयोगात् विलम्बितस्थादेव सर्वैहायसकाद् । मध्यमाना च सा वक्ष्यते ।

मध्यमानां प्रवेशे तु ज्ञेया द्रुतविलम्बिता ।
(अ० ना० अ० ३२.३३१)

१. KSS अड्डितायाः प्रकीर्तिताः ।
२. KSS omits these

सहारश्चतुरश्रश्च नर्कुटे खञ्जके(नर्कुटे) तथा।
सन्धि प्रस्तारसंयुक्ता ध्र(ऋस्त्व)न्तराया स्मृता(तस्)तथा]॥१३॥

यान्यङ्गानि कलाश्चैव गीतकान्तर्गतानि तु।
तानि छन्दोगतैर्वृत्तैर्विभाव्यन्ते¹ ध्रुवास्वथ ॥१४॥

---

इति। एवा च प्राधान्यात् प्रधानानुयामित्वमिति भाविक(त)प्रधानार्थस्याक्षेप। प्रत्लाहरणात् सैव च द्रुतविलम्बिता। प्रासादिक्या भेदत्वमस्ति तस्याम् ॥१२॥

अङ्गविनियोगमाह।

संहारश्चतुरश्रश्च खञ्जम नर्कुटे तथा।

इति। हास्यप्रधानत्वात् तस्य च मितशरीरत्वाद्वाक्यार्थसमाप्ति। शृङ्गारानुगमयोगाच्चार्थस्य द्वैधीकरणे ललितभावत्वाद्धास्यशृङ्गारयोग्य इति हि वक्ष्यते (भ० ना० भ० ३२ ३४०)। तदेतत् सहाराश्च(श्च)तुरश्राश्च(श्रश्च)। तथेति प्रधानस्य उ(मु)पासनाय। उद्धतानुबन्धयोरनु सामान्यविनियोग एव पूर्वोक्त। एव प्रावेशिक्या मप्ति-सामान्यतो विशेष चेति विनियोग उक्त। प्राक्षेपिकाप्रासादिक्यान्तरानैष्क्रमिकीनां चाविसामान्यतो विशेषतश्चेति द्विधा। अन्तरध्रुवायास्तु तृतीयमपि सामान्यविनियोगमाह। सन्धिः प्रस्तारसयुक्तस्त्वन्तरायामिति। भाविनोऽनुसन्धिवर्णानुत्कर्षश्चान्तरध्रुवाभेदेषु सर्वेषु प्राधान्येन योज्य। यत्र पठिताङ्गविशिष्टतानुविशेषयोजन रसभावप्रकृतिपरमार्थोद्दीपनमिति टीकाकारेणोक्त तद्युक्तिमार्गायमातिपात लक्ष्यते। विरुद्ध च तदुपेक्ष्यमेव ॥१३॥

ननु ध्रुवायास्तु(वास्तु)पञ्च विज्ञेया नाना सस्थानसश्रयाः। भ० ना० ३२ ६) इत्यत्र छन्दोवृतरूप सस्थान यत्सूचितं तद् कुत्राथ उपयुज्यत इत्याशङ्कयाह।

यान्यङ्गानि कलाश्चैव गीतकान्तर्गतानि तु।
तानि छन्दोगतं(वृत्तै)विभाव्यन्ते ध्रुवास्वथ ॥

इति। यान्यङ्गानि विवधादीनि कला गुरुलघुप्लुतदूताद्या नी(ना)तिवैचित्र्यात् क्वचावीत्यनुसारेण वर्धमानादिगीतकान्तर्गतानि मुख च (ख)प्रतिमुख चेति (भ० ना० ३२४) चकारात्लयत्यादय। एवकारो भिन्नक्रम। तुर्विशेषद्योतक। तेन कलादयो यावच्छन्दोगीतैरेव वृत्तैविरच्यन्ते। निराधाराणां पदेन विना केषाञ्चिद्द दर्शयितुमशक्यत्वात्। तद्यथा। मुखप्रतिमुखाद्युपजीवितस्यार्थस्य केचित् शक्या प्रतिरसभावप्रकृत्यादिनिरूपकयोग्या न भवन्ति यथा विवधादय।

---

१ KSS विभाव्यन्ते।

त्र्यश्रश्च चतुरश्रश्च ताल. कार्यो ध्रुवात्मक.[1] ।
षट्कलोऽष्टकलश्चैव यस्तु पूर्वं प्रकीर्तित [2] ॥१५॥

[3]पूर्वेषामेव गीतानां यान्यङ्गानि स्मृतान्यथ ।
[4]तेषां वृत्तविधौ कार्यमेकक(को) विधयोऽथवा ॥१६॥

---

नन्वेव पदमात्रमस्तु किं वृत्तेनेति तु शब्दवृत्तमपि स्फुटमेव रसभावादिव्यञ्जकमित्युक्त पूर्वं वाचिकाभिनये (भ० ना० अ० १४ २) । वृत्तग्रहण च्छन्दसो दण्डकादिगतगुरुलघुनिवेशात्मकवृत्तापाकरणार्थम् । वर्णकन्यासरसंख्यामात्रस्या, गायत्र्यादिशब्दस्य व्याकरणार्थम् । मात्रावृत्तेष्वपि च्छन्दस्तदेव मात्रासंख्या । तथाहि । गायत्र्यादित एवोद्धृत्य वध्रुदोऽप्यभिप्रेत्य भेदसञ्करेण मात्रावृत्तानि दर्शितानि । ध्रुवावि गणादि(ध्रुवादिष)ति । चम्पात्रा यावत् षड्विंशतिगणीमामादौ कमहलमिस चतुर्थाङ्कम् । अन्तरायास्तु हृतस्यादयो दण्डककल्पमात्रावृत्तभेदा ॥१४॥

नन्वङ्गानि तु विविधानीति सङ्गातपूर्वकाणि । कला पुनरित्यभिप्रेत्य शम्याशङ्का परिहर्तुमाह । त्र्यश्रश्चेति । त्र्यश्रचतुरश्रौ यौ ध्रुवात्मकौ च मूलप्रकृतिभूतौ ये(यौ)च पूर्वं तद्विकलभेदौ षट्कलाष्टकलौ कार्यौ तालरूपौ । चकारात् मिश्रभेदौ । चतुष्कलमिति चैतत्प्रवमिति दर्शितम् । प्रतिविततचतुष्कलप्रकारोऽपि चकारेण द्वितीयेन सङ्गृहीत ॥१५॥

एव कलास्वरूपमभिधाय गीताङ्गेषु वक्तव्यमाह । पूर्वेषामेव गीतानामिति । पूर्वेषां सामवेदतुल्यानां मद्रकानां यान्यङ्गानि तेषां मध्यादेकको विधयो वा । अथ शब्दाद् वृत्त कायम । एकमेव वर्णाङ्ग ध्रुवासु निवेश्यम् । न तु काव्येष्विव । आवृत्या विशत्यङ्गपरत्वादिति तावदेको विशेष । विशेषान्तरमप्याह । वृत्तविधाविति । गीतकेषु तालोचितवर्णाङ्गानुसारेण मात्रानियमात्मक वृत्तम् । यथोक्तम् ।

अक्षरैर्या चतुर्मात्रा द्विमात्रा वर्णतस्तु सा ।

(भ० ना० अ० ३१ ११८)

इति । चत्वारस्तु गुणा (भ० ना० अ० ३१ १०६) इत्यादि च । इह तु विपर्यय । रसभावोचित वृत्तमेव प्रधानम् । तथा तु गुणेन शम्या चम्प स्थितो वर्णाङ्गतातो नियो(ज्य) इति । केचिद् वृत्तिविधौ कार्यमिति पठन्तो वृत्तौ वृत्त वर्णाङ्गशब्दतालिकादिकमाहु ॥१६॥

---

१ KSS ध्रुवास्वथ ।

२. NS य पूर्वं परिकीर्तित ।

३ KSS सर्वेषा ।

४. KSS तेषा सविविध एकैक च भविष्यति । NS. तेषा मध्यात्तासु कार्यो मक्षक विधयोऽथवा ।

[एककं तु विदार्येका ते चोभे विवध स्मृतः।
यद्परं त्र्यवर वापि विदार्यां वृत्तमिष्यते।]
पदवर्णसमाप्तिस्तु विदारीत्यभिसंज्ञिता ॥१७॥

एतेषां [1]चापि वक्ष्यामि विधिं प्रकृतिसम्भवम्।
ज्येष्ठानां वृत्तसंयुक्तं कुर्यादादौ तथैव च।
विवधं चैव मध्यानां शेषानामेककं तथा ॥१८॥

---

विदा(री)नियोगं ( )कृतं एककादिभिरिति सा वक्तव्या। नन्वनिक्रान्तेऽध्याये (भ० ना० अ० ३१)ऽङ्गलक्षणं एवा(णा)वसर एव विदारीलक्षणं कस्मान् नोक्तम्। उच्यते। वेदे विच्छेदसम्भवात्। विदारी निवेश्यमानां शोभातिशय पुष्णातीत्यानयेन ध्रुवाध्यायेन (भ० ना० अ० ३२) तल्लक्षणमाह। पदवर्णसमाप्तिस्तु विदारीति। अवान्तरवाक्यस्य समाप्तौ स्थाय्यादिवर्णस्याप्यपन्यासेन न्यासेन वा समाप्तिर्विदारी। विदारणं विदारी। विभावाख्येन बहुना वृत्या इति कृदिकारान्तात् ङीषि (अष्टाध्यायी ४ १ ४५) च रूपम्। तदाह। अभिसंज्ञिता अन्वर्थेति। तद्योगाच्च गीतखण्डो विदारी ॥१७॥

एवं प्रसङ्गाद्विदारी लक्षयित्वाऽङ्गानां प्रकृतिभावेन विनियोगमाह। एतेषामिति। विधिर्विभागं प्रकृतिषु सम्भवोऽस्येति। तत्र वृत्तं बहुवैदारिकम्। ज्येष्ठेषु तेषां हि प्राधान्याद् तदवान्तरायविश्रान्ति सम्भवति। यत्र विश्रमोऽलङ्कारयोग। विचित्रव्यभिचारिकत्वात् स्यायिता(न)। यथा। ...रो अनुसरइ गुरु अइ चिल्लज्ज हुवणेण किणीवर्णे विलक्खिऊ रइसिहिम्। [अनुसरति गुरुमपि शिष्यो दण्डेन केलिवने विनमित दृष्टिम्] (अत्र) वृत्तं च नियम्यते न तु ज्येष्ठा। तेषु विवधैकयोरपि सम्भवात्। एकद्विखण्डादाविह तालस्य लक्ष्यते। अधमस्य त्वन्यत्र गुणीभावाद् बहुचेष्टाभाव इत्येकैव विदारी। यथा विदूषकस्य। यथा। महुअर इह सिरिअ [मधुकर इह श्रित्वा] इति। मध्यमस्य तु मध्यमादेककौ विवधं सम्भवौ। यत्र चोभयतोऽपि न नियमः। अत्र टीकाकारेणाक्षिप्तम्। वज्ञ च शीर्षकं चेति (भ० ना० अ० ३२ १०) विनियोग प्रागुक्त। तत्र वज्रादिषु वर्णान्तराङ्गानां तालाध्याये (भ० ना० अ० ३१) बहुना बहुशाखि (खी) पूर्वापरविरोध इति। तदेतदस्मदागमव्याख्यायां निरस्यान(रूपित)मेव। अन्यदेव हि वज्रादिभ्य उपजीव्यमिति दर्शितम्। तेनाऽपि न परि-

1 NS सम्प्रवक्ष्यामि KSS चैव वक्ष्यामि।

त्र्यश्र या चतुरश्र वा योग ज्ञात्वा प्रयोगजम् ।[1]
तेन प्रमाणयोगेन ध्रुवा [2]कार्माऽवसानिकी ॥१६॥

गायत्र्याश्चा(त्र्या चा)पि शक्वर्याश्चा(र्या चा)न्तरे वा व्यवस्थिता ।
तेन [3]पादप्रमाणेन ध्रुवा कार्याऽवसानिकी ॥२०॥

---

द्वारमुत्प्रेक्षमाणेन प्रज्ञातयेयमेव विक सृष्टा । सदागमाभावात् न स्पष्टीकर्तुं पार्यते हि । तथाहि सेनोक्तम् । प्रकृतिविकारभावमावमेतत् । अन्यथा गीतकाङ्गमेवेव गीयत इति भवेत् । लयभङ्गोत्थानबीजगत चेदमेवेति ॥१८॥

अथ रसप्रसादनोपयोगकृतात् प्र(प्रा)पाय्याद्वा प्रासादिकीं ध्रुवां विचारयति । त्र्यर्श(त्र्यश्र) वेति । युज्यते योगो वाक्यम् । प्रयोग उक्तो वक्ष्यमाणो विनियोगस्त-ज्जम् । त्र्यश्र चतुरश्र वा पाठ्य ज्ञात्वा तत्तत्प्रमाणे च प्रासादिकी कर्तव्या । एत-दुक्त भवति । इह त्र्यश्र चतुरश्र वा भावेन तावच्छन्दोवृत्तविनियोगो वक्ष्यते । तदनु-सारेणैव तत्तत्तत्वृत्तो प्रासादिकया पाठ्यान्तरभाविन्या कुर्यात् । एक हि ध्रुवापाठ्य योग्य(ग्या)ङ्गमीचित्येन । अवसायोऽवसान निश्चयो रस । तत्प्रयोजनमित्यस्या(मस्ये-त्या)वसान(नि)की ।

अपरे तु न वृत्तमनेन प्रासादिकयामुच्यते तस्य वक्ष्यमाणत्वात् । अपि तु पद्योचितस्तालरूपश्च विनियोक्ष्यमाणत्वात् । अपि तु या त्र्यश्रा चतुरश्रा । उचित-वृत्तपाठ्याना तु चतुरश्रताल इत्याहु । इदमेव युक्तमित्युपाध्याया । अन्ये तु त्र्यश्र वेति प्रावेशिकी कार्या । अल्पीयोऽक्षरे च्छन्दसि न विभावानुभावाभ्या स्फुटमिरूपणा ॥१६॥

अथास्य छन्दाङ्गत्याह । गायत्र्या चाति(पि)शक्वर्यामिति । अन्तरग्रहणात् तयोरुपलक्षणमात्रत्व न कार्ययोगात । सैवैत्रयोद्विजास्तद्भोजयेति । तेन उष्णिग-नुष्टुप्त्रिष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वरीच्छन्द प्रमाणेन वानेककेन द्वाभ्यां त्रिभिश्चतुर्भिरधिकैर्वा प्रासादिकी कार्या । अल्पीयोऽक्षरे च्छन्दसि न विभावा...भि स्फुटरूपणा । प्रतिवितते च पारिणकात्वमपि तु योग्य(म)पि न चेदुभय चैतद् प्रसिद्धि-विरुद्धमित्येवम्परमेतत् । तासु यत् प्रमाण तदुपचारात् सामानाधिकरण्येनोक्त तेनेति ॥२०॥

---

१. KSS श्लोक ज्ञात्वा प्रयोचक ।
२ NS स्याद् ।
३. NS प्रमाणयोगेन ।

[1]शक्वर्याश्चाति(र्या चाभि)कृत्याश्च(त्या च) येऽन्तरे चावसानिकौ।
[2]तेषा मात्रार्धविहिता[3] ध्रुवा पादमया (यी) स्मृता ॥२१॥

यतिच्छन्दोविधानेन गुरुलघ्वक्षरान्वित ।
कार्या मात्राप्रमाणेन ध्रुवापादोऽवसानिक ॥२२॥

मध्यमोत्तमयो [4]कार्या चतुरश्रावसानिकौ।
मध्याधमानां कर्तव्या त्र्यश्रा चैवावसानिकी ॥२३॥

---

एव वर्णवृत्तं प्रासादिक्या ताल०यविभिधाय मात्रावृत्तेष्वाह। शक्वर्यां चाभिकृत्या चेति। चतुर्दशाक्षरा शक्वरी। एकविंशत्यक्षराऽभिकृति'। यदन्तराल यानि मात्रावृत्तानि तत्पादयोगेन प्रासादिकी कार्या। मात्राभूयस्त्वेऽपि ह्यक्षराणि गुरुप्रवेशान्न भूयांसि भवन्ति। मात्रेति यात्रावृत्तादि। तदय समन्वय। शक्वर्यभि०कृत्ययोरन्तरे मात्रा विहितेति मात्रावृत्तान्युक्तानि। तेषा ये पादास्तन्मयी अवसानिकी ध्रुवा स्मृतेति। ये इत्युपरितनश०दोपक्रम। तेषामित्युपचारविषयो यथा समभारो या च ऋतकाभाव यो मोदो(द) तस्मादागत(म)वत्।

अन्ये तु श्लोकद्वयेऽपि चकारादुपलक्षणमपि सगृह्णते। छन्दोविनियोगयात्र मत्र। न तु भव्यतोपयोगिता। गुरुलघुयतिनियमे नात्र किञ्चिद् कृत्यम् ॥२१॥

गीतवशादेव यत्याद्यवच्छेदाच्छ्र०यत्वसिद्धिरिति यो मयोक्त (भ० ना० १४१) इत्यत्र ॥ प्रत्याह। यतिच्छन्दोविधानेनेति। छन्दो विधीयते येन प्रयोजनेन तच्छन्दोविधानं भव्यतवम्। तेन ॥ वापावो यत्या विरामेणोचितेन शुद्धतया चोप-लक्षित कर्तव्यो वर्ण्यत्वे च नियमो गुरुलघुविरचित कर्तव्यो मात्रावृत्तत्वे यादृशमेव प्रमाणमागमोदित रूप यथा वैतानिकी यतिरन्तराणा वा समपादो . रसेन युक्त कार्य। एव चावसानिको रसवृत्तिनिश्चयकृद्भवति। यथा गीतियोगेऽप्यवसानिको निश्चययुक्त कार्यो न वृत्त यत्यादिसमाच्छादक कार्यम्। अपि तु तदनुवर्ण्यैव कार्य-मिति पूर्वपक्षिकसम्मत हेतुद्वयमप्यहेतुकृतम्। अवसानिक इति मत्वर्थीय ठच्(मष्ठन्) (अष्टाध्यायी ५ २ ११५) ॥२२॥

एव पाठ्ययोजनया प्रासादिक्यास्त्र्यश्रादितालविभाग निरूप्य प्रकृतिमार्गेणा-प्याह। मध्यमोत्तमयो कार्या चतुरश्रेति। गीतकऽप्यवसानिको निश्चययुक्त कार्य.।

---

१ KSS शक्वर्या चातिकृत्या च।
२ KSS नत्वेवसानिके तेषा मध्यार्धविहिता ध्रुवा।
३ NS मात्रा द्विविहिता।
४, KSS ध्रुवा त्र्यश्रौ।

अथ पूर्णपदी या तु तस्या वृत्त प्रवेशजम्[1] ।
तत्रेष्टवृत्तप्रामाण्याद् ध्रुवा कार्या प्रमाणत[2] ॥२४॥

ध्रुवास्तु पञ्च विज्ञेया नानावृत्तसमुद्भवा ।
यथास्थानरसोपेता ह्युत्तमाधममध्यमा ॥२५॥

कनीयसोग्रहा काचित् सन्निपातग्रहाऽपरा ।
[3]तथाऽऽकाशग्रहा काचित् त्रिविधा तु ध्रुवा स्मृता ॥२६॥

---

एवमुत्तमस्य तावच्चतुरश्रतालेन मध्यमस्यापि तदनुगतस्य चतुरश्रेण । अधमस्य तु त्र्यश्रा तद्बाहुल्ये मध्यमत्वे च । एवमेव द्वित्रिचतुरश्रेति.. पादयुक्ताना प्रासादिकीना वृत्ततालविधिरुक्त ॥२३॥

यासा तु नियमेन पादचतुष्क तासा विधिमाह । अथ पूर्णपदीति । पूर्ण(र्णं) पादो यो द्वितीयपादस्तावच्चतुर्भाग इति पूर्णत्वमस्य । चतुर्थप(ष्पद)त्वमनेन चतुष्पदी या प्रासादिकी सा प्रावेशिकी वृत्तेनैव कार्या । न तु तत्रैव...इष्टम् । कविप्रथमस्वीकृतस्य प्रवृत्तस्य प्रामण्यात्(त्) प्रमाणीकृतच्छन्दोविशेषाद् ध्रुवा कार्या । न तदेव वृत्तमपि तु तच्छन्दकमिति यावत् । प्रमाणत इति चतुरश्रादिनेत्यर्थ ।

टीकाकार(रा)स्तु परिक्रमणैस्त्रिकोणचतुष्कोणरङ्गापेक्षया त्र्यश्रचतुरश्रताविभागमाहु । तदस्मद्गुरुभ्यो न रुचितम् । पादविभागेन बहिरङ्गविभागत्वात् । तत्रि कलचतुष्कलविभागेन चाचपुटेऽपि चुल्लवराजयशोऽत्र रसणीयम् (चोलराजयशोऽद्य रमणीयम्) इति पादचतुष्टययोगे मुखचतुष्टयदर्शनात् ॥२४॥

एव प्रासादिकी विचार्य सर्वध्रुवाविषय विचारमाह । ध्रुवास्त्विति । या एता पञ्चापि ध्रुवा यथास्थानरसोपेता स्थान प्रवेशादि(दि) रस प्रवतिक्रम्योपेता उचिता(ता)स्तथा वक्ष्यमाणा नानावृत्तसमुद्भवास्ता उत्तमाधममध्यमास्तु ज्ञेया यथोत्तमादिप्रकृतिविषये स्वस्वप्रमुख एव ज्ञेयम् । तथा हि कर्तव्यमिति यावत् ॥२५॥

तत्रोत्तमविषय कनीयस्या ग्रहणेन सूच्यते । कनीयस्यास्त्वाद्यपरिक्षेपप्रवेशात् । अन्यतमदर्शनेनोत्तमविषये य ध्रुवेति दर्शयेत् कुशीलवाना तदुचितपुष्करवाद्यादिसविधानावधानसम्पत्तिरिय कार्या । मध्यमध्रुवा तु हस्तद्वयसन्निपातेन ग्रहणकालप्रथम-

---

१. KSS प्रवेशनम् NS प्रयोजयेत् ।
२. KSS प्रवसानिको ।
३. NS, तथा कारेग्रहा ।

[1][प्रावेशिकी तु प्रथमा द्वितीयाऽऽक्षेपिकी स्मृता ।
प्रासादिकी तृतीया च चतुर्थी चान्तरा ध्रुवा ।
निष्क्रामिकी च विज्ञेया पञ्चमी वस्तुकर्मणि[2] ।
[3]आसामेव प्रवक्ष्यामि छन्दोवृत्तसमन्वितम् ।]
[4]गान्धर्वं यन्मया प्रोक्तं स्वरतालपदात्मकम् ।
पदं तस्य भवेद् वस्तु स्वरतालानुभावकम् ॥२७॥

---

भाविना सुप्ता । एतदुभयाभावेन शून्ये च ग्रहणमात्रेणाधमा ध्रुवा । अङ्गुल्यूर्ध्वतया गुणप्रकाशनमुत्तमेषु सन्निपातो मध्येषु शून्यत्व मुणशून्यादधमेष्विति केचिद् यथा-सव्योल्लङ्घनेन व्याचक्षते । अन्ये तु कनीयसी प्रहारपातेनोत्तमध्रुवासु भाण्डग्रह समहस्तप्रहारपातेन मध्यमध्रुवासु शून्यवर्तनामात्रोपक्रमेणाधमध्रुवास्त्विरयाहु ।

उपाध्यायास्तु मन्यन्ते । कनीशब्देनाद्य एव पादभाग । तेनोत्तमध्रुवाया गानसमकाल पुष्करवाद्यमित्यर्थ । तेन ध्रुवातुल्यवृत्तत्व भाण्डवाद्यवृत्तमुत्तमे येन गान स्फुटमिति यावत् । सन्निपात. प्रथमपादान्ता कला । तथा प्रथमध्रुवासु भाण्डम् । मध्यमेष्वादावेव भाण्डग्रह इति ॥२६॥

ननु गान्धर्वमुखेन भागवद्गानमिह लक्षयितुमारब्धम् । गान्धर्वेऽपि तथैव च स्वरविधिरध्यायत्रयेण (अ० २८ २९ ३०) दर्शित । तालविधिरध्यायेन (अ० ३१) च । तत्रैव पदविधिरिति(रपि) दर्शित । कुलकच्छेद्यादि नाप्रमाणमिति किमपि कथितम् । द्विगुणाक्षरसंयोगात् (भ० ना० ३१ ८४) कार्यस्त्वक्षरयो विधि (भ० ना० ३१ १५७) इति । तदभिनयाध्याये (भ० ना० अ० ८ ९) ध्रुवाणा प्रवेशादि-भेदो रा(र)साद्यौचित्यमात्र च निरूपणीयम् । किमन्ये(ने)न वितनेन छन्दोवृत्ति-विचारेण । प्रयोज्यते यदमिह प्रधान तद्गान्धर्वेऽपि तथैवेत्यभिप्रायाद्कयाह । गान्धर्वं यन्मया प्रोक्तमिति । गान्धर्व यत् कारकादिवत् प्रोक्तम् । अतःप्राधान्यात्तस्य चापूर्वप्राधान्य न भवेत् । अभ्युपगतमेतत् । किन्त्वन्यथा तस्य गाने प्राधान्यमन्यथा च गान्धर्वे । तत्र हि स्वरतालौ प्रधानम् । तौ चानाचारौ न शक्यौ प्रयोक्तुमित्या-चारतया यदुपयोगि तदाह । स्वरतालानुभावकमिति ॥२७॥

---

१. NS does not read
२ KSS ध्रुवा बुधैः ।
३. KSS एतेषां चैव वक्ष्यामि छन्दोवृत्तनिदर्शनम् ।
४. NS गन्धर्वं यन्मया पूर्वं ।

[1]यत् स्यादक्षरसम्बद्धं तत् सर्वं पदसंज्ञितम् ।
निबद्धं चानिबद्धं च येन तेन द्विधा स्मृतम् ॥२८॥

अतालं च सतालं च द्विप्रकारं तदुच्यते ।
सताल च ध्रुवार्थेषु निबद्धं सर्वसाधकम्[2] ॥२९॥

यत् साक्करणोपेत सर्वातोद्यानुरञ्जकम् ।
[3]*अतालेन निबद्धं च पदतानं प्रकीर्तितम् ॥३०॥*

---

नन्वर्थावगतिरत्र प्रधानं गान इव । मनस्यैतत् । अक्षराणि गान्धर्वे पदानीति यावत् । यत् स्यादक्षरसम्बद्धमिति । निबद्धमिति । ऋुट् दिग्लेत्यादि (अ० ना० २९.६६) । एव हि प्राक्तना(प्राक् ता)न्यक्षराणि वक्ष्ये यानि पुरा ब्रह्मणोक्तानि (अ० ना० अ० ३१ १०४) इति । अनिबद्ध देवं सर्वमिति (अ० ना० ३२.४८) कविभिर्नं(रा)देयत्वात् । निबद्धं पद्यमनिबद्धं गद्यमिति तु युक्तम् ॥२८॥

अतालमिति । अप्रतिष्ठ च । द्वयमन्योन्यसंगतौ । एव गत तावद् गान्धर्वे पदप्राधान्य गाने स्थित तदित्याह् । सताल च ध्रुवेति । सतालं परस्परसंगतिप्रधानः-(म्) । अर्थेषु च रसोचितेषु निबद्धं यदीदृक् पद तद् ध्रुवा । अतो नाट्यदार्थं ध्रुवापदं गान्धर्वपदवत् । अत्र हि सम्भवत्पदे च स्तोत्रार्थापेक्षा । नागमापेक्षि देवतापरितोष-कृद् । स्तुतिसम्भवमात्रादेव तत्सिद्धेः । गाने तु तदवगम प्रधानं सामाजिक प्रति । तदाह् । सर्वसाधकमिति ॥२९॥

ननु नाट्ये तु स्वरालापप्रभृतिगानमनक्षरमेव दृष्टमित्याशङ्क्याह् । यत्तु साक्करणोपेतमिति । वाक्करण वाक्क्रियामात्रस्वरालापे हुंकार इति तदुक्त यद्गान तदतालप्रतिष्ठ यावद्गति यावच्छक्ति च प्रयुज्यमानत्वादनिबद्धं च । स्वरयोजनेऽपि गान इव रसापेक्षकवर्णालङ्कारादिनियमाभावेन यथाकविस्वातन्त्र्य तदेवंविधमतालं लयममात्रादिरूपविहीन ध्रुवागानात्मकमेतच्च भवतीति यावत् । ननु किं तथाविधस्य प्रयोगेनेत्याह् । सर्वतोद्येति । सर्वातोद्याना ततसुषिरादीनामनुरञ्जक स्वाद्याशस्य भाविध्रुवारञ्जनोपयोगिनस्तद्गीणावशादिवशात् पूरकमिति यावत् ॥३०॥

---

१. KSS यत्किञ्चिदक्षरकृतं ।
२. KSS. ह्यच्च वै स्मृतम् ।
३. KSS. अतालमनिबद्ध च पदं तु ज्ञेयमेव च ।

नियताक्षरसम्बद्धं छन्दोयतिसमन्वितम् ।
निबद्धं तु पद ज्ञेयं सतालपतनाक्षरम्[1] ॥३१॥

अनिबद्धाक्षराणि स्युर्यान्य(नि) जातिकृतानि तु ।
[2]आतोद्यकरणैस्तेषां विधानमभिनिर्मितम्[3] ॥३२॥

अपदान्यनिबद्धानि तालेन रहितानि तु ।
आतोद्येषु नियुक्तानि तानि तानि तु रञ्जयेत्[4] ॥३३॥

---

ध्रुवाक( ङ्ग )मेवविषगानमिति दर्शयति । नियताक्षरसम्बद्धमिति नियतानि प्रकृतरसाद्यौचित्याय स(द्)गुणालङ्कारसघटनादीनि यान्यक्षराणि तैर्युक्तम् । छन्दः-साक्षरपरिमाणे यस्या विरामेण युक्तम् । सह तालेन यत्राक्षराणि सह पतनेना-वगमनवद् ॥३१॥

नतु लक्ष्ये वाद्ययोगेऽपि तालप्रधानमिति विगीत ताल(ला)काराविनार्थशून्य दृष्टं तस्य कर्थमुपयोग इत्याशङ्क्याह । अनिबद्धाक्षराणि स्युरिति । अनिबद्धान्यर्थ-शून्यानि यान्यक्षराणि जात्या छन्दोरूपया विहितानि तेषां यद्विधान तदातोद्यगतैः पुष्करवीणादिगतै करणैः क्रियाऽभिनिर्मित सम्यग् निर्णीतम् । एतदुक्त भवति । पदतपरिक्रमणादौ भाण्डवाद्यमात्रे प्रधाने तन्मात्रोपदर्शनमात्रम् । तेन तच्चापि ध्रुवारूप न भवतीति यावत् ॥३२॥

एवभूतेषु च गायनसावधानत्व यत्नेन विधेयमिति दर्शयति । अपदानीति । एवभूतानि यान्यक्षराणि रञ्जयेद् यत्नेन रक्तियुक्तानि सम्पादयेत् । कथमित्याह । आतोद्येष्विति । वीणावशस्वरादिमिश्रीकरणेन नियोजनेनेत्यर्थं ।

नन्वयमेव तत्र रञ्जनाप्रकार इति कुत इत्याह । अपदानीति । कि.. ... पदम् । अनिबद्धान्यर्थशून्यानीत्यर्थ । अत एव विद्यमानेऽपि ताले तत्कायकरणलब्ध्यानि विना ह्यर्थेन तालोऽपि परिक्रमणादिरूपत्वादकिञ्चित्कर इति यावद् ।

अन्ये तु ततसुषिरगताना स्वराणा वैचित्र्य यथा क्रियेत तदमेमोच्यत इति व्याचक्षते । तते सुषिरे च विपदवृत्तानुहीनानि यानि स्वरमात्राणा करणमात्रजनितानि

---

१ KSS नानाच्छ दसमुद्भवम् ।
२ KSS, NS आतोद्यकरण ।
३ KSS विधानमपि निर्दिशत् ।
४ KSS यानि तानि तु योजयेत् ।

यानि चैवं निबद्धानि छन्दोवृत्तविधानतः ।
[1]ध्रुवारूपाणि पूर्वाणि तानि वक्ष्यामि तत्त्वत ॥३४॥

अत्युक्त च प्रतिष्ठ च मध्य गायत्रमेव च ।
एताः स्थिताव(प)कृष्टास्तु(सु)श्यस्रा ज्ञेयास्तु जातयः ॥३५॥

उष्णिगनुष्टुब् बृहती पङ्क्तिश्चेतीह जातयः ।
[2]एता. प्रासादिकीना तु श्यस्रा ज्ञेया यथाक्रमम ॥३६॥

अनुष्टुब् बृहती चैव जगत्यथ विलम्बिता ।
ध्रु(द्रु)ता च चपला [3]चैवमुद्गता कृतिरेव च ।
ध्रुवाणां जातयो ह्येता प्रयोगेषु प्रकीर्तिता ॥३७॥

---

रञ्जयेत् । प्राश्रियेत्यध्याहार । तानि तालपदवृत्तवन्त्यक्षराण्याश्रित्य तन्मेलनीयता तदनुहरिणेति । अत एव गान्धर्वादिकलक्षणमत्र पदप्रधानमिति स्थितम् ॥३३॥

तत प्रकृति......यानि चैवमिति । वैचित्र्यमिति । पदानीति प्रकरणाद्विशेष्यम् । प्राधान्येन चारव्धानि ध्रुवारूपाणीति सामानाधिकरण्यम् । छन्दोवृत्तविधानाद्धेतोर्यतो वक्ष्यति तत एव पूर्वाणि प्रधानानि । अवृत्तपदमात्रापेक्षया तानि रसाद्युपयोगीनीति विशेषत उक्तमसकृत् । अन्ये तु पूर्वाणीति पद ध्रुव या शुष्काक्षराणीति तावन्त्येव पश्चात् कर्तव्यस्यार्थस्य सग्रहार्थमित्याहु ॥३४॥

एकैकाक्षरैर्नाट्यवृष्टिरिति द्विरादि(रक्षरैरि)ति । अत्युक्तादि गायत्र्यन्तं विलम्बिताद्या(स्व)पकृष्टासु च त्र्यश्रभेद । उष्णिगाद्याश्चत्वारि(तस्र) प्रासादिक्यां निरूपयति । अत्युक्त चेति । चकारात् । सुप्रतिष्ठा । स्थितासु विलम्बितासु ध्रुवास्वपकृष्टासु छन्द । जातय इत्युपचारात् सामानाधिकरण्येनोक्ता । छन्दस्सु जातिशब्दप्रयोगो वक्तव्य । तदनुयायित्वाद् वृत्तेषु जातिशब्दप्रयोगो ध्रुवाभेदेऽप्यनुगमात् । ध्रुवासु जातिव्यवहारो रसभावकृतभेदस्यान्वयात् । एवमि(म)त्य(त्यु)क्तादि गायत्र्यन्त विलम्बितास्वपकृष्टासु च त्र्यश्रभेदे । उष्णिगादीनि चत्वारि प्रासादिकीषु त्र्यश्रभेदो-(दे) ॥३५-३६॥

अनुष्टुब् बृहती जगती प्रावेशिकेषु । तत्रैव विलम्बितादीनि वृत्तानि ॥३७॥

---

१ NS ध्रुवासञ्ज्ञानि...। KSS ध्रुवासञ्ज्ञानि वर्णानि तानि वक्ष्याम्यत परम् ।
२. KSS एता प्रासादकीना तु युग्मा ज्ञेयास्तु जातय ।
३ KSS चैव चद्गता ।

 

प्रावेशिकीनां [1]जातीनामुद्धतानां निबोधत ।
पङ्क्तिस्त्रिष्टुप् सजगती तथाऽतिजगती पुनः ।
शक्वरी चेति निर्दिष्टा उद्धतानां तु जातयः ॥३८॥

सर्वासामेव जातीनां त्रिविधं वृत्तमुच्यते ।
गुरुप्रायं लघुप्रायं गुरुलघ्वक्षरं तथा ॥३९॥

गुरुप्रायाऽव(प)कृष्टा स्याल्लघुप्राया द्रुता तथा ।
गुरुलघ्वक्षरप्राया ज्ञेया कार्या ध्रुवास्तथा ॥४०॥

वृत्तान्योजकृतानि स्युर्युं से[2] यानि सर्वतः हि ।
तानि द्रुतासु योज्यानि लघुयुग्मकृतानि तु ॥४१॥

यानि चाल्पाक्षराणि स्युरल्पच्छन्दःकृतानि तु ।
तानि स्थितापकृष्टासु कार्याण्या(ण्या)क्षपिकीषु च ॥४२॥

---

उद्धतासु पङ्क्त्यादीनि पञ्च ॥३८॥

जातीनामिति । यस्वच्छन्दसामिति ॥३९॥

अपकृष्टेति । विलम्बिता(त)लयवती प्रायो गुरुप्राया । शेषे(षा इ)ति । मध्य लयविषया (गुरुलघु)प्राया ॥४०॥

व्याप्तिं शिक्षयितुमाह । वृत्तान्योजकृतानि । सवन्तीति नगत(म्) । युगानीत्यन्ते । सर्वार्थे तत्र द्रुते न तत्प्रधाने करणादौ । योजकृतानि छन्दभेद विषमा(पकृष्टासु) युक्तानि स्युर्युं सानि । तानि द्रुतलययोग्यासूद्धतास्वप्यवान्तरेण गुरुस्थाने लघुयुग्मेन योजितानि योज्यानि । तद्यथा । प्रत्युक्ताद्रीनि ज्यश्रे स्थितानि स्वरभेदेन च । युक्तानि तान्येव लघुयुग्माकृतगुरुरूपाण्युद्धतासु । ईश वन्दे । देव शंभुः । (इत्यत्र लघुयुग्मीकरणे) द्रुतगति गजपतिरिह किल विचरति (इति) ॥४१॥

एतद्विपर्ययेण व्याप्तिमाह । यानि चाल्पाक्षराणीति । ह्रस्वाक्षराणि यानि यानि वृत्तानि तानीति । छन्दोपेक्षयाऽल्पच्छन्दसि तथा स्थाप्य ते । युग्मस्य गुरुकरणा त्ताक्षेपिकीषूद्धतासु द्रुतलयास्वप्युक्तानि । अनया भङ्ग्या स्थितापकृष्टया करणा र्हाणि । चोऽप्यर्थे । यथा ।

---

१ KSS जातिस्तु ।
२ NS द्रुतदानि ।

[गुर्वादिस्तु गुरुः कार्यो लघ्वादिश्च लघुस्तथा ।
ये त्वोजच्छन्दसा युक्ता ज्ञेया ते क्षेपिकी तथा ।।]
[1]यान्योजयुग्मछन्दांसि ज्ञेयान्याक्षेपिकी तथा[2] ।
लघुयुग्मकृता यऽज्या(ः) स्थिता साऽऽक्षेपिकी भवेत् ।।४३।।

[गुर्वादिषु गुरु कार्यो लघ्वादिषु लघुस्तथा ।
ये त्वोजच्छन्दसा युक्ता ज्ञेया ते क्षेपिकी तथा] ।।४४।।

---

पवणणच्छन्दोघत्तो मवसिवदे उपक्कम सोवुत्त ।
[पवननच्छन्दोघात्तो मवासीपतेरुपक्रमः सवृत्तः]

लघुयुग्मस्य गुरुकरणे ।

सिवणमकामरा रूपामाण संणेइ(आ) ।
[सिवाममकातरा रूपामोणा सज्ञेया] ।।४२।।

यथाक्षेपिकया कीदृग् वृत्त प्रायान्येनेत्याह् । योग्योजयुग्मछन्दांसीति । वृत्तान्योजयुग्मगतप्रायलक्षणत्वाद् योगो युग्मानीत्युच्यते । तेनायंसमानि वृत्तान्याक्षेपिकेषु पूर्ववद् गुरोर्लघुद्वयस्थाने योजनया स्थितायां विलम्बितायाम् । अन्ये त्वोजे (ज इ)ति सप्तमी पठन्तश्चतुरश्रविषयाणि छन्दांसि भङ्ग्यन्तरेण त्र्यश्रेऽपि विधेयानीत्येव वाक्यस्य तात्पर्यमाहु ।।४३।।

गुर्वादिषु गुरुः कार्यो लघ्वादिषु लघुस्तथा ।

इति । (न)कश्चिदपि लोके दृश्यते । सद्वृत्तमघुगुरुस्थाने यथासंख्य तालोचितगुरुलघुयोजन कार्यमिति ।... ...कतु लयादितालजात सगृह्णीतेत्यय विरहे मग्नणो महिग्र दद्द्व(हज) । (विरहे मदनोऽखिलं दग्धुम्) । अनेन लघुद्वयगुर्वात्मना चर्चरीताल सगृहीत ।।४४।।

---

१. KSS यान्योज युग्म ।
२. KSS स्मृता ।

[1]विषमांशाक्षराणि स्युः पदैरर्थवशानुगाः ।
शम्यातालेन ता योज्या वर्णेनाकर्षितेन तु ॥४५॥

जातीनां त्वथ सर्वासां छन्दो[2]वृत्तनिदर्शनम् ।
स्थानप्रमाणं संज्ञाभिर्गदतो मे निबोधत ॥४६॥

---

एवं समार्धसमविषमविचारं कृत्वा त्रिषमवृत्तविषयं तमाह । विषमांशाक्षराणि स्युरिति । विषमांशानि मात्रावृत्तानि । अंशो हि चतुर्मात्रादि । विषमाक्षराणि च वर्णवृत्तानि विषमाणि वैषम्यसंख्ययाऽवान्तरसंख्यायोगेऽपि गुरुलघ्वात्मना चोभयथा वा ।

ननु तत्र प्रतिपादं तालस्य कथं समत्वेन योजनमित्याह । शम्यातालेनेति । अत्र पाणिरित्यध्याहारः । यासु विषमाण्यक्षराणि च पादे हेतुभिस्ता ध्रुवासु चच्चत्पुटादितालेन योज्यात्(ः) । आकर्षितेन च वर्णेन । एतदुक्तं भवति । लघुस्थाने वर्णं चाकर्षणीयो गुरुस्थानेन क्रमणीय इत्येवं वा साम्यमापादयेदिति । शम्यादितालग्रहणेन चच्चत्पुटादितालो लक्ष्यते । केचित्तु श्रमपरिहारार्थं भोजनप्राङ्मुखतान्यायेनाप्रसिद्धार्थं शम्यातालो ध्रुवातालेष्वावृत्त्या यावत्सम्भवं योज्यो । तथा च मद्वृद्धबलाधि(धेन)पाणितल(ल)यभङ्गलक्षणपुस्तकेषु सर्वत्र ज्ञाता इति प्रस्तारो दृश्यते ।

ननु किं तथाविधैः पादैराश्रितैरित्याह । अर्थवशानुगा इति । अर्थो ह्यत्र प्रधानमित्युक्तम् ।

अपरः श्लोकस्यार्थः । आकर्षितेनापि विकारभाजा वर्णेनोपलक्षितम् । यच्च शम्यातालमिति तालविशेषः कश्चित् प्रतिपादमप्यभ्यस्तेन योज्यः । अर्धसमविषमेष्वथ ......भवति श्लोकः । तेन च चतुर्लयद्विलयचतुर्भङ्गं षडुपभङ्गादीनां लक्ष्ये दृश्यमानानामिव तद्बीजमिति साम्यापादनाय शम्यातालश्चात्र माहात्म्यार्थमिति मन्यन्ते-(मन्यन्ते) तदसत् । अन्यतरेणान्येनापि वा तत्रोक्तेन वा पा(प)दान्यतरेण वा ध्रुवकासपिण्यादीनामपि साम्यसिद्धेः ॥४५॥

जातीनामिति ध्रुवाणाम् । छन्दोग्रहणं दण्डकादिव्युदासाय । निदर्शनं ग्रन्थं वक्ष्यामीति । तेन ग्रन्थेन कथं छन्दो वृत्तं प्रदर्श्यत इत्याह । स्थानेति । स्थानं विनियोगविषयः स उदाहरणात्त्वक्ष्यते । तदर्थमेवोदाहरणमिति वृद्धाः । यथा । सोऽयदि

---

१. KSS varies

२. KSS वृत्त० ।

गुरुर्गायाद्यको यत्(य) स्यात् सर्वपादेषु दृश्यते ।
[1]श्रीरिति ख्यातनामा सा कीर्तिता प्रथमा ध्रुवा ॥४७॥

यथा ।
देव शवमीश वन्दे ॥४८॥

मध्यलघुनाय [2]विद्युत्पादे पादे सम विभक्तेन ।
[3]आदिलघुना धृति स्याद्गणन योज्या हि मात्रया ॥४९॥

यथा ।
शङ्कर शूलधृ(भृ)त् पातु मां लोककृत् ॥५०॥

लघु स्यात् पदादौ त्रिके या धृतिः सा ॥५१॥
यथा ।
उमेश सुरे ब्रस्तवायु करोतु ॥५२॥

[4]लघुनि गुरु वा कथिता रजनी (त्रियामा) ॥५३॥
यथा ।
विरहे मदन प्रधिक दहति ॥५४॥

[5]एता नृत्त च गीते च ज्ञेया व गीतजातयः ।
प्रतिष्ठासुप्रतिष्ठाभ्यां भूयो वक्ष्यामि लक्षणम् ॥५५॥

[6]द्वितीय लघु सर्वत्र चतुर्णां यत्र दृश्यते ।
सा प्रतिष्ठा बुधैर्ज्ञेया सुप्रतिष्ठा द्वयेन तु ॥५६॥

तारा प्रस्तु किलिञ्जणा (गोवति तारा प्रश्रुविन ना) । इ युदाहरणम् । मूतल लग्नया इलोकविषये प्रयोग इति गम्यते । प्रमाण लक्षण(णम्) । सता श्रीरित्या दिका । तेनोदाहरणलक्षणसत्ताभिरिति यावत् ॥४६॥

तत्राय ग्र थ स्पष्ट इति विषमस्थाने व्याख्यायते । सुखग्रहणाय इति निजेन श्लोकेन हि तासा सग्रह ब्रूम । उदाहरणान्व पाद लिखाम । यतिविषय श्रव्य त्वाद्गतिबोधसिद्धये ।

१ KSS ह्रीरिति ।
२ NS विद्युत्पादेन ।
३ NS आदि य लघुना वृत्ति स्याद्गणनायाज्योलिमात्रण ।
४ KSS लघुनि गुरु चेत् रजनी मनु सा ।
५ NS एताश्च ते च एते च KSS गन्ये गुरुते च ज्ञया सा एना व वृत्तजातय ।
६ KSS varies

प्रतिष्ठा यथा।
सोसअन्तो अङ्गआइ वादि वादो पुप्फवाहो ॥५७॥
[शोषयन्नङ्गकानि वाति वातः पुष्पवाहो।]
सुप्रतिष्ठा यथा।
एदिसुए ऊसडधा अज्जइ(ड) मा हसवहू ॥५८॥
[ईदृशक उत्सुकितार्यनि मा हसवधूः।]
सपुनी प्राग् गुरुणी द्वे यदि पादे भ्रमरी(मतालि)सा ॥५९॥
यथा।
वणसण्डे पदिमत्तो वणहत्थी परिखिण्णो ॥६०॥
[वनखण्डे प्रतिमत्तो वनहस्ती परिखिन्नः।]
[1]प्रथमं च तृतीयं च यस्याः स्याच्चतुरक्षरे।
पादे लघ्वक्षरे नित्यं सा जयेत्यभिसंज्ञिता ॥६१॥
यथा।
हिमाहए वणंतरे भ्रमं गओ पविट्ठओ ॥६२॥
[हिमाहते वनान्तरे भ्रमं गजः प्रविष्टः]
*चतुर्णां यत्र पादानां तृतीयं च भवेल्लघु।
विज्ञेया सुप्रयोगैर्विजया नाम नामत ॥६३॥
यथा।
मारुलवो नच्चन्तओ मेहागमे समन्तओ ॥६४॥
[मयूरा नृत्यन्तो मेघागमे समन्ततः।]*
पादे पादे तु स्यात्(स्युः) सर्वैर्दीर्घ(सर्वे दीर्घा)वृत्तेऽस्मिन् दृष्टा विद्युन्माला (विस्मया) ॥६५॥
मेहा गज्जन्ता लोअं छादन्तो तोयं मुचन्ता संपत्ता मेहा ॥६६॥
[मेघा गर्जन्तो लोकं छादयन्तस्तोयं मुञ्चन्तः संप्राप्ता मेघाः]

---

१ KSS. लघुः गुरु सदा पदे भवेन्तु या जया हि सा।

* [टीकाकारासम्मतः पाठः।] काशीसीरिजपुस्तके विजयालक्षणं तदुदाहरणं न स्तः। इतोऽग्रे समस्तेष्वपि लक्षणोदाहरणे पाठो भिन्नतयैवोपलभ्यते अतस्तत्रैव द्रष्टव्य।

प्राद्यपरे द्वे यत्र तु ह्रस्वे ना(सा)स्तु नाम्ना मृतलतन्वी ॥६७॥

यथा ।

मेहणिरुद्धं पेक्खिअ चन्दं सोअइ(दि) तारा अंसुकिलिण्णा ॥६८॥

[मेघनिरुद्ध प्रेक्ष्य चन्द्र शोचति तारा अश्रुक्लिन्ना]

यदि च गुरुः पदनिधने भवति हि सा कमलमुखी(पद्मिनी) ॥६९॥

यथा ।

पवनहदो सलिलघणो भमइ णहे उवक्कमसो ॥७०॥

[पवनहतः सलिलघनो भ्रमति नभस्युपक्रमशः ।]

प्रथमं च तृतीयं च त्वन्त्यं चैव यदा गुरु ।

दृश्यते प्रतिपादं तु सा ज्ञेया वागुरा यथा ॥७१॥

मेहणिव(हद)क्खो णट्ठज्जोह्णो णिच्चणिप्पहो एस चन्दओ ॥७२॥

[मेघच्छो नष्टज्योत्स्नो नित्यनिष्प्रभ एष चन्द्रः ।]

द्वितीयं नैधनं [यत्र दीर्घाणि सर्वतः ।

सुप्रतिष्ठाकृते पादे शिखा ज्ञेया तु सा यथा ॥७३॥

वलाहएहिं पगज्जिदेहिं णहं समंता पऊण्ण प्रव(व्व) ॥७४॥

[वलाहकैः प्रगर्जितैर्नभ समन्तात् पूर्णमेव ।]

लघुनि त्वाद्यो चरणे यस्या गदिता नाम्ना घनपङ्क्ति सा(कुत्तिका)

॥७५॥

यथा ।

तडिसंकुडं रवसम्भद्धं जलधाराहिं दवदीव(दिव)म्भम् ॥७६॥

[तडित्संकुलं रवसम्भन्वं जलधाराभी द्रवतीवाभ्रम् ।]

एतास्तु जातयो ज्ञेया सुप्रतिष्ठाश्रुवास्त्वथ ।

अत ऊर्ध्वं प्रवक्ष्यामि गायत्रीपरिकल्पनम् ॥७७॥

---

श्रीगौ विद्युद्रो यो धृति स(सु)त्रियाग्ग ।

रसौ प्रतिष्ठा समगो मत्तालिः सुगो जया जगौ ।

विस्मया त(म)वमास्तन्वी भगगा( ) पद्मिनी शल्ल(नल)गाः ॥

यन्दे । शङ्कुरः । उमेशः । मदनो(नः) । यगति(दि) वातो(दो) । हंसवह । वराहत्थो । पविण्णइ(ग्रो) । मेहा गज्जन्ता । सोअदि तारा । भमइ णहे ॥६७-७०॥

आद्ये पुनरन्त्ये पादे गुरुणी चेत् ।
ज्ञेया तनुमध्या गाथत्रसमुचा ॥७८॥

यथा ।

वज्जाहअकूडो धाउज्झरसोत्तो एसो गिरिरम्मो मूर्मिचित(पत)दीव-(दिव्व) ॥७९॥

[वज्राहतकूटो धातुझरस्रोता एव गिरिराजो भूमि पततीव ।]

आद्य चतुर्थमन्त्य च गुरूण्येतानि यस्य तु ।
गायत्र्यधिकृते पादे ज्ञेया सा मालिनी यथा ॥८०॥

दीसदि पुण्णम्मो पुव्वदिसामुहे ।
जोह्ना(ह्न)समागमो पुण्णिमचन्दम्मो ॥८१॥

[दृश्यते पूर्णं पूर्वदिशामुखे ज्योत्स्नासमागतः पूर्णिमाचन्द्र ।]

गुरुयुगमन्ते यदि चरमस्या इह कथिता सा मकरकशीर्षा ॥८२॥

यथा ।

इह सिसिरम्मि(मी) मदजलणम्मि(मी) पमदवणम्मि(मी) विलसदि वादो ॥८३॥

[इह शिशिरे मदजलने प्रमदवने विलसति वात ।]

लघुनी चतुर्थं चरणे तु यस्या ।
भवतीह सा वै विमला तु नाम्ना ॥७४॥

कमलाअरेसु भमरोणदेसु सम सुद्धवत्ती विहगाणव(म)न्ती ॥७५॥

[कमलाकरेषु भ्रमरोन्नदत्सु सम शुद्धवृत्तिविहगा नमन्ति ।]

यस्या स्त्वन्त्यचरणे त्र्यन्त्यादौ निधनम् ।
दीर्घाणीह तु सा वीथी(थिका) नाम ॥८६॥

यथा ।

गज्जन्तो जलदा णच्चन्ते सिहिणो गायन्ते भमरा रम्मे पाउसए ॥८७॥

[गर्जन्तो जलदा नृत्यन्ति शिखिनो गायन्ति भ्रमरा रम्ये प्रावृषि ।]

त्रिलघुरावितो यदि च पञ्चम भवति पादत्त प्रकथिता गिरा ॥८८॥

यथा ।

जलवनावम्र मुणिम्र कुञ्जरो णददि काणणे वडिणमाउरो ॥८९॥

[जलदनादं श्रुत्वा कुञ्जरो नदति कानने प्रतिगजातुरः ।]
प्राद्ये चतुर्थकमन्त्ये(न्ते) तथा गुरु ।
यस्यास्तु पादतो ज्ञेया हि सा जला ॥६०॥
यथा ।
एसा हि वाउणा विक्खित्तसु(प)त्तअं ।
दट्ठूण पादवं हंसी पकम्पिणा ॥६१॥
[एषा हि वायुना विक्षिप्तपत्रकं दृष्ट्वा पादपं हंसी प्रकम्पिता ।]
त्रीण्याद्यो यदि स्युरन्ते द्वे च दीर्घे ।
ज्ञेया सा विधिज्ञैर्नाम्ना वै सुभद्रा ॥६२॥
यथा ।
एदे गज्जमाणा अब्भं छादयन्ता ।
भीमा काळमेहा उव्वेअं जणन्ति ॥६३॥
[एते गर्जन्तोऽभ्रं छादयन्तो भीमाः कालमेघा उद्वेगं जनयन्ति ।]
प्राद्यं चतुर्थ (र्थं) च स्वन्त्यमुपान्त्यं च ।
यत्र गुरूणि स्युः सुललिता (विरोलिका) ज्ञेया ॥६४॥
यथा ।
साहु सुसक्कावं किंति पिह(ए) कुद्धा ।
मा चिरलम्बद्धं पेक्खसि सक्कावम् ॥६५॥
[साधय सुसद्भावं किमसि प्रिये क्रुद्धा ।
मा चिरलम्बद्धं प्रेक्षसे सद्भावम् ॥]
सघुनी गुरु च द्विगुण यदि चेच्चरणे चरणे कथिता नलिनी ॥६६॥

---

वातुरा लैंधा जगा( ) शिला ।
सगा( ) पङ्क्तिका तयौ तु मध्यमे(मा) ।
भरो मालिनी न्य(न्यौ) वीथिका च ।
निर्मला स्यौ तु वीथिका मसौ नरौ गिरा ॥

शि(लि)ल्वणिआअ(ण्ण)हो । चरण्या(ण्णा) अक्ख । रुदहिक्कम्मम् । भूमि पत-
रिक्ख । पुप्फिअचन्दयो । विसमदि वादो । विहुमा रमन्ती । लच्छन्ते सिहिणो ।
सुलिम कुंजरो ॥७१-८६॥

यथा ।

पवणाहतका तरुणा तरग्रो कुसुमागमए विग्रसन्ति विग्र ॥६७॥

[पवनाहतास्तरुणास्तरवः कुसुमागमे विकसन्तीव ।]

ओष्ण्यादौ तु यदि चान्त्य चाऽपि गुरु ।

नाम्ना वै कथिता पङ्क्तिः सा तु यथा ॥

यथा ।

एधा हसवहू विद्धा काणणग्रो कान्त संगहुवा गन्तु उत्तसहिग्रा ।

[एषा हसवधूविद्धा काननतः कान्त सङ्गन्तु गन्तुमुत्सहिता ।]

स्याद् द्वितीयं ह्रस्व सर्वमन्य दीर्घम् ।

यत्र पादे पादे मीलसोया(मीला) वै सा ॥६८॥

यथा ।

मेहवुन्द वादो विक्विरन्तो वादि ।

दूसहो ग्रावादि पाग्रवाण त्तासो ॥६६॥

[मेघवृन्द वातो विकिरन् वाति दुःसह ग्रायाति पादपानां त्रासः ।]

गायत्र्या जातयो ह्येता विज्ञेयाः समवृत्तजाः ।

ग्रत ऊर्ध्वं प्रवक्ष्यामि उष्णिग्जातिविकल्पनम् ॥१००॥

गुरु नियमगत यदि भवति सदा ।

भवति हि चपला द्रुतगतिरपि सा ॥१०१॥

यथा ।

सुरुचिरनयण तव वग्रणमिदम् ।

रमणि रतिकर मम मदजणणम् ॥१०२॥

[सुरुचिरनयनं तव वदनमिदम् ।

रमणि रतिकर मम मदजननम् ॥]

तृतीय पञ्चम चैव गुर्व्य(र्व य)त्र तु नैधनम् ।

सदा तूष्णिग्वकृते पादे तम्वो(तमु) सा नामतो यथा ॥१०३॥

यथा ।

पिग्रवादविवादग्रो सुवसन्त काळए ।

पिग्रकामुग्रो विग्र मदण जणेतग्रो ॥१०४॥

[प्रियवादवादक सुवसन्तकाले ।
प्रियकामुक इव मदन जनयति ॥]
गुरुणा लघुना चैव सम नीता तु या ध्रुवा ।
छन्दस्युष्णिहि वृत्तज्ञैर्विज्ञेया कामिनी यथा ॥१०५॥

आद्यमन्त्यपञ्चमे स्यात् तृतीयमेव च ।
पादतो गुरूणि वै यस्य(स्या) सा शिखा तु वा ॥१०६॥

इत्येके पठन्ति ।
पेक्खिऊण मायव माहव च इट्ठओ ।
पादव कल्लोळओ वादि वामवादओ ॥१०७॥

[प्रेक्ष्य माणत मायवं च इष्टकः ।
पादप वनोद्यतो वाति वामवातक ॥]
आद्ये पुनरन्त्ये च यस्या गुरुणी पादे ।
ज्ञेया भ्रमरमाला(षट्पदिका) नाम्ना प्रकथिता सा ॥१०८॥

यथा ।
हंसागमनधीर कास सुमविचित्रम् ।
एव सरदिकाले रम्म सरसि तोयम् ॥१०९॥

[हंसागमनधीर काश सुमविचित्रम ।
एव शरदि काले रम्य सरसि तोयम ॥]
आद्यचतुर्थगतो यत्रान्त्यतम च गुरु ।
यत्र सदा चरणे सा खलु भोगवती ॥११०॥

---

तरौ जला म्यौ तु सुनन्दिका ।
ममौ विद्योतिका सौ नलिनी मं(मौ)नीला ।
ब्रुता गतिनौ सजौ गुरुस्तनु ।
शिखाजंगा( ) षट्पदिका नसौ गुरु ॥

हंसो पक्खिगणओ । भीमा काळमेहा । किसि पिए कुद्धा । कुसुमागमए । विक्खरन्दो-(न्तो)वादो(दो) । रमणि रतिकरम् । पियवादिवादओ । वादि वामवादओ । रम्म सरसि तोयम् ॥९०-१०९॥

यथा ।

चक्कसना(णा)मवहू कान्तसहाइ णिआ ।
णिम्मळ अम्मि(स्सि) जळ हिंडदि सर्वविद्या ॥१११॥
[चक्रसनामवधू कान्तसहाय नीता ।
निर्मलेऽस्मिन्न जले हिण्डति सङ्गतिका ॥]
प्राशो यदि गुरुणी प्रत्यय निधनगतम ।
ज्ञेया मधुकरिका उष्णिह्यामिकथिता ॥११२॥

एसा पिअग्र सदा रम्मा भमरजया ।
काले मदजणण जाद्दा कुसुमवदी ॥११३॥
[एषा प्रियय लता रम्या भ्रमरजया ।
काले मदजनने जाता कुसुमवती ॥]
प्रत्यय च निधन च गुरूणि स्युः ।
सुभद्रा(मनोज्ञा)नामतो यथा ॥११४॥
[द्वितीयं च चतुर्थं च सम्यौपान्त्य तथैव च ।
पादे यत्र गुरूणि स्यु सुभद्रा(मनोज्ञा) नाम सा यथा ॥]
वणम्मि सुक्करुक्खे पणट्ठघ(विल)तोये ।
करेणुमा विहूणो ज्वेइ मत्तहत्थी ॥११५॥
[वने शुष्कवृक्षे प्रनष्टपलितोये ।
करेणुकाविहीन उपैति मत्तहस्ती ॥]
यदि तु भवन्त्येव य(प)दि य(प)दि बोर्याणि ।
त्रिगुरुरिह प्रोक्ता भवति तु मतेयम ॥११६॥

यथा ।

जलभरसमत्तो खिदिधरमूलम्मि ।
पिअजुवदीसत्तो पविचरिदो हत्थी ॥११७॥

[जलभरसम्भृत क्षितिधरमूले ।
प्रिययुवतिसक्त प्रविचरतो हस्ती ॥]
यदि हि गुरूण्यन्ते चरणविधौ त्रीणि ।
सत [illegible] विज्ञेया कुसुमवती नामा(म्ना) ॥
[इति पाठान्तरम् ।]

द्वितीयं सतृतीयं तथाद्ये(न्त्ये) इह दीर्घम् ।
यदि त्रयं तु पादे भवेत् सा तु चित्रा(मुदिता) ॥११८॥

[द्वितीये गुरुणी द्वे तथाऽन्ते यदि स्याताम् ।
तदा सा मुदिताख्या ध्रुवेयं प्रतिभक्ता ॥]

यथा ।
महामेहविदाणं बलाकाकुलबद्धम् ।
महाभीमणिणाबं पविण्णं गगणम्मि ॥११९॥

[महामेघवितानं बलाकाकुलबद्धम् ।
महाभीमनिनादं प्रवृत्तं गगने ॥
यदि चतुर्थमन्त्यं गुरु तथैव षष्ठम् ।
भवति सा तु नाम्ना निगदिता मनोहरा ॥
[चतुर्थं निधनं चैव षष्ठं चैव गुरूण्यथ ।
यत्र तूष्णिक्कृते पादे नाम्ना साऽभिप्रकाशिनी ॥१२०॥

[इति व्याख्यानुपाठः]

यथा ।
कुसुमगन्धवाही सलिलरेणुपुण्णो ।
रमणिए वाति वादो मणसिजं जणन्तो ॥१२१॥

[कुसुमगन्धवाही सलिलरेणुपूर्णः ।
रमणीये वाति वातो मनसिजं जनयन् ॥]
द्वितीयं च चतुर्थं च सप्तमोपान्त्ये तथैव च ।
यत्र पादे तु दीर्घाणि उष्णिक् सा तु विलम्बिता ॥१२२॥

यथा ।
गइंदतोयक्खोभा पटोपरित्यहंसा ।
भमन्तचक्कवाआ नदी गआ समुद्दम् ॥१२३॥

[गजेन्द्रतोयक्षोभा प्रतीपस्थहंसा ॥
भ्रमच्चक्रवाका नदी गता समुद्रम् ॥]
प्रथमं यत्र पादे लघुनी पञ्चमं च ।
कथिता सा तु नाम्ना सततं चैव(य)मुष्णिक् ॥१२४॥

यथा ।

पवनो(णो) पुप्फहारी(वाहो) अइसीओ समन्ता ।
सिसिरे वाति काले मम सोअ जणतो ॥१२५॥
[पवनः पुष्पहारी(वाही) अतिशीतः समन्तात् ।
शिशिरे वाति काले मम शोक जनयन् ॥]
आद्यमथ पञ्चमं दीर्घमथ नैधनम् ।
यत्र यदि नाम चेच्चक्रवलगतिस्तु सा ॥१२६॥

यथा ।

मेहमलमुक्कओ णिम्मलगहाउलो ।
सोहदि णहंगणे णिम्मलकरो ससी ॥१२७॥
[मेघमलमुक्तको निर्मलग्रहाकुल. ।
शोभते न भोङ्गणे निर्मलकरः शशी ॥]
एतास्तु जातयो ज्ञेयाः स्थिताः प्रासादिकीष्वथ ।]
अत.परं प्रवक्ष्यामि त्वनुष्टुब्लक्षण पृथक् ॥१२८॥

लघुनी गुरुलघुनी लघुनि गुरु च यदि ।
चरणे नियतगतौ कथिता विमलजला ॥१२९॥
यथा ।
विकचाम्बुमहासिरे भमरावलिमुहले ।
बहुणिम्मलसलिले विहगो सरदि(भमइ) सरे ॥१३०॥

---

भो गो भोगवती (मधुकरिका तनगा) ।
जरगि भमोआ नरगौ मत्ता ।
मुदिता मसगी प्रकाशी नरगा ।
चरणा विलम्बा सरियो दीप्ता ।
भजमो चक्रवलगतिरमनाम्बु सनलगमला ॥

चक्कसराणामवट्ट । एसा पिमयलवा । करेणुआ बहुलो । पविचरित्तो हरघो । महा-मेहविदालम्मु । रमणि वाति वादो । चडे(टो)परित्पहंसा । पवणो पुप्फवाही । सोहदि न(ण)हंगणे । विहगो भमइ सरे ॥११०-१३०॥

[विकचाम्बुजहसिते भ्रमरावलिमुखरे ।
बहुविमलसलिले विहगो भ्राम्यति सरसि ॥]
पञ्चमं नैधनं चैव षष्ठे स्यातां तु यत्र वै ।
नित्यमानुष्टुभे वीर्घे विज्ञेया ललितेति सा ॥१३१॥
यथा ।
कुसुमसुअन्धिअए मअणसिअदीवणए ।
पमदवणम्मए विलसदि हंसवहू ॥१३२॥
[कुसुमसुगन्धिते मनसिजदीपने ।
प्रमदवनाङ्कणे विलसति हंसवधूः ॥]
यदि च खलु षष्ठकाललघुगणं इहार्पितः ।
पुनरपि च सप्तमं लघु भवति सा मही ॥१३३॥
यथा ।
बहुकुसुमसोहिए कमलवणसंडए ।
सहमरसहाइणी परिसरदि हंसिआ ॥१३४॥
[बहुकुसुमशोभिते कमलवनषण्डे ।
सहचरसहायिनी परिसरति हंसिका ॥]
लघुगणा इव षट्के यदि भवति मुखे तु ।
चरणगतिविधौ सा मधुकरसदृशाख्या ॥१३५॥
यथा ।
विविधवणविआरी पमदवणसुअन्धी ।
कुसुमवणविबोधी लसदि सरदि वादो ॥१३६॥
[विविधवनविचारी प्रमदवनसुगन्धि ।
कुसुमवनविबोधी लसति शरदि वातः ॥]
यदि खलु पञ्चमकं पुनरपि चान्त्यतमम् ।
गुरु चरणे तु भवद् भवति हि सा नलिनी ॥१३७॥

---

ललिता नजलगि नसलगि चरणौ ।
मधुकरिका नौ यो नजलगि नलिनी ।
छलगा(म्नलगौ) च नदी ॥
विलसदि हंसवहू । परिसरदि हंसिआ । लसदि सरदि वादो [पअरदि सारसिआ ।]
हिण्डदि महुमरिआ ॥१३१ १४०॥

यथा ।
पुलिनतलंगणए कमलिणिवासिणिआ ।
पजव हि वासगिहं पचरदि सारसिआ ॥१३८॥
[पुलिनतलाङ्गणे कमलनिवासिन्याः ।
प्रजवं हि वासगृहं प्रचरति सारसिका ॥]
यग् यदि निधनगतं स्याच्च गुरुल(घ ल) तम् ।
यत्र हि चरणविधौ सा खलु भवति नदी ॥१३९॥
यथा ।
हंसकुलसंमुदिदे सारसरवमुहले ।
मत्तमहुअरगणे हिण्डति महुअरिआ ॥१४०॥
[हंसकुलसंमुदिते सारसरवमुखरे ।
मत्तमधुकरगणे हिण्डति मधुकरिका ॥]
अनुष्टुब्जातयो ह्येता प्रावेशिक्य प्रकीर्तिताः ।
ध्रुवोणायुक्तमध्याभावकृष्टा निबोधत ॥१४१॥
षाद्ये चतुर्थमपि चान्त्ये दीर्घाणि यत्र चरणे(तु) ।
प्रावेशिकी तु बृहती सा नाम्ना तथैव कविरादया ॥१४२॥
यथा ।
राहु(हु)पराअहदसोहं चदं णहिअ सणिअणए ।
तारागणे(णो) विहदसोहो तेअस्सुएहि वदिव्व ॥१४३॥
[राहुपराहतशोभं चन्द्रं नभसि समीक्ष्य ।
तारागणो विहतशोभस्तेजोऽश्रुभी रुदतीव ॥]
यदि पञ्चमं हि सतृतीयं गुरुणी पदान्तरचिते द्वे ।
प्रमितेति सा भवति नाम्ना ह्यवकृष्टजातिरिह पङ्क्तिः ॥१४४॥
यथा ।
घणगज्जमेहपरिसित्तो अहअण्णहापिहिदसोहा ।
गमणगणेर्पिहिदरसि ण विभादि जोह्लरहि इन्दू ॥१४५॥

---

अनुच्छेदा मध्यमोत्तमासु प्रावेशिक्याम् ।
यथ निकृष्टासु ॥१४६॥

घनगर्भेशैहृपरिक्षिप्तोऽरुणप्रमापिहितशोभ ।
गगनाङ्गणेऽपिहितरश्मिनं विभाति ज्योत्स्नारहित इन्दु ॥]
यदि खलु षष्ठमयान्त्ये भवतो गुरुणी चरणयोगे।
स्थितिलयकृता नु जगतीय भुवि निगदिता विमतशोका ॥१४६॥

यथा

जलहरविहा(णा)णपिहिग्रङ्गो रविकिरणजालहृदसोहो।
गहमुहविणिग्गयविवण्णो ग्रसु विसदि अत्थगिरिमिन्दू ॥१४७॥

[जलधरवितानपिहिताङ्गो रविकिरणजालहतशोभ ।
ग्रहमुखविनिगतविवण प्राशु विशत्यस्तगिरिमि दु ॥]
प्राद्ये चतुर्थमपि चाष्टममक्षर खेकादश यदि भवेत् गुरु ।
सा चेष्टुभे भवति पादविधौ विश्लोकजातिरवकृष्टगता ॥१४८॥

मेहत्थिग्रो रविकराभिहदो तरागणेहि विधुरे गमिदो ।
ग्रत्थ उवेदि ग्ररणाभिहदो चन्दो रहम्मि रग्रणीसहिग्रो ॥१४९॥

[मेघस्थितो रविकराभिहतस्तारागणैर्विधुर्यं गमित ।
ग्रस्तमुपैत्यरुणाभिहतश्चन्द्रो नभसि रजनीसहित ॥]
प्राद्ये चतुर्थं(र्थे) दशम नवम ह्यष्टम तथा।
यत्र दीर्घाणि पादे स्युस्तद्वृत्त ललित स्मृतम् ॥१५०॥

यथा।

एसो घमत्तगग्रदूमिदाणणो दीणो पफुळवनवारवचा(वचा)ळिदो ।
वासाभिवढ्ढचळणो गग्राळुणो रम्म(म्मे)वण(णे) गग्रवरो
पलाय(ग्र)दि ॥१५१॥

---

रुचिरा तभया( ) ।
ग्रभिता सजसगि ननना गो च विशोका ॥
तेग्रस्सुएहि रदविध्य । ण विमादि जोह्नरवि(हि) इन्दू । जलहरविग्रालवि(चि)हि-
ग्रगो ॥१४२ १४७॥
तभजलगा विश्लोका ललित तभजरि कथितमिद वृत्तज्ञैः ।
ग्रत्थ उव्वेदि ग्रवणाभिहदो । रम्मे वण गग्रवरो पलाग्रदो ।
॥१४८ १५१॥

[एष प्रमत्तगजदूनाननो वीनः प्रफुल्लवनवातचालितः।
पाशाभिबद्धचरणो गजानुगो रम्ये वने गजवरः पलायते ॥]
यदि पञ्चम हि सतृतीयमेधनं नवमं द्वितीयमपि तस्य तादृशम्।
चरणे गुरूणि यदि सातिपूर्विका जगती बुधैर्निगदिता सा
म(त्त म)नोवती ॥

यथा

घणसमत्तदायवविदाणमन्जरं अवलिम्बिऊ(न)रम(ग्र)णीमुहे ससी।
गहणाहसकुदमन्दजोह्णयो ण विराजदे सवदि किं पयाविदो(णो)॥
[घनसन्तताततवितानमम्बरमवलम्बितु न रजनीमुखे शशी।
ग्रहणाङ्कसङ्कुलितमन्दज्योत्स्नको न विराजते सपदि किं प्रयावितः॥]
एतास्तु जातयो ज्ञेयाः स्थितानां हि प्रयोगजाः।[1]
[2]आक्षेपिविषयकृष्टानां सम्प्रवक्ष्यामि लक्षणम् ॥१५२॥

सुप्रतिष्ठाविकं छन्दस्त्ववकृष्टासु योजयेत्।
[3]वृत्तान्यन्यानि यानि स्युर्वेवस्तुत्याश्रयाणि तु ॥१५३॥

[4][अक्षराणां(णि) निवेशं तु (लया वर्णा) यतयः पाणयस्तथा।
अवकृष्टास्तु यस्याः स्युरवकृष्टा भवेत्तु सा ॥१५४॥

---

एतदुपसंहरति।

एतास्तु जातयो ज्ञेया स्थितानां हि प्रयोगजाः।

इति ग्रन्थेन सूत्रयति। आक्षेपिविषय(व)कृष्टानां सम्प्रवक्ष्यामीति। आक्षेपिकीत्वे सत्यवकृष्टत्वं यासां ता आक्षेपिविषयकृष्टयः(टा)। तेन स्वाक्षेपकृतमाक्षेपिकीत्वमनूबध्यते। करुणादौ भवत्येवेति दर्शितम् ॥१५२॥

सुप्रतिष्ठाविकमिति। मिताक्षरम्। आस्ववकृष्टास्विति यावत्। न सकलध्रुवागाने नाट्योपरञ्जकेऽवकृष्टानामथ विधिर्यावत् पूर्वरङ्गगते पाञ्चवे कृष्टावकृष्टध्रुवाणामिति दर्शयति। वृत्तान्यन्यानि यानि स्युरिति। देवस्तुत्याश्रयाणि निवृत्ताच्युक्तानि ईशा वन्दे इत्यादीनि तान्यवकृष्टध्रुवाविधौ पूर्वरङ्गयोगे स्युः ॥१५३॥

अवकृष्टत्वं निर्वचनतो दर्शयितुमाह। अक्षराणि लया वर्णा इति ॥१५४॥

---

१ KSS, NS प्रजेरजा।
२. KSS आक्षेपिकापकृष्टाना NS आक्षेपिकावकृष्टाना।
३ KSS. प्रत्युक्तादीनि च तथा।
४. कोष्ठबद्धश्लोको नि० सा० पुस्तके न स्त।

स्थायिवर्णा स्थितलया कलान्तरकृताक्षरा ।
समपाणियतिश्चैव ह्यवकृष्टा विधीयते] ॥१५५॥

[1]अवकृष्टध्रुवाणां हि कलान्तरकलासु च ।
अक्षराणां निवेशस्तु वृत्तजात्यां विधीयते ॥१५६॥

[2]अल्पवर्णान्तरा चैव ह्यवकृष्टा विधीयते ।
प्रावेशिक्यास्तु सक्षेप क(का)रणानां परिग्रहात् ॥१५७॥

---

पाण्यवकर्षणादवकृष्टेति यदुक्त तदेव स्फुटयति । स्थायिवर्णं(र्णा) इति वर्णस्य स्थायित्वमेवापकर्षणं लयस्य विलम्बितत्वं पाणौ समश्च पातश्च ।

केचिदाहु । समपाणौ समयतेश्च मध्ये यो विनियोगो विलम्बितलयायामवकृष्टाया सयोगात् सम उचितो य पाणि उचिता या यति साऽत्र मन्तव्येति ।

अन्ये तु यतिपाणिपरस्परापेक्षया समौ तुल्यौ परस्परानुबन्धाविति ईदृश साम्यमाहु ।

उपाध्यायाश्च मन्यन्ते । औचित्य लयापेक्षया पूर्वमुक्तम् । मध्यमे लये समपाणि समा च यतिरित्यादि । वस्तुत सर्वत्र सर्वस्य विधे सम्भव इति ॥१५५॥

कलान्तरकृताक्षरेति यदुक्त तद्विस्पष्टयति ।

अवकृष्टध्रुवाणां हि कलान्तरकलासु च ।
अक्षराणा निवेशस्तु वृत्तजात्यामिति ॥

वृत्तजात्यां यान्यक्षराणि गुरुलघूनि तेषामक्षराणां कलान्तरे कलायां च यो निवेशः स सावकृष्टासु विधीयते । एषोऽसावकृष्टाक्षराणामवकृष्ट इति यावत् ।

एतदुक्तं भवति । गुरुणाक्षरेण स्वराधारभूता तालकलया व्याप्ता तदपेक्षया द्विकलाव्यापिनी या तत् कलान्तरमित्युक्तम् । लघुना त्वेकैव कला निर्वाह्येति । एवमेव च लक्ष्ये करुणादौ द्विपदीभञ्जकादिप्रयोगो दृश्यते । यत्तु दक्षिणमार्गेण वा कलान्तरमात्रेति तदतिविततदर्शनाच्चोपेक्ष्यम् । चत्वारिंशत्लघुकालस्तालकलाध्रुवामनुलक्ष्य लक्षित इति ॥१५६॥

मिताक्षरत्वाद्धी यद्यवकृष्टायामुक्त तथापि विततमपि भवति तस्यानिबद्धत्वादिति यो मन्येत त प्रत्याह । अल्पवर्णान्तरा चैवेति । वर्णविशेषा अल्पस्यान्ते दृश्य ते चाऽवकृष्टेति नियम । भूयाऽक्षरत्वे च भेदातिशयसम्भवात् । एव यदा क्षेपिकयवकृष्टा भवति तद्दर्शयति ।

---

१ KSS अपकृष्टा । NS अवकृष्टा ।

२ KSS अल्पवस्तुगदा नित्यमपकृष्टा विधीयते ।
प्रावेशिकाय सक्षेप करणाङ्गपरिग्रहात् ।

एवं ज्ञेयोऽवकृष्टानां जातीनां श्रुतसम्भव[1]।
अत ऊर्ध्वं प्रवक्ष्यामि द्रुतानामपि लक्षणम् ॥१५८॥

मुखे तु [2]दोधकं कृत्वा शेषं ह्रस्वैस्तु योजयेत् ।
युग्ममोजं विमिश्रं च तथैव लघुसञ्चयः ॥१५९॥

जगत्यादिर्भवेद् सा तु [3]तथाऽतिधृतिनैधना ।
[4]तथावृता च च्छन्दोभिर्नानावृत्तसमुद्भवा ॥१६०॥

---

प्रावि(वे)शिक्यास्तु सक्षेप कारणानां परिग्रहात् ।

इति । प्रावेशिक्या अपि संक्षेपो मिताक्षरत्वं भवति । कुत । कारणानामवकर्षण-हेतुनामक्षरलयाद्यवकर्षणाना परिग्रहणाभ्या(दा)श्रयणात् ॥१५७॥

एतदुपसंहरति । एवं ज्ञेयोऽवकृष्टानामिति । एवं विलम्बितामभिधाय द्रुत-ध्रुवा प्रतिजानीते । अत ऊर्ध्वं द्रुतानामिति ॥१५८॥

तत्र द्रुतध्रुवासु यावन् मात्रातस्तावत् साधारण रूपमाह ।

मुखे तु दोधकं कृत्वा शेषं ह्रस्वैस्तु योजयेत् ।
युग्ममोजं विमिश्रं च तथैव लघुसञ्चयः ॥

इति । सन्धिर्मुखमत्रेत्यसत् अप्रकृतत्वात् । किंतु आरब्धप्रथमपादे दोधकं कृत्वा शेषं पादत्रयं ह्रस्वैः कुर्यात् । (युग्म) चञ्चत्पुटमोजं चाचपुटं मिश्रं वा सप्तकला तदिह योजयेदित्यावृत्त्या सम्बन्धः ।

ननु पादत्रये यानि ह्रस्वानि क्रियन्ते तानि कियन्तीत्याशङ्क्याह । तथैव लघुसञ्चय इति । दोधकमात्राणां पूरक एव लघुसञ्चयः पादत्रय इति यावत् । अन्ये तु

जगत्यादि भ(र्भ)वेत् सा तु तथाऽतिधृतिनैधना ।

(अ ना ३२ १६०)

*इति वक्ष्यमाणत्वात् पदत्रये अमतोमारम्पातिधृत्य = यानि च्छन्दांसि तैः लघुसंख्या* कुर्यादित्याचक्षते ॥१५९॥

---

१ KSS जातय ।
२ KSS तोटकं कृत्वा शेषं ह्रस्वं ।
३. NS तथा च धृतिनैधना ।
४ KSS तथाद्रुता च । NS तथा द्रुता च ।

षष्ठावादौ यस्याः सान्त्य स्यान्नवम
दीर्घाणि स्याप्ये शिष्टे च द्वे लघुनी ।
वृत्त ह्येतज् ज्ञेयं तज्ज्ञैर्वृत्तविधौ
गीते ह्येव नित्य विक्रान्ता जगती ॥१६१॥

यथा
एसो मेहो णाणद्दतो धूमणिहो
विज्जुज्जुत्तो धाराएहिं मुंचिदलम् ।
जावाबद्धो भीमुव्विग्गो(हत्थिणिहो)
विण्णाकण्णविअक्खो (विदुभूदण्णो) पीणाअन्तो
णाविगवो ॥१६२॥

[एव मेघो नानदद् धूमनिभो
विद्युद्युक्तो धाराभिर्मुंचिदलम् ।
जालाबद्धो भीमविग्रहो हस्तिनिभो
विद्युद्वर्णं पीनान्तो नातिगत ॥]
षष्ठावादौ दीर्घाणि(दीर्घाण्यष्टावादौ) स्युरत्यतिजगती ।
अन्त्य दीर्घं सा विज्ञेया मदनवती ॥१६३॥

यथा ।
एसो मेहो णाणद (द्)तो सबइ(सलक)णिहो ।
सद्दारन्तो विज्जुज्जोआ भमदि वुदम ॥१६४॥

[एव मेघो नानदन्नजकनिभ
सदारयन् विद्युज्ज्योत्स्नो भ्रमति द्रुतम् ॥]
पञ्च त्वाद(दौ) यत्र हि गुर्वष्टमनवमम ।
अन्त्य दीर्घं सा खलु नाम्ना विमलगति ॥
यथा ।
एसो अस असुसहरसो पवणसखो
जालालोलो धूमसमिद्धो भमदि वणे ॥
[एषोऽस्त्यन्तसुमहस्र पवनसख ।
ज्वालालोलो धूमसमिद्धो भ्रमति वने ॥]

---

एव तावद् द्वदशाक्षरासु—सामान्यविधिमुक्त्वा विशेषमाह अन्त्याविरिति ।
प्रतिपूरय तादिवृत्तेन द्वादशाक्षरमार्ग्येकोनविंशत्यक्षर द्ग्गासु च्छ द इत्यर्थ ॥१६०॥

पादचतुर्थे पञ्चमषष्ठे नवदशमे
    पादविभक्तौ यत्र तु दीर्घं नियतकृते(तम्) ।
तत्र तु बोध्या पञ्चदशाख्ये भुवि हि सदा
    भूतलतन्वी वृत्तविधानेत्यभिविहिता ॥१६५॥

यथा ।
पादपसंडं कम्पय(व)माणो पडु(हु)णिणदो
    सेलतडेसु पक्खलमाणो विसमगदि ।
रेणुसमूहं उद्धयमाणो रणकविलो
    वायदि वादो चण्डपवाही गगणयले ॥१६६॥

[पादपखण्डं कम्पयमानो पटुनिनदः
    शैलतटेषु प्रस्खलमानो विषमगतिः ।
रेणुसमूहमुद्धरमाणोऽरुणकपिलो
    वाति वातो चण्डप्रवाही गगनतले ॥
[पादचतुर्थं पञ्चमषष्ठे नवदशमे ।
यन्त्यमथो दीर्घाणि तु स्यात् कुसुमवती ॥ इत्यन्ये ।]

पादचतुर्थैकसप्तममन्त्यं दशमपरे ।
यत्र गुरूण्यथ सा सुकुमारेत्यभिगदिता ॥१६७॥

यथा ।
मेहसमूहणिबद्धविदाण जलभरिदम्(भरिदम्) ।
सोह(इ) इंदधणुज्जलमज्झं गगणयलम् ॥१६८॥

यदि खलु पञ्चममष्टममन्त्यं दशमपरे ।
चरणगतानि गुरूणि तु माला भवति तदा ॥१६९॥

---

[मेघसमूहनिबद्धवितानं जलभरितम् ।
शोभत इन्द्रधनुरुज्ज्वलमध्य गगनतलम् ॥]

एतदिबति । द्रुतध्रुवा । तत्र जगत्या प्रभृति वृत्तानि दृश्यन्ते । दीर्घाण्यष्टादित्यादि ।
    मत्रयसा विक्रान्ता मद्यसनगाश्च भवनिका तन्वी ।

ममसभसा. सुकुमारा त्रिभतनगा—
विभूवण्णो पीणामान्तो णाविणमो । एसो मेहो णाणाहन्तो भव(स)कणि(णि)हो ।
पादपसंडं कम्पयमाणो पड्डणिणदो । मेहसमूहणिबद्धविदाणं जलभरिदम् ॥१६९-
२६८॥

यथा

प्रसलिरवाहदपावपकूडो धरणिधरो
      पगलिग्रकंदरनिज्झरसानु(नू)रवो(व) मुह्व(ह)लो ।
विवहविहगमसेविग्रकुंजो जहजम्वदो
      परहुग्रचपग्रगोग्रसरणाहो हसदि विग्र ॥१७०॥

[प्रशनिरवाहतपादपकूटो धरणिधर
      प्रगलितकन्दरनिर्झरसानू रवमुखरः ।
विविधविहङ्गमसेवितकुञ्जो यतजलदः
      परभृतचम्पकगीतसमायो हसतीव ॥]

तृतीयं च चतुर्थं च सप्तमं चाष्टमं तथा ।
नवमं द्वादशं चैव नेधनं सत्रयोदशम् ॥१७१॥

यत्र दीर्घाणि पादे तु ध्रु (धृ)तिच्छन्दःसमाश्रये ।
सा ज्ञेया गीतकविधौ ध्रुवा स्खलितविक्रमा ॥२७२॥

दिवसं सूरसणाहं से विग्र चन्दो कुमुदवणे
      उदिदो दीसदि एमो दप्पणबिम्बाकिदिसाविसी ।
गहणे मेहविमुक्ले(क्के) सोम्मसहाग्रो रतिसुहगो
      बहुल विकिखरमाणो सारदो(द)जोह्लं वजति दुदम् ॥१७३॥

[दिवसं सूर्यसनाथं से इव चन्द्र कुमुदवने
      उदितो दृश्यत एष दर्पणबिम्बाकृतिसदृशः ।
गगने मेघविमुक्ते सोऽम्बुसहायो रतिसुभगो
      बहुलं विकिरन् शारदज्योत्स्ना व्रजति द्रुतम् ॥]

पञ्चमं ह्यष्टमं यत्र त्रयोदशमथापि च ।
गुरूण्यष्टादशं चैव द्रुता वै चपला तु सा ॥१७४॥

यथा ।

पवणविध(धु)णिदपङ्कुज(अ)कुसुम सरसि जल
      कमलिणिवत्तपसाहिवमुमह फलिहगिह ।
वलदतरतविदाहिदकुसुम चलितगद
      कमभिदविहङ्गविलग्गिपदमुहल हसदि विग्र ॥१७५॥

[पवनविघूर्णिततपङ्कजकुसुमं सरसि जलं
कमलिनीपत्रप्रसाधितसुभगं स्फटिकनिभम् ।
चलतरङ्गविदारितकुसुम चलितगत-
क्षुभितविहङ्गविकम्पितमुकुलं हसतीव ॥]
पादे पञ्चममन्त्ये(न्त्यं) च दीर्घं द्वादशमेव च ।
यदाऽतिधृत्या सा ज्ञेया चपला मुखसंहिता ॥१७६॥

यथा
पिअसहि आइगमणदले चपलतरमुहो ।
पविचरदे णवसुरभिमुहो सुरवरयुवदो ॥१७७॥

[प्रियसखि आयातगगनतले चपलतरमुखो ।
प्रविचरति नवसुरभिमुखो सुरवरयुवतिः ॥]
एता ह्यष्टौ [1]परित्याज्या ध्रुवाणां मूलजातयः ।
ग्राम्यो विनिःसृतास्त्वन्या मुग्मौजा विषमा पराः ॥१७८॥

एतास्तु जातयो ज्ञेया वृत्तानां वृत्तसंश्रयाः ।
देवानां पार्थिवानां च ह्यौपम्यगुणसंश्रया (भवाः) ॥१७९॥

---

—(नज)जयनलगा माला ।
स्खलिता सभमसभछयुजि चपला नजननभसौ च ।
मुखचपला नजनसननगा अष्टावेतानि द्रुतविधौ प्रयोज्यानि ॥

पवणविग्घादवपाददकङ्को घरणिघरो । गहणे मेहविमुक्के सोम्महासो रतिमुहयो-
(णो) ? पवणविघुण्णिदपंकअकुसुमं सरसिजक(ल)म् । पविचरदे णवसुरभिमुहो सुर-
वरयुवदो ॥१६६-१७७॥

सर्वत्रात्र प्रतीयस्या(ता)प्रभृति(ऽभृदिति)भासा विषयं निरूपयिष्यंस्तद्यो
विषयान्तरेभ्य एव द्रुतध्रुवा कल्पयेदिति दर्शयति ।

एता ह्यष्टौ परित्यज्य ध्रुवाणां मूलजातय. ।
ग्राम्यो विनिःसृतास्चान्या युग्मौजविषमाः पराः ॥

---

१. KSS तु विज्ञेया ।

सप्तदशाष्टादशकैरेकादशपञ्चमाष्टमतृतीयैः ।
गुरुभिर्यस्याः पाद सा(सा) ज्ञेमाऽऽक्षिप्तिका नाम ॥१८०॥

गुर्वादिरथ लघ्वादिर्युग्मौजावयवेतरा ।
एतद्वृत्तगता या तु विज्ञेया सा ध्रुवा द्रुता ॥१८१॥

---

इति । *यावता जगत्याद्यवतिकृत्यन्ते च्छन्दसि विक्रान्ताद्या मुख्यचपलान्ता* षष्टो दर्शिता. । ता: परित्यज्य वर्जयित्वा परा इत्येता वक्ष्यमाणविषयव्यतिरिक्तविषया-न्तरागता प्रव्या एता द्रुतध्रुवाणां मूलजातयः योनि. इति शेषः । कथमन्या........ त्याह । प्राक्यो विनिःसृता इति । कथमित्येवं युग्मौजत्वेन विषमाः । एतदुक्तं भवति । एतास्तावदुत्तमविषये षष्टो तन्मध्यमाधमेषु योज्या. । एतदीयैरेव तु यथेच्छं पादो(दै)र्मिलितैर्विषमवृत्तस्वभावात् मध्यमाधमविषयाः कल्प्या इति ॥१७८॥

मन्यासामष्टाना कोऽसौ विषय इत्याह—

एतास्तु जातयो ज्ञेया द्रुतानां वृत्तसंश्रयाः ।
देवानां पार्थिवानां च । इति ।

उत्तमानामिति वृत्तवशादरार्थानुसरणरथगमनादिद्रुतक्रियावतामेव विक्रान्ताद्यष्टौ द्रुतध्रुवा इति । देवराविवाश्योऽधिका वर्ण्यन्ते ध्रुवास्वित्याह । औपम्यगुणसम्भवाः । साधर्म्यधर्मेण सम्भवो यासां ता. । सत्त्व सुरगजहंसादि तत्र वर्ण्यमिति यावत् । देवपार्थिवप्रहणं प्रकरणात् मालविकादे(मालविकाग्निमित्रम्) सागरिकादे(रत्ना-वली)श्चोत्तमत्वेऽपि नियमार्थम् ॥१७९॥

मथ मध्यमाधमविषयसाधारिणीं द्रुतध्रुवामाह । सप्तदशाष्टादशकैरिति । सप्तदशाक्षरेयम् । मध्यमाधमसाधारण्येन मुनिनोदाहरणं नास्या दत्तम् । उदाहरणाद्वि विषयसंकोचशङ्का स्यादिति । मगजयनलमा मध्यमाधमयोर्द्रुतविषया साधारणी भवति प(प्र)वणा । आक्षिप्तिकेति प्रकरणादेतद्ध्रुवेत्यर्थ. ॥१८०॥

अथाऽस्या बहुविषयत्वमेव यादृच्छिके तालयोजनया प्रकटयति ।

गुर्वादिरथ लघ्वादिर्युग्मौजावयवेतरा ।
एतद्द्रुतगता या तु विज्ञेया सा द्रुता ध्रुवा ॥ इति ।

आदौ द्वे गुरु(द्वे)निधने त्रीणि यस्याः पादेष्वथ चतुर्गुरूणियस्या
(च गुरूणि) स्युः।
ज्ञेया वृत्ते खलु बृहतीसस्या(स्ये) नाम्ना सा कथित(नक)लता ॥
यथा।
एसो मेहो सिहरिनि(णि)हो नीलो
धारापातैरतिमग्रगो(दो) भूमिम् ।
आपूरन्तो पदुतरसम्नादो
तोयापुण्णे गगनतले भ्रामादि ॥
[एष मेघः शिखरिनभो नीलो
धारापातैरतिमदो भूमिम् ।
आपूरयन् पटुतरसन्नादो
तोयापूर्णे गगनतले भ्रमाति ॥]
आदौ द्वाव निधने त्रीणि पादेऽप यदि गुरूणि स्यु.।
ज्ञेया खलु बृहती मित्य नाम्ना कनकलताऽऽक्षिप्तिका ॥१८२॥
यथा।
एसो गगणदळे मेहो
भीमो भग्रजणणो दिट्ठो।
भूमिं नवजलधाराहिं
सिञ्चन्तो(न्) भुवणतल जादि ॥१८३॥
[सिचेविय सहि गज्जन्तो]
[एष गगनतले मेघो भीमो भयजननो दृष्टः।
भूमिं नवजलधाराभि. सिञ्चन् भुवनतलं याति [सिञ्चयित्वा सखि
गर्जन्] ॥]

---

तालगतिरिहोच्यते। ध्रुवाबन्धस्यैव ग्रहचक्रस्य तालस्य गत्यनुबन्धस्य गीत-नृत्तवाद्यादिक्रिया(प्र)बन्धस्य (इति) विकटा शङ्का न (सम्प्रहनीया)। एतदुक्तं भवति। द्रुतविषयो गुर्वादिलेखादिः। अथशब्दात्तन्मध्यतो वा त्र्यश्चतुरस्रो मिश्रो वा यस्तालविशेष स एकस्मिस्तुक्तलक्षणे सप्तदशाक्षरे वृत्ते योज्यमि(इ)ति। ताल-भेदश्च लोके भङ्गलयादिर्य प्रसिद्ध सोऽपि मुनेरेव सम्मत इति स्फुट स्वावसरे दर्शयिष्याम। ॥१८१॥

यदि खलु पञ्चममध्ये चरणविधौ च गुरूणि भवन्ति तु ।
सा शशिलेखा भुवि बृहती प्रथिता सा ॥१८४॥

यथा ।

गिरिवर(च)रवा(वारण)रूपं खुभिदमहण्णवसहस्सपरणादम्
(वणादम्) ।
पडु(डु)पवणेण विधूदं भमदि बलाहअजूह(थ)म् ॥१८५॥

[गिरिवरवारणरूप क्षुभितमहार्णवनादम् ।
पटुपवनेन विधूत भ्रमति बलाहकयूथम् ॥]
यदि तु खलु षष्ठमन्त्य(न्त्ये) गुरु(रूणि) भवति(न्ति) पादयोगे ।
इति विगदितादिवृत्ते सततमविचालिता सा ॥१८६॥

यथा ।

ससि(सति)किरणलम्बहारा उडुगणक(कि)दावदंसा ।
गहगणक(कि)दङ्कसोहा जुवदि विभ(य) भादि राई ॥१८७॥
[शशिकिरणलम्बहारा उडुगणकृतावतंसा ।
ग्रहगणकृताङ्कशोभा युवतिरिव भाति रात्रि ॥]
यदि खलु चरणविधौ लघुवसुगरुकमिदम् ।
भवति हि खलु बृहती शशिगुणनिकरकृता ॥१८८॥

यथा ।

उडु(उडु)गणकुसुमवदी गहगणकिदतिळका ।
रजणि( णि )करमभिमुखी च यदि( वजदि ) विभ( य ) मधु
णिसा ॥१८९॥

[उडुगणकुसुमवती ग्रहगणकृततिलका ।
रजनिकरमभिमुखी व्रजतीवासु निशा ॥]
चरणार्यादौ गुरु निधन ह्रस्वानि स्युर्यदि च तथा ।
भान्ना ज्ञेया भवति हि सा सिंहाक्रान्ता खलु बृहती ॥१९०॥

यथा ।

आकम्पन्तो गयन(ण)वळ विक्खेवन्तो धरणिदळम् ।
विज्जुज्जोदा धवविहवो एसो मेहो(हो)पावेचरिदो ॥१९१॥

[आकम्पयन् गगनतलं विक्षिपन् धरणीतलम् ।
विद्युज्ज्योत्स्नापविभव एष मेघः प्रविचरति ॥]
बृहत्या जातयो ह्येता विज्ञेया वं प्रवेशजाः ।
अत ऊर्ध्वं प्रवक्ष्यामि पङ्क्तिजातिविकल्पनम ॥१६२॥

आद्यचतुर्थे पर(ञ्चम)निधने यत्र गुरूणि प्रतिचरणम् ।
गीतविधाने भवति हि सा पङ्क्तिकृता वै धुरवयिता ॥१६३॥

यथा ।

पङ्कअसण्डे विमळजले सारससघे (केहि)समणुगदो ।
कुन्दणिकासो ससिधवळो हंसजुआणो परिब्भमिदो ॥१६४॥

[पङ्कजखण्डे विमलजले सारसकं समनुगत ॥
कुन्दनिकाशः शशिधवलो हंसयुवा परिभ्रमित ॥]
दीर्घाणि ह्याद्य निधनगत चौणि स्युर्यदि चरणविधौ ।
सा ज्ञेया कुसुमसमुदिता पङ्क्तिश्चेदपि च कुमुदिनी ॥१६५॥

यथा ।

वाजन्तो कुसुमसमुदितो वाव(स)न्तो कुसुमसुरहिणो ।
सोस्सो पिअरहिअजण सपत्तो अनु णवअ(स)रदो ॥१६६॥

[वीजयन्ती कुसुमसमुदिता वासयन्ती कुसुमसुरभि ।
शोषयन्ती प्रियरहितजन सम्प्राप्ताऽद्य नवशरद् ॥]
सप्तममाद्यचतुर्थयुत यत्र हि नैधनमेव गुरु ।
पादविधौ यदि पङ्क्तिकृता सा कथिता खलु दोधकवत् ॥१६७॥

यथा ।

एस समुण्णअमम्ब(म्ब)रके मेहरव सुणिऊण गओ ।
रोसवसेण समुज्जळिदो हिण्डति काणणए कुविदो ॥१६८॥

[एष समुन्नतमम्बरे मेघरवं श्रुत्वा गज ।
रोषवशेन समुज्ज्वलितो हिण्डति कानने कुपित ॥]
त्रीण्याद्यौ तु गुरूणि यदा स्युः षष्ठ चान्त्यमुपान्त्यतम च ।
सा ज्ञेया खलु पादविधाने पङ्क्ति सा तु कुतोद्धतनाम्ना ॥१६९॥

यथा ।

अब्भ अम्बुधरेहिं(हरेइ)पिणद्ध विज्जुज्जोअसणतरदीवम् ।
वादाघूण्णिदकम्पिददन्त उम्मा(म्मा)देदिव हत्थिसमूहम् ॥२००॥

[अभ्रमम्बुधरैः पिनद्धं विद्युद्योतसनान्तरदीपम् ।
वाताघूर्णितकम्पितदन्तमुन्माद्यतीव हस्तिसमूहम् ॥]
षष्ठचतुर्थे नैधनके न(च) पञ्चमषष्ठे यत्र तु दीर्घे ।
वृत्तसमुत्था सङ्कथिता सा पङ्क्तिरथैवा गीतकबन्धे ॥२०१॥

यथा ।

मेहसमूह पीणवळाअ विज्जु(ज्जु)पळि(ळी)अ(व) पेक्खिअ एसो ।
उट्ठिदरोसो भीमणिणादो धावदि हत्थी रववणम्मि ॥२०२॥

[मेघसमूहं पीनबलाकं विद्युत्प्रदीपं प्रेक्ष्य एष ।
उत्थितरोषो भीमनिनादो धावति हस्ती रववने ॥]
यदि लघु पञ्चममन्त्यं चरणविधावपि दीर्घं स्यात् ।
भवति तथाष्टमनन्ते(नवमे) विपुलभुजा भुवि सा ज्ञेया ॥२०३॥

यथा ।

जलहरणादसमुव्विग्गो पगळितगण्डमहाणादो ।
वणगहण कुविदो हत्थी सरभसगव्विदक यादि ॥२०४॥
[जलधरनादसमुद्विग्न प्रगलितगण्डमहानाद ।
वनगहन कुपितो हस्ती सरभसगर्वितक याति ॥]
एतास्तु जातय प्रोक्ता पङ्क्त्यामेव समासत ।
अत पर प्रवक्ष्यामि त्रिष्टुब्जातिविकल्पनम् ॥२०५॥

षष्ठावथिह यदि लघु गुरुणी नित्य निधनमपि च परत ।
वृत्ते कविभिरपि निगदिता त्रिष्टुप् चपलगतिरिह सदा ॥२०६॥

यथा ।

एदे सिविधरवरसहिदा भीमा पडुपडहसमरवा ।
गोळासिदसणकिदरसणा मेहा णहवळमभिपडिदा ॥२०७॥

[एते क्षितिधरधरसदृशा भीमाः पटुपटहसमरवाः ।
नीलासितखगकृतरशना मेघा नभस्तलमभिपतिताः ॥]
यदि खलु मध्ये त्वथ गुरुणी पुनरपि चान्त्यं गुरु चरणे ।
भवति हि नित्य वचिरमुखी कमलबलाक्षीति हि कथिता ॥२०८॥

यथा ।

परिघुलमाणो किरणपड अभिरुहमाणो उदयगिरिम् ।
उडुगणबन्धू कुमुदसहो उदयति चन्दो गगणदले ॥२०९॥
[परिघूर्णमानः किरणपटमभिरोहमाण उदयगिरिम् ।
उडुगणबन्धुः कुमुदसख उदयति चन्द्रो गगनतले ॥]
यदि खलु पञ्चमकाष्टमके पुनरपि चान्त्यमक(गत)गु गुरु ।
चरणविधाविह वृत्तविधौ भवति हि सा द्रुतपादगतिः ॥२१०॥

यथा ।

गगन(ल)तलगणहिदलणो किरणसहस्सविहूसिदओ ।
विहुणिअमेहपड तमसु विसद ससी गअणे विउलम् ॥२११॥

गगनतलाङ्गणहिण्डनक किरणसहस्रविभूषितः ।
विधूनितमेघपटं तमसि विशति शशी गगने विपुलम् ॥]
यदि खलु षष्ठ गुरुयुगलं निधनगतं चाप्यथ गुरुकम् ।
भवति हि सैव चरणविधौ मुखचपला त्रिष्टु(ब)भिरचिता ॥
यथा ।
कुसुमसुगन्धी सुभपवणो विचरदि रम्मे णलिणिवणे ।
तरुवरळासे पमदवणे बहुकुसुमे रिसण्णासरदे ॥
[कुसुमसुगन्धी सुखपवनो विचरति रम्ये नलिनीवने ।
तरुवरलास्ये प्रमदवने बहुकुसुमेऽथवा भवशरदि ॥]
तृतीयमन्त्यं चतुर्थं च पञ्चमं षष्ठमेव च ।
गुरुणी(रूणि) त्रिष्टुभे पादे यत्र सा विमला यथा ॥२१२॥

यथा ।
कुसुमाकिण्णे णिम्मळसळिळे णळिणीसडे छप्पअमुहळे ।
सबहुमग्गे सारसमुदिते समदो हत्थो सोम(एव)विचरिदो ॥२१३॥

[कुसुमाकीर्णे निर्मलसलिले नलिनीखण्डे षट्पदमुखरे ।
सवधूमध्ये सारसमुदिते समदो हस्ती एष विचरति. ॥]
चतुर्थं पञ्चम पूर्वमन्त्योपान्त्ये तथैव च ।
गुरूणि त्रैष्टुभे पादे यत्र सा रुचिरा यथा ॥२१४॥

मेहविदारण अवधुणमाणो कम्पअमाणो सगअवणाहम् ।
तोअसमूहं अवकिरमाणो वाअदि वादो कुविद इवासु ॥२१५॥

[मेघवितानमवधूनयमानः कम्पयमान सकलवनानि ।
तोयसमूहमवकिरमाणो वाति वातः कुपित इवाशु ॥]
यदि खलु चरणे तु सप्तम पुनरपि नवम सनिधनम् ।
गुरु तदपरवक्त्रमुच्यते नियतमिति निदर्शन यथा ॥२१६॥

गिरितडविवरे विघुण्णिदो असणिघनरवेण कम्पअम् ।
अभिपददि धुव महीअळ पडुतरणिणा(ण)दो महारवो ॥२१७॥

[गिरितटविवरे विघूर्णितोऽशनिघनरवेण कम्पयन् ।
अभिपतति ध्रुत महीतल पटुतरनिनदो महारवः ॥]
त्रिष्टुभो जातयो ह्येता जगत्यास्तु निबोधत ।
षष्ठम नैधन चैव(नवम नैधने द्वे च) गुरूणि चरणे यदि ।
वृत्ते तु जगती सा तु ज्ञेया कमललोचना ॥२१८॥
यथा ।

---

पूर्वं बृहत्याद्या-अतिजगत्यन्तानि छन्दांसि त्रिविधाऽवकृष्टात्मद्रुतासह्ग्रहे दर्शितानि । अधुना तु द्रुतमुक्तादिविषयाणि तानि दर्श्यन्ते । आद्ये इति ।

अथ कनकलता तनया(भा) शशिलेखा नजया ह्यविचलिता नसया ।
मणिकुन्तो सिंहाक्रान्ता मभसा सुरदयिता भतनगि ।
कुमुदा मननगि दोधकविषया मत्रयगयुता मससगि चोद्धतिका ।
भमसगि पङ्क्तिरथा नजयगि विपुलभुजा चपलगतिस्तनौ नलगा ।
चप(कम)लाक्षी नज(य)नलया द्रुतगा नभजलया रुमनलगा विमला ।
रुचिरा भज(त)नगयुग्मा नौरलगापरवक्त्रा कमला नौससगी ।
अतिचपला नचतुर्मु (गा) नजनसगा मदकलिता ॥

दिअगणमुणिगणविव(णव)इढिअतेओ
पविततकिरणसहस्सपिणद्धो ।
विधुणिअतिमिरपडं जगदीवो
उदयति गगणदळे अचु सूरो ॥२१६॥

[द्विजगणमुनिगणवर्धिततेजाः
प्रविततकिरणसहस्रपिनद्धः ।
विधूनिततिमिरपटं जगद्दीप
उदयति गगनतले आशु सूर्यः ॥]

यदि खलु लघुगण इह निहित
यदि यदि गुरु नियतगतम् ।
भवति हि खलु गतिरतिचपला
त्वरितगतिरधिकमतिजगती ॥२२०॥

यथा ।
विधुणिअ जळधरमसिदपडं
दिअगणमुनिवरपरिपढिदो ।
उदअगिरिसिहरतटमुकुटे
विचरदि गगणतळमचु रवि ॥२२१॥

[विधूय जलधरमसितपटं
द्विजगणमुनिवरपरिपठितः ।
उदयगिरिशिखरतटमुकुटे
विचरति गगनतलमाशु रविः ॥]

यदि खलु पञ्चमनिधनगते द्वे चरणविधौ भवति(तो)हि गुरुणी तु ।
अतिजगती भुवि कथितगुणा सा भवकलितेव नियमितनामा(म्नी)
॥२२२॥

यथा ।
गगनतलगणसमिरहमाणो रअतमहागिरिसिहरहवो ।
रअतमओ विअ पिअकळसोसु पविचरिदो विअ[दि हि]णिखि
चन्दो ॥२२३॥

[गगनतलाङ्गणमभिरहन् रजतमहागिरिशिखरसरूपः।
रजतमय इव प्रियकलशोऽसौ प्रविचरितो वियति हि निशि चन्द्र] ॥
एतास्तु जातयो ज्ञेया प्रावेशिक्यो द्रुतास्तथा।
समवृत्तपदाना तु वर्धमान निबोधत ॥२२४॥

एतासो लक्षण पूर्वं सर्वमुक्त विधानतः।
प्रतिष्ठादि ययाच्छन्दः सम्यक् पदविभागतः ॥२२५॥

---

एता प्रावेशिक्यो द्रुतलयविषया ।
एसो गगणदळे मेहो । पडुपवणेण विधुदम् ।
ससिकिरणलम्बहारा । उडुगणकुसुमवदो ।
आकम्पन्तो गगणदळम् । पंकयसण्डे विमळजळे ।
सपतो(त्तो) प्रमु णवसरदो । मेहरव सुणिऊण गम्रो ।
प्रम्भ प्रम्बुहरेहि पिणद्धम् । पीणसमूहं पीणवल कम् ।
जलहरणावसमुब्भिण्णो । एवे क्खिविधरवरसविसा ।
परिपुण्णमाणो किरणपडम् । गगणतलंगणहिंडणप्रो ।
कुसुमाकिण्णे णिम्मळसळिळे । मेहविवाण प्रवधुणमाणो ।
गिरितडविवरे विघुण्णिदो । पवितदकिरणसहस्सपिणद्धो ।
विप्रगणमुनिवरपरिवन्दिदो । गगणतळगणमभिरहमाणो ।
॥१८२-२२३॥

एतदुपसंहरन् सहदिश शिष्याणां दर्शयति । एतास्तु जातयो ज्ञेयाः प्रावेशिक्यो द्रुता इति । एताः प्रावेशिकीनां जातयः । एतन्मध्यादेव चान्या यवि-वाङ्कयोऽप्रेक्षाद्(स्या म)या विश्रान्ताम्मुखपता । पा(दगता)न्यक्षराणि गृहीत्वा वृत्तान्तरं निर्वर्त्यते । तथा च विक्रान्तायाः । विण्णविज्जो(विज्जुवण्णो) पीमा प्रतो णाविगप्रो । (भ० मा० ३२ १६२) (विद्युद्वर्णं पीतान्तो नातिगत ) । इत्यत्रा-ष्ट(ष्ट)भिरक्षरैराद्यश्चतुर्भिर्वृत्तान्तरं कल्प्यम् । तदाह ज्ञेया इति । अन्यदधुना प्रतिजानीते । समवृत्तपदानां तु वर्धमानमिति । समवृत्तेषु ये पादास्तेषां क्रमेणाक्षरे वृद्धिं गते यद्रूपं तन्निबोधतेति । यानच् तद्द्वापरमभिदधद्वीप्सा सूचयति ॥२२४॥

तत्र चतुरक्षराणां या प्रतिष्ठायां प्रारभ्य जगत्यन्तमक्षरस्योत्तराधिक्येन वृद्धिरुदाहरणे दर्शिता । तत्रोष्णिग्गतं वर्धमानं त्र्यस्रे । अन्यच्चतुरस्रे । एवं यान्ये-

यथा प्रतिष्ठा ।
मेहरव णवसरदे ।
णिसम्मिअ कुद्धो भवइ गअवरो ॥२२६॥
[मेघरव नवशरदि निशम्य क्रुद्धो भवति गजवर ।]
सुप्रतिष्ठा ।
विज्जुकसाहि अभिहत व ।
रुदति व गगम पतमिअगहतारम् ॥२२७॥
[विद्युत्कशाभिरभिहतमिव ।
रुदतीव गगन प्रभ्रमितग्रहतारम ॥]
गायत्री ।
मेघरवघातुकर(वातुर)नटठगु(ग)हचन्दम सकर ।
रुवदि किम णहवळम्(स) ॥२२८॥
[मेघरवातुर नष्टग्रहचन्द्रक सकलम ।
रुदति किल नभ ॥]
उष्णिक् ।
फुल्लिअमअसण्डे सुरभिपवणहृदे ।
विअरदि पमदवणे हसो सअअरिपरिवुदो ॥२२९॥
[फुल्लसरखण्डे सुरभिपवनहृते ।
विचरति प्रमदवने हसः सहचरीपरिवृत ॥]
प्रथमान मयैव तु त्र्यक्षराणामपि कीर्तितम ।
पुनश्च चतुरक्षाणामेवमेव निबोधत ॥२३०॥
अनुष्टुप ।
ताराअघवसणाहो विकिरन्तो मेहपडम ।
किरणसहस्सविहूसिदो उदयदि एसो रअणिअरो ॥२३१॥
[ताराघवसनाथो विकिरन् मघपटम् ।
किरणसहस्रविभूषित उदयत्येष रजनिकर ॥]
बृहती ।
एसो सुमेरुवणत(क)म्मि दिव्व देवसिद्धपरिभोदो ।
सुरहिसुअधवणधारी पविअरदिवि णहयणहूतवासो ॥२३२॥

[एष सुमेरुवनकान्तो देवसिद्धपरिगीत ।
सुरभिसुगन्धवनचारी प्रविचरतीव नमोऽङ्गणदूतवात ॥]
पङ्क्तिः ।
पादपसण्ड कम्पयमाणो सुरहिसुअन्धसुवासिदओ ।
उपवणतरुगणलासगओ विअरदि वरतणु वणपवणो ॥२३३॥

[पादपषण्ड कम्पयमान सुरभिसुगन्धसुवासितकः ।
उपवनतरुगणलास्यगतो विचरति वरतनु वनपवनः ॥]
त्रिष्टुप् ।
कुमुदवनरस विहूसणओ विधुणिअतिमिरपड गअणे ।
उदयगिरिसिहरमहिरुहन्तो रअणिअरो उदयदि विमळकरो ॥२३४॥

[कुमुदवनस्य विभूषणो विधूनिततिमिरपट गगने ।
उदयगिरिशिखरमधिरोहन् रजनिकर उदयति विमलकरः ॥]
जगती ।
दिअवरमुणिगणसंथुदओ तविअसुवण्णपिण्डसमदेहओ ।
गअणतलगअणमहिरुहमाणो विअरदि एस दिवसकरो ॥२३५॥

[द्विजवरमुनिगणसंस्तुतकस्तप्तसुवर्णपिण्डसमदेह ।
गगनतलाङ्गणमधिरोहन् विचरति एष दिवसकर ॥]
एतास्तु जातयो ज्ञेयाश्चतुरश्रविनिर्मिता ।
अत ऊर्ध्वं प्रवक्ष्यामि गणमात्राविकल्पनम् ॥२३६॥

त्र्यश्रायां तु(मात्रा तु)गणाः पञ्च सन्निपातो विधीयते ।
अष्टौ च चतुरश्रायां सन्निपातो भवेत्सदा ॥२३७॥

---

तानि वर्णवृत्तान्युक्तानि तेषां तालयोजनां त्रिभिरभिधाय मात्राविभागो वक्तव्य इति तमाह । अत ऊर्ध्वमिति । गणश्चतुर्मात्रः । मात्राग्रहणं द्व्यत्र्यादिप्रहाणम् । गणद्वारेण विधानविभागपरिकल्पनं वर्णवृत्तानामेव योजनं वक्ष्यामीति ॥२२४-२३६॥

तत्र त्र्यश्रायामात्मजाते पञ्च गणाश्चतुर्मात्राः । सन्निपाताः परिच्छेद । चतुरश्रायां अष्टौ ॥२३७॥

द्वौ पादौ सन्निपातश्च ध्रुवाणां परिकीर्तिता ।
द्रुतं च शीर्षकं चैव हित्वाऽन्यानि भवन्ति वै ॥२३८॥

अक्षरपिण्डस्त्र्यश्रे पञ्चादिर्नवपरश्च विज्ञेयः ।
षष्ठादिश्चतुरश्रे त्रयोदशपरस्तु विज्ञेयः ॥२३९॥

सर्वगुरुश्चाष्टादिस्त्रयोदशपरश्च सर्वलघु ॥
एष त्र्य(स्व)क्षरपिण्डो विज्ञेयो वै ध्रुवाविधानज्ञैः ॥२४०॥

---

तत्र पञ्चाक्षरा सुप्रतिष्ठा । तदवसाने त्र्यश्रभेदो दर्शितः । तत्र सर्वगुरौ पादद्वये दश गुरवो भवन्ति । त एव मात्राविभागेन पञ्चगणा इति पादद्वये ताल समाप्तिः । तदाह । द्वौ पादौ सन्निपातश्च ध्रुवाणामिति । अत्रापवादमाह । द्रुतं च शीर्षकं हित्वेति । तयोस्तु गणविधिरन्य एव वक्ष्यते । एवमेतद् गम्यम् । यान्यन्यानि वृत्तानि तान्यनेन क्रमेण भवन्ति । एवं वर्णवृत्तेषु मात्राविभागेन ताल योजने दिग्दर्शनं कृतम् । न त्विदमेव तावदेवेति मन्तव्यम् । तेनाष्टाक्षरायामनुष्टुभि सर्वगुरुणा पादद्वये गणाष्टकम् । भवति तावद् त्रिचतुरश्रताल एव गुरुलघुव्यति-कीर्णेषु वृत्तेषु गणविभागकल्पनया पादे वा द्वये वा त्र्यश्रचतुरश्रयोजनं कल्प्यम् । तद्यथा । वसन्ततिलक (भ० ना० १५ ८७) मात्राविभागे पञ्चगणमिति त्र्यश्र ॥२३८॥

एवं विभागेन तालच्छन्द वर्णविभागेनैवाह । अक्षरपिण्डस्त्र्यश्रे पञ्चा दिर्नवपर इति । बृहत्य त इति यावत् । षष्ठादिश्चतुरश्रे त्रयोदशपर इति । अनुष्टुभो जगत्यन्त ॥२३९॥

ननु यदा पञ्चाक्षराणि त्र्यश्र तालच्छन्दस्तदा कीदृग् गुरुलघुविभाग इत्याह । सर्वगुरुश्चाष्टादौ(दिरि)त्याह । पञ्चशब्देन पञ्चकोऽक्षरपिण्ड सर्वगुरुः । तेन देव वन्दे शर्वं त्वामिति त्रिकले ताल । अन्त्यकला हि विश्रान्त्या गुरुणैकेनैव । पर इति । नवकपिण्डो य पर सर्वलघु । जय जय शशिमुकुट(ट) । तृतीया कला ह्रस्वेनैव विश्रान्त्या । चतुरश्रे तु गौरीदेहार्धम् तावद् वन्दे यावत् जय जय भुवननत शशिधर । एतदन्तरालमिन्त्यमेव गुरुलघुविभागेनोह्य । यथा त्र्यश्र षडक्षरे द्वौ लघू चत्वारो गुरवः . मां त्वामिति । एतन्निगमयति । एष त्र्यक्षरपिण्ड इति । द्रुत शीर्षक च हित्वेति तद्विषय रूपा तर सूचितम् ॥२४०॥

गणमात्रांशविकल्पं व्याख्यास्यामि द्रुतायास्त(स्तु)।
अर्धषष्ठगणै:(ण)पादै:(द:) सन्निपातो द्रुतास्वथ ॥२४१॥

मात्रा द्वाविंशतिश्चैव गुरुलघ्वक्षराऽन्विताः।
शीर्षकाणामनियमो भवेत् पादविधानतः ॥२४२॥

नानावृत्तसमुत्पन्नं कुर्याद्धि शीर्षकं बुधः।
गुर्वादिरथ लघ्वादिर्युग्म सर्वलघुस्तथा ॥२४३॥

चतुर्मात्रा(त्रो) गणो ज्ञेयः पूर्वस्तु द्वोविकल्पितः।
अर्धाष्टगणा पादाः शीर्षकस्य भवन्ति वै ॥२४४॥

---

तत्र द्रुतविधिं प्रतिजानीते।

गणमात्रांशविकल्पं व्याख्यास्यामि द्रुतायास्तु।

अर्धषष्ठगण इति।

द्रुतलये बहूनां वर्णानां गीत्या ग्रासः कार्य इत्यर्धगणोऽधिको भवति। तेन त्र्यश्रायां द्रुतध्रुवायां सार्धपञ्चगणाः कार्याः ॥२४१॥

अत्र द्वाविंशतिर्मात्रा भवन्ति प्रतिगणं चतस्र इति कल्पनया। गुरुलघुनिवेश-स्तु पादच्छिन्नकस्थानमात्रम्। द्रुतायामर्धाधिक्याभिधानेन चतुरश्रद्रुताया सार्धा अष्टौ गणा इति दर्शितमेव भवति ॥२४२॥

एवं द्रुतानां विधिमुक्त्वा शीर्षकाणामाह। नानावृत्तसमुत्पन्नः(न्नं)कुर्याद्धि शीर्षकमिति। शीर्षकं ध्रुवोचितं वृत्तशीर्षकं नानवृत्तेभ्यः समुत्पन्नमुक्तपूर्वेभ्यो वृत्तेभ्यो गणविभागौचित्येन कल्पनमिति यावत्। तत्र च तालविधिमाह।

गुर्वादिरथ लघ्वादिर्युग्म सर्वलघुस्तथा।

इति शीर्षकाणामुक्तभविषये विनियोग इति युग्म एव चच्चत्पुटः। चतुरष्टषोडशात्मक-भेदास्त्रयः। तथेति। तेन वृत्तप्रकारेण योज्यम्। अन्येन चच्चत्पुटस्य कलापाद-(दि)वैचित्र्ये ये प्रभेदा भवन्ति तेषु दिग् दर्शिता। तदाह। गुर्वादिरिति। प्रथम-प्रस्तारभेदः। तथा लघ्वादि। प्रस्तारान्तरप्रकारः। सर्वलघुरिति। सर्वान्त्यभेदेन प्रस्तारसमाप्तिरिति विधुनतया......कोहलादिप्रदर्शितमिति भवति ॥२४३॥

एवं तालविधिप्रस्तार

गुर्वादिरथ लघ्वादिर्युग्म- सर्वलघुस्तथा।

चतुर्मात्राश्च विज्ञेया युग्मौजाक्षरकैः पदैः ।
शीर्षकस्यैकविंशत्या षड्विंशतिपरस्तथा ॥२४५॥

अक्षराणां भवेत् पिण्डः पादे ह्येकत्र निश्चयात् ।
युग्मा ओजा मिश्रा आदौ कार्या गणास्तु चत्वारः ।
नियतं शीर्षविधाने पश्चाल्लघुसंचय कार्यः ॥२४६॥

---

इत्यनेनाभिधाय मात्रावृत्तसमुत्पन्नं शीर्षकं कुर्यादिति यदुक्तं तद्गणविभागेन सामान्येन निर्णेतुं चतुर्मात्रो गण इति गणस्वरूपाभिधानपूर्वकमाह । अर्थाष्टमगणाः पादाः शीर्षकस्येति । एवं च गणानामेव प्राधान्यं न तु वर्णानामिति दर्शयति ॥२४४॥

युग्मौजाक्षरकैः पदैरिति । युग्मानि सामान्योजानि विषमाणि येषु सन्ति ते । मत्वर्थीयष्ठन् । पदशब्देन पादः । एतदुक्तं भवति । अक्षराणि समानि विषमाणि वा एकादशप्रभृतीनि चतुर्मात्रा गणा योजयितव्या इत्यवधातव्यमिति । अथ शीर्षके वर्णसंख्याविषयं सामान्यलक्षणमाह । शीर्षकस्यैकविंशत्या षड्विंशतिपर इति । शीर्षकस्यैकत्र पादे अक्षरसंख्या कर्तव्या । एषा यदि परतस्तथा कार्या माहुरे । एकविंशत्येति लक्षणे तृतीया ॥२४५॥

निश्चयादिति । एतावानेव परवान् नियम इत्यर्थः । तेन सर्वलघुत्वे षड्गणा मात्रा द्वयाधिका इत्युक्तं भवति ।

अथात्रैव विशेषमाह ।

युग्मा ओजा मिश्रा आदौ कार्या गणास्तु चत्वारः ।
(नियतं शीर्षविधाने) पश्चाल्लघुसंचयः कार्यः ॥

इति । अक्षरपिण्डविषयमेतत् । तेनादौ चतुर्मात्राश्चत्वारो युग्मा गुरुद्वयलघुचतुष्टयरूपाः । ओजा द्विलघुत्रयरूपा । मिश्ररूपा... ..नयत इत्ययमक्षरपिण्ड परिपूरयितव्य इति । वक्ष्यमाण मत्ताक्रीडादि (भ० ना० ३२ २६८) विषयमिदमिति केचित् । युग्मौजमिश्रत्व तालकृतम् । तच्च समुदायस्य शीर्षके । तथोत्तमविषये तु युग्मत्वमन्यत्वयविषयमिति केचित् । उदाहरणम् । भगवन् परमशिवत्वां वन्दे सपदि । इति ॥२४६॥

त्रीणि गणा यस्य मुखे त्रीण्येव हि यस्य चावसानानि ।
मध्ये चेद् गुरुणी द्वे तच्चपलमिति ॥

त्रीणि गणा यस्य मुखे त्रीण्येव हि यस्य चावसानानि ।
मध्ये चेद् गुरुणी द्वे तच्चपलं शीर्षकं भवति ॥२४७॥

पूर्वार्धेऽथ(र्वे ह्यर्धे) चतुर्ह्रस्वा मिश्रा गणास्तु चत्वारः ।
पादे भवन्ति नियतं पश्चाल्लघुसञ्चयं ज्ञेयं ॥२४८॥

एकद्विकल(ल) त्रिकला च(श्च)तुष्कलाः षट्कलास्तथो(तोऽ)-
ष्टकला(:) ।
कार्या ध्रुवाविधाने प्रासादिकयन्तराक्षेपे ॥२४९॥

न्यासे विरामस्त्रिकलश्चतुरस्रे चतुष्कलः ।
प्रावेशिक्या ध्रुवायास्तु नैष्क्रामिक्यास्तथैव च ॥२५०॥

---

अवसानापेक्षया नपुंसकत्वम् । अन्ते निर्वहन्तीत्याशयेन सामान्योपक्रमात् प्रथम-मेतेन निर्देशः । यतिश्च प्राप्या । अनन्तरपिण्डविषयमेवोदाहरणम् । शिव तव पुरमिह यन्ते सकलजनहृदयहृत मिति । द्रुतेऽपि यथा पाद शीर्षकस्य ॥२४७॥

अस्यैव पूर्वस्यामिश्रणेन भेदान्तरमाह । पूर्वे ह्यर्धे इति । चतुर्ह्रस्वाश्चतु-र्मिश्राश्चत्वारः पूर्वेऽर्धे । मिश्रा इति । मन्भवेद् ततो लघु इत्यादौ पादद्वये लक्षणमित्य-र्थिमस्तु पादद्वये य(न)स्त्र यदुक्तं त्रीणि गणा यस्येति कृतलक्षणं योऽयम् । पाद इति जातौ । पादयोरिति यावत् । एकवचनानुरोधाद् त्रिपदीय वृत्तजातिरिति केचित् ॥२४८॥

अथात्र तालविधिवैचित्र्यमाह—

एकद्विकला(ल) त्रिकलाश्चतुष्कला षट्कलास्तथा(तोऽ)ष्टकलाः ।

इति । प्रासादिकी नैष्क्रामिकीत्येवोलक्षिते ध्रुवाविधाने त्रिचतुःषडष्टकला क्रियन्ते । तत्प्रकारेण एककलद्विकलौ यौ विधी उक्तौ तदनुसारेणैककला कार्या । एककलानु-सारश्च यथाक्षरविधिना विचित्ररूप इति प्लुतगुरुलघुद्रुतास्मेत्युक्तं भवति । एककला-प्रस्तारात् पञ्चद्विकलो विधिः । अत एव चतुष्कलं पुनर्नोक्तं । द्विकलप्रस्तारस्य तदीयस्य लाभात् प्रासापादिभेदस्य चानुपयोगात् । अनेन प्रावेशिकीनैष्क्रामिक्योरेव गुर्वात्मा प्रस्तार इत्युक्तं भवति । दीपकप्रकरणेऽपि प्रसङ्गादयुग्मतालोऽपि (प्रति-पादितः) ॥२४९॥

अथ प्रावेशिकीनैष्क्रामिक्योर्वक्तव्यशेषमाह । न्यासे विरामस्त्रिकल इति । समस्तविश्रान्तितालान्ते विरामः कार्यः । न तु मध्ये (इति) तात्पर्यम् ॥२५०॥

विरामो द्विकलोऽप्य(त्य)न्तमन्तरायाः समासतः ।
पादान्ते द्विविरामस्तु क्षिप्तायाश्च प्रकीर्तित ।
स्थितायाश्च तथा ह्यर्ये प्रासादिवयास्तथैव च ॥२५१॥

कलाकलार्धयोगेन गुरुलघ्वक्षरान्विता ।
त्रयो ध्रुवाणां विज्ञेयाः संयोगा वृत्तसंश्रयाः ।
सर्वदीर्घः सर्वलघुर्गुरुह्रस्वाक्षरस्तथा ॥२५२॥

गुरुप्राया स्थिता कार्या लघुप्राया द्रुता तथा ।
गुरुलघ्वक्षरप्राया प्रासादिवयन्तरा तथा ॥२५३॥

---

अथान्यासु विरामनियममाह । विरामो द्विकल इति । अन्तरघ्रुवाया पद-समाप्ती कलाद्वयपरिमाणासकारवैचित्र्येण वा तूष्णीकतया विश्रान्ति कार्या । अत्यन्तमिति ततोऽधिकेत्यर्थं । तुच्चार्थे । आक्षेपिकया अप्येवमेव । द्विविराम इति । द्विकलो विराम इति मध्यमपदलोपे द्विविराम इति । स्थितायाः प्रासादिवयाश्च पादद्वये समाप्ते तावती विश्रान्तिः । न तु त्रिपादमिति यावत् ॥२५१॥

अथ वृत्तविभागेऽपि यथाक्षरस्थित्या तालवैचित्र्यमस्तीति वर्णयितुमाह—

कलाकलार्धयोगेन गुरुलघ्वक्षरान्विता( ) ।

इति । कलासहितं कलार्धं प्लुत कला च गुरुरूपा कलार्धं लघु कलार्धं चेत्येकदेशो(शो) गृह्यते । मात्रावस्थाया लघुभावेन नियोगे द्रुतकला कलार्धादियोगश्चेति समाहार । तदयमर्थ. । प्लुतगुरुलघुद्रुतोपलक्षिततत्समूहरूपा वक्ष्यमाणा ये ध्रुवाणां त्रयः संयोगा-स्ते वृत्ताश्रया. कार्या । वृत्ताश्रय स्वाह । गुरुलघ्वक्षरान्विता इति । गुर्वक्षरे लघ्वक्षरे च द्वि(कल)ता लग्ना । एतदुक्त भवति । यत्र छन्दो गुरु तत्र तालगुरु(तालो गुरु) । एवं लघु निबार्यम् । यत्र च लघुगुरु(रू) तत्र तालप्लुत तथापि च तालद्रुतम् । तद्यथा । षट्कलमित्यत्र गुरुलघुगुरूणि गुरुद्रुतगुरूणि प्लुतगुरुणी गुरुप्लुते इति चतुर्धा प्रस्तार स्थापनीय । एव सर्वध्रुवासूह्यम् । एष एव समवृत्तेऽपि चतुर्लयादेर्विषया । तत्र त्रय संयोगा इत्याह । सर्वदीर्घ इति । यत्र सर्वे प्लुता । सर्वलघुरिति यत्र सर्वे द्रुता. । गुरुह्रस्वाक्षर इति , प्लुतगुरुलघुद्रुतमय इत्यर्थः । प्लुतद्रुतयोरत्र गुरुलघुत्वमुक्तपूर्वम् ॥२५२॥

अस्य वृत्ताश्रयस्य तालस्य विभागमाह । गुरुप्राया स्थितेति । यथा......। लघु प्राया द्रुतेति । यथा खरनखर । गुरुलघ्वक्षरप्राया तु यथा अजन्तादि । प्रासा-दिवयन्तरे प्रत्येक सम्ब-ध्य(ध्ये)ते ॥२५३॥

एवं ध्रुवाणां कर्तव्या जातयो वृत्तसम्भवाः ।
अत ऊर्ध्वं प्रवक्ष्यामि शीर्षकाणां तु लक्षणम् ॥२५४॥

आद्यमन्त्यं तृतीयं च पञ्चमं सप्तमाष्टमे ।
गुरूणि यस्याः पादे तु सा श्येनी तु कृती यथा ॥२५५॥

यथा ।
सागर समुधु(द्धु)णतो रय(व) इव लघुगदिरभिभवदि
पव्वदा समाहणतो तरसु य अणमदि मयमतुलम् ।
रेणुजालमुब्विलवन्तो दिवसकरकिरणो[ण उवकलितो]
बोधम्र पजासु काम विसरदि वरतणु सुहपवणो ॥२५६॥

[सागरं समुत्क्षुन्वन् रय इव लघुगतिरभिभवति
पर्वतान् समाघ्नन् तरुषु च जनयति भयमतुलम् ।
रेणुजालमुत्क्षिपन् दिवसकरकिरणोपकलितो
बोधयन् प्रजासु काम विचरति वरतनु सुखपवनः ॥]
प्रकृत्यां पञ्चमान्त्ये तु ह्यष्टमैकादशे गुरु ।
द्वादशं चेति विज्ञेया नामतश्चपला यथा ॥२५७॥

---

प्रासङ्गिकमुपसंहरति । एवमिति । वृत्तसम्भवा वृत्तगीतगुरुलघ्वाश्रया ध्रुवाणां जातयः । तालप्रकारा एव कार्याः । अथ प्रकृतमेव शीर्षकविधिमनुबध्नन्नाह । अत ऊर्ध्वमिति ॥२५४॥

लक्षणविशेष तत्प्रकृतेराद्यमुलकृत्यन्तमाहाद्यमित्यादिना ।
जौ गौ श्रुतिम (न)यश्च श्येनी ।
ञ्जौ ज्यौ भौ सौ गुरुरिति चपला ।
मतया(य) श्रुतिन यगुत क्रौञ्चम् ।
भमसाय श्रुतिन ग पुष्पसमृद्धा ॥
नयम गौ श्रुतिन ग सम्भ्रान्तम् ।
मत्रयमथ गौ श्रुतिन ग स्खलिता ।
मौ भौ धारन लगि चेन् मत्ताक्रीडा ।
नजनसभ श्रुतिभ लगि वेगा ।
अष्टौ शीर्षकजातय एता उत्तमविषये युग्मताले ।

मुनिगणमण्डवि(नि)वन्धि(वन्दि)दम्रो(ते)ज्रो विधुणिम्र तिमिरपडम्
कमलवणाइं विबोधिग्रमाणो गहगणपरिगणदो ।
भुअगसहस्सविघग्घिवपासो वित्तवितकणकवपू
उवम्रदि संपदि राविम्रलोम्रो वरतणु दिवसकरो ॥२५८॥

[मुनिगणमण्डलीवन्दिततेजा विधूय तिमिरपटं
कमलवनानि विबोधयमानो ग्रहगणपरिगणितः ।
भुजगसहस्रविघ्घितपार्श्वो विद्योतितकनकवपु ः
उदयति सम्प्रति तापितलोको वरतनु दिवसकरः ॥]
पञ्च स्यादौ यत्र तु दीर्घं नवममपि च गुरुसमयकृतं
दीर्घं चान्त्य चाष्टममन्यल्लघु विरतिरपिमिह चरणविधौ ।
वृत्ते सेया जग(जा)तिरपीयं बहुविधमिचयचितविहिते
क्रौञ्चं नाम्ना छन्दसि चोक्ता द्विजगणमुनिगण[परि]पठिता ॥२५९॥

यथा ।
एसो चन्दो णिम्मलजोह्ला विधुणिम्र धरणसिवपटणिहं
लोकानन्दो लोकपदीवो उडुगणगहप्प(ग)णसमणुगदो ।
वासादाणं कारम्रमाणो सितपडणिवसनमिव विपुलम्
लोकालोकं रञ्जम्रमाणो विचरदि वरतणु गगणमणु ॥२६०॥

[एष चन्द्रो निर्मलज्योत्स्नो विधूय धवलसितपटनिभं
लोकानन्दो लोकप्रदीप उडुगणग्रहगणसमनुगतः ।
प्रासादानां कारयमाणः सितपटनिवसनमिव विपुलं
लोकालोकं रञ्जयमाणो विचरति वरतनु गगनमणु ॥]
माद्यचतुर्थं पञ्चमषष्ठं नवममथ च [मय दशमं] नियमगतं
ये च ततोऽन्ये येषु लघुत्व यदि भवति च चरणग(ग)तिविधौ ।
सा निकृति- स्यात् पुष्पविवु(समृ)द्धा द्विजगणमुनिगणपरिपठिता
नामविकल्पाद् वृत्तकृता येवशतलुसितमिह नमति नदी ॥२६१॥

पुष्फविदाणं उद्धुणमाणो रव इव पटुतर(द्रुत)गतिरमिपत(ब)ति
पदस्खलमाणो मेहतडेसु तरसु च जणयदि भयमतुळम् ।

उम्मिसहस्सं उद्धुणमाणो सरसखुमिदसळिळकळकळो
सोमणिणादो चण्डपवाहो विअरदि वरतणु सुहपवणो ॥२६२॥

[पुष्पवितानमुद्धुनयमान रव इव षट्पदैरभिपतति
प्रस्खलमानो मेघतटेषु तनयु च जनयति भयमतुलम् ।
ऊर्मिसहस्रमुद्धुनयमानः सरसक्षुमितसलिलकलकलो
सोमनिनादश्चण्डप्रवाही विचरति वरतनु सुखपवनः ॥]
प्रथमं च पञ्चमं षष्ठं सप्तमं दशमं परम् ।
वृत्ते सङ्कृतिसंज्ञे तु स(ग)न्ता नामतो यथा ॥२६३॥

किरणसहस्सं विकिरमाणो फलि(टि)ह(क)मणिणिअरधवळणिहो
कुमुदवणाई बोहअमाणो कुमुदवळणिअरसविसधवू ।
गहगणबन्धू लोकपदीवो उडुगणगहगणसमणुगदो
जअदि चन्दो रोहिणिकन्तो णवसरदमुदितसुखअणो ॥२६४॥

[किरणसहस्रं विकिरन् स्फटिकमणिनिकरधवलनिभः
कुमुदवनानि बोधयमानः कुमुदवलनिकरसहशवपु ।
ग्रहगणबन्धुर्लोकप्रदीप उडुगणग्रहगणसमनुगत
जयति चन्द्रो रोहिणीकान्तो नवशरदि मुदितसुखजननः ॥]
आद्यमन्त्यं चतुर्थं च सप्तमं दशमं तथा ।
गुरूण्येकादश चैव संकृतौ वृत्तसंश्रयम् ॥२६५॥

लघून्यष्टानि शेषाणि पादे यस्मिन् भवन्ति तु ।
सज्ञेय शीर्षकं तज्ज्ञै स्खलितं नामतो यथा ॥२६६॥

वातसमुद्धतवीचितरङ्गो(ङ्गे) स्फटिक[मणि]निकरसदृशजले
पङ्कजरेणुपरागपिशङ्गे [वि]लुलितकमलकुवलयदले ।
भोटितकल्पतरुस्थितशाखे सुरयुवतिनिवसनसमनुसृत
क्रीडति दानसुगन्धिमहोच्चैः (सि:)सुरगज इह [किल]सुरसरि(रिति)
॥२६७॥

[वातसमुद्धतवीचितरङ्गे स्फटिकमणिनिकरसदृशजले
पङ्कजरेणुपरागपिशङ्गे विलुलितकमलकुवलयदले ।

मोदितकल्पतरुस्थितशाखे सुरयुवतिनयनसमनुसृतः
क्रीडति बानमृगघमहोर्मि सुरगज इह [किल]सुरसरिति ॥]
मट्टावादी दीर्घाणि स्युर्यदि च पुनरपि हि भवति बहु लघुगणो
गुरुश्चान्ते दीर्घं त्वेकं यदि भवति पदि पदि पुनरपि च तथा ।
मत्ताक्रीडा विद्युन्मालेत्यपि च विविधकविभिरपि बहुमिरुदिता
नाम्ना छन्दोवृत्ते वैतालीयविकृतिगतिविधिषु च नियतमभिहिता
॥२६८॥

यथा ।
एसो मेहो सेलाभोग्गो(यो) मसणिमुरजपडु(डु)पड(ह)हसम(द)रओ
णाणाविज्जुज्जोआलोओ घणपडलनिवयजळधरसम(रम)णुगदो ।
णाणावण्णो तोडग्गारी चरितधवलखगविचरितकुसुमपभो
सच्चा(च्छा)यन्तो लोअ यातो(तो) गिरिरिव गिरिणिवह इव
सुमसलिलओ ॥२६९॥

[एष मेघः शैलाभोगोऽशनिमुरजपटुपटहसमदरवो
नानाविद्युद्योतालोको घनपटलनिचयजलधरमनुगत ।
नानावर्णस्तोयोद्गारो चरितधवलखगविचरितकुसुमप्रभ
सच्छादयन् लोक याती गिरिरिव गिरिनिवह इव शुभसलिल ॥]
पञ्चम द्वादश चैव दीर्घमन्त्य यथाक्रमम् ।
चरहारयां तु भवेत् पादे वृत्त वेगवती यथा ॥२७०॥

गगणतलगणमभिदहमाणो उडुगणगहगणसमणुगदो
पुवतिजणाण[णत] मुखचितक्खो सुलितवयितजणभरकरो ।

---

सागर समुद्दणन्तो रह(व) इव लघुगविरमिमवहि(वि) ॥
मुनिगणमण्डलिवन्धि(वन्दि)द को(तो)वो विधुणिय तिमिरपडम् ॥
एसो च्छ(च)न्दो णिम्मळजोण्हा विधुणिय भयुतमवन्धभिदम्
(घणघसितपडणिहम्) ।
पुष्फविवाण उद्धुममाणो रव इव भुतयति धमिपदवि ।

किरणसहस्सवि(वि)पुरचितवन्दो रअतगिरिसिहरसविसवपू
उवअदि संपदि अमु अगदीवो कुमुदवणरुचिरविमलकरो ॥२७१॥
[गगनतलाङ्गणमभिरोहन्नुडुगणग्रहगणसमनुगतो
युवतिजनानतसुखचितरूपः सुसितदयितजनमदनकरः ।
किरणसहस्रविप्रचितवन्धो रजतगिरिशिखरसदृशवपु-
रुदयति सम्प्रत्याशु जगद्दीपः कुमुदवनरुचिरविमलकरः ॥]
एता ह्यष्टौ बुधैर्ज्ञेयाः शीर्षकाणां तु जातयः ।
पुनर्नर्कुटकानां तु सम्प्रवक्ष्यामि लक्षणम् ॥२७२॥

षष्ठी नर्कुटकानां तु विज्ञेया जातयो बुधैः ।
दर्शनं लक्षणं त्वासां नामानि च निबोधत ॥२७३॥

रथोद्धतं कुटुवकमुद्गतं वंशपत्रकम् ।
शिखाक्षरा हंसवती हंसास्यं तोटकं तथा ॥२७४॥

प्रथमं च तृतीयं च सप्तमं नवमान्त्यके ।
गुरूणि त्र्यष्टुभे यत्र नर्कुटं तद् रथोद्धतम् ॥२७५॥

यथा ।
एतिका कमलगन्धगेहके
रेणुपिञ्जरित(द)चाय गतिया(या) ।
सारवे मदकलोपकूजिदा
हिण्डदे सरवरम्मि छप्पदी ॥२७६॥

---

किरणसहस्स विसिल(मिल)रयाणो फलिकमणिरुचिरधवल-
णिहो ।
यातसमुद्धतवीचितरङ्गे स्फटिकनिकरसहस्रजले ।
एसो मेहो सेत्ताभोओ असणिमुरअपडुपडहसम[द]रवो ।
गअणतलङ्गणमभिरुहमाणो उडुगणगहगणसमणुगदो ।

अथाधमविषयाः प्रासादिकयादयो ध्रुवा उच्यन्ते । पुनर्नर्कुटकानामिति । नटोऽधम-प्रकृतिः । तत्र भवानि नर्कुटानि वृत्तानि । तत. संज्ञायां(या)कः (कन्) (अष्टा० ५.३.७५) अधमविषयान्त्व त्र्यस्रोऽत्र तालः ॥२५५-२७२॥

[एषका कमलगर्भगेहके
रेणुपिञ्जरितचारुगात्रिका ।
शारदे मदकलोपकूजिता
हिण्डति सरोवरे षट्पदी ॥]

पञ्चमं सप्तमं चैव नैधनं च गुरूण्यथ ।
पादे तु बृहतीसंस्थे यत्र बुद्बुद्द(ब)कं यथा ॥२७७॥

यथा ।
तडिगुणबन्धणिबद्धो(बद्धो) सिदखगपंतिसोहिदो ।
णहसि गदो समुण्णदो विचरदि एस मेहओ ॥२७८॥

[तडिद्गुणबन्धनिबद्धो सितखगपङ्क्तिशोभितः ।
नभसि गतः समुन्नतो विचरति एष मेघकः ॥]

मध्ये तु ।
सतृतीयपञ्चमनवमं त्रयोदशं षोडशं तथा ।
यत्र वै गुरु भवतीह शेषलघुसंयुतं
वृत्ते स्याच्च संश्रितं प्रवदन्ति बुद्बुदकमेव नर्कुटं तद्धि नामतः ॥
चिरकालमभिसम्भरन्त(न्तं)पियं गाणत्त मुहिदं ण रोदम
मुदिमाणहततडिविदो काणणे घणे परिखेदिदे बहुविधे हि भमुणो
वासराहरो ।

तदसम्भुवज्जुहिअए संचसि(लि)ओ मोदमीवओ
भमु कोप्पर विसरइ(सइ)पासवा(पा)दवेन्छ दीणदीणओ ॥
[चिरकालमभिसम्भरन्तं प्रियगानान् मुदितं न रोद्धुं
मोदमानायां तडितीतः कानने घने परिखेदिते बहुविधे
ह्यनुगो वासराहरः ।
तदसम्भुवनं दृष्ट्वैनञ्चलको भीतभीतक
माशु कोटरं विशति पार्श्वपादपस्यो दीनदीनकः ॥]

तृतीयं पञ्चमं चैव नवमैकादशे तथा ।
द्वादश षोडशं चैव चतुर्दशमथापि च ॥२७९॥

यस्मिन्नतिकृते पादे गुरूण्येतानि सर्वशः ।
छन्दोज्ञेयमेतत्तु नर्कुट ह्युपगतं यथा ॥२८०॥

वणसण्डं[ण्डकं]जहदि कोसिको वायसाहदो
मयमोयग्रो भवदि(मजदि)पावपं बीणवीणम्रो।
तवकोटरं वसदि सम्पदं ळोळणेत्तम्रो
समभिद्दवो णिसिअरो भ्रम्रं एदि सोहिदो ॥२८१॥

[वनखण्डकं जहाति कौशिको वायसाहतो
भयमीनको मज्जति पादपं बीनदीनक।
तरुकोटरं वसति साम्प्रतं लोलनेत्रकः
समभिद्रुतो निशिचरोऽयमेति शोषितः॥]

अन्ये तु
प्रथमे यदा तु गुरु यत्र चान्तं
तृतीयकं यदि च द्वितीय......ता गुरु।
अथ षोडशाक्षरे कृते तु पादे
चतुर्थकं त्रिकमिहोद्धटम्॥
मर्कुटं हि तदिति यत् चतुरक्षमनिखनगं-
र्भूषितमक्षरैर्गुरुकृतं. श्रवणसुखकरं.।
तत् खलु वंशपत्रपतितं मुनिगणगदितं
मर्कुटकं वदन्ति नियमादतिधृतिरचितम्॥२८२॥

यथा।
चूदवणं पफुळ्ळतिळकं कुरवमसहिमं
चारुमसोमसाळकळिदं कुसुमसमुदिदम्।
माधवकाणणं जुवदिमा[जण]मदजणणं
हिण्डदि कोकिला फळरसासवमहुररवा॥२८३॥

[चूतवनं प्रफुल्लतिलकं कुरवकसहितं
चारुशोकसालकलितं कुसुमसमुदितम्।
माधवकाननं युवतिजनमदजनन
हिण्डति कोकिला फलरसासवमधुररवा॥]
तृतीयं पञ्चमं चैव नवमं नैधनं तथा।
गुरूण्येतानि पादे तु यत्र तत् प्रमिताक्षरा॥२८४॥

यथा ।

कमळाअरेसु भमि(म)र(क)ण बुइ (चिर)
भमरीमुहासवसुकअलगो ।
मधुमूसिब सुरहि चूववण
परिहिण्डिदो सुतणु छप्पदमो ॥२८५॥

[कमलाकरेषु भ्रान्त्वा चिर
भ्रमरीमुखासवसुखलालकः ।
मधुमूर्षित सुरभि चूतवन
परिहिण्डित सुतनु षट्पद ॥]

मदमागणपञ्चमतृतीय-
गुरुलघुशेषमक्षरगतम् ।
भवति चरण तु यस्य सतत
विविध प्रमिताक्षरेति कथिता खलु सा ॥

तृतीयपञ्चमान्त्यानि प्रथम सचतुर्थकम् ।
षष्ठ च नैधन(ने) चात्र गुरूणि ध्वजिभी यथा ॥२८६॥

यथा ।

विलसन्तिय(या) कमलसण्डे पुप्फसुगन्धके कुसुमलुद्धा ।
तुरिम पवीतमधुमत्ता छप्पदिका(या) कुळ समुपयाति(दि) ॥२८७॥

[विलसति या कमलखण्डे पुष्पसुगन्धके कुसुमलुब्धा ।
त्वरित प्रपीतमधुमत्ता षट्पदिका कुल समुपयाति ॥]

दशम सप्तम यत्र चतुर्थकमथ षष्ठम् ।
तृतीय निधन गुरु कथित(हलास्य)नर्कुट जगतीगतम् ॥

विमहसा वसन्ते सलिळासए
कुसुमासादळुद्धा कमळाअरे ।
णळिणीपत्तमज्झे परिहिण्डिवा
यमणाआसखिण्णा भमरावली ॥

यदि चान्त्यतृतीयकषष्ठगतैर्नवमेन च भूषितमेवम् ।
गुरुभिः सतत त्विह तद् घटित तोटकमेव हि नर्कुटकम् ॥२८८॥

यथा ।

रमणीसहिदो रमणीविरमे

गअणंगणए सगकोसिअयो ।

अ(नुवाय)सए हि विघट्टिअयो

परिमण्टदि कोटरअं सुरि(हि)अम् ॥२८९॥

[रमणीसहितो रजनीविरमे गगनाङ्गणे खगकौशिकः ।
अनुवायसेहि विघट्टित परिमण्टति कोटरं सुहितम् ॥]

[दशमं सप्तमं यत्र चतुर्थकमथ षष्ठम् ।
तृतीयं निधनं गुरु कथितं (हलास्यं) मर्कुटं जगतीगतम् ॥२९०॥

विप्रहंसा वसन्ते सलिलासए

कुसुमासावलुद्धा कमलायरे ।

णलिणीपत्तमज्झे परिहिण्डिआ

गमणाआसखिण्णा भमरावली ॥२९१॥

[विप्रहंसा वसन्ते सलिलाशये कुसुमास्वादलुब्धा कमलाकरे ।
नलिनीपत्रमध्ये परिहिण्डिता गमनायासखिन्ना भ्रमरावली ॥]

---

रनर(भ)जगौ तु रथोद्धतिरथ नभर बहुबुदकम् ।
सभत[य]जगुरुस्त्रग्विति वशपत्रमथ भरनभनलगम् ।
प्रमिता सजिसौ स्वजिनौ सजसगिभरनंयौ ।
सश्रुतितोटकमुदित हलास्यं सरभरमित्यष्टौ ॥

देशुपिञ्जरिदवारगतिआ । विघरदि एस मेहओ । मयमोवओ मम(अ)वि पावयं वीणवीणओ । चुदवण पफुल्लतिलक कुरवअसहिअं । कमलाअरेसु समअरुण चिरं । विलसन्ति या कमलसण्डे छप्पदिआ कुलं समुपयादि । रमणीसहिदो रमणीविरमे । विप्रहसा वसन्ते सलिलासए ।] ॥२७३-२९१॥

अथ मध्यमाधम विषय सञ्ज्ञक जातीयेन प्रतिजानीते । पुनस्तु सञ्ज्ञकाना-मिति । प्रासादिश्यादिघ्नु वा एवोत्तमाधमविषयतया शीर्षकमिति नाम्ना नर्कुटसञ्ज-

एतास्तु जातयः प्रोक्ता नर्कुटानां समासतः ।
पुनश्च(स्तु)लञ्जकानां च सम्प्रवक्ष्यामि लक्षणम् ॥२६२॥

प्रामोदं कञ्जनो(लञ्जकं) पूर्वं भावनी मत्तचेष्टितम् ।
एतास्तिस्त्रः समाख्याताः लञ्जकानां तु जातयः ॥२६३॥

प्राद्यचतुर्थषष्ठदशम सप्तदशमयान्त्यमेव च ।
यदि द्वादशमेव यत्र चरणेषु सप्तदशकात् परं च विहितम् ॥२६४॥

अन्यदपि सततं चेत्तथा गुरु चेदयाकृतिगतं भवेत् सततम् ।
मदकमेव लञ्जकमिदं पुनश्च कथितं प्रमोदकमिदम् ॥२६५॥

यथा ।
माहवमाससोहितसमग्गके उववणम्मि फुल्लकुसुमे
णिच्च[प]मत्तजुत्तबहुपक्खिसमपरिवुढपुट्ट)णादमुहले ।
फलिळवचूवपुण्डसहआरमंजरिविसोलणादपवणे
हिण्वदि छप्पवाणुगवमग्गओ परहुदो (मि)विट्ठवयणो ॥२६६॥

[माधवमासशोभितसमग्रक उपवने फुल्लकुसुमे
नित्यप्रमत्तजुष्टबहुपक्षिसङ्घपरिपुष्टनादमुखरे ।
कलितचूतखण्डसहकारमञ्जरीविलोलनादपवने
हिण्डति षट्पदानुगतमार्गकः परभृन्तिविष्टवदनः ॥]
प्राद्यपञ्चमान्त्यसप्तमं स्यात् तृतीयमेव दीर्घकम् ।
यस्य पादयोगतो हि सा भाविनीति लञ्जकं तथा ॥२६७॥

---

कनामा(म्ना)च व्यवह्रियते । तासां चोक्तरूपमिदं वैचित्र्यान्तरेणोच्यत इति पुनः सन्धार्थं. ॥२६२॥

भरतरनभि रजरी भरलभि
मोदकभाविकमत्तविचेष्टा(ः) ।

सम्भक इति गतिवैकल्याद्गृह्ट । अन्ये तु युवाऽपि विकलाङ्गोऽस्ति पुरोचित इति । तद्विषयत्वाद् प्रमोदादित्रय लञ्जकमुच्यते ।

यथा।
जातिफुल्लपाणमत्तओ चूदरेणुगुण्ठिदग्गओ।
फुल्लपङ्कज(जो)वसोहिदो छप्पओ मुदं पधाविदो ॥२९८॥

[जातिपुष्पपानमत्तश्चूतरेणुगुण्ठिताङ्गक ।
फुल्लपङ्कजोपशोभित षट्पदो मुदं प्रधावितः ॥]
यदा तृतीयसप्तमं तथाद्यपञ्चम लघु।
तदा तु मत्तचेष्टितं वदन्ति सज्जनं बुधा ॥२९९॥

यथा।
पफुळळपुप्प(प्फ)पादवं विहङ्गमोपसोहिदम्।
वणं पणीदछप्पद उवेइ एस कोकिला ॥३००॥

प्रफुल्लपुष्पपादप विहङ्गमोपशोभितम्।
वन प्रणीतषट्पदमुपैत्येव कोकिल ॥]
[1]मर्कुटानां तु सञ्ज्ञानामेता वै मूलजातयः।
प्राप्यो विनिस्सृताश्चान्या युग्मोजा विषमास्तथा[2] ॥३०१॥

---

णिअच्च(प)मत्तमुत्तमहुपवित्तसंघपरिघुट्टणागमुहले । जातिफुल्लपान-मत्तओ। पफ(फु)ल्लपुप्फपादवम्।

अन्ये स्वाकृते(तौ) छन्दस्यघमविशायत्वं न युक्तमिति मन्वानाः प्रमोदकस्थाने बहुवृत-वर्णं पठितमपि ग्रंथपत्रपतितं पठन्त्युभयपठितमित्युभयविषयता सिद्धयर्थमिति ॥ ॥२९३-३००॥

प्राप्यो विनिसृता इति। अर्थसमविषमरूपतयेति भाव ॥३०१॥

अथ सर्वभूवासु गायत्रमेव प्रधानमिति दर्शयति। चतु षष्टिप्रभृवार्णा स्थिति। पदक्षरे गायत्रे चतु षष्टिभेदाऽऽछन्दोध्याये (म० ना० अ० १४ ५५) दर्शिता। सम-वृत्ताक्षराद् गायत्रादेव च पादक्रमेण नीवृदि मुक्ति द्विभागेन च सर्वच्छन्दोभेद-सिद्धि। तथाहि। पादचतुष्टयोपरि पूरिते षड्विंशत्यक्षरीकृतेश्चतुःषष्टिमूलजातयः।

---

१. KSS. मर्कुटाना बुधैर्ज्ञेयाः।
२. KSS. प्रक्षरा

चतुष्षष्टिध्रुवाणां तु विज्ञेया मूलजातयः ।
समवृत्ताक्षरकृता अतोऽन्या विषमा मताः ॥३०२॥

समवृत्तास्तु(त्त्)जायन्ते ध्रुवास्तिस्रस्तु नित्यशः ।
[1]युग्मौजाश्चापि मिश्राश्च विषमाश्च समा मताः ॥३०३॥

सुप्रतिष्ठादिकानि स्युर्वृहत्यादीनि यानि तु ।
छन्दांसि तेषां मानेन ध्यथा कार्या ध्रुवा बुधैः ॥
उष्णिगादीनि यानि स्यु शक्वर्यन्तानि चैव हि ।
छन्दांसि तेषां मानेन चतुरश्राध्रुवा मता ॥
त्रिष्टुबादीनि यानि स्युरत्यकृत्यन्तानि चैव हि ।
छन्दांसि तेषां मानेन चतुरश्रा द्विपादिका ॥
इत्यन्ये ।
[2]तत्रार्धविषमाणां तु षट्पञ्चाशे शते स्मृते ।
एतदेव परीमाणं विषमाणां प्रकीर्तितम् ॥३०४॥

---

ते (ता) अनन्ताः । अत एव गायतस्त्राय(ते) इति गायत्रमाहुः ॥३०२॥

एतदेव स्फुटयति । समवृत्ताविति गायत्रतासमवृत्ताख्या समार्धसमविषम-भेदात् त्रिधा ध्रुवा जायते । तासां च प्रत्येकं तालभेदस्त्रिधा । युग्म ओजो मिश्र-श्चेति मतम् । एतावताऽनन्तो लक्ष्य जयमङ्गोदाहरणेषु यो ध्रुवावृत्तप्रपञ्चो दृश्यते सोऽपि सङ्गृहीत एव ॥३०३॥

केचित् पठन्ति ।

ध्यश्रायां सुप्रतिष्ठादिबृहत्यन्ताविद्युग्मक. ।
उष्णिग्राद्यः शक्वरी यावत् त्रिष्टुभो यावदुत्कृति ।
युग्म एव विधातव्यः किन्तु कार्या द्विपादिका ॥

इति । तत्रत्यचतुरश्रविकृष्टात्मकता विविधमण्डपभेदो विषयत्वमस्य ग्रन्थस्य ध्याच-क्षिरे । तत्र हि परिक्रमे विषमार्थयोगेन बहुधा मतिपूरणमिति ।

अथार्धसमादेः संख्यामाह । तत्रार्धविषमाणां तु षट्पञ्चाशे शत इति । षट्-पञ्चाशाधिकानि यत्र ते द्वे शते ॥३०४॥

---

१. KSS. युग्मौजौ विषमाणा तु पञ्चाशीतिः शते स्मृताः ।
२. पद्यमिदं का० पुस्तके नास्ति ।

[1]सामान्योजाश्च जायन्ते ध्रुवा विषमपादिकाः ।
[2]स्वेन नाम्ना तु नामानि आसां कार्याणि वृत्ततः ॥३०५॥

एवं तु जातयः प्रोक्ता नानावृत्तसमुद्भवाः ।
अत [3]ऊर्ध्वं प्रवक्ष्यामि विकल्पान् पञ्चहेतुकान् ॥३०६॥

जातिः स्थानं [4]प्रकारश्च प्रमाणं नाम चैव च ।
ध्रुवाणां [5]नामनिर्देशः पञ्चहेतुकः ॥३०७॥

वृत्ताक्षरप्रमाणं हि जातिरित्यभिसंज्ञिता ।
समार्धविषमाश्रित्य[6] प्रकारः परिकीर्तितः ॥३०८॥

षट्कलाष्टकले चव प्रमाणे द्विविधे स्मृते ।
[7]यथायोगकुलाचारैर् एषां नामाभिधीयते ॥३०९॥

---

स्वेन नाम्नेति । यत एव समवृत्तद्वयादयसम तदेव तस्या नामेत्यर्थः । यथा श्रीशङ्कुकमतिशालिना भट्टशङ्कुकेणाध्समवृत्तप्रकरणे दर्शितम् । उद्धता समोजसमौ वलितः जघन इत्यादि ॥३०५॥

पञ्चहेतुकानिति । निमित्तकृतान् पञ्चप्रकारान् वक्ष्यामीति ॥३०६॥

तत्र निमित्तपञ्चकमाह । जातिः स्थानं प्रकारश्च प्रमाणं नाम चैवेति ॥३०७॥

वृत्ताक्षरप्रमाणं जातिः । स्वरूपजननात् । स्थानं बहु वक्तव्यस्वाद्यतो ऽभिधास्यते । समार्धसमविषमता प्रकारः ॥३०८॥

षट्कलाष्टकलप्रमाणं त्रिकलाभिधाने नाम । आस्यादीनामत्र प्रयोजनमाह । कलाविकयेऽपि समुदायताले हि व्यस्रता विभाति । श्रवयवताले बहुधेति । अन्ये तु नात्यल्पत्वमनातिवि(स्त)रत्वाञ्च षट् कलाष्टकले वक्तव्ये इत्याहुः । उपलक्षणमात्र-मेतद्विस्तरपरे । अथ नामाह । यथायोगकुलाचारैरिति । आश्रयणानां यथायोगेनोपेतम् ॥३०९॥

---

१ KSS सामान्या एव । NS सामान्योजाश्च ।
२ KSS varies
३ NS पर ।
४ KSS प्रमाणं च प्रकारो नाम ।
५ KSS नाट्यज्ञैः NS गीतिज्ञ ।
६ KSS विषमाणां च ।
७ KSS यथा हेतुकुलाचारैः ।

एवं [1]नामान्वयोपेतं ध्रुवाणामपि चेष्यते ।
प्रवेशाक्षेपनिष्क्रामप्रासादिकमथान्तरम् ।
गानं पञ्चविधं [2]विद्याद् ध्रुवायोगसमन्वितम् ॥३१०॥

नानारसार्थयुक्ता नृणां या गीयते प्रवेशे तु ।
प्रावेशिकी तु नाम्ना विज्ञेया सा ध्रुवा तज्ज्ञैः ॥३११॥

प्रस्तुते निष्क्रमणे [3]पात्राणां गीयते प्रयोगेषु ।
निष्क्रामोपगतगुणां विद्यान्नैष्क्रामिकीं तां तु ॥३१२॥

क्रममुल्लङ्घ्य त्वरितैः क्रियते या द्रुतलयेन नाट्यविधौ ।
आक्षेपिकी ध्रुवासौ द्रुता स्थिरता वाऽपि विज्ञेया ॥३१३॥

---

ध्रुवाणामपि चेति । न केवल रसभावानामित्यर्थः । किं तन्नामेत्याशङ्क्य पूर्वोक्तं स्मारयति । प्रवेशाक्षेपे(क्षेपे)ति । रसाध्याये (भ० ना० ग्र० ६ २६.३०) व्याख्यात श्लोकः ॥३१०॥

एतेषु नामान्वयं योजयति । नानारसार्थयुक्तेति । नाना रसा भावा अर्थाश्च विभावादयः तेषां युक्त(क्त) सामाजिकानां हृदयेषु प्रवेशो यथेति प्रयोजनम् । नृणामिति । एकशेषे नारीणां च ॥३११॥

प्रविष्टस्यावश्यं निष्क्रमणे न त्वेवमाक्षेपादित्याशयेन नैष्क्रामिकीमाह । प्रस्तुत इति । प्रकृतस्य समाप्तौ असमाप्तेऽप्यङ्के यदा पात्राणां निष्क्रमणं तदा चेत्यर्थः । निष्क्रमणक्रियायामुपगतो वर्ण्यत्वेनाङ्गीकृतो गुण इत्युपचरितार्थो हंसरावा-दिर्यस्याम् ॥३१२॥

अथाक्षेपिक्या. समर्थेन स्वरूपमाह । क्रममुल्लङ्घ्येति । प्रस्तुत रसम् । द्रुत-लयेनेति । खलु खलकादिवाक्यप्रयोगो या रसापेक्षयोजना तद्विषय (या) प्रयुज्यते(सा) आक्षेपिकी । तत्राक्षिप्यमाणरसस्य दीप्ततया द्रुता । यथा उदात्तराघवे रामस्य प्रस्तुतशृङ्गारक्रमोल्लङ्घनेन

मदे तापस स्थिरो(रो)मा । मवेदानीं गम्यते ।
स्वसुर्मम परामवप्रसव एकदत्त०थय ।

---

१ KSS. स्थानाश्रयोपेत ।
२. KSS ज्ञेयं ध्रुवता चास्य लक्षणम् ।
३. KSS. या तु भवेत् प्रस्तुतस्तुतियोगे ।

या च रसान्तरमुपगतमाक्षेपवशात् कृतं प्रसादयति ।
[1]रागप्रसादजननीं विद्यात् प्रासादिकीं ता तु ॥३१४॥

[2]विषण्णे मूर्च्छिते भ्रान्ते वस्त्राभरणसंयमे ।
दोषप्रच्छादना या च गीयते सान्तरा ध्रुवा ॥३१५॥

---

इत्यादिना (रावणवाक्येन) । यथा (द्रुता)वाक्याकर्णनेन वीररसस्याक्षेप्यस्य पु रसस्य मा लुप्ते । स्थिरेति विलम्बिता । यथाऽश्वत्थाम्नो युद्धवीरे क्रमोलङ्घनेन

कुतोऽद्यापि ते तातः । (वेणीसंहारम् ३ ८)

इति नेपथ्यश्रवणादि तस्य करुणरसस्य ॥३१३॥

अथ प्रासादिकीमाह । या च रसान्तरमुपगतमिति । उपगतमभ्युपगत प्रस्तुतं रसविशेष यदा प्रसादयति निर्मलीकरोति । कथम् । अनुक्रमस्य विभावानुभावव्यभिचारिवर्गस्य आक्षेपवशात् स्थिरीकरणसमर्थत्वादिति । काव्यगतेनोत्कर्षेण रागप्रसादस्य जातपराक्रमो निवर्णालङ्कारस्य सौभाग्ययुक्तस्य सामाजिकहृदय तन्मयीभावापत्तियोग्यतामात्मनो जननमिति दीप्तिशोभया वा प्रासादयोजन । प्रासादिकीं विद्यात् विशेषमस्या द्योतयति । इय हि प्रावेशिक्याक्षेपिक्या यनन्तरमवश्यप्रयोज्या भवति ॥३१४॥

अथान्तरामाह । विषण्णे मूर्च्छिते भ्रान्त इति । अन्तरे छिद्रे गीयत इत्यन्तरा ध्रुवा । तथाह दोषप्रच्छादन(ना) इति । तान् दोषानुदाहरति । विषण्ण इति । अनुकार्यंगताशङ्कितभयविषादत्युद्धतप्रयोगश्रमवशाद्वा भ्रमादिदोषसम्भावना वस्त्राभरणानिकाशादिरूपया[या]गीयते सान्तरा ध्रुवा । तत्र च प्राक्तनं भावि वा रसस्वरूपमनुवृत्तमित्यवश्यं द्रुतमध्यविलम्बितान्यतमेन भाव्यं(व्यम्) । स एव च ताल (अ० ना० ३१ ।) इत्युक्त्वात् तदाधारभूतया छन्दोनिबद्धया भाव्य । केवलं छिद्राच्छादनमात्रप्रयोजनायामस्यां न सार्थकपदकदम्बयोजनमुपगीतिशुष्काक्षरैरेवेयं लक्ष्ये च ललितकादिनाम्ना प्रसिद्धा गीयत इति नाट्यधर्मी(र्म)प्रायेयम् । यद्यपि प्रावेशिक्यादेरपि नानुकार्यविषयसम्भवस्तथापि काव्यवाक्यैवाक्यतया—

तरलयति तृषां विमुत्सुकाम् ।

इत्यादि काकतालीयवृत्तिद्रुतान्ययेन लौकिकस्य सम्भवं नात्यन्तं नाट्यधर्मभाव. । एव नाम व्याख्यातम् ॥३१५॥

---

१. KSS रङ्गरागप्रसादजननी ज्ञेया प्रासादिकी सा तु ।
२ NS. विषममूर्च्छिते । KSS varies

ध्रुवाणां चैव सर्वासां रसभावसमन्वितम् ।
[1]प्रयास्थान प्रवक्ष्यामि यत्र गेयं प्रयत्नतः[2] ॥३१६॥

द्विविधं तु स्मृतं स्थानं परसंस्थात्मसंश्रयम् ।[3]
परवाक्षेपसमायुक्तं तच्च मे सन्निबोधत ॥३१७॥

बद्धे निरुद्धे पतिते व्याधिते [4]मूर्च्छिते मृते ।
प्रवकृष्टा ध्रुवा कार्या भावे च करुणाश्रये ॥३१८॥

---

अथ जाति. स्थान प्रकारश्च प्रमाण नाम चेति श्लोक (भ० ना० ३२-३०४) यत्प्रमाणनुद्दिष्ट तत्लक्षयन्नुपक्रमते। ध्रुवाणां चैव सर्वासामिति। तत्र स्थानस्य सामान्यलक्षणमाह। यत्र गेय प्रयत्नत इति। रसोपयोगी पात्रविशेष स्थानमित्यर्थं ॥३१६॥

ननु प्रवेशनिष्क्रमाक्षेपप्रसादन्तिर्द्धाण्येव गेयस्थानानि। तानि च नामनिबन्धनेन लब्धानि। तत् किमिदानीं स्थान नाम्ना विविच्यत इत्याशङ्क्याह। द्विविधं तु स्मृतं स्थानमिति। न प्रवेशादिस्थानमत्र लक्ष्यते किन्तु प्रधानभूतो यो रसभावादिरर्थस्तदुपयोगि तावद्गानम्। तत्र कदाचित्तमेव योऽर्थस्तुद्दिष्टैव गीयते। यथा रामस्य सीतादिप्रयुक्तविप्रलम्भे तदाश्रयमेव कदाचित् प.त्रा.तदाश्रयणेन। यथा तस्यैव विप्रलम्भे लक्ष्मणाश्रय लि(नि)तराम(मा)हुरित्यत्र। तदाह। परसंस्थात्मसंश्रयमिति। परस्थमत लक्ष्मणस्य। आत्माश्रय रामस्य। तेन स्थानमिति स्थानाश्रय गान द्विविधमित्यर्थं। अन्यपरस्यासौ करुण एव भवति। न हि रामे विप्रलब्धे लक्ष्मणस्य विप्रलम्भ.। केवल तद्.खदु खितस्यास्य करुण इत्याशङ्क्याह। परवाक्षेप समायुक्तमिति। यदिति यस्मात् प्राक्षेपः तदुपोपेक्षेपित्वेनोपयोग। तेन आसमन्तात् युक्त स्वरसस्य सम्मिति सम्यक् अर्थकल्पपूर्णतया तेनायुक्तस्याऽऽत्मसश्रयम्। एतदुक्त भवति। लक्ष्मणस्य करुणे विनयोचित(ते) मसृणमप्यर(रे) गान(ने) प्रयुक्तेऽपि तु रामविप्रलम्भ एव तत्र प्रयोजकीभवति। तथा च लक्ष्मणस्य ...पणोक परंव तत्तरा गान प्रयोजयति। परस्योऽप्यसौ प्रयोजको भवति। ... विधि ... नोपदेशदिशा च शब्द(वध) प्रतिपादयितुमिति दर्शयति। त... ॥३१७॥

तत्राक्षेपिण्या तावत् स्थानद्वयोचित लयविभाग... माह। बद्ध इत्यादि। बद्धो निगडादिना निरुद्धोऽवष्टब्ध... मृत इति सुपूर्णा। प्रवकृष्टेति विलम्बिता। ...

---

१ NS तथा स्थान।
२. KSS योज्य विभागतः।
३ KSS परस्थात्मस्वसश्रयम्। NS
४. KSS. साधिते।

औत्सुक्ये ह्यवहित्थे च चिन्तायां परिदेविते ।
श्रमे दैन्ये[1] (दैन्ये) विषादे च स्थिता कार्या ध्रुवा बुधैः ।
एतेष्वेव तु भावेषु करुणावेदितेषु च
[2]ध्रुवा द्रुता च कर्तव्या करुणे भावसंश्रया ॥३२०॥
यत्र प्रत्यक्षजं दुःखं [3]मृताभिहतदर्शनम् ।
स्थिता तत्र हि कर्तव्या करुणे तु रसे बुधैः ॥३२१॥
[4]उत्पातदर्शने चैव प्रहर्षेऽद्भुतदर्शने ।
विषादे च [5]प्रसादे च रोषे सत्त्वस्य दर्शने ॥३२२॥
वीररौद्रभयाद्येषु प्रत्यक्षावेदितेषु च ।
ध्रुवा द्रुतलया कार्या ह्यावेगे सम्भ्रमे तथा ॥३२३॥
[6]प्रसादे(द)यावने चैव तथाऽनुस्मरणे पुनः ।
तथाऽतिशयवाक्येषु तथा च नय(व)सङ्गमे ॥३२४॥
[7]हर्षेऽथ प्रार्थने चैव शृङ्गाराद्भुतदर्शने ।
ध्रुवा प्रासादिकी कार्या सज्जनैर्मध्यलयाश्रया ॥३२५॥

---

स्थितेति । मध्य विलम्बिता च ॥३१९॥

एतेष्वेव तु भावेषु करुणेति । तदाश्रयेषु भावेषु द्रुता ध्रुवा कार्या । केषु भावेष्वित्याह । करुणेति । करुणस्यावेदन येषु स्वयमुत्पन्नकरुणस्यावेदन येषु । तेन शोकहेतावपि वारिपोरकादिष्वभिवारितस्वलितेषु परिजनादिष्विति यावत् । अत एवाह । भावसंश्रयेति । भावप्राप्तिरन्तिकटप्राप्तिनिमित्त वा द्रुता ध्रुवेति ॥३२०॥

तर्हि करुणे सर्वत्रैव ध्रुवा । नेत्याह । यत्र प्रत्यक्षज दुःखमिति । दुःखशालम् । कुत इत्याह । मृतेति । मृतस्याथमृत्युना अभिहतस्य आकस्मिकतीव्ररोगशोकादिना अभिघ तस्य च दर्शन यस्मिन् तत् प्रत्यक्षज दुःखम् । तत्र विलम्बिता कार्या । करुणे स्थिति । परसस्ये ॥३२१॥

उत्पातो भूकम्पादि । विषादे वृत्ते सति । (प्रहर्षे) झटिति य. प्रमोदस्तत्र ॥३२२॥

द्रुताव्यापक लक्षणमित्याह । आवेगे सम्भ्रमे च द्रुतेति ॥३२३॥
प्रसादविषये यावने ॥३२४-३२५॥

---

१. KSS दैन्यविषादे च NS दैन्ये ।
२ KSS ध्रुवा ध्रुवा तु कर्तव्या तथा वेगसमाश्रया ।
३. KSS मृताभिहितदर्शनात् NS भिहतदर्शनात् ।
४. KSS प्रयोक्तव्या NS प्रकर्तव्या ।
५. KSS उत्पाते सम्भ्रमे चैव ह्यमर्षेऽद्भुतदर्शने । NS उत्पातदर्शने चैव शृङ्गाराद्भुत दर्शने ।
६. KSS प्रमोदे NS प्रमोदे ।
७. KSS प्रासादयावने NS प्रसादयावने
८. KSS वर्षे च NS हर्षे च ।

शरीरव्यसने रोगे पुनःसन्धानकर्मणि ।
सानुबन्धा ध्रुवं कार्या [1]गीतज्ञैरन्तरा ध्रुवा ॥३२६॥

अथ ध्रुवास्तु प्रवेशाः स्युर्णायतो रुदतस्तथा ।
सम्भ्रमे प्रेषणे चैव ह्युत्पाते विस्मये तथा[2] ॥३२७॥

---

सानुबन्धेति । अनुबन्ध त्वरा तेन सानुबन्धेति द्रुतलयेत्यर्थं । क्व सा क्रियते । आह । शरीरस्य व्यसने रोगे प्रवृत्ते सति । यत्पुनःसन्धानकर्म तस्मिन् । एतदुक्त भवति । शरीरव्यसनवशाद् रो(रो)गवशाद्वा यदा नटे(टो)ऽपसर्पति तदा तत्स्थानेऽन्यस्य तद्भूमिका(यां) द्वितीयस्य योजन त्वरया कर्तव्यम् । तत्र चान्तरा ध्रुवा ध्रुवेति ॥३२६॥

अथ यत्र प्रावेशिकीध्रुव तदाह—

अथ ध्रुवास्तु प्रवेशा स्युर्णायतो रुदतस्तथा ।
सम्भ्रमे प्रेषणे चैव ह्युत्पाते विस्मये तथा ।

इह प्रावेशिकी नाम प्रवेश्यत पात्रस्य स्वरूप सामाजिकमनसि मक्षेपण समर्पयितु गीयते । तत्र गायता यदा प्रविशति तदा प्रावेशिक्या गीयमानाया प्रकृतग न रोदन च व्यवधीय(यं) त । सम्भ्रान्तस्य परेण त्वरया प्रवितस्य द्रुतगतविस्मयावावेदयितुमायातस्य त्वरयेव प्रवेश उचित इति ।

अन्ये त्वाहु । पूर्वप्रविष्टस्य च प्रधानपात्रस्य देवीप्रायस्य गायतो रुदतो वा सम्बन्धो परिजनो यदा प्रविशति तदा ध्रुवाऽस्य प्रवेशे मा भून् मुख्योपराधकत्व इति । कार्यान्तरव्यये च प्रधानपात्रे उत्पातविस्मयाद्यवेदनाय तन्निकटमुपसर्पतो मध्यमपात्रस्यापि स(प्र)ध्रुवः प्रवेश । प्रधानपात्रस्याऽपि सम्भ्रमे सत्यध्रुव एव । शङ्खचूडस्येव जीमूतवाहनभक्षणाकुलगरुडनिकटमुपसर्पतः (नागानन्दम् ५ १७) । प्रेषणग्रहण नैष्क्रामिकी विषय प्रसङ्गात्तेन त्वरयता प्रतीहार्यादि प्रेषितस्याध्रुवनिष्क्रामणन्

अत्र तु प्रविष्टपात्रेण गायता रुदता वा सह यदा प्रविशतो झटिति नास्ति सम्बन्धस्तदा प्रकृताधु(सु)वरमो मन्तव्य ।

उपाध्यायास्त्वाहु । गायतो रुदत इत्यनेन हर्षनीरक्रोधशोकविपत्स्येव क्रमेण लक्ष्यते । तेन च सम्भ्रमो विशेष्यते । तेन क्रोधशोकहर्षाविष्टस्य सम्भ्रमे मध्रुव

---

१ KSS द्वितज्ञै. ।
२ NS विषये तथा ।

एवमर्थविधिं ज्ञात्वा देशकालमृतू तथा ।
प्रकृतिं भावलिङ्गं तु ततो योज्या ध्रुवा बुधैः ॥३२८॥

[1]शीर्षका चोद्धता चैव ह्यनुबन्धा(द्धा) विलम्बिता ।
[2]अड्डिता चापकृष्टा च षट्प्रकारा ध्रुवा स्मृताः(ता) ॥३२९॥

[3]शिरःस्थानीयमेतद्धि यस्मात् तस्मात्तु शीर्षि(र्ष)का ।
[4]उद्धता तुद्धता यस्मात् तस्मात् ज्ञेया ध्रुवा बुधैः ॥३३०॥

---

प्रवेश इति । तथा चाग्रे वक्ष्यति अपटाक्षेपकृता चात्ययिकी हर्षरो(रा)ग कार्येषु (म० ना० ३२ ४१३) इति । एतच्च स्वस्थान एव व्याख्यास्यते । तच्च प्रकृतरसस्योपरोधिका ध्रुवा न प्रयोज्यैवपरमिति मन्तव्यम् ॥३२७॥

अथ कविशिक्षार्थमाह । एवमर्थविधिमिति । अर्थविध्यादिकं ज्ञात्वा ध्रुवा बुधैः कविभिर्योज्या । तत्रार्थविधिराक्षेपप्रसादनादिप्रयोजनप्रकार हृतगजादिरित्यन्ते । देशः सरोऽरण्यादि । काल रात्र्यादिकम् । ऋतुर्वसन्तादिः । प्रकृतिरुत्तमादि । भावो रत्यादि । लिङ्गमनुभाववर्ग । येषा मध्ये यदेव प्रधानमन्ते वाच्यं द्विशतिचयः सामान्येन वा कविना ध्रुवाया व्यावर्णनीयमिति यावत् ॥३२८॥

अथ प्रावेशिक्यादिषु पञ्चस्वपि प्रत्येक प्रकारषट्क सम्भवतीति दर्शयितुमाह
शीर्षका चोद्धता चैव ह्यनुबद्धा विलम्बिता ।
अड्डिता चापकृष्टा च । इति ।

विलम्बितेति । द्रुतविलम्बिता ध्रुवाणामनियताक्षरका । सा नानप्रयोगमपनयन्ती काव्यस्वरूप परिपूरयितु प्रयुज्यते तत्पूरणं च प्रकृतिमुखेन वा रसभावचेष्टितमुखेन वा तत्रोत्तम प्रकृति प्राधान्येन प्रवर्तमाना हि शीर्षका । उत्तमसमाश्रयो हि रसभावादिरनन्तपरिमनादिगतनित्तवृत्यन्तरजीवितकल्प । अतोऽस्य शिर इति व्यपदेशः विचित्र प्रकृतिचित्रवृत्तिकरपरत्वेन प्राधान्यात् । चेष्टितप्राधान्येनोद्धतसञ्ज्ञता समस्तविभावानुभावव्यभिचारिसम्पद सूचयत्यनुबद्धा । प्रथममध्यमनीचैरित्यादिरियता तु भिन्ना प्रकृतिविसवृत्ति भिन्न च तद्गत चेष्टित सूचयति द्रुतविलम्बिता । सापेक्षभावरूपं सविट्टिकासमुन्दर रसमाश्रयत्यड्डिता । तद्विपरीताऽपकृष्टेति प्रतिध्रुव षोढा विभागः ॥३२९॥

तस्माद्धेतोरेतत् सगत शिरस्थानीय प्रधान भवति । तस्माच्छीर्षकेति सञ्ज्ञितिः । उद्धता तूद्धनेति गमागमप्रमणादिप्राधान्यात् । अन्ये तु वीररौद्रविषयैयमित्याहु ॥३३०॥

---

१ KSS शीर्षक । NS शीर्षका ।
२ NS इति (अड्डि ?) ता चापकृष्टा ।
३ KSS शिरस्थानीयमेत तद्धि यस्मात्तद्धि च शीर्षकम् ।
४ KSS उद्धत यस्मा न ।

[1][यति लय वाद्यगति च वर्णान् स्वराक्षरम् ।
अनुबध्नाति यत्रैवमनुबद्धा भवेत्तु सा] ॥३३१॥

प्राक्तो(यो)द्दिनप्रवृत्तो यश्चतुर्थलयकारकः ।
नाट्योपचारजनितः सोऽनुबन्धः प्रकीर्तितः ॥३३२॥

---

यति लय वाद्यगति च वर्णान् स्वराक्षरान्(रम्) ।
अनुबध्नाति यत्रैवमनुबद्धा भवेत्तु सा ॥

इति । यति. समाद्या । लयो द्रुतादि । वाद्यगतिश्चतुर्विधातोद्यवैचित्र्यम् । पद वृत्तगो यत्यात्मा विराम । वर्णो वृत्तगत एव गुरुलघुभेद । स्वयते यथोचित गीत क्रियाया विस्तार्यते यत स्वरपदेन वर्णाङ्कृत्या गीति । अक्षर गीयमान पदम् । अन्ये तु चच्चत्पुटादितालमक्षरमाहु । न क्षरति न सम्यक्क्षयते गीतवृत्तादिक येनेति । एतदक्षराक्षरान्तरम् । यस्या ध्रुवायामेवमिति प्रयोगौचित्येन कविर्नाट्या चार्यो वर्णकविर्गाता नटो वा यत्रानुबध्नाति सा ध्रुवा अनुबद्धा ॥३३१॥

अनुबन्धम् व्याचष्टे ।

प्रापोद्दितप्रवृत्तो यश्चतुर्थलयकारक ।
नाट्योपचारजनित सोऽनुबन्ध ॥इति॥

अनुबन्धना गीतिहितमन्योन्यमविच्छिन्नं कृत्वा प्रकर्षेण प्रवर्तन यत्याद्यीनामक्षरान्ताना यतो भवति तदा क्रियाविशेषोऽनुबन्ध । स च कवेस्तथोचितध्रुवार्थयोजनम् । अचि-तरच ध्रुवार्थ । तत्र विभावादिपूरणविद्रूप । तस्मिन् योजना पानकमिव रस प्रसूते । तद्योजनार्थश्च यत्यादेरक्षरान्तस्य व्यामिश्रीकरणरूपा वर्णकव । क्रियाविशेष गातुश्च तथंवाभिकलो नयात्मा । आचार्यस्य सम्यक् तदर्थयोजन किमपि तत्वान्तर मिव विदन् यात्मा । पात्रगतपात्रस्य तथा पात्राङ्गेन निर्वहणम् । अत एव परस्परस्य तीना योजने अन्ये च (न) यतिवस्तु । अतिलयाना च योजने द्रुतादिस्थतिरिक्त एव लयो भवेत् । एव पाकविद्यादीनामपि स्वत परस्परमस्य योजने किमपि तत्त्वान्तर-मिव विद्यत आत्मा । पात्रगतपात्रस्य तथा पात्राङ्गेन निर्वहणम् । अत एव च परस्प-रयतीना गुडमरीचादिरसयोजनमयदपि पानक इव रसा तत्स्वम् । तत्र ह । चतुर्थेति । चतुर्थलयो द्रुतादिभ्योऽन्य करोति स्फुरयतीति । लयग्रहण प्राधान्य द । लय एव हि तालमित्युक्तमक्कृत् । लयेन सर्व वैचित्र्य लक्ष्यते । अत एवायमनुबन्धो नाट्यश्चव

---

१ पद्यमिद नास्ति पुस्तकद्वये ।

२. अस्य स्थाने का० पुस्तके 'अन्यभावेऽप्रकृष्टा' इति पाठमेकमस्ति ।

[1]नाट्ये त्वरितसञ्चारा नाट्यधर्ममनुव्रता ।
सविलम्बितसञ्चारा भवेद् द्रुतविलम्बिता ॥३३३॥

अड्डिता तूत्कटगुणा शृङ्गाररससम्भवा ।
[2]यस्मात् सा न (स्थाने) प्रसन्ना च तस्मादेषाड्डिता स्मृता ॥३३४॥

[3]अन्यभावेषु कृष्टा च(ष्टा च) कृष्टहेतुषु गीयते ।
यस्मात् काव्यसयुक्ता ह्यपकृष्टा भवेत् ततः ॥३३५॥

---

व्यवहारेणैव जनित । सर्वथैवातिलौकिकत्वान्नाट्यस्य च रसस्योपचरणहेतु । विभावादिसम्पत्तिजनित नाट्योपचार च नाट्यायितमुपचारादिसामान्याभिमतकथितम् । तैर्जनितो लब्धसत्ताको नाट्यायितप्रयोजनबहुल इति । ईदृक् क्रियाविशेषोऽनुबध्यनमित्युच्यते । तद्योगाद् ध्रुवाऽनुबद्धेति ॥३३२॥

एवमनुबद्धा व्याख्याय द्रुतविलम्बितामाह । नाट्ये त्वरितसञ्चारेति । त्वरितो द्रुत. सञ्चारो यस्या सह विलम्बितेन सञ्चारेण वर्तते प्रकृतिभेदात् । अत एव नाट्यधर्मीकृत्य चित्र रसादिवैचित्र्य च प्रभु तदौचित्येन यत्र नियमो विद्यते । तस्येति मत्वर्थीयोऽण् (अष्टा० ५ २ २७) तेन द्रुतप्रयोगान्ता वा द्वितीयैव ॥३३३॥

अड्डिता तूत्कटगुणेति । उत्कटोऽतिस्फुटो गुणोऽनुभाववर्णः शृङ्गाररससम्बन्धी यस्या व्यावर्ण्यते सा उत्कटगुणा । अत् (त) (पा० धा० पा० १८) अतिक्रमे । अतिशयेन क्रमणमाक्रमण व्यापार च रसस्य (विभावादिभि सञ्चितम्) । उक्त शरीर व्याप्यते तेन (भ० ना० ७.७) इत्यत्र । अन्तरे शृङ्गारग्रहण सुखप्रधान हास्याद्भुताद्युपलक्षणम् । तेन हृदयस्थेन विवक्षास्त्वेन सम्भवो निर्माण यस्या. यस्या । अड्डितत्वे निर्वचन स्फुटयति । यस्मात स्थाने प्रसन्नेति । स्थानस्य चित्तवृत्त्यवस्थात्मन प्रकृष्ट सन्न व्यापन यस्माद् भवतीति ॥३३४॥

अन्यभावेषु कृष्टा चेति । कारुण्ये सम्यगु(ग्धु)क्ता उचिता प्रकृष्टा यस्माद् कृष्टमुत्थान कृत्वा गीयत । कि करुण एवेत्याह । अन्येषु च कृष्टहेतुषु । कर्माणि चित्तवृत्त्यवसादरूप मान्यर्थकारणेषु विप्रलम्भप्रधानकादिषु व्यभिचारिभूतेषु निर्वेदग्लानिश्रमचिन्ताप्रभृतिषु चो भिन्नक्रम ॥३३५॥

---

१. KSS varies and reads after 334.
२. KSS यस्मात् तस्मात् प्रसन्ना च ।
NS यस्मात् स्थानप्रसन्ना च ।
३. KSS varies

या तु प्रावेशिकी बोध्या सा कार्या द्रुतता नृणाम् ।
[1][या तु प्रासादिको नाम स्त्रीणां कार्याऽधिकता तु सा] ॥३३६॥

[2]या स्थिता साऽवकृष्टा तु या द्रुता सा विलम्बिता ।
याऽन्त्य । सानुबन्धा च प्रकारास्तु प्रवेशजा ॥३३७॥

[3]शौर्यका चोद्धता चैव देवपार्थिवयोर्भवेत् ।
दिव्यपार्थिववेश्यानां स्त्रीणां योज्या तथाधिकता ॥३३८॥

मध्यमानां प्रवेशे तु ध्रुवा द्रुतविलम्बिता ।
नीचानां चैव कर्तव्ये नृणां ये खञ्जनर्कुटे ॥३३९॥

खञ्ज च नर्कुट चैव स्थाने प्रासादिको तु सा ।
करुणाललितभावत्वाद्धास्यशृङ्गारयोर्मता ॥३४०॥

---

अथ सम्भवानुसारेण विध(ध)दिशमाह दर्शयति । यातु प्रावेशिकीत्यादि । प्रावेशिकीग्रहणमुपलक्षणार्थम् । नृणामिति चेष्टाबाहुल्यमभवात् । अन्ये तु नियमपरत्वं व्याचक्षते । तच्चेद(द)ष्टान्त सम्यग्विरुद्धमित्युपेक्ष्यमेव । परस्परव्यावृत्यर्थं ग्रन्थ इतीतरे । प्रासादिको नामाधिकत्तु(तो)पलक्षणम् ॥३३६॥

प्रकारास्तु प्रवेशजा इति । स्त्रीणाम(मि)ति वर्तत इति केचित । या द्रुता सा विलम्बिता याऽन्तरा सा स्त्रीणामनुबन्धेति । अन्ये तु नियमपरत्वं व्याचक्षते । अवकृष्टेत्येतच्च शौर्यका चोद्धता चैव देवपार्थिवयोरित्युक्तग्रन्थ योजयन्ति । वक्ष्यते इत्यध्याहार्यं (म्)॥३३७॥

दिव्यपार्थिववेश्यानामिति । अप्सरसां गणिकानां च । स्त्रीणामिति । कुमाराङ्गनामपि ॥३३८॥

मध्यमानां नीचानां च सम्प्रवेशे द्रुतविलम्बिता । तस्या च खञ्जनर्कुटे इति कार्ये इति सङ्गतिः । तुरप्यर्थे ॥३३९॥

प्रासादिक्यपि स्थानेऽवसरे खञ्जनर्कुटरूपा । अवसरमाह । शृङ्गाराङ्गारयोरिति । अत्र हेतुर्ललितभावत्वादिति । तो रसौ सुन्दरस्थायिभावौ । खञ्जनर्कुटे च ललितभावे लालित्य भावयत अन्ये इति ॥३४०॥

---

१ इदमर्धं नास्ति का॰ पुस्तके ।
२ KSS या समासितत्वाचारा भवेदर्धविलम्बिता ।
३ इत आरभ्याध्यायान्तं का॰ पुस्तके सर्वथैव पाठो भिद्यते अतएव ग्रन्थविस्तरभयादत्र न दीयते ।

कुर्यान्नीचे मृते चैव त्वनुबन्धं यथाश्रयम् ।
स्त्रीणां राजन्यवंश्यानामव(प)कृष्टा तथैव च ॥३४१॥

सन्निपातास्तु चत्वार प्रावेशिका भवन्ति हि ।
शेषा हि सन्निपातास्तु शीर्षि(र्ष)का. पट्परा स्थिताः ॥३४२॥

स्थितं चाप्यद्रुतं चैव नीचानां न हि कारयेत् ।
सर्वसाधारणमतेस्तेषां कार्यं तु नाटकम् ॥३४३॥

अयो भावा भवन्त्येषां हासशोकभयात्मका[1] ।
एव भावान् विदित्वा तु ध्रुवा कार्या प्रयोक्तृभि. ॥३४४॥

---

मृते कस्मिश्चिन्नीचपात्रविषय । तथा स्त्रीणामनुबन्ध यथाश्रयम् । चतुर्थ-सयकारक कुर्यात् । नीच एव हि करुणे बहुविधेति दर्शितम् ।

स्वैर्वर्णोत्तममध्यानां नीचानां परिदेवितं. ।
(भ० ना० ७ ६३)

इति । राजन्यवंश्यानामिति । उत्तममध्यमानामपि अपकृष्टा करुणे ॥३४१॥

मानमाह । चत्वार सन्निपाता प्रावेशिक्या इति । चत्वारस्तालपरिवर्तना इति यावत् । शेषा नैष्क्रमिक्यादे । सन्निपाता । अत्रैवमपवादमाह । शीर्षकाः षट्पदे (रा इ)ति । द्वौ परिवर्तौ । तत्राक्षरता षट्परता ॥३४२॥

अथ मन्थरभावावसरे प्राप्तमपि स्थिताद्रुतयो प्राप्तमभिधास्यात्(वत्) पूर्वोक्त स्मारयति ।

स्थित चाप्यद्रुत चैव नीचाना न हि कारयेत् ।

इति द्रुतयो(तया)र्यायोऽत्र प्रयोजक. तेषा तु चलनं प्रयोगसम्पादन तदाश्रिता(त) विषयस्तेनोचितं चञ्चत्पुटे कार्य (यम्) । कोऽसौ सर्वे भावा येषां व्यङ्ग्यत्वेन तैः । उद्धतप्रयोगे तैरेव द्रुतलयध्रुवाप्रयोगे तैरेव विलम्बिते(तैरि)त्यर्थं ॥३४३॥

तत्र किम्भावरूपैरेषां प्रधानपदाश्रयेण भूयसा मानमित्याह । अयो भावा इति । हास्यशोकभया भोज प्राचुर्येणेत्यर्थं ॥३४४॥

---

1. NS भयानका ।

वस्तु प्रयोग प्रकृति रसभावान्(व्)तु वय [1] ।
देश कालमवस्था तु ज्ञात्वा योज्या ध्रुवा बुधै ॥३४५॥
वस्तुद्देशसमुत्थ तु पुन (नाग)रारण्यसम्भवतु ।
प्रयोगश्चैव विज्ञेयो दिव्यमानुषसश्रय· ॥३४६॥
उत्तमाधममध्या तु त्रिविधा प्रकृतिर्मता ।[2]
रसभावो तु पूर्वोक्तावृतु. कालकृतस्तथा ॥३४७॥
शिशुयौवनवृद्धत्व वयश्चैव प्रकीर्तितम् ।
कक्ष्याविभागजनितो[3] देशस्तु द्विविधो मत ॥३४८॥
कालो रात्रिन्दिवकृतो यामकालविनिर्मित:[4] ।
अवस्था चैव(या तु) विज्ञेया सुखदु खार्थसम्भवा ॥३४९॥

---

पूर्वमुक्त लक्षयित् पूर्ण चाभिधात् स्मारयति । वस्तु प्रयोगमित्यादि ॥३४५॥

एतद् क्रमेण लक्षयति वस्तुद्देशसमुत्थमित्यादिना अवस्था या तु विज्ञेया सुखदु खार्थसम्भवा इत्यन्तेन । उद्देशसमुत्थ यदुद्दिश्य गानकार्यस्य समुचितमुत्थान प्रसरणम् । नागर. कौरहमादि । प्रयोगो दिव्यमानुषाश्रय इत्येकशेषेण । तं वेत्ति दिव्यमानुषाश्रा तृतीयाऽपि स्वीकृता तद्भेदेन गजादेर्भेद । काव्ये तथथा । दिव्ये सुरगणे इत्यादि ॥३४६॥

उत्तमादिका प्रकृति. । तद्भेदाद् रथाङ्गचक्रवाकमधुकरादिवर्णनम् । रसा भावो तु पूर्वोक्तावित्ति । रसाध्यायोक्तो (भ० ना० ६) । जातिवाचिनोरेकवचन तयोरद्व(र्ये)न्द्व । कालकृत कालवशात् कुसुमादिविशेषोद्भेदरूप ऋतुरित्यर्थ. ॥३४७॥

वय. शिशुयौवनवृद्धत्वमिति शिशुशब्देन नि शेषे समाहारे द्वन्द्व । कक्ष्याविभागेन जनितः कल्पित पवते चाग्रहादतिदेश विभागजनित पूर्वोत्तरादिति द्विविधो देश· ॥३४८॥

रात्रिन्दि(त्रिन्दि)ना(व)कृत इति । सामान्यविषय काल. । यामकालकृतस्त्वहरष्टधा विभज्य रात्रिमप्यष्टधेत्यनेन । येन राजादिविशेषविषया सुखदु.खादर्थ(खार्थ)ना रूपा चार्पितः । त(त)त्सम्भवोऽस्या इति त्रिधाऽवस्था सुखित्व दु खित्वमर्पितत्व चेति यावत् ॥३४९॥

---

१ NS रसभावाध्नि च यत् ।
२ NS स्मृता ।
३ NS भावजनितो ।
४ NS विनिश्चित ।

स्थानान्येतानि तु बुधैर्नानावस्थानि नित्यशः ।
प्रयोगे सम्प्रयोज्यानि रसभावौ समीक्ष्य तु ॥३५०॥

यानि वाक्यैस्तु न ब्रूयास्ता(त्ता)नि गीतैरपा(दा)हरेत् ।
न तैरेव तु वाक्या(काव्या)र्थैर यं प्रवकेवला( यैरौपम्यस)म्भवं ॥३५१॥

ध्रुवाणामाश्रया कार्या ह्यौपम्यगुणसम्भवा ।
उत्तमाधममध्यानां नृणां स्त्रीणामथापि च ॥३५२॥

¹आदित्यसोमपवना देवपार्थिवयोगतः ।
दैत्यानां राक्षसानां च मेघपर्वतसागराः ॥३५३॥

---

एतदुपसंहरन्नेव योजयति । स्थानानीति । स्थानानि ध्वनिमित्तानीत्यर्थः । नानावस्थानीत्य परिसंख्येयावान्तरभेदानीति यावत् । यस्त्वाद्यिमध्ये च रसभावौ प्रधानमित्याह । रसभावौ समीक्ष्य त्विति । तुरन्येभ्योऽनयोर्विशेषकः । न केवलं गीतिभावोऽत्र रञ्जनोपयोगित्वं तु प्रधानं यावत् कार्यभावोऽधिकृतरसगतस्य वाच्येनाऽस्पष्टस्यानुभावस्य व्यभिचार्यादेः पूरणमिति दर्शयति ॥३५०॥

यानि वाक्यैस्तु न ब्रूयात्तानि गीतैरुदाहरेत् ।

इति यस्त्वशक्यो वर्णयितुमित्यर्थः । काव्यवाक्यैर्वर्णयितुं कुतश्चिन्निमित्तवशान्न पश्यन्ते ते गीतवाक्यैरुदाहर्तुं कथयितुं शक्या । तर्हि नाटककाव्यवद् गीतकाव्ये सन्ध्यङ्गनिर्वहणादिप्रयाससम्भव । (न) तैरेवेति राजादिवर्णनया न तस्मिन् गानेऽपि तत्सदृशरसादिवर्णने

न तैरेव तु काव्यार्थैरन्यैरौपम्यसम्भवं ।

इत्युक्तम् ॥३५१॥

तत्र कस्य केनौपम्यमिति प्रस्तावयितुमाह । ध्रुवाणामाश्रया इति । वर्णनीया । औ(औ)पम्य सादृश्य तदेव गुण प्रकृतोपयोगसम्भवप्राप्तिरौचित्य येषामित्यर्थः ॥३५२॥

कस्य किमुचितमिति दर्शयति । आदित्यसोमपवना इत्यादि । यत्रापि प्रतापाह्लादकत्वदीप्त्याद्यवस्थान्तर राजादेर्वेष्यम् । एवं सर्वत्र ॥३५३॥

---

१ NS आदित्यसमेयय (पव)ना ।
KSS varies

सिद्धगन्धर्वयक्षाणां [3]ग्रहोडुवृषभा मता ।
तप स्थितानां सर्वेषां सूर्याग्निपवना मता ॥३५४॥

हव्यवाहस्तु विप्राणां ये चान्ये तपसि स्थिता ।
एतेषामेव या नार्यस्तासामौपम्यस श्रया ॥३५५॥

विद्युदुल्काकरस्याद्या[2] विद्या(दिव्या)नामपि च स्मृता ।
देवानां तु प्रयोज्या ये नृपाणामपि त स्मृता ॥३५६॥

नागसिंहवृषार्याश्च[3]नेते दिव्येषु कीर्तिता ।
महिषाश्वसिंहाश्च क्रव्यादा पशवश्च ये ॥३५७॥

हिंस्रसत्त्वेषु ते कार्या यक्षराक्षसजातिषु ।
उत्तमानां प्रयोक्तव्या नानारससमाश्रया ॥३५८॥

मत्तमातङ्गसहिता राजहंसाश्च गोवृषाः ।
शिखिन सारसा क्रौञ्चाश्चक्राह्वा कुमुदाकरा ।
मध्यमानां प्रयोक्तव्या[४] औपम्यगुणसश्रया ॥३५९॥

कोकिल षट्पद ध्वाङ्क्ष कुररकौशिक बकम् ।
पारावत सकारस्वमधमेषु प्रयोजयेत ॥३६०॥

एवमेषा प्रयो(यु)क्तानां स्त्रियो यास्तु भवन्ति हि ।
उत्तमाधममध्याना तासां चैव निबोधत ॥३६१॥

---

ग्रहा जीवादय । उडुवृषभास्तिष्यादय काला इति सम्प्रदायः ॥३५४॥
ये चान्य इति । क्षत्रियाद्या ॥३५५॥

रश्मि प्रकृते स्त्रीनिकृताऽपर्याप्याविदीधितिमरीचिप्रभाद्या प्रयोक्तव्या । अधमा विषयास्ते सहकाराद्या अपि ॥३५६-३५७॥

हिंस्रसत्त्वेष्विति । हिंसाप्राधान्ये विवक्षिते व्याघ्र (द्या) । अत एव राक्षसेषु ॥३५८॥

---

१ NS ग्र(ग्रा?) हेम (म) वृषभा स्मता ।
२ रसाद्या ।
३ वृकाश्चैव ।
४ प्रकर्तव्या ।

[1]शर्वरी च सुधा ज्योत्स्ना नलिनी करिणी नदी ।
नृपस्त्रीणां भवन्त्येता औपम्यगुणसंश्रया ॥३६२॥
दीर्घिका कुररी वल्ली भारसी शिखिनी मृगी ।
मध्यमानां भवन्त्येता वेश्यास्त्रीणां[2] च नित्यश: ॥३६३॥
षट्पदीं कुररीं ध्वाङ्क्षीं परपुष्टां[2] च योजयेत् ।
[3]अधमाः स्युध्रुवा ह्येता प्रयोक्तव्याः प्रयोक्तृभिः ॥३६४॥
गत्यर्थोपमिता याश्च चलनार्था भवन्ति हि ।
प्रावेशिक्या बुधैरेव नैष्क्रामिक्यास्तथैव च ॥३६५॥
प्रावेशिक्याश्रया यास्तु [4]पूर्वाह्णार्थे तु ताः स्मृताः ।
नक्तंदिवसमुत्थास्तु नैष्क्रामिक्या स्वकालजा ॥३६६॥
सौम्याः पूर्वाह्णकाले तु मध्याह्ने [6]दीप्तिसंश्रयाः ।
अपराह्णे तथा मध्या [7][सशोकाश्च]सन्ध्यायां करुणाश्रयाः ।
चलनार्था हि ये प्रोक्ता आक्षेपिक्या भवन्त्यपि ॥३६७॥

---

(कुमुदाकरा॰) समुदा । तदभावविषया उक्ता ॥३५९-३६४॥

गत्यर्थोपमिता इत्यादिना क्रियास्थिति(विषय)त्व प्रावेशिक्यादिविषयमाह । गत्यर्थस्तूपमित सामाजिकहृदयसमीपे प्रक्षेपो यैश्चलनार्थधातुभिस्तेऽपि प्रवेशे । दर्शनीयमिति तथैव चेति । प्रदर्शनवेशादिप्रकारेणैवेत्यर्थः । कामिभिर्दर्शयितुमात्मान गूहयितुमित्यादिभेद इत्यर्थः ॥३६५॥

भूयस्त्वाभिप्रायेण कालौचित्यमाह । प्रावेशिक्याश्रया यास्तु(पू)रा(र्वा)ह्णा(र्थे) इत्यादि । तत्काले कार्याभ्युत्थानस्य भूयसा दर्शनात् । तदाह । नक्तंदिवेति । दुर्यथपौरुषें । प्रावेशिक्यानियतत्वेनाश्रीयमाणाया कार्यविशेषा यद्यपि रात्रौ दिने च समुत्तिष्ठन्ति । तथाहि(पि) भूयस्त्वाश्रयेणेदमुक्तम् । एतदुक्तं भवति । प्रकृत कार्यं यत्र काले भवत्युपधान [illegible] पूर्वाह्णे योज्यम् । एवमौचित्यात् प्रवेश स्फुटं सूचयतीत्यर्थः ॥३६६॥

एव सौम्या पूर्वाह्णे दीप्तिर्मध्याह्ने शोकाश्रपराह्णे वर्णमौपमित्याह ।

---

१. NS शर्वरी वसुधा ज्योत्स्ना ।
२. वेश्यानां च ।
३. अधमाना ध्रुवास्त्वेता ।
४. गत्यर्थे यमिता ।
५ पूर्वाह्णे यास्तु ।
६ दीप्त ।
७ काले ।

प्राक्षेपा एवमेव स्युर्द्रुतस्थितगतास्तथा[1] ।
रोषामर्षादिसम्पूर्णा (स्मृता) लोकाद्भुतमयानका ॥३६८॥

[2]यद् द्रव्य वसुधासस्थमृते दैवतमानुषान् ।
तत्तत्सर्वमुपनेय तु मानयुक्त्योपमाश्रयम् ॥३६९॥

---

अन्ये सौम्य वस्तु पूर्वाह्णकाले प्रयोज्यमिति प्रयोगकालनियमोऽयमिति मन्यन्ते । अन्ये तु बन्दिमागधादीना सौम्या(म्य)दीप्तादिवस्तुविषय( स्तुत्यादिगते( ) कालनियमोऽयमिति । प्रतिपन्ना बालक्रीडाऽऽलक्रीडादयोऽर्था प्राक्षेपिक्या ॥३६७॥

अत्र हेतु । प्राक्षेपा एवमेव स्युरिति । एवमेव लयभिन्ना अ(इ)त्याक्षेपा । सामञ्जस्ये द(रिषय)मुद्धता क्रिया । एवमेवेति । चलनादिरूपकतयैव भवतीति सम्भाव्यते । कुतस्त इत्यादिविशेषा भवन्तीत्याह ।

रोषामर्षादिसम्भूता लोकाद्भुतमयानका ।

इति । पु[लिङ्ग] .. . त्वान् मत्वर्थीयोऽच (अष्टा० ५ २ १७) लोक. पुनर्लोकादय कारणत्वेन येषा सन्ति । अत एव लोककृताक्षेपमध्ये विलम्बितलयस्य सम्भव. ॥३६८॥

यदुक्तमस्माभिरहाशिग्नसोमेति (भ० ना० ३२ ३२१) । एव स्थितिरि (ति इ)त्यादि(भ० ना० ३२ ३७४)दिग्प्रदर्शनमिति । तदर्थमाह । यद् द्रव्य वसुधासस्थमृते दैवतमानुषाश्च (षान् । तांश्च) वर्जयित्वा । प्रादित्यस्य वस्तु परिदृश्यमानस्वभावा एवोपमानत्व उचिता । मनस्त्वविष्ठातृदेवतास्वरूप दैवतम् । तद्वर्ज्य ।

ननु किमतो नियमाद् दृष्ट भवतीत्याशङ्क्य हेतुमाह । तत्तत्सर्वमुपनेय त्विति । युक्तौ । यस्माद् गजेन्द्रपवनादीना विशिष्टे प्रवेशादिके भूयमाणे स्वयमनधिकारिणोत्वाद०यत्वाच्च न तावन्मात्र एव वाक्यार्थे सामाजिकस्य प्रतीतिविश्रान्स्यति । अपि तु प्रस्तुतप्रशस्त्यायेनाधिकारिणि प्रकृते चित्तवृत्तिर्धावति । अतश्च तद्वस्तूपनेतु प्रकृतार्थ प्रति सङ्क्रमयित शक्य भवति । किञ्च माट्यो पत्तो रसास्याये (भ० ना० ६) प्रतीतिविश्रान्त्या आहार्यादे(रधिक) न प्रयोज्यत्वमपि तु चित्तवृत्ति(तौ)रिति वितत्य दर्शितम् । तत्राधिकारशरीरऽर्था रिवनस्यास्य पुस्तचित्रलेख्यप्रख्यस्य चित्तवृत्ति प्रासीकारयोग्यत्वादुत्तानतया भासमानाऽसौ सर्वत्र विशेषेणोपनेतु शक्या यदुपनयाद्रसास्वाद । यथोक्त भट्टतोतेन ।

सविशिष्टेन केनापि प्रासीकारादपह्नुतः ।
प्रकाशतेऽस्त उत्ताना सर्वस्यास्वादनिर्भरम् ॥इति ।

---

१. NS स्थितिगता ।
२ यद्द्रव्य वसुधास्थ कृतदैवतमाश्रितम् ।

स्थावरं स्थावर कुर्याद्गत्यर्थस्वपमाश्रयम् ।
सुखदुःखकृतैर्भावैरौपम्यगुणसंश्रयात् ॥३७०॥

भूमिस्थ वाजिकुञ्जरमृगपशु शिविकाविमानानाम् ।
गतिविभ्रम हि दृष्ट्वा कर्तव्या नु ध्रुवा तज्ज्ञैः ॥३७१॥

रथपत्रवाजिवारणविमानशिविकास्थ[२]पक्षियानेषु ।
[३]द्रुतपदवर्णावर्णं कर्तव्या नु ध्रुवा तज्ज्ञैः ॥३७२॥

ओजस्कृता तु सा वै गुरुवर्णा वृषगजेन्द्रसिंहेषु ।
सारसवानरहंसे तथा मयूरे विधातव्या ॥३७३॥

---

इन्द्रादेरर्जुनादेश्च नानकाव्यार्थनेतु स्वयमेवाधिकारित्वात्तावन्मात्रविश्रान्तिसम्भवान्नोपमेयत्वमिति । नानयुक्त[का०यमी]तिनाटकगतोभयकाव्यर्योचितस्य गीतिविशेषस्याभियोजना तु सवित्साधारणी भवति । गीतेश्चित्तवृत्तिमात्रद्योतका[कत्वा]दिति ॥३६६॥

अत्रापि शिक्षान्तरमाह । स्थावरं स्थावरमिति । एकोऽर्थशब्दोऽपरो कश्चित्तावस्तेनावस्थानशीले सहकाराद्युपमान भवति । सहकारतरुः शोभत इति । न यावसीति । तत्र तेषु स्थानेष्ववश्य(घ्य) स्थायिनी गति ॥३७०॥

सा च विभज्य वर्णनीया । उपमान च तत्रोचितमाश्रयणीय सत्कविभिरिति दर्शयति । भू(मि)स्थेत्यादि । भू(मि)स्थ पादचरी गतिविभ्रमो गतिवैचित्र्यम् ॥३७१॥

तदुदाहरति रथपत्रेति । पत्र युग्यादि । पक्षिभिर्यद्धार्यमान येषाम् । रथादिशिविकास्थ[स्था] पक्षियान(ना)श्चेति द्वन्द्व । काव्ये पर(द)द्रुत(त) लघुवर्णम् । वर्णो गीति । साऽपि द्रुतवर्णा इति । स्फुटवर्णपर्युदासेन सरसरसा अवर्णा पौष्करा वर्णानुहारा । तेऽपि द्रुता लघुबहुला । द्रुतै पदवर्णाविर्णैरुपलक्षिता । द्रुतेति सम्बन्ध ॥३७२॥

ओजस्कृतेति दीप्तार्था तेष्य । गरुवर्णेति । वर्णशब्दोऽत्रापि वर्णायेदि[ध्यते]ति तालाक्षरेषु । सेति ध्रुवा ॥३७३॥

---

१ NS. स्थावरा (रे)स्थावर ।
२ सिवपस्थ ।
३ द्रुतवपदवर्णवर्णं ।

द्रुतगमने [1]लघुवर्णा विलम्बितगतं च दीर्घवर्णकृता ।
एवंस्थितद्रुतानां[2] ज्ञात्वा भाव ध्रुवा कार्या ॥३७४॥
नास्ति [3]किञ्चिद् वृत्त तु पद गानसमाश्रयम् ।
तस्माद्गीतिमभिप्रेक्ष्य तद्वृत्त[त्तां] योजयेद् ध्रुवाम् ॥३७५॥
तस्माद्वाहनगत्यर्थं ध्रुवा कार्याक्षरैस्तथा ।
यत्राङ्गानां समता यत्र भाण्डवाद्ये करिष्यति[4] ॥३७६॥
[5]यद्द्रुतो(तो) वाहनगतो ध्रुवापादो विधीयते ।
तद्वृत्त तु [6]भवेद्वाद्यमङ्गवाद्यसम तथा ॥३७७॥

एतदेव व्याख्या दर्शयति ।

द्रुतगमने लघुवर्णा विलम्बितगतौ च दीर्घवर्णकृता ।

इति ॥३७४॥

यस्मादविद्यमान गुरुवर्तन यत्र पदे सारस्यस्य नास्ति तस्मात् गानस्य गीति इवानगतस्योद्धतमसृणादेराश्रयणाद्या गीतिवर्णाङ्गरूपा विलम्बितद्योतिमेनायाति ता विचार्य तद्वत्या तदुचितगुरुलघुनियमा ध्रुवां वृत्तजामिति योजयेत् गीतावसानतया सम्बन्धयेदिति ॥३७५॥

नितयस्माच्यमेव स्फुटयति ।

तस्माद्वाहनगत्यर्थं ध्रुवा कार्याक्षरैस्तथा ।
यत्राङ्गानां समता यत्र भा(भा)ण्डवाद्ये करिष्यति ॥

पुष्करवाद्याक्षरै हेति । अङ्गाना वर्णाना गानेकेकाद्यैना ध्वेनविन्द्वाद्यलङ्काराणा च समतामुचितलयत्व करिष्यतीति विकीर्वितम् । तस्मादिति । भाण्डवाद्य द्रुतयेनावलम्ब्य वाहनगत्यर्थैरक्षरै पदैरुपलक्षिता ध्रुवा । तथेति । तत्प्रकारैरेव कार्येति सम्बन्ध ।

एतदुक्त भवति । इदमत्र वाहनगत्यादि वर्णनीयम् । ईदृशेनात्र वर्णाङ्गेन भाव्यम् । तत्र चैदृशेन भाण्डवाद्येन तत्र चेदमुचित ध्रुवावृत्तमिति पर्यालोचनम् । क्वचि[ता]ध्रुवाङ्गमत्र पदत्रयस्य साङ्गोपाङ्गमुत्तर[वत] श्रवणादिति केचित् ३७६-३७७।

१ NS लघुवर्णा विततगतौ ।
२ द्रुताना ।
३ किंचिदवृत्त ।
४. करिष्यते ।
५ प्रद्रुतो वाहनगतो ।
६ भवेच्चाद्य ।

पूर्वं गानं ततो वाद्यं ततो नृत्तं प्रयोजयेत् ।
गीतवाद्याङ्गसंयोगः प्रयोग इति संज्ञितः ॥३७८॥

हृदयस्थस्तु यो भावः सोऽङ्गाभिनयनैरथ ।
निवृत्यङ्कुरसूचास्तु (सु)कार्यस्त्वभिनयान्वितः ।
तत्र प्रासादिकी योज्या [१]प्रहर्षार्थगुणोद्भवा ॥३७९॥

आकाशपुरुषो यत्र यत्र आकाशभाषणम् ।
[२]प्रावर्या तत्र कर्तव्या ध्रुवा ह्याभार(काश)संश्रिता ॥३८०॥

---

अत्र साम्यफलमाह । पूर्वं गानमिति । पूर्वं प्रधानमपि रञ्जकत्वसाधारणीकारणाभ्यां रसस्यान्तरङ्गत्वाद्यत्र लयसाम्यार्थं वाद्य तदनुगति न पात्रस्य गत्यादिरूपं गात्रविक्षेपात्मक नृ(नृ)त्तम् । यद्यपि गत्या वाद्यानुसारिण्या (भ० ना० ४.२.२७४) इत्यत्र नाट्येऽङ्गविक्षेप (पस्ततो) गीतवाद्यं न तु विपर्यय इत्युक्तम् । तथापि सिद्धे प्रयोगे न तदत्रोचितमिति प्रतिवक्तुः प्रतीत्यभिप्राय(यो) मन्तव्यम्(व्य) । प्रयोगस्य तु सिद्धिरेतद्यदा क्रियते तदा प्रयोक्तृव्यवहारस्थिता(ते) गीतवाद्ये पूर्ववद् व्यव(हार)-स्थापितो(ते)ऽपि रूपे यदा भवनस्तदा हृत तदपेक्षी भवेत्येवेत्यलं बहुना ।

एवं गीतानां सम्यग् योजनं प्रयोग प्रकृष्टं योजनमिति कृत्वा ये तु ताण्डवाभिप्रायमेनयथाश्रुत नाट्यविषये पूर्वं नृत्तं प्रयोज्यमिति वर्णयन्ति न ते प्रकरणं प्रयोगहृदयं च परम(म)र्शयिष्यत्ताम् ॥३७८॥

अथ प्रासादिक्या ध्रुवाया विशिष्टं पूरयितुमाह । हृदयस्थं तु (स्थस्तु) यो भाव इति । तुरेवार्थे । अपेर्थि वार्थे । हृदयस्य एव गनिर्भू(भू)त एव(व) न तु पृथग् वाच्यार्थता प्राप्तोभावनित्तवृत्यात्मिका(को) चेष्टात्मा वा । अत एवाभिरङ्गाभिनयैरेव साध्य इत्यङ्कुराभिनयेषु सूचाभिनयेषु च यो भावोऽभिनयात्मकोऽभिनयमात्रसारस्तत्काले काव्यस्य व्यापारात् । तत्रैतेष्वङ्कुरनिवृत्यङ्कुरसूचाविषयेषु भावेषु प्रासादिकी ध्रुवा योज्या योजनमर्हति । प्रहर्षलक्षणं सामाजिकानां योऽर्थः प्रयोजन स एव गुणो यत्र साम्य तस्योद्भवो यस्या इति प्रयोजनमन्वर्थत्वं चोक्तम् ॥३७९॥

विषयान्तरमप्यस्य दर्शयति । आकाशपुरुषो यत्रेति । प्रविष्टेनापि सता येन सम्भाषणमादौ तत्र प्रवेश्यमाणता या साऽऽकाशभाषणेनेह लक्षिता । यस्तु नैव

---

१. NS प्रहर्षार्थं गुणोद्भवा । (KSS प्रकर्षार्थं) ।
२. NS. varies absolutely

प्रा(प्र)सादिक्या(दना)थवा चापि हीर्ष्याक्रोधाश्रयाऽपि वा ।
शृङ्गाररसमासाद्य ध्रुवाऽन्वर्था प्रयोगतः ॥३८१॥

यानि प्रासादिकानि स्यु स्थानानि रससंश्रयान् ।
अन्वर्था तत्र कर्तव्या ध्रुवा प्रासादिकी तथा ॥३८२॥

[1]भाषा तु शौरसेनीं हि ध्रुवाणां सम्प्रयोजयेत् ।
यदाऽपि मागधी यत्र कर्तव्यं नर्कुटं तथा ॥३८३॥

---

प्रवेक्ष्यति भाणादाविवोन्मादादि कल्प्यत(ल्प्यत) एव वा स आकाशपुरुष उक्त (भ० ना० २२ ३२१) । तत्राकाशमंश्रयाव्यवधान सूचिकंबार्थानुगता ध्रुवा कार्या ।

कम तं तरिमं णिम सहमरिम सगइ सामु
पुरिसोसु मरसु प्रथदि ॥
[क त्वं तरिरिव सहचरि स्वगते स्वामिनि
पुरीश्वरसमयसि ॥] ॥३८०॥

अपि सर्वप्रासादिकी भवति । तथापि धीरादौ भाण्डवाद्यकोल(ला)हलादि-प्राधान्यमिति शृङ्गारे सा प्रधानभूतेति दर्शयितुमाह । प्रा(प्र)सादनाश्रया वा(च)पीति ॥३८१॥

अन्यरसविषयत्वात् सम्भवत्येवेति दर्शयति । यानि प्रासादिकानीति । रसप्रसक्तितः प्रयोजनं येषां काव्यस्थानां तेषु प्रासादिकी अन्वेष्यति । सा हि तत्प्रयोजनेति भावः ॥३८२॥

अथ प्रकृतिषु भाषा ध्रुवाविषयत्वाद् विभजति । भाषा तु शौरसेनीमिति सामान्यविधि । मागध्या तु नर्कुटमिति मागध्यंविषयेऽपि युक्त भवति । नर्कुटस्यैतद्विषयत्वेनाभिधानात् ॥३८३॥

1 NS ,भाषादि सौरसाना तु ध्रुवाया ..।

दिव्यानां [1]संस्कृतं गानं प्रमाणैस्तु विधीयते ।
अर्धसंस्कृतमेव तु मानुषाणां प्रयोजयेत् ॥३८४॥

ये त्वौपम्यकृता दिव्या यदि तेषां प्रयोगतः ।
[2]प्रवेशो नाटके तु स्याच्छृणु तेषां समाश्रयम् ॥३८५॥

यस्त्वेषां सात्त्विको भावः कर्मसङ्कीर्तनं च यत् ।
[3]तत् कार्यं गानयोगेऽपि प्रमाणगुणसंश्रयम् ॥३८६॥

---

दिव्यानां तु देवनृपाणां प्रमाणैर्व्याकरणादिलक्षणैरुपेतं संस्कृतं गानं शुद्धम् । मनुष्याणामर्धसंस्कृतम् । [अन्यत्] त्रिवर्णं(वर्गं)प्रसिद्धं पदमध्ये सुसंस्कृतं मध्ये देशभाषादियुक्तं तदेव कार्यम् । दक्षिणापथे मणिप्रवालमिति प्रसिद्धम् । काश्मीरे शाटकुलमिति । अन्ये तु सकललोकप्रसिद्धैर्व्याख्यानानपेक्षिभिः संस्कृतं कृतमर्धसंस्कृतमाहुः । अपरे वररुच्यादिप्रणीतप्राकृतलक्षणान्वितं शौरसेन्यादिदेशभाषाव्यतिरिक्तं प्राकृतमेवार्धसंस्कृतमिति मन्यन्ते । यस्य या पाठे भाषा तयैव तस्य गीतमिति मुनिमतमित्य(त्यु)पेक्ष्यम् ॥३८४॥

ननु ये पूर्वमादित्याग्निसोमादय उपमानत्वेनोक्तास्तेषां यदा प्रयोगवशाद्दितिसूनीमित्यात् साक्षादेव प्रवेशो भवति यथा रामाभ्युदये मेघकस्तदा ध्रुवाया किं वर्णनीयमित्याशङ्क्याह । ये त्वौपम्यकृता इति । गणिकास्त्वेषां समाश्रयं वर्णनीयत्वे ध्रुविषयवशात्वेति मुनीन् प्रति प्रत्येकं भरतमुनिराह । न तेषामुपमामुखेन वर्णनमपि तु स्वरूपेणैव ध्रुवा । तदन्य(न्य)गामवदेव त्रयेष्वपीति केचित् । अन्ये त्वधिष्ठानदेवताया प्रवेश एवाश्रयो लोकपरिदृश्यमानमूतरूपं उपमानमिति प्रतिपन्ना । अभियुक्तास्तु स्वयमाश्रित इन्दुप्रभागत वर्ण एवाश्रय उचितत्वादाश्रयेण(स्य)र्थं । उपमानत्वेन सजातीयत्वाच्च स्वतन्त्य(न्त्र)ता । अग्नेर्भस्माह्लादित्य स एवोपमानतया कार्यं इति वर्णयन्ति इत्येनोपमानाश्रयमिति । अन्ये तु गानध्रुवा तावदन्यपात्रपदे[ऽन्य] दैवदृष्टेश्यधिशा(धीश)स्तुतिर्ध्रुवा प्रयोज्येति । एतदनेन ग्रन्थेनोच्यत इति । एतदेव च युक्ततरं देवस्तवसूचनात् ॥३८५॥

यस्त्वेषां सात्त्विक इत्यादिना विकल्पं यत्स्वरूपं च वर्ण्यमिति दर्शयति । प्रमाणगुणसंश्रयमिति । सकललक्षणोपेतमित्यर्थः । स्वरूप(त)स्तु प्रमाणे गान्धर्वशास्त्रे तद्गुणैरविकृतैरेव जात्यंशकैरदृष्टप्रमाणकथनैस्तथाविधेषु गानं कार्यम् ॥३८६॥

---

१. KSS, NS संस्कृताज्ञाना ।
२. NS प्रवेशे नायके तु । KSS प्रवेशे नाटकेऽपि स्यात् कार्य...।
३. NS ततःकाय गानयोगे ।

छन्द प्रमाणसयुक्त विज्ञानां गानमिष्यते ।
पुण्याश्रय च तत् कार्यं कमसङ्कीर्तनादपि ।
[1](ध्रुवापदविधौ कार्यं यच्च पुण्य गुणाश्रयम्) ॥३८७॥

माला वक्त्र पुट वृत्त विद्युल्लोका चूलिका तथा ।
[2]उद्गताऽपरवक्त्रा च कतव्या वै प्रयोक्तृभि ॥३८८॥

विधान छन्दसामेतद् मया पूर्वमुदाहृतम् ।
जयाशीर्वादयुक्तानि कार्याण्येतानि दैवते[3] ॥३८९॥

ऋग्गाथाः पाणिकाश्चैव द्रष्टव्यास्तु प्रमाणत ।
सुखवत्त्वेन यस्मात् तस्मादृगीत प्रयोजयेत् ॥३९०॥

गान्धारमध्यमयुता पञ्चमयुक्तास्तु जातयो यास्तु ।
तासि प्रमाणगान कर्तव्य दैवतोपेतम् ॥३९१॥

---

एव पुण्यनिमित्तत्व लक्ष्यत इत्याह । कमसकीर्तनादपि पुण्यनिमित्त केवल गान्धर्वयोगादित्यपि शब्दार्थं वर्णयति ॥३८७॥

माला वक्त्रमित्यादिना विकल प्रवृत्तिविधिमाह । स च उक्तभावे(व इ)त्याह । पूर्वमिति । अन्ये मालि(चूलि)केत्यत्र चूर्णिकेति पठन्ति । वृत्तान्त्य वृत्तचूर्णिकेत्याहु । जयाशीर्वदिति । स जयतु पायादित्यादियुक्तानि । तदयमेव हि तेषा[विधि] । तमिह वदेदिति नाप्रकृतमेतदिति शङ्कितव्यम् । आ(प्र)र्हति कार्याणीति अर्हे कृत्य (पा०सू० ३ ३ १६९) । गानयमपि योज्यमान सुकुमारमेव योज्यम् । रञ्जनापरत्वाद् (ग)न्धर्वाणामिति ॥३८८ ३८९॥

ऋग्गाथा पाणिका इति । चकारोऽयमपि सुकुमार च चतुष्पदा लङ्गुल्यादि । एवकार सुकुमार व्यवच्छिनत्ति । सुखत्व इत्यय हेतु । इत्ययमृग्गाथातिसम्बन्धी तालविधि ॥३९०॥

स्वरविधिस्तर्हि वक्तव्य इत्याह । गान्धारमध्यमयुता पञ्चमयुक्ता॰

---

१ NS does not read
२ उद्गीता परवक्त्र च कर्तव्यानि प्रयोक्तृभि ।
३ दैवते ।

प्रासादिकं स्थितं चैव नैष्क्रामं सप्र(म्प्र)वेशनम्[1] ।
प्रमाणमपि कर्तव्यं चतुःस्थानसमन्वितम् ॥३६२॥

प्रायशः संस्कृतं योज्यमनुष्टुप्च्छन्दसा कृतम् ।
नानादैवतकार्येषु[2] ह्यन्तरा या विना तथा ॥३६३॥

[3]वक्त्रं चापरवक्त्रं च माला चेति प्रवेशजम् ।
पुटं च चूलिका चैव नैष्क्रामिकमयेष्यते ॥३६४॥

प्रासादिक्युद्गतावृत्ति(:)स्थितं चानुष्टुभोच्यते ।
स्थानान्येतानि योज्यानि प्रमाणस्य बुधैरथ[4] ॥३६५॥

---

स्थिवति । गान्धारी मध्यमा पञ्चमो चेति । अत एव गान्धारपञ्चमे भिन्नं यद् पञ्चमं ने चोक्षपञ्चमेन प्रयोक्तृकीर्तिः ॥३६१॥

दिव्यविषये चतस्रो ध्रुवा इत्याह । प्रासादिकं स्थितं चेति । प्रमाणमिति तालपरिच्छिन्नं गानम् । तदपेक्षमेव प्रासादिकमित्यादौ नपुंसकम् । स्थितस्य रसान्तराक्षेप कार्यमिति स्थितमप्राक्षेपिकं गानम् । अन्तरत एवान्तरगतविषयस्याभावाच्च स्थान[स्थिति]गानं स्यात् ॥३६२॥

यदा बहुतरं तदङ्गं प्रविष्टस्य रङ्गे स्थितिस्तदाऽन्तरध्रुवाऽपि भवति । तत्र च संस्कृतमनुष्टुब्ध्रुवागानम् । मार्गदीर्घकलाया तु स्थितो सा नैव भवतीत्याह । विना तथेति । अन्तरध्रुवापीत्यर्थः । गुरवस्तु मन्यन्ते । नैष्क्रामिकं सम्प्रवेशज(न)मिति । साहित्यसूच(चि)तेन प्रावेश(शि)की नैष्क्रामिकी च दिव्येष्ववश्यं भाविनी । इतेप्रा-(ताषा)पदालम्भमादेर्ध्रुवान्तरं तु कालपर्या(य)सापेक्षमिति ॥३६३॥

अथ वृत्तानि विभजति । वक्त्रं चेति । वक्त्रापरवक्त्रमालाः प्रावेशिक्यो देवानाम् । पुटचूलिके निष्क्रामे ॥३६४॥

प्रासादिक्य(क्य(क्या)भुद्गता । आक्षेपिक्यामनुष्टुप् ॥३६५॥

---

१ NS सम्प्रवेशजम् ।
२. कार्यं तु ह्यन्तराया ।
३. विष्कम्भापरवक्त्रं च ।
४. प्रमाणविबुधैरथ ।

यदनुष्टुप्कृतं गानं स्थितस्थानसमाश्रयम् ।
[1]स्वप्नभ्र शाश्रयकृतं चिन्तायु क्तसमन्वितम् ॥३९६॥

गुरुप्रायाक्षरकृतं करुणश्रुतिजातिकम् ।
[2]प्रकृष्टवर्णबहुल स्थितस्थान तु तद्भवेत् ॥३९७॥

उत्पादनार्थं नृणां तु तथा विहरणेष्वपि ।
दिव्यान्वय तु कर्तव्यं गानं पात्रसमाश्रयम् ॥३९८॥

मानुषेष्ववतीर्णेषु मर्त्यस्य स्मरणाश्रयम् ।
प्रायेण गान कर्तव्य दिव्यस्य स्मरणाश्रयम्[3] ॥३९९॥

प्रस्यैव दु.खविषय शोकचिन्ताविनाशजम्[4] ।
प्रमाणगान कर्तव्य शोकावस्थान्तराश्रयम् ।
[नरान्वयेन कर्तव्यं गान मानुषकादिषु ॥४००॥

नस्वाक्षि(-वाक्षे)पिकी स्थितिमथा यदा भवत्येषा सा का[ला]वकाशवशा-
दित्याशङ्क्याह । स्वप्नभ्र शाश्रयकृतमिति । यथा क[चिद]प्यर्थ कश्चिदेव स्वामिना
भगवद्रुद्रविष्णुविरिञ्चादीना परवश एव भ्रष्टदिव्यभावो बहुतर काल विभज्यते ।
तयोद्गु लय ग स्थितसस्य शोकोचितस्यान्तरा स्वस्थानवारणाद्युपवर्णनेऽवसरावकाश
इति तात्पर्यम् । नत्वत्र शापादिना स्वगभ्रश इति भ्रमितव्यम् । तदानीं दिव्यस्वभ्य-
पगमे करुणेऽस्मिन्न वक्तव्य स्यात् ॥३९६-३९७॥

ननु किमर्थं दिव्याना मा(म)नुष्यमध्ये प्रवेश इत्याशङ्क्येतिहासवृत्तान्तस्मर-
णयो(णेनो)त्तर ददाति । उत्पादनार्थमिति । इन्द्रस्यावतरणमर्जुनजन्मनेत्यादि ।
विहरण क्रीडन(ना)यानुसरणम् ॥३९८॥

यदपि दिव्यो मर्त्यधर्मेण वर्तते यथा भगवान् कृष्णो रामो वा सदा स्वं
स्वरूप स्मरति तदास्य दिव्योचितप्रमाणेन शास्त्रविधिना तु लौकिकस्य च्छन्द(न्दो)-
रीतिक्रयया गान कार्यम् ॥३९९-४००॥

१ NS स्वर्गभ्रान्त्याश्रयकृत ।
२ प्रभ्रष्टवर्णबहुक ।
३. दिव्यभावसमन्वितम् ।
४. विनाशनम् ।

ध्रुवाणां हि विधान(कार)स्य ह्याश्रयस्य विशेषत ।
यथा प्रयोग कर्तव्यस्तच्च मे सन्निबोधत ॥४०१॥

स्थापिते भाण्डविन्यासे त्रिसाम्नि परिकीर्तिते ।
[1]प्राश्रावणाद्य कर्तव्य बहिर्गीतप्रयोगजम् ।
प्रयुज्य च बहिर्गीत पूर्वरङ्ग प्रयोजयेत् ॥४०२॥

[2]पूर्वरङ्गे प्रयुज्ये(क्ते) तु नाट्याचार्यसमाश्रये ।
ध्रुवा तत्र प्रयोक्तव्या प्रकृतीनां प्रवेशजा ॥४०३॥

गत्याश्रयेण नाट्यज्ञं पार्वेरनुगतैस्तथा ।
परिक्रमेण रङ्गस्य गानेनार्थवशेन च ॥४०४॥

---

अन्यदा तूत्तरप्रयोगिन्यो ध्रुवा उत्थाप(पि)यादिका पञ्चमाध्यायवर्णित-स्वरूपा वक्तव्यशेषेण पूरणीया । तत्प्रस्तावप्रयोगे सम्बन्धे च दर्शनव्याजेन भणाहि(णी)ति ध्रुवाणां विकारस्य प्रकारपञ्चकस्य य प्राश्रयो नाटयप्रयोगस्तस्य पूर्वेण-(पूर्वरङ्गे) सहाय प्रकृष्टो योग स यथा कर्तव्यस्त निबोधत । चकारोऽत्र वक्तव्यशेष सूचयति ॥४०२॥

स्थापिते भाण्डविन्यासे इत्यर्धेन प्रत्याहारावतरणे सूचिते प्राश्रावणाद्यमि-त्यर्धेनान्तर्यवनिकाङ्गानि पूर्वरङ्गे प्रयोजयेदिति बहिर्यवनिकाङ्गत्या तत्प्रसङ्गेन गाना-श्रदिता ध्रुवा सोप(वर्णिता) ॥४०२॥

नाट्याचार्यकलिताना तु पूर्वरङ्गाङ्गवदनादिगाम्भर्येवैवपरिष्टा[नाम्] । प्रकृतीनामिति । उत्तमादिपात्राणां प्रवेश प्रावेशिकी ॥४०३॥

अथ पूर्वरङ्ग उत्थापनादिषूक्त परिवर्तास्तु चत्वार पाणयस्त्रय (भ० ना० ५ ४१) इत्यादि तच्चानुद्भिन्नमुद्भेदनीयमित्याशयेन पूर्वरङ्गविषये वक्तव्ये शेषा अभिधानायमुत्तमाङ्गक्रमस्या(प्रा)यास्त(तान्)निरूपयति । गत्याश्रयेणेत्यादि । ये परिवर्तास्तित्रोक्तास्तै पार्वैरनुगतैरिति चारीभिस्तालप्रमिताभिगतेराश्रयणेन तथैव परिवर्ता प्रयोज्या । कथम् । रङ्गस्य त्र्यश्रचतुरश्रविकृष्टभेदत्रयस्य य उचित परिक्रम [स] किन्निमित्त परिवर्तकानामित्याह । गानेनार्थवशेन चेति । गान

---

१ NS प्राश्रावणक ।
२ प्रयुक्ते पूर्वरङ्गे तु नाटपागार समाश्रयेत् ।

परिवर्ताः प्रयोक्तव्या पादैरनुगतैरथ ।
ध्रुवा तत्र प्रयोक्तव्या देवतामिर्युता बुधैः ॥४०५॥
तत्र पाता प्रयोक्तव्या एकविंशतिरेव च ।
त्र्यश्रा वा चतुरश्रा वा ध्रुवा नाट्ये प्रयोगतः ॥४०६॥
त्रिकलं पादपतनं त्र्यश्रायास्तु(यां तु) विधीयते ।
चतुष्कलं तु पतनं [1]चतुरश्रागतं भवेत् ॥४०७॥
उत्तमे चतुरश्रा च त्र्यश्रा चैव तु मध्यमे ।
त्र्यश्रं मर्कटकं चैव ह्यधमेषु प्रयोजयेत् ॥४०८॥

---

इ(मि)ति सामवेदम्(द) । अथ(र्थ) प्रयोजनम् ।

एकस्मिन् परिवर्ते तु गते प्राप्ते द्वितीयके ।

(भ० ना० ५ ३१)

इत्यादि पञ्चमाध्याये दर्शितम् । तेन परिवर्तबहुलगति । सामवेदप्रभवत्वं वर्णरचहण तन्मन्त्रजपनादिकं च प्रयोजनं परिवर्तेषु निमित्तमित्यर्थः ॥४०४॥

तत्र च ध्रुवा देवतामिर्युता । देव[ता]बहुवचनेन मत्वार्ङ्गे यादृशी क्रियमाण-त्वेन देवतोक्ता सैव तत्र ध्रुवायां स्तुत्येति दर्शयति । अन्ये पितामहमित्यादिना (भ० ना० १३ ४०५) ॥४०५॥

गतिं स्मारयति । तत्र पाता इति । पादपाता पञ्चमेऽध्याये सामवेदस्तु (तत्रापि) विशेषो दक्षिणस्य च(तु) (भ० ना० ५ ८४) इत्यादि वदविंशतिः । एकविंशतिः त्र्यश्रा वा चतुरश्रा वा द्विप्रकारता पूर्वरङ्गस्य स्मारयति । नाट्यविषयात् प्रयोगात् प्रागयं क्रमः । अन्ये तु ध्रुवा नाट्ये ध्रुवेति च । [नाट्या]भिनयप्रक्रमोदा-वम विधिरिति ॥४०६॥

त्रिकलं त्र्यश्रायां पादपतनम् । अन्यत्र चतुष्कलम् ॥४०७॥

अत्रोत्तमत्व देवताविषयम् । मध्यमत्व राजादिविषयम् । प्रशास्त्वमां महा-राजः पृथिवीमित्यादौ । अधमत्व विदूषकादे । त्रिगतकथितकादौ । अन्ये तु देवता-नामेव । कृतित्रय योज्यमित्याहु । मध्यमाधमस्य(यो) स्यान्न तेन विशेष । त्र्यश्रता तुल्यतं(तयं)व तयो ॥४०७॥

---

1. NS चतुरस्रगतं ।

विधि स्वस्थगतो ह्येव भवेच्चारणपातने ।[1]
सम्भ्रमोत्पातरोषेषु कलाधकर्मिष्यते ॥४०९॥

त्रिकलद्विकलैककलाश्चतुष्कला यत्र पादविन्यासा ।
तत्र च साम्यं कार्यं भाण्डेन समं च[2] गानेन ॥४१०॥

न ह्येकका द्विकला ध्रुवाविरामा भवन्ति गानविधौ ।
तस्मात्(एव) साम्यं कार्यं(कुर्यात्) भाण्डेन समं च[3] गानेन ॥४११॥

---

चारीमहाचारीरङ्गद्वारादिषु रसादेशवैवश्येन गतिस्त्रिकलाधिकेति दर्शयति । स्वस्थगतो ह्येव इति । प्रनादयो त्रिकलचतुष्कला वा गति । सम्भ्रमोत्पातरोषेषु महाचार्यादौ कलिका वा पादपतनमिति सम्भ्रमादसमं स्यात् ॥४०९॥

भाण्डादीनां सङ्गतिरवश्यमेव तत्सूचकमुचितमिति यो विपर्ययस्तस्य भ्रान्तिमपसारयितुं तालसाम्यमेव सवत्र वि(हि)तमिति दर्शयति । त्रिकलद्विकलैककलेत्यादि ॥४१०॥

नन्वर्धकलिका कलिका च गतिस्तत्रेति तावत्यपि स्याद् ध्रुवेति भ्रमं वारयति । न ह्येककला द्विकला च वाविन(रा)मा इति । कलाया निषिद्ध मार्गस्वरूपनिरूपणा ..पञ्चलघ्वक्षरपरिमाणं लघ्वक्षरमिति । इत्थं ध्रुवस्य प्रतिपादितं तेन प्लुतो गुरुरेव । गुरुस्तदपेक्षया लघु । लघ्वपेक्षया ल(पुल)घुरेवेति प्रस्तारे विभागः । तत्र प्रस्तारविधिरुच्यते ।

आद्यगुरोर्लोप स्यात् पर(द)मुपरि यथास्थितो गुरुः पूर्णे ।
लघुना पूरणमत्र च यावद्गति गुरुलघुत्वं स्यात् ॥

तेन प्लुतस्तत्रङ्के ऽष्टादशभेदास्तेन सह षड्भेदः । लघू द्वौ । तद्यथा । एतेषां प्रत्येकं विरामभेदतुल्यो द्विगुणस्त्रिगुणश्चतुर्गुणा इति पञ्चधा विरामभेदः षष्ठकलाया कलार्धस्य सार्धकलाया(या) वा । अतएव च विरामा मध्यविरामो मूलं भवत्येव । आद्ये सम्यानादिति हि कोहलादाय । तेन प्लुतभेदाश्चतुर्दशाधिकं शतम् (११४) । गुरुभेदाः षट्त्रिंशत् । लघुभेदा द्वादश, तेन चच्चत्पुटस्य तावता गुणने (४३७७) तस्य द्वादशभिर्गुणने तस्याङ्कस्य चतुर्दशोत्तरेण शतेन (गुणने ७७४२७३६) । एते गुणकृता भेदाः । अवान्तरभेदानां तु निस्सङ्ख्यत्वमेव । चच्चत्पुटवत् चाचपुटादिभेदेन भेदान्तराण्यपि दर्शनीयानि । यथोक्तम् ।

---

१ NS चरणपातने ।
2 समं न ।
३. समं न ।

ये पूर्वोक्ता भावाः स्थिताश्रया वा दताश्रया वापि ।
तेषां पात(द)निपात ज्ञात्वा सम्यग् बुधै. कार्यम् ॥४१२॥

---

असङ्ख्यानि सहस्राणि कोटीनामयुतानि च ।
तान्द्वयप्रभेदेन पुरा प्रोक्तानि शम्भुना ॥

इति । एव मिश्रभेदोऽप्यनुसर्तव्य । अत एव त्र्यश्रचतुरश्रमिश्राणा षट्पितापुत्रकस्य च मूलप्रकृतितया ध्रुवाशब्दवाच्याना भञ्जनाटं प्लुतगुरुलघुद्रुतमयास्ताला विरामभेदा विचित्रा । तथा भङ्गव्यपदेशेन यदाह ध्रुवाणा भञ्जनाद्भङ्गा इति । एव त्रिचतुष्य(ष्ट)ष्टकध्रुवातानभञ्जन भङ्गाना रूपस्य । उपभङ्गास्तु सङ्कीर्णस्वरूपेण्य कला: षड्वे (अ० न० ३१ २४) इत्यादिनोक्तस्य भञ्जनादपि भवन्ति । तथाऽभिनयकाले त्र्यश्रा । त्र्यश्रगद्वैगुण्या । मिश्रा च द्वाश्चत्वारस्तावचतुष्क व त्र्यश्रव समयमित्येव(व) रूपी(पिणी) । यत्र तु द्विविधत्वाद् गुरुलघुप्लुतद्रुतविरामादिरूपेण भञ्जन तेऽपि भङ्गा । लयभेदेन तु यत्र वैचित्र्य तदा द्विविधाना चित्रपदाना गुरुरूपप्रस्तारसाम्येऽपि सपक्षतविभेद । एव भङ्गोपभङ्गविभङ्गलयरूपा तावच्चतुर्वा तालजातिर्गीतलीयर्वेवृत्त्या लक्ष्यते । तद्व्यवस्थाद्भिरक्ता सम्यवहारसिद्धय कोहलाचार्यप्रभृतिभिस्तु तथाविभाग विनियोगशेष न दूषितम् । तद् द्वय तु नास्माभ्यो दर्शितम् । पूर्वप्रसिद्धिर्हि यथोपपद्यते तथा मतिचतुरिमा सहरणीय । एवमेव भ्णभेदभङ्गस्तस्य च प्रस्तार भाचार्यप्रस्तारवद्योक्ततया वक्ष्यामपावरितं(तयं)व । कथ तर्हि कु(क)लिक पादपतनमि(अ० ना० ३१ ४१०)त्याह ।

एव साम्य कुर्याद् भाण्डन सम च गानेन ।

इति । भाण्डवाद्यगानाभ्या सहृतन । एवमिति । कलाद्वयकलार्धकलारूपेण साम्य कार्यम् । तत्र ध्रुवा समवायिन्या । तथा हि । द्वितीयस्य पादि । तालगतभेदद्वयगत्या गत च । अपि तु गीतवाद्ययोस्तावत्यवान्तरविदारीयात कार्य इति तत्र तात्पर्यम् ॥४११॥

लयत्रयवैचित्र्यमपि चात्र भवतीति दर्शयति । ये पूर्वोक्ता भावा इति । पूर्वरङ्गमहानार्यादौ यथामन्यत्रस्वरितरूपा चित्तवृत्तिस्तत्सम्बन्धिन तत्सूचित पादपाताद्या परिक्रमण कार्यम् ॥४१२॥ ,

अपटाक्षपकृता चेदात्ययिका(की) हृषरागशोकाद्या (कोत्थं) ।
[1]विच्छदरतत्र सम कायस्तज्ञः प्रवेशे तु ॥४१३॥

एवमेते बुधर्ज्ञेयाः प्रयोगपरिवर्तका ।
अत पर प्रवक्ष्यामि भाण्डग्रहविजल्पनम ॥[2]४१४॥

अभाण्डमेव गानस्य परिवर्तं प्रयोजयेत् ।
चतुर्थे परिवर्ते तु तस्य भाण्डग्रहो भवेत् ॥४१५॥

सन्निपातग्रहा काश्चित् काश्चिद्ध लजनोग्रहा ।
तथाऽऽकाशग्रहाः काश्चित् ध्रुवा गाने भवन्ति हि ॥४१६॥

---

अथानेन प्रसङ्गेन सामन्वस्य न क्वचिदपि युक्तमिति दर्शयति ।

अपथा(टा)क्षपकृता चेदात्ययिकोहर्षरागशोकोत्थं ।

यो वि(वि)च्छदरतत्र सम कायस्तज्ञं प्रवेशे तु ॥

इति । चेदेति यद्यप्यर्थे । करण कृत् । मत्यये भवे(वा)त्यायिका(की) । अप्रयुज्य मान तदीय योजनाहर्यादिभिरुपलक्षिते पात्रप्रवेशे पटाक्षेपकरणाकरणेन यद्यपि प्रावेशिकी ध्रुवा सम्भवति । अथ वास्तु प्रवेशजा (भ० ना० ३२ ३३७) इत्युक्त्वा तत्रैत्यविद्यमानध्रुवास्थानेऽपि प्रविशत पादस्तालेन समीकर्तव्य । एव वर्तनिका विना तत कलिकेनापीति ॥४१३॥

एव प्रसङ्गादुक्तम् । प्रकृत पूर्वरङ्गमेवानुसरन्नुक्तमुपसहरन्नन्यदासूत्रयति । एवमेते [बुधर्ज्ञेयाः प्रयोग] परिवर्तका इति । भाण्डग्रहविकल्पम प्रवक्ष्यामीति च ॥४१४॥

अभाण्डमेव गानस्य परिवर्तन प्रयोजनम् । चतुर्थं सन्निपातम । भाण्ड ग्रहणे सन्निपात । परिवर्तने तुर्यं परिवर्तने भाण्डग्रहात्त्रय शून्या इति । अन्ये त्वाहु एव परिवर्तो भाण्डशून्य । तदानीं यावत्य सन्निपातकला सन्धीनां त्रयोऽन्ये भाण्डवाद्ययुक्ता इति ॥४१५॥

सन्निपातग्रहा काश्चिदिति । ध्रुवा हस्तद्वयहननजैरक्षरैस्तलनीग्रहतिभि इते लक्षणशून्यवतनामात्रेण वा भाण्डवाद्यस्य ध्रुवानुग्रह इति त्रिधा । अन्ये त्वाहु ।

---

१ NS तत्र परिच्छदसम कायस्तज्ञं प्रवेशस्तु ।
२ मत ऊर्ध्व प्रवक्ष्यामि ग्रहभाण्डसमाश्रयम् ।

ध्रुवायास्तु ग्रहो यस्मात् कलाकाललयान्वित.[1] ।
स तु भाण्डेन [2]प्रोक्तव्यस्तज्ज्ञैर्यतिपरिक्रमे ॥४१७॥

[3]शीर्षकोद्धतयोश्चैव प्रदेशिन्या ग्रहो भवेत् ।
विलम्बितास्थितयोर्वे सन्निपाते तृतीयके ॥४१८॥

मर्कटस्याद्भिद्रतायां च[4] प्रासादिक्यास्तथैव च ।
सन्निपातग्रहः कार्यो द्रुतायाश्चोत्थके ग्रह ॥४१९॥

नैष्क्रामिक्यनुबन्धाना[5] ग्रहे(हो) गानसमो भवेत् ।
[6]नत्वसो परिवर्तस्तु कार्यो गाने प्रयोक्तृभि ॥४२०॥

---

एककले ताले सन्निपातन्यकलातो द्विकले चतुष्कले च ध्रुवायास्त्विव तर्जन्या इति । चतुरलक्षिततुर्यपादे भागप्रथमकलान्त । एककमादिनियमाभावे तु भाकाशाच्छून्याद् गीत एव नामभाण्डग्रह इति । मरमरपरमगुरुभिश्च श्रीमदुत्पलदेवपादैरयमेव प्रतिपन्नोऽर्थः ॥४१६॥

गानसम (भ० ना० ३२ ४२२) इति सन्निपातश्च शम्याचे—(भ० ना० ३२ ४२१)त्यकारण भाण्डस्यैव साम्नीति । भाण्डवायशा(शी)ले च गतिपरिक्रम इति वर्णयति । ध्रुवायास्त्विति । कल (काललयान्वित) । कालश्चित्रादिभेदेन त्रिधा । तथा लयो द्रुतादि । तदन्वितो य । भाण्डेन माहित्यग्रहसङ्गति परिक्रमविषये योजनीया ॥४१७॥

शीर्षकोद्धतयो. प्रदेशिन्या द्रुतविलम्बितार्थस्थितयोस्तृतीयपातान्त्यात् ॥४१८॥

मर्कटादौना प्रासादिकी । द्रुतानामूर्ध्वके प्रायं वा देय सन्निपात । तत ऊर्ध्वके मुरज इति केचित् ॥४१९॥

नैष्क्रामिकनित्यनुबन्धयोर्गानसम एव ग्रह सन्निपातादेतस्मात्प्रायते गानकाले । एव तर्जन्यादिग्रहणोक्त । न मुरजाक्षराणि । अनयोश्च परिवर्तो न कार्य ॥४२०॥

---

१ NS कलातालसमन्वित ।
२ कर्तव्य ।
३ शीर्षकश्चोद्धतायाश्च प्रदेशिन्या ग्रहो भवेत् ।
४. मद्भिद्रतायाश्च ।
५ बद्धानां ।
६ तेषां हि ।

[1][निर्कटस्यापि चत्वारो ग्रहाः कार्या प्रयोक्तृभिः ।]
सन्निपातश्च शम्या च तालश्चाकाशजस्तथा ॥४२१॥

सम्भ्रमावेगहर्षेषु प्रवेशा ये भवन्ति हि ।
[2]ग्रहो गानसमस्तत्र सोद्धात्यः सम्प्रकीर्तिताः ॥४२२॥

भूषणवास पतने वैकल्ये विस्मृते परिश्रान्ते ।
[3]दोषाच्छादनहेतोरुद्धात्यः सम्प्रयोक्तव्यस्तु ॥४२३॥

[4]एवं प्रयोक्तृभिः कार्यं ध्रुवाणां सम्प्रवेशनम् ।
यथास्थानाश्रयोपेतं यथानुरूपं तथा ॥३२४॥

यथावर्णादृते चित्रं न शोभोत्पादनं भवेत् ।
एवमेव विना गानं नाट्यं [5]रागं न गच्छति ॥४२५॥

---

नर्कुटस्य शम्यायास्ताल । सन्निपाताच्छम्यावेव भाण्डग्रह. । शम्यातालाभ्यां सव्यापसव्यहस्तप्रहारजात्यक्षराण्येवेति । अन्ये एतत् पूर्वरङ्गविषय परिवर्तत्वात्तत्रादि ध्रुवासु तत्तल्लक्षणाङ्गदर्शनेन दीर्घकोद्धतादिव्यवहारयोगास्त्विति । अन्ये तु दृष्टप्रयोजनेऽपि नियमादृष्टप्रयोजनेऽपि नियमादृष्ट भोजनप्राङ्मुखत्ववदिति ॥४२१॥

स्थितानां भावानां विषय(च)प्रसङ्गादेतदुक्तम् । (द्रुतया गीयत)मित्याशङ्क्याह । सम्प्रमेत्यादि । सम्भ्रम दौ प्रवेशे गानसमो ग्रहः । उद्धात्येन उद्रेकहननाहेंण खलखलकेन ॥४२२॥

भूषणवास पतनादावपि खलखलकस्य प्रयोग ॥४२३॥

एतदुपसंहरति एव प्रयोक्तृभिरिति । यथास्थानं यथाश्रयं च प्रवेशादावुत्तमादौ नाट्यध्रुवागान यथानुरूपं पूर्वरङ्गध्रुवागानं कुर्यात् ॥४२४॥

ननु पूर्वरङ्गगत दृष्टादृष्टसिद्धये नाट्ये तु किं तेनेत्याशङ्क्योपरञ्जकत्वेन रसोपयोगितामप्याह । यथा वर्णादृते चित्रमिति । वर्णो हरितालादि । वैचित्र्याग्निवेशितमिति । वटिकामात्रादिनेति भाव(व) । रसभावोक्तिरनेन सूचितेति टीकाकारा । अस्माभिस्तु रसतत्त्व विमृष्टपूर्वमेव ॥४२५॥

---

१. NS does not read
२. ग्रहो गानसमानस्तदुपान्त्य सम्प्रकीर्तितम् ।
३. varies
४. एक (तो?)
५. रङ्गं ।

पूर्वरङ्गविधाने[1] तु कर्तव्यो [2]रागजो विधिः।
देवपूजाधिकारस्तु तत्र सम्परिकीर्तित.[3] ॥४२६॥

ततश्च काव्यबन्धेषु नानाभावसमाश्रयम्।
ग्रामद्वयं तु कर्तव्य(गतं कार्यं) यथासाधारणाश्रयम् (स्थानरसान्वितम्)
॥४२७॥

मुखे तु मध्यमग्राम षड्जः प्रतिमुखे भवेत्।
[4]साधारितस्तथा गर्भे वि(ऽव)मर्शे चैव पञ्चमम् ॥४२८॥

कौशिकं च तथा कार्यं गानं निर्वहणे[5] बुधैः।
सन्निवृत्ताश्रयं चैव रसभावसमन्वितम् ॥४२९॥

तथा रसकृता नित्य ध्रुवा. प्रकरणाश्रिताः।
नक्षत्राणीव गगनं नाट्यमुद्योतयन्ति ता ॥४३०॥

---

पूर्वरङ्गे दृष्टेऽप्यप्रयोजन तदाह। देवपूजाधिकारस्त्विति तुरत्यर्थे ॥४२६॥

ननु किं तत्र स्वरगतमित्याह। ग्रामद्वयगतमिति अष्टादशजात्यात्मक-मित्यर्थ.। यथास्थानरसान्वितमिदमिति चाग्निमहावार्यादौ यत्र रस प्रत्यनुसवराणव यथा......यौगन्धरायणप्रवेशो रत्नावल्याम् (अङ्क १) ॥४२७॥

तत्र दारदायर्थ गानमिति दर्शयन् तत्र गुरुः परमतमप्रतिविद्धमनुमत प्रश्नो ...युगतं चेति नीत्या काश्यपमुनिप्रभृतिभिर्निरूपितमपि ग्राम(राग)मार्गगान स्वीकरोति। मुखे मध्यमग्राम। षड्ज प्रतिमुखे। गर्भे साधारितः। पञ्चमोऽवमर्शे ॥४२८॥

प्रधाननिर्वहणे कैशिकमिति। गानापेक्षया नपुंसकप्राचुर्यम्। शुद्धाना ग्रहण-मित्यन्ये। भिन्न गौडानामपीत्यपरे।

पूर्वरङ्गविधाने तु कुर्याद्धि चोक्षषाडवम्। (भ० ना० ३२.४२६) इति ॥४२९॥

अवश्यप्रयोज्या ध्रुवा इति दर्शयति। य(त)था रसकृता इति। प्रकरणं प्रवेशादिपदार्थस्य वर्णयितुम् ॥४३०॥

---

१. NS विधानेन।
२. मानजो।
३. स च पूर्व. प्रकीतित.।
४. साधारित।
५. निर्वहणे।

# नाट्यशास्त्रम्

॥श्री॥

## अथ त्रयस्त्रिंशोऽध्यायः।

गुणात् प्रवर्तते [1]गान दोष चै(षाच्चै)व निरस्यते।
तस्माद् यत्नेन विज्ञेयौ गुणदोषौ [2]समासतः॥१॥

---

अथ त्रयस्त्रिंशोऽध्यायः।

ग्रामक्रियाविवर्गविधानहेतु
दोषापवर्जनपदु किल मवितमाजाम्।
आनन्दपूर्णपरशङ्करसारसिन्धु-
धारास्थितिविजयतां परमेऽश्वरोऽसौ॥

एव गान्धर्वस्वरूप यदुपयोगित्वेन प्रदर्शित तत् प्रकृतनाट्योपयोगिध्रुवाणाम-मभिधाय तत्रैव द्वे परतत्व निरूपयितुमध्यायान्तरमारभ्यते।

अथ केचित् म य ने। उपरञ्जनात्मनि गान एव सुतरा गुणग्रहण दोषाव-दर्शनं चात्य उपरञ्जन प्राण हि गानम्। उपरञ्जन च गुणदोषायत्तविवेकायत्तम्। अत एव तद्विवेकस्य ग न प्रति प्राधान्य प्रयोजयितु पृथक्च प्रत्यध्याय रम्भ। गान्धर्वे [illegible] रञ्जना न तथा प्रधानमपि तु चक्षरप्रयोक्तुरदृष्टफल तदिति।

नैतत्। तथाहि यथा स्वरूप विकल प्रवृत्तो विधि फल प्रसूते। शारीरयो-(षा)स्वस्वरूपसम्पत्तिरेव च स्वतकण्ठस्वविहृस्वादिना विना कथ लयादितःवज्ञानम्। याऽस्य विहृता कालसम्पत्तिरतत्वज्ञानस्य च का सङ्गतिरदृष्टफलसङ्गमा। उक्त हि।

वीणावादनतत्त्वज्ञ. श्रुतिस्मृति(जाति)विशारद.।
(या० स्मृ० ३ ११५)

इति। तालज्ञ इति च। तस्माद् गा धर्वे सुतरा गुणदोषविवेका(को)ऽवधाम्। स्वरस्य हि तावदपरुषमधुररञ्जनात्मदनय लघु (घु)तालस्यापि गान प्राणास्तदुभयमपि गुणा यत्त तदायत्ता वाऽस्यूर्जसिद्धि। विज्ञानिलाचार्यं साम्यादिह सिद्धि परत्रेति वदन् प्रादीदृशत्(त्)। अत्र ब्रूयात् गानादिस्वरूपाविशेषे गान्धर्वाद् गानस्य को भेद। यदनेकप्रमाण नान्तो भाव्ने स्वरूपभिव च तथ। च गानाभिमत गान्धर्व स्वरूपेऽ्ति

१ NS ज्ञात दोषान्वित निरस्यनि।
२ विज्ञेया गुणदोषा।

ततो निगदस्य हि व्यापकं ततो भिन्नलक्षणत्वम् । अन्यथा भेदापातापत्तेस्तु च(तन्) नोपलभ्यतेऽमुनेति व्यापकतानुपलब्धि । तयाऽसिद्धो हेतु । स्वरतालात्मक गान्धर्व-मिति (भ० ना० २८ ११) गेयाधिकारारम्भ एव मुनिनासङ्गीतगानस्य न(च) तत्स्वरूपादिक लक्षणमुक्तम् । इदानी तत्रोच्यते । इहाय गान्धर्वशब्दो लोके शास्त्रे च द्विविधो नाटकशब्दवत् । सामान्यविशेषणास्य प्रयोगदर्शनात् । गान्धर्विक इति ।

गान्धर्वमेतत् कथित मया च पूर्व यदुक्त प्रपितामहेन ।
(भ० ना० ३३ २३)

इत्यध्याये नाट्योत्पत्तौ सामान्येन गीतिरित्युक्ते गान्धर्व गानमपि । अत्र विशेषे तु गान्धर्व । अत्रेत्यादौ गान्धर्ववेद इति च । तत्राद्ये पक्षे सिद्धसाधनपरमे त्वसिद्धो हेतु । न ह्येतावदेव गान्धर्वास्य लक्षण बालगोपालस्त्रारमादि[रस]बाला[बलाका]दि-गीतेऽपि गान्धर्वापत्ते । तथा च तत एवास्ष्टलाभेऽप्य न वैव्यर्थप्रसङ्गो यदा(द)यमाने-र्दयम्त (हत )फलाद् व्यतिरेकाच्चेति ।

नन्वेव गान्धर्वस्य कि लक्षणमुक्तमध्यायचतुष्टयेषु मुनिना । तथाप्यनुसन्धान-बन्धो महाभो(भा)ग बोधयितुमनुसन्धीयते । स्वरतालपदविशेषात्मक प्रवृत्तिनिवृत्ति-प्रधानस्त्रादृष्टफलसामवेदप्रभवमनादिकालनिवृत्तमन्योपरञ्जनगुणतावहीन गान्धर्व-मिति स्वरूपकथनात् कालाद् धर्माच्च भिद्यमाना (नम)बधय गानर्वलक्षण्य भेदैक-सम्पादनम् , तदुभयानुग्रहयोगाच्च बाद्यानाम् । गाने तु काकल्यन्तरश्रुतिपरिभ्रमणाद् विचित्रश्रुतिग्रहणम् । स्वराणा मालवकैशिके चतुश्श्रुतिकाङ्गस्य दर्शनात् कियदा रागभाषाविभाषादेशीमार्गादिगताना स्वराणा श्रुतिवैचित्र्य ब्रूम । उक्तमपि च प्रतीत-मनुचित्रा(त्री)यते । प्रतीतानामप्यनलक्षणकाना बालविभ्रमवद् वेद्यम् । परतन्त्रतप (त)थाऽविषयो दिग्दर्शनात् । तस्मादपि तथेति । कि चान्तरालनियमोऽस्त प्रमाणस्था नस्वरकालाश्रवणान्न(त्वाद)सारतया गान्धर्वेऽवश्यसवेद्य । न त्वेव गाने । लोपोऽपि नियतगान्धर्व दर्शितो ग्रामद्वयभेदेन च जात्यधभेदेन दर्शित । गाने तु रक्त्यनुसारेण प्रवृत्ते(वृत्ते)रसाधनियत । तथापि गान्धर्व यस्मादनादित्वमेव समर्पित तस्यापि मध्यमस्य भिन्नषड्जकालिन्या लोपो दृश्यचतुरस्वरपञ्चगन्धर्वाभ्युपगममपि । अन्तर-मार्गो(र्ग)ऽपि विषायिवर्ग[गा]गान्धर्ववेदगीता ये शोभानुरोध एव तत्र करणम् । नट-कैशिकलो(ला)टन(ना)गगादावृषभगान्धारयोर्भूयसाऽनवलोकनात् सप्तचत्वारिंशदधि-कजात्यशकोचितसङ्गीतवशाविचित्रीभवदेकैकस्वरस्वरूपयोगात् त्रिस्वरोनमध्यगत स्व-राणा गान(म् ।)गान्धर्वे गाने शुद्धभिन्नगौडराग(वेसर)साधारणभाषाविभाषान्तरभाषा रूपगीत्यष्टकोचितललित गीतनादि(द)स्वरस्वरूपलाभे प्रत्येकदश(श)पूर्णषट्पञ्चवत् स्वरभेदयोगाद् द्वात्रिंशता सह त्रिशते स्वराणामुक्तसङ्गतिवैचित्र्यात् स्वराणा येऽङ्क-नाचष्टचत्वारिंशतानि तावत् प्राधान्येऽन्यस्व(र)सरवमट्टगान्धर्व च मूर्छनाश्चतुर्दश

तनाश्चतुरशीतिरिति । यदेव स्वररूपसम्पत्ति गाने तु द्विस्वरात् प्रभृति पूर्णस्वरपर्यन्तं द्विधा षोढा चतुर्विंशतिधा तथा त्रिशसप्तशतधा चत्वारिंशत्पञ्चसहस्रधेति कथितनीत्या य कूटनभेदस्तत्कृत स्वरवैचित्र्यं वर्णानुषीणा(त्तीना)मेव च इत्येतत् । बिन्दुप्रभृतीनामलङ्काराणा प्रयोगो न तद्विपरीताना मन्द्रतारप्रसन्नादीनाम् । एतेन गान्धर्वे स्वर प्रधान तदाधारत्वेन गुणभूत पदमिति मत तद्विपरीत गान्धर्वेऽयंसवेदयोगेन पदस्य प्राधान्यात् बहुपरञ्जनाच्च गुणभावात् स्वरस्यैतदपि ह्य कथितं भवति । वंणुस्वगणा च धातुप्रयोगनियमानपेक्षो रक्त्यतिशयप्रवाहाय न प्रयोगभेदोचित एव प्रयोगो वैणवानामप्ययमेव पन्था । एतेन गान्धर्वे देवताविशेषपरिभाषानुसारिणि विनियोगो यथेच्छ वा । गाने तु रसभावनियमौचित्यविशेषो दर्शित एवेति स्वरगते तार्वद्विशेष । तालोऽपि गान्धर्वे नियतत्वेन संख्यापरिमाण भ(र)ञ्जन परिच्छेदोपाय यतिस्वरैवं त्रिमेव मेलनमातोद्ययोगमङ्गाङ्गिभावव्यावरुध्यमान साम्यमानफलमिति न शक्य वक्तुम । तथा हि । चच्चत्पुटादिष्टनियमा चतुरादिका कला सख्यापरिमाणाय चित्रादिभेदे मात्रालयादिभञ्जनमपि । एककलाऽपि त्र्यपस्थित्या चतुष्कलात्वेऽपि । एकरसलघुप्रस्तारयोगोऽपि प्लुतलघुभेदप्येकरसगुरु यं तमेव । परिच्छेदोऽपि वा योऽपि काणायातरूपो नियतो नियतक्रमश्चायतेरपि मध्ये स्रोतोगता यती(तिरि)त्यादावष्टोऽयोगप्रधानत्वे । परिवृत्तिरपि त्रिशाला सङ्कता च यादावुपवर्तनभेदे च नियतैव । गेयात्मना मेयेन च गान्धर्वतालस्य मेलना । पाणिन्नयवैचित्र्येणावुपवर्तनभेदे च नियतैव । गेयात्मना मेयेन च गान्धर्वतालस्य मेलना । पाणित्रय वैचित्र्येणातोद्यघण्टो(द्याधारो)ऽप्यसाण्डमेक गात्र(त्र)स्येति (भ० ना० ३२.४१५) चतुर्थे सन्निपात (भ० ना० ३२ ४१५) इत्यादौ विचित्र एवाङ्गाना योगोऽपि । वर्धमानासारिताया वर्धमस्त(मान)बद्धगीतपाणिकादौ नियत एव तु तस्य भेदमुपनिबद्धमस्त्विव वाद्ये(द्ये)द शीर्षकमिति वैचित्र्यविधिरेव प्रभवति यतो गाने पुनरुत्तमाधिभेदभिन्नप्रकृतित्रयमतयोचितमसृणमन्थरोद्धतादिभेदभिन्नसङ्गीतप्राणवलन एकोपाङ्गपरिस्पन्दितपरिक्रमणाद्यनुसारेण साम्यसम्पादनफलयोगे कलासख्यादिभेदेन प्लुतगुरुलघुमात्रभञ्जनद्रुतबिन्दुपर्यन्तभङ्गसम्भवान्न कलापर्यन्तकमप्राधान्यम् । ■ यतेराकस्मिकत्वेनादृष्टमात्रफलता । नापि परिवर्तिनपाणिकभयभाण्डग्रहणान् न वाङ्गाङ्गिभावेन वितनित तालमकारारम्भकण(क)मनुरुध्यत इति मोऽपि विलक्षण एव । पदमपि विनियुक्तनादिभेदत्रयस्य कुलकादिभेदत्रयगुणनया नवधा भवेत् देवस्तुतौ प्रधानम् । गान्धर्वे तत्रैवार्थानुसारमनपेक्ष्यैव जात्यन्तरविचितवर्णाङ्गाधारमात्र तालप्रमितस्वरप्रधानतया गुणत्वेन प्रतिपाद्यते । गाने पुनश्छेद्यकामे मूल एवासम्भवे रसभावोचितवृत्त जातिनिबद्धम् । यत्तु काव्ये तन्नोक्तमित्युक्ते रसपूरणोपयोगात् प्राधान्यमुपस्तुवन् तत एव चित्तवृत्त्युचितजात्यङ्गकविशेषग्रामरागाङ्गभाषाङ्गगीतिमुपरञ्जकतया समाश्रयात् क्वचित् गुणेचितम् । भिण्डिकाद्विपदीगानादौ स्वरालङ्कारशोभा इत्येव यत् क्वचिद वीररौद्रोचितारिक्रमणादिसरणादिद्रुतालीकृततालविभ्रम सम्पादयत् क्वापि

च विप्रलम्भशृङ्गारोचितवन्धत्वविचित्रबन्धत्वविचित्रादिगान इव नाट्यापितावकाश-मादधानं स्व वाच्य प्रोन्मार्जयदवभातीति स्वरतालस्थानेषु यथोचितकारिषु नयरवाभि-भावमालम्बमानभागमास्त इति। एष तावत् स्वरपादतालात्मकस्वरूपवैचित्र्यवै-लक्षण्यम्। अनेन च फलवैलक्षण्यमपि व्याख्यातम्। गान्धर्वस्य प्रयोक्तरि प्राधान्येन दृष्टफलत्वात्। गानस्य तु पात्रवर्गे साम्यसम्पत्ति सामाजिकजने चोपरञ्जनपूर्वकं प्राग् रसाध्यायो(भ० ना० ६)दितसाधारणसन्निधृत्यात्मकरसभावनृत्तानुस्मृतिहेतुसूचि-तसाक्ष्ययोगश्चेति दृष्ट मुख्य फलं प्राङ् मुखभोजनस्वदृष्टमप्यस्तु।

ननु त(य)द्यपि प्रवृत्ति सोऽयं कार्यभेदः कारणभेदोऽपि गान्धर्ववेदवत् स्वय-म्भ्वादिर्वा सामवेदप्रभवत्वेऽपि वा तदर्पादितया तस्येदम्प्रथमतयोऽत्यनुपलब्धेरनादे च गान्धर्वप्रभवस्तु नादोत्पत्तौ तदुपयोगि कल्पितमिति। गान्धर्वं वा नाट्योपकरण-भूतमेव सत्फलसम्पदनये। गानं तु नाट्यसामग्रीमध्यनिवेशस्वर सफलायेति स्वरूप-भेदोऽपि। एवं परोक्तो हेतुरसिद्धीकृत इति यदेव केवलं यदसत्पक्षे वैलक्षण्येऽपि साधकप्रमाणाभावमाख्यातमेव। यदद् स्वरूपेण कार्येण धर्मेण च भिद्यते तत् तेन विलक्षणो भावो भावान्तरादिव। भिद्यते च स्वरूपादिना गानम्। गान्धर्वाद् वैल-क्षण्यस्य हि तन्मात्रनिमित्तत्वं व्यापारान्तरमिति व्यापकानुपलब्ध्यापि पक्षादपि वैलक्षण्याद् व्यावृत्तो हेतु. पक्षेण वैलक्षण्येन व्याप्त इति। तत्र च गान्धर्ववेदोदित-विविधबन्धप्रधानत्वादिदं गान्धर्वम्। गीतिसारत्वाच्चेद गानमिति। अत एव कठकाठकवद् गान्धर्वविस्वाद् गन्धर्वव्यपदेशमेके मन्यन्ते। गन्धर्वाणामिदमिति तु सामान्यशब्दोऽप्यय भवेदेव। उक्तं हि प्राक्।

नारदाद्याश्च गन्धर्वा गानयोगे नियोजिताः। (भ० ना० १ ५१)

इति। तथा गानशब्देऽपि गीति। तत्राभयेणास्ति सामान्यवचनता। अनाण्डनेको-(कं)गानस्येत्यादौ (भ० ना० ३२ ४१५) पूर्वरङ्गे गान्धर्वमेव प्रधानम्। न त्वस्य तर्हि तदङ्गत्वे कथमेकान्तत स्वप्राधान्ये सम्भवमात्रेण तु गानस्यापि तत्। न हि नाट्याद्बहिर्लयभङ्ग(ङ्ग्या)पि ध्रुवागान गीयमानमुल्लासमुत्पादयति। श्रोत्रपुटे पेयं मधुनिव वा अ(आ)गदतोति सोऽयमत्र लालित इव गुरुसङ्घसेवार्थकस्यादनुसन्धित्सं-स्तथापि न स्मर्यते सुकु(मा)रमतिरे(मे)व हि प्रति प्राय इद प्राय इद प्रव(प्रा)वृतद्। न पूर्वरङ्गो नामान्य. कश्चित्। अपि तु गीतकान्येवेति दर्शित पञ्चमे। पादभागाः कालाश्चैवेत्यादिना (भ० ना० ५.६)। तदेव सामान्यशब्दत्वेऽपि द्वयोस्तत्रान्त.पाति-परीक्षकहृदयानुसारेण विशेषशब्दत्व यत्तन्न्यायुक्तम्। यत् भट्टतोतेन तद्भेदसिद्धये क्रियामात्रे तु कालस्ताल इति निरूपितम् तद् क्रियातोऽन्यो वा कालो वा भाव-प्रबन्ध.। एवं सा ताल इत्यादि पदान्तरमानयत् तत्तया प्रकृतोपयोगीति काव्यकौतुका देव ज्ञेयमिति च नास्माभिस्तत्परिवर्तनप्रयासः कृत.। इयतैव सिद्धो गान्धर्व-गानयोर्भेदः।

गाता प्रत्ययवया स्निग्धो मधुरस्वरोपचितकण्ठ ।
लयतालकलापातप्रमाणयोगेषु तत्त्वज्ञ ॥२॥

---

नन्वेव स्वरतालादिरूपत्वे द्वयोरपि समाने किमिति विवेको ध्रुवागानोपयोगित्वेन दर्शित । तत्र केचिदाहु । सत्यं मधुरकण्ठत्वजितहस्ततालगुणोपादानमपि स्वरत्वादिदोषपरिवर्जनं च समानमुभयत्र । किं तु प्रत्ययवयस्त्वादिवद् गात्(तृ)प्रभृतेर्गुणत्वेनोच्यते । तद्गानोपयोगी नाट्यस्य तु ध्रुवासु प्राणत्वात् । न तु गान्धर्वे । तद् पुनरेतदुच्यमानं नेयहेतोरेवमशास्तस्मात्स्मर्येति वचनं स्मारयति । गातरि प्रत्ययवयस्त्वं गायिकास्वरूपादियोग इत्येतावदेव ह्यतोऽधिकं स्यात् । न च तावताऽपि भेद कश्चित् प्रत्ययवयस्त्वेन स्वरसम्पादनोचितबलयोगोऽप्युपलक्ष्यते । यत्राकृतिस्तत्र गुणा । प्रसिद्धा च रूपादियोगेन प्रकृतकलावैलक्षण्यस्यापि पाठसिद्धता लक्ष्यते । नाव (वाच) विसृजेदित्यत्र नक्षत्रदर्श(ने)मेव कालविशेष । गानगान्धर्वोभयविशेषभावप्रतिपादनार्थं च पृथगध्यायारम्भ । ग्रन्थैकता ग्रथनेव वक्ष्यत इति ।

कथं तर्हि गुणात प्रवतते गानमिति । प्रकृतोपयोगादेवमभिधानम् सामान्य-गान्धर्वाद्वा । उक्तं चैतत् । कलापातलयज्ञ (भ० ना० ३३ २) इति । चित्रादिवाद्य-कुशल(लो० भ० ना० ३३ ८) इति च । गान्धर्व एवाभ्यस्येन सङ्गच्छत इति सिद्ध पृथगध्यायारम्भोऽपि ।

गुणात प्रवतत इति । प्रकृष्टतयोत्कृष्टतया वर्तत इत्यर्थ । दोषोपहतयोर्विपरीत-निश्चयेनास्य विक्षिप्ति । नरवकाश करोति । न रञ्जयतीति यावत् । अनेनैवेदमाह । यद्यपि गुणाभावो दोष एव तथापि आविकंपिम(प) लापस्थितादिदोषाणामभाव च गाता तावत् क्षिपति न तूत्कृष्टदोषयोगे तु तद्गानमेव न किञ्चित् । गदमाभाषित हि तत् । गुणायोगे तूत्कृष्टतद्भवति विक्षोदीति नाट्याचार्यस्य गुणवत माधान (तु) दोषवतश्च त्यजनुमिति ॥१॥

तत्र शारीरस्वरपाव(व)कस्याद्वि गुणाना वक्ष्यामा च क्रमेण गातृणा विपञ्ची वादको(क)वंशवादकाना च गुणास्तावदाह । गाता प्रत्ययवया इत्यादिना । स्निग्ध इत्यपगतस्वर । उपचारात् मधुरशब्देन माधुर्यम । (तेन युक्त स्वर)स्त्रे(स्ते)नोपचित पूर्ण कण्ठ(ण्ठो)ऽस्येति नादोऽत्र कण्ठ । तेनानुद्वेजको विश्रान्तिदश्च यस्य स्वर । लयो द्रुतादि( ) । (ता)लश्चच्चत्पुटादि( ) । कला मात्रापादि । पाताल (ता) शम्यादि । प्रमाणं चित्रादिमार्ग । योगो योजना समपाण्यादि । एकत्व विवक्षितमित्येक ॥२॥

---

१ NS. सुललिततय च ।

रूपगुणकान्तियुक्ता माधुर्योपेतसत्त्वसम्पन्नाः ।
पेशलमधुरस्निग्धानुनादिसमरक्त शुभ(शुभ)कण्ठाः ॥३॥

सुविहितममकविधाविन्योऽस्योन्यो(न्यास)तालतयकुशलाः ।
आतोद्यार्पितकरणा विज्ञेया गायिका श्यामाः ॥४॥

प्रायेण तु स्वभावात् स्त्रीणां गानं नृणां च पाठ्यविधिः ।
स्त्रीणां स्वभावमधुरः कण्ठो नृणां बलित्वं च[1] ॥५॥

यत्र स्त्रीणां पाठ्यात्(ठ्य) गुणैर्नराणां च गानमधुरत्वम् ।
ज्ञेयोऽलङ्कारोऽसौ न हि स्वभावो ह्ययं तेषाम् ॥६॥

सुनिविष्टपाणिसव्यतियोगज्ञौ[1] सुमधुरलघुहस्तौ ।
गातृगुणैश्चोपेतावबहितमनसौ सुसङ्गीतौ ॥७॥

---

एवं तन्मध्य(ध्ये)ऽसौ केवल यत्र(त्रा)धारप्राया माधुर्योपेतेति । अत्र चेष्टानुरूपणता माधुर्यं तेनोपेत सत्त्वमिति बलम् । पेशलो विकारशून्य( ) । मधुरोल्वणवर्णविभागि(यो) । स्निग्ध ( ) नेत्रतल्लकम् । अनुनादो(दो)विच्छेदाभावयुक्त । सक्ता परस्पर कीर्ण(र्णो) मिलित । रक्त. कोमलोऽभिराम । शुभो गोपमानवश्यावक कर्णं(ण्ठ) । (रू)पाणि यासामिति तावद् ॥३॥

सविस सुविहित शवता च अयतिरिक्ता वेति न्यायेन ज्ञानापरपर्यायमन्तर्भावतया विदधत इति अनुत्पन्नत्व गीतवाद्ययोरेव गेयानाम् । तच्चातोद्यविषये करणस्य भोगमनोऽर्पणाद्भवतोत्यस्मात उक्तः । श्यामा इति तरुण । तद्वर्णा एव च श्लेष्महरत्वात् ॥४॥

गायिकानां बहुत्वे हेतु दर्शयति । प्रायेण त(तु)स्य(स्व)भावात् स्त्रीणां गान नृणां च सविधिरिति । उपमागर्भमेतत् । प्रायेणेति लय व्याचष्टे ॥५॥

यत्(त्र)स्त्रीणां पाठ्यमिति । यत्र वा(ब)लित्वे सति स्त्रीणां गुणपाठ्यत्वाद् गुणात् नरपञ्जनमधुरकण्ठत्वे च सति नृणां गानविषय मधुरत्व सर्वेषामिति स्त्रीणां पुंसां चालङ्कारः कादाचित्कत्वान्नादरणीय एवमत्र प्रलघुरलक्षमाणाचार ॥६॥

गात्र( तृ )गुणैरिति प्रश्नपवया इत्यादिभि । स्वराङ्गुणोविनीत चाम्भामिति ॥७॥

मेलति(नि)काकुग्रसेनाहेतुरवसान । स्फुटमानमगृहीतमुद्राचोद्दाम्याम् । स्वच न विकृतम् । सत एव च विभ्रम् । करणादिकया ययारित्मायमानुसारऽपि वंचित्वे(र)

---

१. NS. निमोगज्ञौ सुमधुर प्रलय हस्तौ ।

स्फुटरचित[1]चित्रकरणौ गीतश्रवणाचलौ प्रवीणौ च ।
चित्रादिवाद्यकुशलौ वीणाभ्यां वादकौ भवत[2] ॥८॥

बलवानवहितबुद्धिर्गीतलयज्ञस्तथा सुसङ्गीतः ।
श्रावकमधुरस्निग्धो [3]दृढपाणिर्वंशवादको ज्ञेयः ॥९॥

अविचलितमविच्छिन्नं वर्णालङ्कारयोजकं मधुरम् ।
स्निग्धं [4]दोषविहीनं वेणोरेवं स्मृतं वाद्यम् ॥१०॥

ज्ञानविज्ञानकरणवचनप्रयोगसिद्धिनिष्पादनानि षडाचार्यगुणा इति । तत्र ज्ञानं शास्त्रावबोधः । य(त)था च क्रियासम्पादनं विज्ञानम् । कण्ठहस्तगौण्यं करणम् । जितग्रन्थता वचनम् । देशादिसम्प्रदाराधनं प्रयोगसिद्धिः । शिष्यस्वभावमविशेष्योपात्तं उपदेशाच्छिष्यनिष्पादनमिति ॥११॥

---

से यत्नीयमित्युक्तं भवति । यदि वा वैणिकवैपञ्चिकयोस्तुल्यकालवादने परस्परमनुसारिणा वैलक्षण्यं चेत्यनेन दर्शितम् । गीतश्रवणा फला इत्यस्मात् प्रकृष्टवीणाविपञ्चीययोश्चित्राद्यौ मार्गद्वये । यद्वा......मुक्तं तत्र कुशलेन । सर्वाविग्रहणाद् वैपञ्चिको वैणिकश्च ॥८॥

वंशवाद(क) । इत्युद्देशस्थात् तस्य गुणानाह । बलवानिति । जितप्राणम्(ण) । दृढपाणिरिति । स्वरस्थानादचलाङ्गुलि ॥९॥

अत्र फलमाह । अविचलितमिति ॥१०॥

स्वरस्थानाद् दोषाणां गात्रकुशलं विज्ञानम् । तदुपयोगिनो वागादेः करणवर्गस्य गुणवत्त (ता) करणयुक्ता (क्ता) करणतेत्यर्थः । जितग्रन्थतेति धारकत्वम् । वचनधारवन् हि परस्मै ब्रूयात् स(न) विस्मर्ता । देशादिसम्प्रदाराधनं प्रयोगसिद्धिः । शिष्यबुद्धिमनुसृत्यादेष्टृत्वं यद्वैचित्र्यं तच्छिष्यनिष्पादनम् । अत्र गीते स्वराणां प्राधान्यमिति दर्शयितुमेतावन्तो गुणा अवश्याह(द)रणीया इति ॥११॥

---

१. NS. विचित्र......।
२ भवति ।
३. दृढपाणि......वैदिको ज्ञेय ।
४ दोषावारण (?)

श्रावको(णो)ऽथ घन स्निग्धो मधुरो ह्यवधानवान् ।
त्रिस्थानशोभीत्येव तु षठ कण्ठस्य गुणा मताः ॥१२॥

उदात्त श्रूयते यस्मात्तस्माच्छ्रावक(ण)उच्यते ।
श्रावक (ण॰)सुस्वरो यस्मादविच्छिन्न[1] स घनो मतः ॥१३॥

ग्रहणध्वनिसयुक्त स्निग्धस्तज्ञै प्रकीर्तित ।
[2]मन प्रह्लादनकर स वै मधुर उच्यते ॥१४॥

स्वरेऽधिके च हीने च ह्यविरतो वि(ऽव)धानवान् ।
शिर॰कण्ठेष्वभिहित(हतस्) त्रिस्थानमधुरस्वर[3] ।
त्रिस्थानशोभीत्येव तु स हि तज्ज्ञैर्वाहृत.[4] ॥१५॥

कपिलो ह्य(ऽव्य)वस्थितश्चैव तथा सन्दष्ट एव च ।
काको च तुम्बकी च (चैव) षडेव दोषा भवन्ति हि ॥१६॥

घैरवर्यं च भवेदत्र तथा स्य(स्था)द् घर्घरायितम् ।
कपिल स तु विज्ञेय श्लेष्मकण्ठस्तथैव च ॥१७॥

क्रमताऽधिकता चापि स्वराणा यत्र दृश्यते ।
[5]हलवोगहृतश्चैव ज्ञेय स त्वव्यवस्थित ॥१८॥

---

तात्पर्येण कण्ठस्य नादस्य गुणानाह् । श्रावण इत्यादि ॥१२॥

एतत् क्रमेण लक्षयति । त्रिस्थानत्व केचिदाक्षिप्य प्रतिसमादधति । वायुर्ना-भेरूर्ध्वमभिहत्योरसि वृत्त शिरस्यभिहतो मुखेन वृत्त सन् छन्नमागच्छन्नपमूरस्त्वं नासिकाक्षेत्र तथापि तत्रैवाय शब्द इति प्रतिभास्यो यत्नवशादिति त्वाल्पमिति समाधि । अस्माभिस्तु यदत्र वक्तव्य तदुक्तमेव काकवध्यायाद्वा (भ० ना० १७) विस्तृतम् ॥१३-१५॥

अथ दोष तद्देशलक्षणाभ्यामाह् । कपिल इत्यादिना ॥१६॥

कम्पन कपिस्त लात्य(लयतीति)......व्यताल घ(घ)र्घरायित स्थानात् च्युति श्लेष्मणाऽपि स्थानस्यालाभस्ततो वैस्वर्यम् ॥१७॥

अव्यवस्थानादव्यवस्थितो नाद ॥१८॥

---

१ NS छिद स घन स्मृत ।
२ मानप्रह्लादकर ।
३ स्वरे ।
४. प्रकीर्तित ।
५ हृत ।

दन्त(न्त)प्रयोगात् सम्यक्स्त्वाचार्यैः परिकीर्तितः ।
यो न[1] विस्तरति स्थाने स्वरमुच्चारणागतम् ।
तथा रूक्षस्वरश्चैव स काकीत्यभिसंज्ञितः ॥१९॥
[2]नासाग्रपरतस्वरस्तु तुम्बु(म्ब)की सोऽभिधीयते ॥२०॥

अन्ये तु ।
समप्रहरणे चैव चलितौ विशदौ तथा ।
[3]चितश्रमौ विकृष्टौ च मधुरौ स्वेदवर्जितौ ।
तथा कृपमलौ चैव ज्ञेयौ हस्तस्य वै गुणाः ॥२१॥ इति ।
एते गुणाश्च दोषाश्च तत्त्वतः कथितौ(ता) मया ।
अत ऊर्ध्वं प्रवक्ष्यामि ह्यवनद्धविधिं पुनः ॥२२॥

गान्धर्वमेतत् कथितं मया तत्(च)
पूर्वं यदुक्तं प्रपितामहेन ।
कुर्यात् य एव तु नरः प्रयोगे
सम्मानमग्र्यं लभते स लोके ॥२३॥

इति ।
इति भरतीये नाट्यशास्त्रे गुणदोषविचारो नाम त्रयस्त्रिंशः ॥३३॥

---

दन्तयन्त्रसञ्चरणात् सम्यक्. । काकोदुम्बरिकाम(मु)क्त किन्तु स्व(र)तम्बुवीणाद्यभेदेन च सादृश्यं यस्यास्ति शब्दस्य स काकी तुम्बकी च ॥१९-२०॥

समप्रहरणादिसम्प्रसाधिवद् द्वावपि प्रयोगसमौ स्वदेहितस्तम्भौ विस्तारयुक्तयोः ॥२१॥

अध्यायार्थस्योपसंहारमन्यस्यावतरणं करोति । एते गुणाश्चेति । एतदर्थाभ्यनुविध्यर्थं गान्धर्वमुक्तमिति समाप्तं केचिदाहुः । अन्ये तु गान्धर्वमिति सामान्यशब्दो लोक इह चामुत्र चेति शिवम् ॥२२-२३॥

इति माहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेदवृत्तावभिनवभारत्यां
गुणविवेकाध्यायस्त्रयस्त्रिंशः ॥३३॥

---

१. NS निस्तरति ।
२. KSS नासागतस्वरो यस्तु विज्ञेय स तु तुम्बकः ।
३. NS. चितश्रमौ विकृष्टौ च मधुरौ स्वरवर्जितौ ।
तथा घनसौ चैव ज्ञेया........।

॥श्रीः॥

# नाट्यशास्त्रम्

## अथ चतुस्त्रिंशोऽध्यायः ।

[1]ततवाद्यविधानं तु यन्मयाऽभिहितं पुरा ।
अवनद्धगतस्यापि तस्य वक्ष्यामि लक्षणम् ॥१॥

यथोक्तं मुनिभिः पूर्वं स्वातिनारदपुष्करैः ।
सर्वलक्षणसंयुक्तं सर्वा(तथा)तोद्यविभूषितम् ॥२॥

मृदङ्गानां समासेन लक्षणं पणवस्य च ।
दर्दरस्य च संक्षेपात् विधानं वाद्यमेव च ॥३॥

---

॥ अथ चतुस्त्रिंशोऽध्यायः ॥

मार्जनानुगतमार्गसुन्दरं
पुष्करत्रितयमाश्रितं सदा ।
चित्रवादनपदप्लुतविग्रह
श्रीसदाशिवतनुं शिवं नुमः ॥

वृत्तेऽध्यायेऽवनद्धविधिं ब्रूम इत्युक्तम् । तत्र पुनरर्थं(र्थं)स्फुटयितुमाह । ततवाद्यविधानं तु यन्मयेति । यत्तद्विधानं पूर्वमुक्तं तस्यैव लक्षणं वक्ष्यामीति सङ्गतिः पुनरर्थं (र्थं) । न च पुनरुक्ततया तावदन्तर्धानं गतमिति प्राप्तमपि तस्य विशेषस्वरूपं भवति तच्च नोक्तमिति । अवहननं चर्मणा बन्धः । स यद्यपि वीणादावस्ति तथापि स्वोऽसौऽनारादुपकारी न सन्निपत्य तन्त्रीपरणवादो ततादावदिति । तत्र व्यपदेशोऽपि कृतः । तत एव बद्धपाणिकरटादीनि । यष्टादकेषु पक्षातोद्यकव्यवहारो लोके तेनच समुक्तं कृत्वापि । तथेति तस्माद्धेतोरुक्तम् । तस्मात् मृदङ्गाणां(नां) त्रयाणां पुष्कराणां पणवस्य दर्दरस्य च लक्षणात्मकं विधानं चर्मादिकारणत्वं वाद्य च फलं संक्षेपात् वक्ष्यामीति पूर्वेण सम्बन्धः । एकत्वो यस्मादर्थं

---

१. KSS. varies

वाद्योपसमवाये तु यानि योज्यानि वादकैः ।
अङ्गप्रत्यङ्गयोगेन गदतो मे निबोधत ॥१३॥

विपञ्ची चैव चित्रा च दारवीष्वङ्गसंज्ञिते ।
कच्छपीघोषकादीनि प्रत्यङ्गानि तथैव च ॥१४॥

[1]मृदङ्गा दर्दुरश्चैव पणवश्चाङ्गसंज्ञिताः ।
झल्लरीपटहादीनि प्रत्यङ्गानि तथैव च ॥१५॥

अङ्गलक्षणसंयुक्तो विज्ञेयो वंश एव हि ।
[2]शाल(शङ्ख)स्तुण्डि(ड)किनी चैव प्रत्यङ्गे परिकीर्तिते ॥१६॥

नास्ति किञ्चिदनायोज्यमातोद्यं दशरूपके ।
रसभाव(वे) प्रयोगं तु ज्ञात्वा योज्यं विचारतः ॥१७॥

उत्सवे चैव याने च नृपाणां मङ्गलेषु च ।
शुभकल्याणयोगे च विवाहकरणे तथा ॥१८॥

---

प्रत्यङ्गम् ॥१३॥

तत्र घनस्यैव विभाग न ततादेरपीत्याह । विपञ्ची चैव चित्रा चेति । व्याख्याते प्राक् । दारवीष्विति । वीणासु ते अङ्गम् । कच्छपी कूर्मी सैरन्ध्रीति प्रसिद्धा । घोषक विप्रनका । तौ प्रत्यङ्गौ ॥१४॥

मृदङ्गा इति । पुष्करत्रयव्यतिरिक्ता एवात्र महत्(ता)मर्दलाकारास्ते । यदाह(हा)मृदङ्गा(न्) दर्दुर तथेत्यपीता (भ० ना० ३४ ११) । ते मृदङ्गदर्दुरपणव(वा) मृदङ्गादिषु त्रिपुष्करे प्रत्यङ्गानि ॥१५॥

सुषिरेऽन्तरिता यत्प्रत्यङ्गामीत्याह । अङ्गलक्षणसंयुक्त इति । पूर्णस्वरे यतोऽङ्गस्वरत्वादङ्गत्वेन मन्यमानो वंश एवागमविशेषकार । शङ्खवत् तुण्डि(ड)किनी तर्तकेति प्रसिद्धा तत् प्रत्यङ्गम् ॥१६॥

नन्वेव न किञ्चिदिहातोद्यं व्यक्तं भवति नाट्ये इत्याह । नास्ति किञ्चिदनायोज्यमिति । क्वचित्तु किञ्चिदित्याह । रसभावे तु ॥१७॥

क्वचित्तु सर्वमपि योज्यमित्याह । उत्सवे देवयात्रादि(दौ) । एव एवप्रकारे' समुच्चय । द्वितीय एवकार प्रकारान्तरव्यावृत्त्यै । याने वध्ययात्रादि । एतच्च नाट्ये

---

१. NS मृदङ्गो दर्दुरश्चैव पणवश्चाङ्गसंज्ञिते ।
२ शङ्खस्तु ढक्किनी चैव ।

उत्पाते सम्भ्रमे चैव सङ्ग्रामे पुत्रजन्मनि ।
ईदृशेषु हि कार्येषु सर्वातोद्यानि वादयेत् ॥१९॥

स्वभावगृहवार्तायामल्पभाण्डं प्रयोजयेत् ।
उत्थानकार्यं(र्य)वन्येषु सर्वातोद्यानि वादयेत् ॥२०॥

मङ्गले तु ¹समत्वाच्च छिद्रप्रच्छादने तथा ।
²विश्रामहेतो शोभार्थं भाण्डवाद्यं विनिर्मितम् ॥२१॥

तत्रावनद्धे वक्ष्यामि विधिं स्वरसमुत्थितम् ।
नानाकरणसंयुक्तं मार्गजातिविभूषितम् ॥२२॥

यावन्ति चर्मनद्धानि ह्यातोद्यानि द्विजोत्तमाः ।
तानि त्रिपुष्कराद्यानि ह्यवनद्धमिति स्मृतम् ॥२३॥

---

लोकेऽपि च ॥१८-१९॥

स्वभावेन ग(गृ)हवार्ता । उद्यानगमनादिरनाविष्टभावात्मा । तत्राल्पं भाण्डवाद्यम् । भणतीति भाण्डं त्रिपुष्करम् । उत्थानमित्युत्साहः । तत्प्रधानेषु कार्यवन्येषु वीररौद्रादिनियमेषु डिमादिषु सर्व(र्वा)तोद्यानि ॥२०॥

नन्वेवं शृङ्गारपरिक्रमादौ दीप्तत्वायोगिनि किं भाण्डवाद्येनेति शङ्कित्वाह । मङ्गलानामिति । शाखोपाङ्ग(ङ्ग)रङ्गादीनां समत्वाय परिभ्रमणे । छिद्रप्रच्छादनमित्युत्तरध्रुवागाने । विश्रामहेतोरित्याक्षेपगानादौ । शोभार्थमिति प्रसादगाने ॥२१॥

एवमुत्पत्तिस्वरूपप्रयोजनान्यभिधायावनद्धस्य वाद्यं लक्षयितुमुपक्रमते । तत्रावनद्ध इति । स्वर(स)मुत्थितम् । स्वर शब्दमभिसन्धाय यो विधिं प्रवृत्तः इत्यमय शब्दो भवतीति वक्ष्यामि । स्वरपटकाद्यनुहाररूपवर्णनाऽनुहाररूपं च शब्दमार्गमिह करणरूपादिषड्विधमार्गोचितत्वं ताभिश्चतुर्धाजाति शुद्धाधिकारादिभ्यो च लभ्यते । लेपमार्जनादेरङ्गेवोपभोग इत्याशयेन तदिह नोक्तम् । अन्ये स्वरशब्देन स्वरानुहारं च । अक्षररूपं तु वर्णं । अनुहारकरणभून्या सगृह्णते ॥२२॥

ननु झल्लरीपटहादौ पूर्वं वर्णाद्यनुहार इत्याह । यावन्ति चर्मनद्धानीति । यादौ त्रिपुष्करे वाद्यं प्रधानं येषां तदङ्गानि भन्ति तानि प्रयुज्यन्ते ॥२३॥

---

१. NS समत्वार्थं ।
२. विप्राप्तिहेतो ... जायते ।

एतेषां तु पुनर्भेदा शतसंख्याः प्रकीर्तिताः ।
[1]किन्तु त्रिपुष्करस्यास्य लक्षणं प्रोच्यते मया ॥२४॥
शेषाणां कर्मबाहुल्यं यस्मादस्मिन्न दृश्यते ।
[2]न स्वरा प्रहाराश्च नाक्षराणि न मार्जनाः ॥२५॥
भेरीपटहझञ्झा(ञ्झा)भिस्तथा दुन्दुभिडिण्डिमैः ।
शैथिल्यादायतत्वाच्च स्वरेऽगाम्भीर्यमिष्यते ॥२६॥
[3]प्रायशस्तानि कार्याणि कालं कार्यं समीक्ष्य तु ।
किन्तु त्रिपुष्करस्यास्य श्रूयतां यो विधिः स्मृतः ॥२७॥

---

अन्यथा तु एतेषां तु पुनर्भेदा इत्यकथ्यत्वादलक्षण्य इ(मि)त्याशङ्क्य अन्यथानर्थ एवानारम्भणीय । नेत्याह । किन्तु त्रिपुष्करस्येति । यावो अन्यपदार्थबहुव्रीहि । अवयवेन विग्रह । समुदायो वृत्त्यर्थं इति गुर्वाचार्यावि (दय) ॥२४॥

नन्विदानीमङ्गप्रत्यङ्गकृतो भेद इत्याह । शेषाणामिति । कर्मबाहुल्यमिति । यावं तत्तद्बहुल तेषु । अत्र हेतु ।

न स्वरा न प्रहाराश्च नाक्षराणि न मार्जनाः ।

इति । षड्जादिस्वराभा(वा)त् त(त्सम्पत्तये) । मार्जना अपूर्णा(णा)स्तैऽत्रायस्ता-स्तत्सम्पत्तिफला । अक्षराणां बोधदाना मान तदभावात् तत्सम्पत्तये । निगृहीतादय-स्तथ. प्रहाराः ॥२५॥

ननु स्वराभावे कथ शब्दवैचित्र्यमित्यत आह । भेरीपटहझञ्झाभिरिति । दुन्दुभिडिण्डिमे स्वरूपमुक्तमेषाम् । एतैर्यं क्रियते स्वर शब्दस्तत्र केवल शैथिल्याद् बध्रवर्मकीलिना .. ..त् चामभियंन् मद्रस्वभायतत्वात् न गाम्भीर्यमुच्चत्वम् । गाढ्त्याकारः शिलष्टः । एतदुक्त भवति । ढक्वनीचतामात्रमेवात्र परं तु न तावता स्वरोदय. । स्वरान्तरश्रु(श्रा)व(वा) यतो हि सस्फुटो भवतीत्युक्तम् । मतकालिना-दयस्तु न तथा । भावरकिन ..योगादेतच्च स्वरयते ग्यक्षेण चर्चितमित्यास्ताम् ॥२६॥

पुनर्न चैषां सर्वदा नोपयोग इति दर्शयति ।

प्रायशस्तानि कार्याणि कालं कार्यं समीक्ष्य तु ।

किन्निवति । प्रकृत सूत्रयति । त्रिपुष्करस्यास्य श्रूयतां यो विधिरिति ॥२७॥

---

१. NS किंतु (?) त्रिपुष्करस्यसे ।
२. न स्वरास्तत्र हाराश्च ।
३ प्रायशः स्वानि ।

वाग्वात्मको भवेच्छब्द[1] स चापि द्विविधो मतः ।
स्वरवांश्चैव विज्ञेयस्तथा चैवाभिधानवान् ॥२८॥

तत्राभिधानवान् नाम नानाभाषासमाश्रय ।
स्वरवानपि विज्ञेयो नानातोद्यसमाश्रय ॥२९॥

शारीर्यामिव वीणायां स्वरा सप्त प्रकीर्तिता ।
तेभ्यो विनिःसृताश्चैवमातोद्येषु द्विजोत्तमाः ॥३०॥

पूर्वंशरीरादुद्भुता[2] स्ततो गच्छन्ति दारवीम् ।
ततः पुष्करजं चैवमनुयान्ति घनं(ध्वनि) पुनः(पुनाः) ॥३१॥

---

तत्र शब्दस्य तावत् स्वरूपमाह । वाग्वात्मको भवेच्छब्दः स चापि द्विविध इति । वायुरात्मस्वरूप जन्मन्युपादान अवक्ती वा निमित्तमात्र यस्य शब्दस्य । एतच्च

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।

इत्यत्र ब्रह्मकाण्डोद्देशे विवेचितम् । इह स्वप्रकृतमिति न विस्तारितम् । स्वरात्मक स्वरूप यस्य नित्यमस्ति स स्वरवान् नादमात्रात्मक । ननु वाग्विषयोगनियमपर्यन्त- शायित्व वदता वर्णात्मके नादरूपता नास्तीत्युक्तम् । अभिधाने समयाविनाऽर्थप्रति- पादनं विद्यते यस्य सोऽभिधानवान् वर्णात्मक ॥२८॥

तत्रैवमिह वचनस्य मत्वा पूर्वाभिधानोपयोगिनमाश्रयमाह । स्वरवानिति आतोद्ये वीणादौ स एव भवतीति ॥२९॥

तदसम्यक् । (ना)नाश्रय आतोद्य एवेति कश्चिदयमस्तेत्याह । शारीर्यामिवेति । तत्रैवोक्त श्रुतिसम्बन्ध । यतस्तेभ्य इति । शारीरेभ्यो विनि सृता इति । तत्सामा- न्यादिति भाव । आतोद्येष्विति ततादिषु ॥३०॥

तदपि गुणप्रधानभावमाह । पूर्वं शरीरादुद्भूता उत्पन्ना अभिव्यक्ता वा ततो गच्छन्ति दारवीम् । वीणाया पूर्णत्वात् तत्प्रा(पा)तिकृताया स्वले । यतेन वैणावा अत्युपलक्षिता । तत पुष्करज चैवमनुयान्तीति । वीणास्वरेषु यादृशी रक्ति पूर्णता- दशी पुष्करेषु केवल गान्यानुहारमात्रम् । तदाह । ध्वनिमनुयान्तीति ।

नन्वेवमनुहरण साम्यस्य[दारव्या]दावप्यस्ति । तत्कथमुक्त स्वरा इति । तत्रैकमेवानुहारमात्र(मि)ति न स्वरानुहारत्व तत्र स्फुटम् । इह तु सर्वांगयोगात्

---

1. NS शब्द । द्विविध स्मृत ।

२

तेषां [1]धातुवर्णज्ञेया प्रहारा वचनाश्रयाः ।
[2]भण्मध्या चेति (झर्णु झाझेति) संयुक्ता वीणावाद्यप्रयोगिन ॥३२॥

शारीर्यामथ वीणाया झण्टु जगदि यादि च ।
भवेद्वाक्करणं तत्र नानाकरणसंयुतम् ॥३३॥

---

तत्पठनेन च सम्यादिनत्रयान्तरसम्पत्तावप्येकस्त्रिविवान्यो भवन् नीचमावसवेदाद् व्यक्तस्वरानुहारो मिथत्वात् । तदाह । पुना इति । स् . .. नत्वादित्यर्थः ॥३१॥

एव विपुष्करे मार्जनास्वरयोग सूचयन् प्रहाराक्षरयोगमपि सूचयिष्यन् तत्प्रकृती ..वीणाया दर्शयितु सामान्योपक्रम सूचयति । तेषां वाक्करणज्ञेया प्रहार-(रा)वचना (श्रया) । इति । तेषामित्यातोद्यानां परामर्श । आतोद्येष्विति प्रकान्तत्वात् । वाक्करणैःस्तोमाक्षरैवर्णरञ्जिज्ञायते । आतोद्याना नाश्रयो(य)वर्णानुहारसम्पादका हस्ताङ्गुलिप्रहारा भवन्तीति । वाच एव क्रिया न स्वयं प्रतीत्यादि । किञ्चिदित्यत्र तद्वाक् वचन वर्णा इह तु तदनुहार । ननु कानि स्तोमाक्षराणि । कुत्रेत्याह झण्टु झर्झेति । न प्रकारे वि(हि) वीणावाद्यप्रयोगे निवते येषां हेतुनेति वीणावाद्यप्रयोगिन. ॥३२॥

ननु वीणाया वाग्भावाद्यक्षरमिति वा नामेत्याशङ्क्याह । शारीर्यामथ । झण्टु जगति यदि चेति । आदिना विगिनिगिझण्टुप्रभृतीभि । ननु तुल्येऽङ्गुलिप्रहारे कथमकारादिस्तत्रथा विशेष इत्यत शिक्षा ददाति ।

भवेद्वाक्करणं तत्र नानाकरणसंयुतम् ।
इति । नखाङ्गुल्यग्रमध्यादिनाऽनीक्तोत्रपर्शन तत्र तस्याः तन्त्र्यादिभावेष्विति । नानारूपक्रिया झण्टुमादिवाक्करणेन कार्यभूतेन संयुज्यते श्रुत्या ॥३॥
प्रर्क्ष तदाह ।

य य गाता स्वर गच्छेत् तमातोद्य. प्रयोजयेत् ।
इति । आतोद्य. वीणादिभि । यतिपाणयो व्याख्याता । परमगुरवस्तु प्रकृत व्याचक्षते ।

गुरुलघ्वक्षरे गीयमाने ध्वनितमाश्रितम् ।
स्वन्त स्वर यात्मान वादयेदेव भासयेत् ।
कथ यतिविराम (स्यात्) तत्प्रमाणेन पाणिना ॥

---

१ NS एवा ग्रह्णरणं
२ युद्धादिभि सदा यान्या वीणावाद्येषु योक्तृभि ।

यं यं गाता स्वरं गच्छेत् तामातोद्यैः प्रयोजयेत् ।
यतिपाणिसमायुक्तं गुरुलघ्वक्षरान्वितम् ॥३४॥

पौष्करस्य तु वाद्यस्य मृदङ्गपणवाश्रयम् ।
विधानं सम्प्रवक्ष्यामि [1]दर्दरस्य तथैव च ॥३५॥

षोडशाक्षरसम्पन्नं चतुर्मार्गं तथैव च ।
वि(द्वि)लेपनं षट्करणं त्रियति त्रिलयं तथा ॥३६॥

---

इति पाणिप्रहारेण संयुक्तम् । पाणिना वर्शेषु फूत्कारो लक्ष्यते । गुरौ गीयमाने गुरुणा विच्छेदो लघौ लघुतयेति ॥३४॥

ननु भवत्वेव वीणादौ । प्रकृते पुष्करे कथमेदित्याह । पौष्करस्य । तथैवेति । नैव स्वराक्षर वादनप्रकारेण हेतुना पौष्करस्य लक्षणं वक्ष्यामि तदनुषङ्गी नामश्च । दर्दरस्य मृदङ्गपणवाश्रय कृत्वा । तेन मृदङ्गपणवस्य चानुषङ्गिणो विधानं स्वराक्षरसम्पादक प्रकार वक्ष्यामीति सम्बन्ध ॥३५॥

षोडशाक्षरसम्पन्नं चतुर्मार्गं तथैव च ।

इति । प्रक्षरप्रकारेण मार्गच्छेद इति ।

द्विलेपनं षट्करणं त्रियति त्रिलयं तथा ।
त्रिगतं त्रिप्रकारं च त्रिसंयोगं त्रिपाणिकम् ।
दशार्धपाणिप्रहतं त्रिप्रहारं त्रिमार्जनम् ।
विंशत्यलङ्कारयुतं तथाष्टादशजातिकम् ॥

इति । तत्र योजनमाह । एवं प्रकारैर्यस्मात् पुष्करजं वाद्यं परिपूर्णं तस्मान्नाट्ये रसभावाभिव्यञ्जनसमर्थमित्यतो भणनयोग्यमिति सम्भाव्यते । तत्र पौष्कर वाद्य प्रकारत्रयेण नाट्योपयोगिनि(गीति) । वर्णानुसारेण स्वरानुसारेण साम्यात्मना ताले च । तथा हि । वर्णा कस्मिंचिदपि वाद्यविशेषतया प्रभवन्तोऽप्यज्ञातार्थश्रुतिमात्रेणैव पुरुष नागरग्राम्योपनागरिकात्मवृत्तित्रयाणि ताल[लय]भेदेषु दीप्तमध्यमसुकुमारूपसंविद्वृत्तिव्यञ्जका इति तावत् प्रसिद्धमेव । ततश्च प्रागलङ्काराध्याये (भ ना १६) निर्णीतपरमार्थ सहृदयलोकलोचने (ध्वन्यालोकलोचनम् २ २) च । त एव त्वनुहाररूपतायां वर्णरूपस्वन्यवकारेण नादरूपतया सञ्छादितात्मानो भवन्तो नादस्य लालित्यपारुष्यादितारतम्यभेदे नितरां द्विरावृत्तिमिवोद्दीपयन्ति । नादो हि चित्तवृत्तेरन्तरङ्ग समयानपेक्षिन एव । लोकेऽपि चित्तवृत्ति(त्तें)र्व्यनक्ति । सचित्प्राणित तु वाक्तत्त्वस्य प्रथम

---

1. दर्दुरस्य ।

त्रिगत त्रिप्रका(चा)र च त्रिसयोग त्रिधाणिकम् ।
दशार्धपाणिप्रहत त्रिप्रहार त्रिमार्जनम् ॥३७॥

विशत्यसङ्कारयुत तथाष्टादशजातिकम ।
एभि प्रकारैः सम्पन्न वाद्य पुष्करज भवेत् ॥३८॥

तत्र षोडशाक्षरमिति यदुक्तं तदनुव्याख्यास्याम. ।
कखगघटठडढतथदधमरलह इति षोडशाक्षराणीह ।
[1]नियत पुष्करवाद्ये वाक्करणे सविधेयानि ॥३९॥

---

नादात्मना विवृत्तस्य । वर्णात्मा चरमो विवर्तो बहिरङ्ग । यत सा चेय नादरूपतयैव अस्यमाणा पातङ्गमना(ना)न्यपुष्करमुखोदितान्येव चोच्चार्यमाणेषु वर्णेषु प्रयत्नशतैरपि न सम्पद्यते । तत्र हि सर्वथा(था) वर्णप्राधान्यमेवोन्मीलति । नादप्राधान्या.. उच्चायमाण(णो) वर्णो वाद्यमान तु वाद्यभूतवर्णमय सन्ध्याया शाबलेयादय इव गो भूता । अत एवोच्चार्यमाण वाद्यमपि प्रसिद्धमपि तूदट्टयति । उदट्टन सूत्रमुच्यते । सोऽय वर्णान्तरानुहारभागी रसभावप्रकृत्यादिभि सूक्ष्मतया विमलमत(तम)दृष्टिना मुनिना ज्ञात्वा तथैवोपदिष्ट । तत्र वर्णस्वरूप पुष्करहस्तयोगजन्म । तत्र च पुष्करगत सस्कारो लेपश्च आलिङ्गके ऊर्ध्वके च । निगृहीत यत्ताडनमनन्तर पीडितम् । अनुरणनकारणे यत्र न(यर्धनि)-गृहीतम । विश्वस्य(विश्रम्य) पीडितमेतदनुरणनसिद्धये । मुक्त च पीडितसपूर्णानुरणनसम्पत्त्यै इत्येतत् प्रहारत्रयम । (पञ्चपाणिप्रहत)समार्धतदर्धपर्वप्रदेशात्मनि हस्तसन्निवेशात्मनि करणरूपे धातपञ्चके इति कर्तव्यता सपूरयद्धस्तस्य सस्कार इति लेपघातप्रकारप्रहारसर्णानुहार । प्रत्युपयोगिना वर्णानामेव त्रिय(ग)तम । सयोगः मार्गे आलिप्तादिश्चतुर्विध । गुरुलघुमिश्रतावर्णस्वरूप । निगृहीतादित्रयमिति सयोगत्रयवर्णस्वरूपतात्पर्यैव । प्रचारत्रयस्य मार्गचतुष्टय एवोपयुज्यते । हस्तसाम्येन वैपम्येणोभयथा चेति । यदा मार्गभेदास्तावत् सिद्धस्तज्जातयोऽष्टादश शुद्धा दुष्करकरणेत्यादय । यद्यपि चासा समस्तमेवैतदुद्देशगत (लघुप्लुत)लयगुताद्यभिधमनल्पमत एव [ ] सर्वं मीलनाज्जायत इति निवचन चासामेव प्रयोगपर्यन्तम् । तथापि मार्गान्तरमासां शारीरमिति मार्गजास्ता सवता । तेष्वेव वर्णेषु पणवदर्दरमृदङ्ग वाद्ययोजनया वैचित्र्योत्पादकव्करण (म) । यद्रूपकृतिप्रकृतमित्यादि करणषट्कम् । अत एव प्रचारत्रयसहितमार्गाभिधानादन तर पणवदर्दरलक्षणमकालकूष्माण्डपतनदेशीयमिति न शक्यते ।

षोडशाक्षरसम्पन्न चतुर्मार्ग द्विलेप षट्करण त्रिप्रचार त्रिसयोग दशार्धपाणि-

---

[1] NS पुष्करवाद्ये नित्य ।

चतुर्मार्गं नाम । आलिप्तार्द्धितगोमुखवितस्ताश्चत्वारो मार्गाः ।
[1]द्विलेप नाम । व(वा)मोर्ध्वकप्रलेपात् ।
षट्करण नाम । रूपं कृतप्रतिकृत प्रतिभेदो रूपशेषमोघः [2]प्रतिगुल्का चेति । त्रियतिर्नाम । समा स्रोतोगता गोपुच्छा चेत्यन्वयात् ।
त्रिलयं नाम । द्रुतमध्यविलम्बितयोगात् ।
त्रिगतं नाम । [3]तत्त्वमनुगतमोघश्चेति ।
त्रिप्रचार नाम । समप्रचारो विषमप्रचारः समविषमप्रचारश्चेति ।
त्रिसंयोगं नाम । गुरुसंयोगो लघुसंयोगो गुरुलघुसंयोगश्चेति ।
त्रिपाणिक नाम । समपाणिरवपाणिरुपरिपाणिश्चेति ।
पञ्चपाणिप्रहृत नाम । [4]समपाण्यर्धसमपाणिरर्धार्धसमपाणिः पार्श्वपाणि प्रदेशिनी चेति ।
त्रिप्रहारं नाम । निगृहीतोऽर्धनिगृहीतो मुक्तश्चेति ।
त्रिमार्जन नाम मायूर्यर्धमायूरी कार्मारवी चेति ।
विशत्यलङ्कारा (रान्) प्रष्टादशजावि(तो)श्च पदमेवं दर्शयिष्यामः ॥४०॥

---

प्रहृतं त्रिप्रकारमष्टादशजातिकमिति । वस्तुद्देशभागे वर्णानुसहारविषयो यस्तु स्वरानुहाराख्यस्तत्र द्विलेपमिति । स्वरूपसिध्यै त्रिमार्जनमिति । स्वरसयोजनाख्ये नादीभूतवर्णं सम्पत्यनुभावि सदनुगरनरूप तद्गानाश्रयितस्थायित्व स्वरूपमनुवर्तमान तत एव तत्कृतचित्तवृत्त्युद्दीपन एव सुतरामानमाश्रयतीति यतत उपदिश्यमानस्वरानुहाराद्य इति प्रकारत्रयम् । घातपञ्चकादेरत्र यत्रोपयोग एव । गतयो लयास्तत्त्वादीनि त्रिगतम् । समपाण्यादित्रयमिति साम्याख्यताल उपयुज्यते । साम्य यत्र यस्याम्योन्य-मृदङ्ग यङ्कीआंकथिदिप पञ्चनेदतादिभिरातोद्यान्तरैर्ध्वागानेन परिक्रमणादि-पात्रवेष्टितेनेति तद्विचित्रीकरणे विशतिरलङ्कारा इति । एव पुष्करवाद्यमनुरञ्जक-त्वेऽपि विवाह...शोभामावहतीति । तथा च नन्दिमते ।

> न पुष्करविहीनं हि वाद्यवृत्त विराजते ।
> सत्रैव हि श्रुते लोक उन्मुखत्व प्रपद्यते ॥

इति । त्रिभङ्गविषयत्वेऽपि मिश्रितत्वेन प्रयोगे तत्सम्पादन न हि विभज्येति प्रतिपादयितु मुनि- शङ्कुरे(संक्षेपे)णोदिदिक्षत् ॥३६-४०॥

---

१. NS विलेपनं ।
२ प्रतिघुक्लेति ।
३. घनमोघश्चेति ।
४ समपाणिरर्धपाणि. .प्रदेशिनीत ।

एतावत सूत्रम । अत पदभेदं । तत्र षोडशाक्षर नाम ।
[1]अभिव्यञ्जितानि पूर्वं यान्येतानि षोडशाक्षानि ॥
तान्यक्षराणि जानीत पुष्करेषु यथाक्रमम ।
पणवे [2]ददरे चैव मृदङ्गेषु तथैव च ॥४१॥

कखतथमा(टढतथरा)स्तु दक्षिणमुखेऽत्र घधम(घम)हाश्च वामके नियता ।
गदकारो चैवोर्ध्वे (चोर्ध्वास्थे)रठङोण (लठडण)ला स्युरालिङ्गे ॥४२॥

एतेषामक्षराणां स्वरसंयोग व्यञ्जनसंयोग च व्याख्यास्याम ।
तत्र अ आ इ ई उ(इ उ) ए ओ अ इति स्वरा व्यञ्जनैः सह संयोग गच्छन्ति ।

अकारेकारोकारैकारौकाराङ्कुरा इति ककारे । यथा । ककिकुकेकोक मिति ।
इकारैकारौकारा इति लकारे । लिलेलो इति ।

---

एतदत्र वस्तुतत्त्व शिष्ट ग्रन्थयोजनामात्रम् । तदाह मुनि । एतावत् सूत्रमिति । स(सा)मान्यो नेत्याह अत पदभेद इति । सूत्रेऽस्मिन् यानि पदानीत्यवान्तरवाक्यानि तानि व्याख्यायन्तेऽस्मिन्निति स ग्रन्थस्तथोक्त । तत्र पणवदर्दरमृदङ्गेष्वक्षरविभाग पुष्करेषु तावदाह ॥४१॥

कटढतथरास्तु दक्षिणमुखेऽत्र घमहाश्च वामके नियता ।
गदकारो चोर्ध्वास्थे कठणल(लठडण)लाश्च स्युरालिङ्गे ॥

दक्षिणस्य पुष्करस्य सम्यतो वामतश्चेति मुखद्वयम् । अतएव सयवाङ्को सलक्षणमस्तीत्यर्ध्वक्रक । तस्य दक्षिणस्य दक्षिणमुखे षड् वर्णा । वामे त्रय । मध्यमे तु प्रधानत्वादङ्किकालिङ्गाभ्या सार्धं त्रयम् । तालाभ्यामाविवेन चतुस्तानत्वेन वक्ष्यमाणत्वाच्चोर्ध्वकत्वाद्वाच्ये द्वौ वर्णौ । आलिङ्गके पणवदर्दरवाद्येन मिश्रीक्रियते यस्य वाद्यमालिङ्ग्यकरणत्वबहुल वमेव तद्वाद्यम् । न तु तच्छब्द कदाचित् । तत्रालिङ्गके पञ्च । एव षोडश ॥४२॥

तेषां स्वरसंयोगमाह । तत्रेत्यादिना हकारमा(म)कारौ शुद्धावित्यन्तेन । ऋलृऐऔम इत्येतद्वर्जम् । अत्र स्वरविनियोग इति । लघ्ये हि हुर्दरित्यादौ टकारो न

---

१ NS. अभिव्यक्तानि ।
२ ददु रे ।

उकारेकारौ गकारे। यथा गुगे इति।
प्रकारेकारोकारौकारा इति घकारे। यथा घघिघुघो इति।
प्रकाराकारेकारौकाराङ्कारा (इति) टकारे। यथा टटाटिटौटमिति।
प्रकाराकारेकारेकारौकाराङ्कारा इति ठकारे। यथा ठठाठिठेठोठमिति।
एकारौकारौ ढकारे। यथा ढेढो इति।
प्रकाराकारेकारौकारा इति णकारे। यथा णणाणेणो इति।
प्रकाराकारेकारेकारा इति तथयो। यथा ततातिते थथाथिथे इति।
प्रकारौकारेकारौकारा इति दकारे। यथा ददुदेदो इति।
प्रकाराकारेकारौकाराङ्कारा इति धकारे। यथा धधाधिधे (धोधमिति)
प्र(प्रकारा)कारेकारेकारा इति रेफे। यथा रराटिरे इति।
प्रका(राका)रेकारेकारा इति लकारे। यथा ललालिले इति।
हकारमकारौ शुद्धौ ॥४३॥

ककारगकारघकारतकारधकादकाराणां रेफोऽनुबन्धः। यथा क्र ग्र घ्र त्र ध्र द्र। ककारस्य लकारोऽनुबन्धः। यथा क्ल क्ले क्लमिति। हकारस्य णकारोऽनुबन्धः। यथा ह्ण इति। तकारस्य थकारोऽनुबन्धः। यथा त्थ इति। दकारस्य धकारोऽनुबन्धः। यथा द्ध द्धा द्धे इति। एवमेतैः सयोगैर्द्विहस्तसयुक्तान्यक्षराणि भवन्ति ॥४४॥

तत्रैव एव हिपुष्करे। वामिद्गुकमूर्ध्वङ्के द्विपुष्करे समहस्तनिपातनाट्टकारः। तत्रैवाङ्गुलिप्रचलनात् घ्रकारः। तत्रैवावहन्मात् तत्रैवावनिगृहीतात् त्थ(थ)कारः। तत्रैव दक्षिणमुखे पार्ष्णिनिपीडिते ककारः। तत्रैवाङ्गुलिकुञ्चनात् कुकारः। ऊर्ध्वकवामकयोः समहस्तनिपातनाद्धंकारः। प्रवेशिन्या चालिङ्गे कैङ्कारः ॥४५॥

---

मन्तव्य। हकारस्व(स्य) शुद्धस्याप्यभिधानाल्लक्ष्ये तहि गहतदित्यादौ गन्तव्यमित्यादि सावध(वाध)म्। श्रग्रे च मद्यारे कुगुहुल इति कतव्यम्। न तु कुतूहलमिति। शिष्टं स्पष्टम् ॥४३॥

प्रथ व्यञ्जनसयोगमाह। ककारेत्यादिना एवमेतं सयोगैरित्यन्तेन। सयोगैरिति। मावसायनम्। एतद्योजनोपलक्षितानि यान्यक्षराणि तानि हस्तद्वयसयोगजानि। व्यापाराद्वृत्तिभेदाद्बहुहस्तसयोगजत्वमपि सम्भाव्यमपीति द्विग्रहणम् ॥४४॥

अनुबन्धशब्दत्वेन मिश्रत्वेन वैचित्र्यमाह। एत एव हि (द्वि)पुष्करे

[1]पञ्चपाणिप्रहतमिति यदुक्त समपाण्यवपाण्यर्धापपाणिपार्श्वपाणिप्रदेशिन्य-श्चेति । ॥(य) एते पञ्चपाणिप्रहृता के(ते) निगृहीतार्धनिगृहीतयुक्ता यथायोग कार्या । तत्र समपाणिप्रहतो मकार स निगृहीत । यकारथकारदकारधकारा अप-पाणिप्रहता अर्धनिगृहीता । ककारखकारटकारदकारा पार्श्वपाणिप्रहता निगृही ताश्च । तकारथकारावर्धापपाणिहतावर्धनिगृहीतौ । प्रदेशिन्या हता आलिङ्ग्ये टका-रणका(र)रेफवकारा युक्ता । द्विहस्तप्रहता ऊर्ध्वके इति । मुक्तपार्श्वे थिका इत्यर्धपाणिहता निगृहीता( ) । एवमेतेष्वक्षरेषु प्रयोगवशेन कार्या प्रहारा ॥४६॥

षोडशैतानि दृष्टानि वाद्यजान्यक्षराणि तु ।
अनेनैव विधानेन योज्य वाद्यकरणं बुधैः ॥४७॥

---

द्विमुखेऽर्ङ्क्य इति । मुखद्वये सम कृत्वा हस्तनिपातादिति समग्रहण क्रमनिवेधार्थम् । अत एवान्यस्तपूर्णान्तरमेवेद केवलमुद्घट्टने । सर्वेष्वर्ङ्क्ये दक्षिणमुखे द्रवमित्युक्तम् ॥४५॥

षोडशाक्षरमिति निर्णीय तदुपयोगि वक्षायपाणिप्रहतमिति निर्णेतुमाह । पञ्चपाणीति । पञ्चसन्निवेशे पाणिभि प्रयोगसिद्धये हत हनन येषां ते वर्णा निगृहीतादित्रयरूपा कार्या इति । त्रिप्रकारस्येतिकतव्यतारूपतामाह । यथायोगमिति । व्याचष्टे समपाणिप्रहतमि(त इ)त्यादिना । अवपाणिप्रहतार्धनिगृहीत इति तुल्यत्वेऽपि पुष्करभेदात् स(न)कारादीना भेद ॥४६॥

ननु तत्र यदि वर्णानुहारस्वरभवा एतेऽ य एव तथा सति संयोगजना स्वमीता परमायतोः यत्नमेव । तथा रूपादिकरणवशद्वन्द्वध्वने पुष्करध्वनिमेलने वक्ष्यमाणे वस्तुतोऽन्य एव विचित्रो निनाद इति किमर्थोऽय षोडशनियमप्रयास इत्या शङ्कयाह । षोडशैतानीति । दृष्टौ । यस्मादनेन षोडशाक्षरात्मना विधानेन वाद्यकरण वाद्या तालवोद्घट्टन बुधैरनुहारसादृश्यविवेककुशलैर्यो जयितु शक्यते । तद्योजनया च लिना तद्वाद्यान्यासमसम्पादनमशक्यत्वात् प्रयोगविच्छेदमित्यवश्य योजनार्हम् । एतैरेव षोडशभिरुद्घट्टनिकारूपं सदमेव वाद्यकरण योजनार्हम् । अधिकान्यक्षराणि नापेक्षत इति । ततो हेतोरेतानि वाद्याज्जातानि कल्पनया तत पा(प्र)योद्धारेण तत्स्वरूपाणि षोडशाक्षराणि दृष्टानीति सम्बन्ध ॥४७॥

---

१ अन्यत्र तु अध्यायान्त पाठो मिलते ।

चतुर्मार्गं यदुक्तं तमनुव्याख्यास्यामः ।
अड्डितालिप्तमार्गं(र्गौ) तु वितस्ता गोमुखी तथा ।
मार्गाश्चत्वार एवैते प्रहारकरणाश्रयाः ॥४८॥

तत्र किङ्कु(त्राङ्कि)कपुष्करप्रहारयुक्तोऽड्डितमार्गो वामोर्ध्वप्रहारयुक्त आलिप्तमार्गः । ऊर्ध्वकाङ्किके दक्षिणमुखे आलिप्तहस्तो वितस्तमार्गः । आलिङ्ग्यक-करणबहुलः सर्वपुष्करहस्तो गोमुखीमार्गं इति ॥४९॥

तत्राड्डित(ता)प्रहारज्ञानम् । घटकटघिघघटघेघोघहुमघि घघमघिघि इत्य-ड्डितामार्गः । घट गुड्गुटमघेघोघिघघुघिदुघेघि (इत्यालिप्तमार्गः ।) किकाकिट्-केटकिता किकेकिताद . तलितां गुडुगेत्येव ज्ञेयो वितस्तस्यास्तु । गुघ सिघ मध्गिकुटघेघेमघिघघिघमुखुणघेघोटघिमट गोमुखीमार्गः ॥५०॥

---

अथैषां वर्णानां चतुर्धा समूहीभाव रसविशेष उपयोजयितुं प्रक्रमते चतुर्मार्ग-मिति । यदुक्तमिति । उद्देशसूत्रे मार्गं आकाङ्क्षा तया सम्बन्धन समूहीभावात्मा लक्ष्यते । स चतुर्धा । एको त्रिक इत्यङ्किकमुखम् । तच्च प्रथमो(मघु)क्तम् कटरच-कटस्थान मृदङ्गपूर्विकमङ्गम् । इह यत्र घटकारय(यु)क्तैरेतद्गतैः प्रहारैर्युक्तो द्विको मार्गः ॥४८॥

अड्डिता च या शृङ्गारविषया ध्रुवाध्याये (अ० ना० ३२) दर्शिता । तयो-चिते कुरबाऽङ्कि(ङ्क)कस्य यदामुख यत्र बहुमाक्ष वामकमित्युक्तम् । मध्योर्ध्व कटस्थान तत्प्रहारयुक्त आलिप्तमार्गः । शोकातुरो हि शरीरपरिकमविहान्(हीन)-मुख आलिप्त । तदुचितकरणोचितत्वादमिति । ऊर्ध्वके पदस्थानेऽङ्किकस्य दक्षिण-मुखे करटघातद्वये उत्सितरसातिशयवेगताऽमहस्ताभ्यां प्रहारं प्रकृष्टहनन यत्र स वितस्तमार्गश्च । अस्य दक्षिणो ब(वित)स्तस्येति नाकयति तस्य भावोचितस्तां हिसता तद्विषये दीनरोद्राभावस्य विनियोगो यत । वितस्तिमात्राक्षिप्तहस्तप्रहरण-सूचनार्थं वितस्तमार्गं इत्यन्ये पठन्ति । सर्वेषु पुष्करेषु यद्धनन बाहुल्येन चाङ्ग(ङ्क)क एव नोर्ध्वकस्थाने गोमुखीनः । गोमुखमन्तर्वक्त्र न तूर्ध्वम् । तत्र बीभत्सयोग इत्यत्ररसङ्गतिरपि गोमुखीरुक्ता ॥४९॥

तत्र मार्गचतुष्टये तान्यक्षराणि दर्शयति । तत्राड्डिताप्रहारज्ञानमित्यादिना गोमुखीमार्गं इत्यन्तेन ॥५०॥

कुर्याद्विततस्तिमार्गे वरविवर्जितान् प्रहारांस्तु ।
उद्धतमार्गेण विना शेषा कार्यास्तु गोमुख्याम् ॥५१॥

ग्रोमांस्तु गुट्गुटुमेघघणंघटकेघोराडिम् ।
एव वि(तस्त)वाद्य विज्ञेय वादकैस्तज्ज्ञैः ।
ठिणिस्थिठिणिहो डङ्खधो गोमुख्याम् ॥५२॥

ये स्वालिप्तसमुत्था(:) सर्वमार्गास्तु ते विधातव्या(:) ।
प्रहगो न लक्ष्यतस्त्वो नाट्यविधाने समासाद्य ।
प्रहमोक्षणसंस्थानैस्तु मृदङ्गानां ग्रहो भवति ॥५३॥

एतेषां चैव वक्ष्यामि दर्शनानि यथाक्रमम् ।
चतुर्णामपि मार्गाणामक्षरग्रहणं यथा ॥५४॥

---

यथात्रैव मानचतुष्टयेनेत्युक्तम् । विशेषमाह । कुर्यादिति । आङ्किकस्तिमि-मुखगतो रेफो विततमार्गे । प्राप्ता उर्ध्वककटलाभ्र दकारस्तामेव निषिध्यते । मकाराकारस्यालिङ्गकेऽप्यप्राप्तस्य ह्युभयोश्चाङ्किक(स)ममुखगतयोरप्राप्तयोर्निषेधः । मध्येऽस्य तद्वर्णप्रवेशाभावाय तदाहरणम् । वर्जितान् प्रहारांस्त्वङ्कितमार्गेणोप-लक्ष(क्षि)ते विततने कुर्यात् । मात्रयोऽन्ययोगे । ते शेषा इह वर्जिता वर्णास्ते गोमुख्यां कार्या इति । प्राप्तानामप्येषां वृत्तविधानं भूयस्त्वं स्थापयति ॥५१॥

आलिप्तमार्गे रेफस्य पूर्वलक्षणप्राप्तिरित्यन्यानुबन्धत्वेन रेफाविशेषेणात्र भवतीत्युदाहरणव्याजेनाह । ग्रोमामित्यादिना । गोमुखीमार्गे सर्वेषां स्वादीनाम-विशेषे प्राप्ते ड(ढ)कारोऽप्येन तुल्य इत्युदाहरणव्यपना दर्शयति प्रणव इत्या-दिना ॥५२॥

अङ्कितावर्जमार्गत्रयमुक्त्वा विशेषान्तरमपि परस्परानुग्रहतो भवतीति दर्शयितुमाह । ये स्वालिप्तसमुत्थानमाकर्मस्यो येषां ते । आलिप्तादयस्त्रय इति भावः । तेन सर्वे त्रयोऽपि मार्गा इत्यर्थः । विधातव्या ।

प्रहमोक्षणसंस्थानैस्तु मृदङ्गानां ग्रहो भवति ।

इति । ग्रहमर्थ एक मृदङ्ग यदा वादवित् प्राधान्येन स्वीक्रियते तदा मृदङ्गान्तराद् युतं कुर्यात् । तद्यथा । ऊर्ध्वकाङ्कालिङ्ग्यं दक्षिणमुखादतो( मुचित )रिति । अथ तत्र मोक्षणता[विग्रहा]दिति संस्थानम् । तत्र व्यामिश्रत्वेन वर्णस्य जननं विचित्रमेव लिपौ दर्शयितुमशक्यमेव । एव ग्रहमोक्षसंस्थानानामेकभेदा(दत्र)यो द्विभेदा पट्

दाधवदांथमटां घोमठां विधिधिक्लं धिक्लांधितांक्लांधिकटाम् ।
कटथिमटा खोखोघेटातड्डितावाद्यम् ॥५५॥

तन्त्रान्तिकिता घंधद्रधटितयेटम् ।
घटघकिकेत्त(टाकुट्टिकिकिद)वितस्तायाम् ॥५६॥

ध्रामांघट्टघेघेदाघटितकथिधिघोटामाम् ।
घालिप्तकसंयोगो(गः) कार्ये(र्यं) सवाहने सम्यक् ॥५७॥

ध्रदमिथिघेटाधेयेतमथिघोरणासमरिघघक्लेंताम् ।
खोखोयाधा णाणाणाणा च गोमुख्याम् ॥५८॥

एतेषां पुष्कराणां त्रिविधः प्रचारः । समप्रचारो विषमप्रचारः समविषम-
प्रचार इति ॥५९॥

तत्र ।
वामोर्ध्वकयोर्वामः सव्यो वै दक्षिणोर्ध्वके चापि का(के का)र्यः ।
समप्रचारे ह्यालिप्ते लिप्तवाद्यकरणे तु ॥६०॥

---

त्रिभेदाश्च यदिति । यथा पञ्चदशभिर्भेदैः पुनर्मार्गाश्चैवं चिन्त्यम् । यथोक्तं नन्दिमते ।

षोडशस्वपि वर्णेषु भेदाः पञ्चदशोदिताः ।
ताडने प्रहसन्धानमोक्षैर्मुखचतुष्टये ॥

इति । ग्रन्थे तु चत्वारो मार्गा आलिप्तसमुत्था इत्यनेन स्वीकृताः । सूत्रे तदविस्तरे-
णोक्त्या नीत्याऽऽचक्षते ॥५३॥

अथास्य मार्गचतुष्टयस्य लक्षणमवाधितमुदाहरणमेवमाह । वर्णानामीति ।
निर्दिश्यते लक्षणं पूर्वा... त येषु । पूर्वं हि रूपोदाहरणमात्र दत्तमित्यपौन-
रुक्त्यम् । तदाह । यथाक्रममिति । यावल्लक्षणं तावदुदाहरणं दत्तमिति यावत् ।
प्रायशोऽत्राभिरेव ग्रन्थकृता लक्षणाय दर्शितमिति भङ्गो(ङ्गो) यथा भवति तथा
पाठे यतितव्य(म्) ।... ..इत्यादिना ग्रहणमोक्षेण दर्शितो सन्धानस्वलक्षणमि-
त्युक्तम् ॥५४-५८॥

अथ मार्गशेषभूतमेव त्रिप्रचारमिति व्याचष्टे । त्रिविध प्रचारमि(र इ)ति ।
वामस्य हस्तस्य वामभागे दक्षिणस्य दक्षिणे प्रचरणं स समप्रचारः । वैपरीत्येन
स्वस्तिकवर्तनादिना विषमप्रचारः । मिश्रतायां समविषमः । तेन च वर्णानामेव
सौष्ठवादिरूपजननं न तथा वैचित्र्यान्तरमाधीयत इति मार्गशेषता ॥५९॥

वामोर्ध्वकसव्यानां प्रहतो वाम करस्तु कर्तव्यः ।
सव्योर्ध्वकसंयोगात् प्रहतो हस्तप्रचारे तु ॥६१॥

स्वच्छन्दकः(क)कराणां प्रहत शेषेषु मार्गकरणेषु ।
अङ्कितगोमुखयोगे समविषमो हस्तसञ्चारः ॥६२॥

शृङ्गारहास्ययोगे वाद्य योज्य तथाऽङ्किते मार्गे ।
वीराद्भुतरौद्राणां वितस्तमार्गेण वाद्यं तु ॥६३॥

करुणरसेऽपि हि वाद्यं योज्य ह्यालिप्तकरणमार्गे तु ।
बीभत्सभयानकयोरस्त्यैव नित्यं हि गोमुखा(म्) ॥६४॥

---

तत्र मार्गभेदेन योजनमाह । वामोर्ध्वकयोरिति । आलिप्ते मार्गे वाद्यक्रियाया' कर्तव्यताया हस्तप्रभृति । तस्या' कर्तव्यतायामय विधि । वामोर्ध्वकप्रहार इति । आलिप्त इति तावदुक्तम् । तत्र वामोर्ध्वकयोर्मध्यमाद्वामेऽङ्कके वाममुखे सव्येन गते सति ऊर्ध्वकेनापि दक्षिण एव हस्त कार्यं इत्येकहस्त समप्रचार आलिप्ते । तुरव्यर्थे ॥६०॥

अथ यथाप्रहसन्धानमोक्षरचनं तथा विधिमाह । वामोर्ध्वकसव्यानामिति । प्रहारवेलाद्वामोर्ध्वकसंयोगमवलम्ब्य हस्तप्रचारे व्याप्रियमाणे हस्ते हस्त प्रवृत्ते सति प्रयाणामपि पुष्कराणां प्रधानाय वामो हस्त इति द्वितीय एव हस्त समप्रचारः ॥६१॥

शेषा प्रहारादिविहीना ये मार्गभेदकरणभेदा मार्गेषु क्रियाभेदास्तेषु करणाद्यसम्बन्धि हननं यथारुचि तेन तत्र हस्तद्वयप्रचारोऽपि । एव सञ्चारस्त्रिविधः । अङ्कितगोमुखयोस्तु समविषमो हस्तप्रचारः । तेषु नु विषम एवेत्यर्थाद् दर्शित मर्मति । करणेष्विति बहुत्व व्यापारभेदात ॥६२॥

अथैषां विनियोगमाह शृङ्गारेति । शृङ्गारे हास्येऽप्यङ्कितः । वाराद्भुतयो रौद्रे वितस्तः ॥६३॥

करुणे चालिप्त. । बीभत्सभयानकयोर्गोमुखी ॥६४॥

व्यभिचारादिविषये तु स्वयमूह कर्तव्य इति दर्शयति । रसभावसत्त्वयोगमिति । रसेषु भावा व्यभिचारिण सत्त्वमित्युत्समादिः प्रकृति । अभिनयशब्दोऽत्र वाद्यव्यापार । तत्र गतो......वाद्ययोग । गतिप्रचारस्तु प्रवृत्ते नाट्ये परमावादित्यनाट्य एव । तदाह । यथायथमिति । वृत्तशब्देनात्र नाट्यमिति .॥६५॥

रससत्वमाव(भावसत्व)योगात्(ग) दृष्ट्वाभिनयं गतिप्रचारांश्च ।
वाद्य नित्य कार्यं यथाक्रम(यथ) वाद्य(वृत्त)योगज्ञैः ॥६५॥

एव प्रकृतविधान कार्यं मार्गाश्रित बुधैः सम्यक् ।
वक्ष्याम्यतश्च भूयो दर्दरपणवाश्रितं वाद्यम् ॥६६॥

प्रतिवादितमनुवाद्य समवादितमुच्यते पणववाद्यम् ।
तत्रातिवादितं स्यात् मुरजानामग्रतो यत्तु ॥६७॥

यत्त्वनुगत मृदङ्गं त्वनुवादितमुच्यते तु तद्वाद्यम् ।
समवादितं मृदङ्गैर्ज्ञेयं साम्येन यद्वाद्यम ॥६८॥

कलगा ठठगा वेड्डा गगसः कुलिर्लप्रणेति किरिकिल्ला ।
एते वर्णा पणवातोद्यविधाने विधातव्या ॥६९॥

घोषोणाघोकिहुल प्रहुत लुल्लिति रिगिणिति रिल्लुघल्लं ।
कघित्वावेवेंवरा पणववाद्यम् ।
ण्होहिकिमिकिर्लणोल इति पणववाद्य तु ॥७०॥

---

प्रचारत्रयमुपसहरति । एवमिति । अथ मार्गवैविध्योत्पादनाम करणषट्क निरूपयिष्यन् तदुपयोगि दर्दरपणव मन्यमान पणवं तावद्वाद्य लक्षयितुमुपक्रमते । वक्ष्यामीति । सामान्यो(न्येनो)क्तम् । विशेषस्तूच्यत इति भूय. पातस्य । तच्च त्रिधा ॥६६॥

पुष्करस पूर्वमपि वाद्यम् । यद्यनुवाद्य मृदङ्गैर्हेतुभिर्यदनुगत व्यपदेश्यता गीतमित्यर्थं । अन्ये तु विपर्ययेणैतदाहुः । अग्रत इति पश्चादर्थं । तदग्र सामान्य-समवाय पूर्वोक्ताश्चरेभ्य एव । केचिदनुबन्ध.. ......(साम्येन) तुल्यतेति दर्शयति ॥६७ ६८॥

कलगा टठगा इत्यादिना ॥६९॥

धार्यान्तरेण प्रयोगोपयागि तेषा.. .. माह् । घोषोणा । इत्यादिना ॥७०॥

अस्य पणवस्य कनिष्ठाऽनामिकाऽयकोणश्च कोणाद्यमिति सम्बन्ध. । अन्ये त्वग्रे मध्यम इत्याहु । मध्यमाङ्गुल्येत्या (अ० ना० ३४७३)दि वक्ष्यते । पूर्वं तु मध्यमानामिकामाहु । शिथिलता मार्दवम् । तच्च न गाढीकरणम् । तच्च कक्ष्याश्च स्कन्दारोहिणो वध्राश्च बन्धनरज्जो.... काष्ठिकावस्कन्धस्य बादकसम्बन्धिन ।

शीघ्रकरणानुबन्धस्थितिरेव हि नि स्वन (न)स्ख(ख)लितक स्यात् ।
इति दर्दरे प्रहारा समासतस्तत्र विज्ञेया ॥८९॥

एष त्वसङ्कुरकृता प्रहारशुद्धिरिह कीर्तिता तज्ज्ञैः ।
दर्दरपणवमृदङ्गं मिश्रितवाद्य प्रवक्ष्यामि॥९०॥

तत्र व्यक्तीभाव वाद्ये गच्छन्ति मिश्रिता केचित् ।
केचिद्युगपत्करण केचित् पर्यायकरण तु ॥९१॥

एकैकसम्प्रयुक्ता वर्णानुगत(ता)स्तथैव सम्पृक्ता(.) ।
घोंद्रेरेवोत्तोकोभिहुल तत्कृता मृदङ्गेषु ॥९२॥

अथ दर्दरेऽपि घिघिक्लेते पणवयोस्तु सयुक्ता-।
डलके लोवदोदे ढिघिरे दिघिनि मिश्रास्तु ॥९३॥

याश्चो येऽन्ये शेषास्ते मिश्रा एव नित्यश कार्या ।
पूर्वो(र्वे)ऽपि च मिश्राश्च भजन्ति सर्वे यथायोगम् ॥९४॥

---

इति । शीघ्रक्रियाया अनुबन्धेन चिरकालानुवर्तनेन स्थितिर्यस्य शब्दस्य तत् स्खलितक एन्दसचयरूपत्वात् । खल सञ्चये (पा धा ५४५) । यतस्तत्स्खलितकमिति लोके ॥८९॥

असङ्गमङ्कुरा । दर्दरवाद्याक्षराणामेव सङ्कर । तेन कृता शुद्धि । असनामिश्र वाद्यम् । इह तु निरूपयति दर्दरपणवमृदङ्गानि पुष्करारिण । लक्षणग्रन्थे विच्छेद स्फुटो न प्रतीयत इत्यभिप्रायेण कुर्या(द्) ॥९०॥

तत्र मिश्रा एकरूपवर्णा यतय प्रहारा । अन्ये तु विविधा । युगपत् क्रमेण वा । तदाह । व्यक्तीभावमिति । तत्रै(व) नैकत्र प्रयुक्ता पर्यायकरणा वर्णानुगता यौगपद्येन सयुक्ता मिश्रितत्वेनैकैक कृत्वा सम्यक प्रयुक्ता । पर्यायकरणा इत्यन्ये पठन्ति ॥९१॥

तत्र मिश्रान् निरूपयितुमेतावत् प्रतिनियता अमिश्रा इति साधयाऽऽर्यया दर्शयति । एकैकेत्यादि । अानद्धमृदङ्ग इत्यर्के ॥९२॥

अन्येऽ तेन दर्दरपणवयो स्त्यादिसहितार्थेन पणवेऽमिश्रा उक्ता ॥९३॥

मिश्रानाह । आश्चो येऽ ये इति । घोड धाक्षरादिके मा शङ्का भूदिति नि शेपपदमन्यवद च । सुविलितवादकवशास्त्वेतेऽपि भवति मिश्रा इत्याह । पूर्वेऽपीति । यथायोगमिति । अभ्यासवशात् ॥९४॥

अथ युगपत् करणानि तु हल्लल्ले कुकुनणप्रलंबोल्लम् ।
प्रहल नह्लादो एव योज्यास्तु पणवे हि ॥६५॥

पुर्यं-(र्य)कनासु(स्तु) क्रमशः करणे परिवादनेन कर्तव्या(:) ।
कोलोदेदोघोणल्लेंति किणिकिणिति कृताश्च ॥६६॥

पणवानामनुबन्धे कार्यं घुघदुल्लकेनि वाद्यं तु ।
भूय प्रतिकृतिभेदो मार्दङ्गिकदर्दरिभ्यां च ॥६७॥

यद्यत् कुर्यात् मुरजे प्रहारजात गतिप्रचारेषु ।
अनुगतसमक्षरवृत्त तदेव वाद्य तु पणवेऽपि ॥६८॥

न हि चित्र कर्तव्य गतिप्रचारेषु वादन तज्ज्ञैः ।
समविषमं तत्र हि यद् तु(त् तल्ल)क्ष्य पादसञ्चारे ॥६९॥

---

अथ युगपत्करणानीति । अक्रमा उक्ता ॥६५॥

पर्यायकरणानाह । पुर्यकृतास्तु क्रमश इति । पूर्वपुर्यस्तत परिवादक करोति य पणवयोरेव क्रम ॥६६॥

अनुबन्ध इति । परिवादकेन छिद्रेषु प्रयोज्यमित्यर्थं । अत परस्पर क्रममाह ।

भूय प्र(ति)कृतिभेवे(दो) मार्दङ्गिकवदरिभ्या वा(च) ।

इति । प्रतिकृतिरनुकार पश्चादनुकरणम् । स यादा भिद्यते । यदा मुख्यमृदङ्ग(ङ्ग) तत पणवस्ततो दर्दर इत्येको भेद । दर्दर पणव इति द्वितीय ॥६७॥

एव पणवे दर्दरे च मुख्ये प्रत्येक द्वात्रिंशति पद । तत्र गतिप्रचारे परिक्रमणादो मुरजवाद्यम्य क्रमकरणयोग इति दर्शयति ।

यद्यत् कुर्यात् मुरजे प्रहारजात गतिप्रचारेषु ।
अनुगतसमक्षरवृत्त तदेव वाद्य तु पणवेऽपि ।।

इति । दर्दरेऽपि । अनुगत रसादिवशायातम् । वृत्त प्रकार ॥६८॥

अत्र(गतौ) द्वित्रियुगपत्करणं निषेधति । न हि चित्र कर्तव्यं गतिप्रचारेषु वादनमिति । अत्र हेतु ।

समविषम तत्र हि यत् तल्लक्ष्य पादसञ्चारे ।

इति । तत्र विचित्रे यत् समविषम च प्रकारजात तत् पादसञ्चारे लक्षणीय योज्यम् ॥६९॥

उपरिकरणे यथेष्टं कर्तव्यस्तु पणवो मृदङ्गेषु ।
तत्र प्रहारकरणैर्मृदङ्गवाद्यं विधातव्यम् ॥१००॥

प्रायेण सर्ववाद्येष्वादौ पणवग्रह प्रयोक्तव्य ।
वक्ष्याम्यहमतः परं तु लक्षणं करणजातस्य ॥१०१॥

रूपं कृतप्रतिकृत प्रतिभेदो रूपशेषमोघस्य(श्च) ।
षष्ठी च प्रतिशुष्कलेत्येव ज्ञेयं करणजातम् ॥१०२॥

तत्र रूप नाम विभक्तकरणम् । यथा ।
घ(घे)घणेघ किटिमा किटिमा घटत्थि घटघत्थि ।
घडुगुघकिटिकट कुह्णं घोघे घोघे घसे ॥१०३॥

इति रूपम् ।

कृतप्रतिकृत नाम यत्रैक करणं त्रिपुष्कर इत्यु(मप्यु)द्भा(व)यति ।

यथा ।

घं(घु-ल)ल(ल)ल ण(मणे)कमघिमघाणेटोटतितोटघत्थिमानकम् ।
गुघले किहुले टोह्ल टोक्तो टोघोण खे वाद्यम् ॥१०४॥

---

न च ताण्डवादि मुक्त्वा गतौ तद्योजनाङ्गमित्या(त्य)तद्योग । गतिप्रधानत्वे तु न दोष इत्याह । उपरिकरण इति । वाद्यप्राधान्य इत्यर्थ ॥१००॥

अथ यदर्थं पणवदर्दरकमुक्त तत् करणषट्क च वक्तुमुपक्रमते । वक्ष्यामीति ॥१०१-१०२॥

रूप नाम विभक्तकरणमिति । मुरजे गुरुद्वयम् । ॥ यत्र तत्समकाल लघुद्वयम् । गुरु घेत्यादिना विभक्ता यत्र क्रिया तद्रूपम् । घेघ इति मुरजे । किटिमा इत्यन्यत्र ॥१०३॥

कृतप्रतिकृतम् । यत्रैक करण त्रिपुष्करमप्युद्भावयति ।

सर्ववाद्याक्षरयुक्तमिति यावत् । एकस्मिन् कृतेऽयदपि प्रतिकृत सविभक्त पुष्कर यत्रेति । घुखु खु मणे इति । उपाध्यायास्त्वाहु । नैतावता पणवादिभि सह किञ्चिदुक्त स्यादिति । तदयमर्थ । एकमिति । एक पणवादिकरणमित्यर्थ । पश्चाद्भावि सपुष्करत्वमुद्भावयति अनुकरोति सति प्रतिकृतमिति । वेणावाद्यमित्यनुकृत भवति । न हि सादृश्यमात्रमेतत् । ततोऽर्थत्वादनुबद्धस्येति । उदाहरणमखण्डश विभजनीयम् । ललुखुणं इति मुरजे पञ्चधा । कमिमोट इति पणवे इत्यादि ॥१०४॥

प्रतिभेदो नाम युगपत्कृते करणे मृदङ्गानां यतुपरिकरणेन गच्छन्ति म(त)-
त् ।

दाधा(घोघो) घाणिघा मटघतर्माघ घटे घटे ।
दोघे घट मतिघणह्लको लो ।
(एभिः करणविशेषैः प्रतिभेदो नाम विज्ञेयः) ॥१०५॥

इति वाद्यम् ।

रूपशेषं तु [रूपशेषं(षो)नाम करणानामविशेषो यथा ।
खुलुणं गरागणलसां मडायेव मघिटां घेटां घेवो ।
मे घेटमडिलप्पारवो इति वाद्य रूपशेषं तु]॥१०६॥

प्रतिशुल्कं(ल्को)नामानुस्वारो मार्दङ्गिकवर्दरवाद्यकानाम् । यथा ।
घटमधि कुणकिटि गधाला कधिधिआणणकोखोणाला ।
कुटकटि कुणकिटि कटले प्रतिशुल्काख्यं सदा करणम् ॥१०७॥

ओघो नाम सर्वभाण्डविषयो द्रुतपाणिलयो नद्योघवत् ।

ओघो यथा ।

घकिटिमघकिहिकिटिये घघघेदेत्त घाण दाधानणोलो ।
घघुगुदुघुद्गुदुघघेरेणिणि एते तघोघे च ॥१०८॥

---

मृदङ्गानां युगपदेव करणे क्रियमाणे यतुपरिकरणेन । तद्यथा । लघुद्वये मुरजेन प्रयुक्तिने पादस्थे गुरुनियते तदा प्रतिभेदः । घोघो इति प्रयोज्यमानः । कुहलमिति ॥१०५॥

रूपशेषः करणानामिति । यथा(दा) मौरजिको विराम करोति तदा तच्छिद्रे पाणविको वा वादयति । एतदन्यदपि क्रियमाण(ण)मिच्छेद । खुलुणं इति मुरजविरामे णाणणं इति पणवे इत्यादि ॥१०६॥

प्रतिशु०को(ल्को)ऽनुस्वार इति । बहुक काल मार्दङ्गिकेन प्रयोगे कृते घ्‌ ा-वर्तितत्काल पणवस्य दर्दरस्य वा प्रयोग । घटमधि इत्यादि ॥१०७॥

ओघे प्रयुक्ते पणववाद्य कुटकुटण केटसटखिट । घोघो विधम्बितलये मुख्ये एको द्रुतलय । एतच्च करणषट्क (पिण्डी)प्रतिसरादिनृत्तेषु दृश्यते । हुलहुक्का पणवभेद एव ॥१०८॥

उपसंहार कुर्वन् करणस्य सामान्यलक्षणमप्याह । करणानां समायोगः षड्विध इति । भिन्नाना वाद्यक्रियाणां मिश्रि(श्र)ता येन क्रियते तत् करणमिति

करणानां समायोगं षड्विधः परिकीर्तितः ।
अनेनैव विधानेन योज्यं वाद्यकरणं बुधैः ॥१०९॥

त्रियति नाम । समा स्रोतोगता गोपुच्छा चेति । लययतिपाणीनां त्रिविधः संयोगः । स च त्रिप्रकारो भवति । तद्यथा । रूढं विद्धं ग्राम्यागतं चेति ॥११०॥

त्रिलयं नाम । द्रुतो मध्यो विलम्बितश्चेति ॥१११॥

त्रिपाणिकं नाम । समपाणिरवपाणिरुपरिपाणिश्चेति ॥११२॥

समा यतिर्द्रुतश्चैव लयो यत्र भवेदथ ।
तथैवोपरिपाणिश्च रूढस्तत्र विधिर्भवेत् ॥११३॥

स्रोतोगता यतिर्यत्र लयो मध्यस्तथैव च ।
समपाणिस्तथा चैव विद्धं वाद्यं तु तद्भवेत् ॥११४॥

अवपाणिस्तु यत्र स्यात् तथा चैव स्थितो लयः ।
यतिश्चैव तु गोपुच्छा वाद्यं ग्राम्यागतं तु तत् ॥११५॥

स्थिताल्लयात् प्रभृत्येषां प्रमाणं सम्प्रवर्तते ।
कार्यहानि कलानां च दोषेष्वन्येषु पाणिषु ॥११६॥

यतयः पाणयश्चैव लया वै वाद्यसंश्रयाः ।
यथाकामं हि कर्तव्या नाट्यशक्तिमवेक्ष्य तु ॥११७॥

---

यावत् । रूपादीनां चान्वयस्तनाध्याये (अ० ना० २९) व्याख्यातः । एतत्करणानु सारेणैवोद्रविकः कार्या इत्याह । अनेनैवेति ॥१०९॥

एवं वर्णानुसारवैचित्र्यमुक्त्वा तालप्रधानमेलनाचमत्कृतप्रवृत्तं तदुपयोगि यत्यादि क्रमाह । त्रियतीति । यतित्रयाणां तालाध्याये (अ० ना० ३१) उक्तं रूपमितीह परमो मेलनमाह । त्रिविधः संयोगः स च त्रिप्रकार इति । न च तावदत्र सम्भवन्ति भेदाः । इह तत् त्रयं उपादेयं इति भावः ॥११० ११२॥

समा यतिर्द्रुतो लय उपरिपाणिरिति रूढं सिद्धोऽन्यापेक्षो द्रुतादेव समाप्तेः ॥११३॥

स्रोतोगता मध्यः समपाणिरिति विद्धं ॥११४॥

उभयरूपानुवेधाच्छेदवच्छयागतं यस्यां विश्रान्तिं प्राप्तो गत ॥११५॥

प्रयोगविधिमाह । स्थिताल्लयात् प्रभृतीति । एषामिति रूढादीनाम् । हानिरिति न्यूनप्रमाणात् ॥११६॥

उपसंहरन्ति । यतयः इत्यादि । सर्वथा नियामका ॥११७॥

त्रिमार्जनं नाम ।

मायूरी ह्यर्धमायूरी तथा कार्मारवीति च ।
तिस्रस्तु मार्जना ज्ञेयाः पुष्करेषु स्वराश्रयाः ॥११८॥

गान्धारो वामके कार्यः षड्जो दक्षिणपुष्करे ।
ऊर्ध्वके पञ्चमश्चैव मायूर्यां तु स्वरा मताः ॥११९॥

वामके पुष्करे षड्ज ऋषभो दक्षिणे तथा ।
ऊर्ध्वके धैवतश्चैवमर्धमायूर्युदाहृताः ॥१२०॥

ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे ।
पञ्चमश्चोर्ध्वके कार्यः कार्मारव्याः स्वरास्त्वमी ॥१२१॥

एतेषामनुवादी तु जातीनां यः स्वरो मतः ।
आलिङ्ग्यमार्जना प्राप्तो निषादः स विधीयते ॥१२२॥

---

अथ स्वरानुहारभाग निर्णेतुमुपक्रमते । त्रिमार्जनमिति । स्वराश्रया इति । स्वरानुहारभेदा इत्यर्थ ॥११८॥

गान्धारो वामे आलिङ्गके । दक्षिण आङ्गिके षड्जः । ऊर्ध्वके पञ्चमः । त्रिश्रुतिर्मायूरीयम् । मध्यमग्रामे निषादधैवतर्षभानामेतस्मीकनादेव सम्पादितत्वात् त्रिरिति । चतुर्थे स्वरविशिष्टे मुखे मध्यम पूर्वस्वरत्वम् ॥११९॥

वामे षड्जः दक्षिणे ऋषभ । ऊर्ध्वके धैवतश्चतुःश्रुति । अर्धमायूरी षड्जग्रामे ॥१२०॥

ऋषभो वामे षड्जो दक्षिणे ऊर्ध्वके तु पञ्चम स त्रिश्रुतिश्चतुःश्रुतिर्वा ॥१२१॥

अत इयं साधारणाश्रया लक्ष्यते । साधारणं तुल्यग्रामद्वयाश्रयणं यस्या इति । स्वरत्रय-धातेऽपि प्राधान्यस्वरान्तरं भवेदित्याशङ्क्याह ।

एतेषामनुवादी तु जातीनां यः स्वरो मतः ।
आलिङ्ग्यमार्ग(र्ज)ना प्राप्तो निषाद. स विधीयते ।

इति । मृत्तिकायाः सम मार्जनाम् । तद्वत् स्वरयोगोऽपि तथा । तन्त्रीशिथिलीकरणायामनात्मकसाधारणप्रभवो हि स्वरयोगः । साधारणायोगेन(न) एतेषा स्वराणा मध्ये य स्वरो जातिषु वा गानजात्यङ्गरागादीना यो वादी यश्च स्वर स(अनुवादि)नेति शेषः । आलिङ्ग्यसम्मार्जनादुत्थितमार्जन(न)शब्दवाच्य यान्धारम् । अन्यत् सादृश्यलक्षणेन य प्राप्नोति निषादस्वरोऽत्र स विधीयते निषादाद्यत्वे प्राधान्येनाश्रीयते । एष षड्जस्य तु......मन्तव्य. । अनुवादीह संवादीति । अन्ये तु भिन्न व्याचक्षिरे ॥१२२॥

मायूरी मध्यमग्रामे षड्जे स्वर्धा तथैव च ।
कार्यारवो तु कर्तव्या साधारणसमाश्रया ॥१२३॥

[स्वराः स्थानस्थिता ये तु श्रुतिसाधारणाश्रयाः ।]
त एव मार्जनकृताः ज्ञेयाः सञ्चारिणो मताः ॥१२४॥

वामके चोर्ध्वके कार्या आहार्या लेपतः स्वराः ।
शंयित्यावायतत्वाच्चावप्राकोटनयाऽपि च ॥१२५॥

स्वराणां सम्भवः कार्यो मार्जनासु प्रयोक्तृभिः ।
मार्जना तु कृता कार्या वामकोर्ध्वकयोः सदा ॥१२६॥

लक्षणं मृत्तिकायास्तु गदतो मे निबोधत ।
निश्शर्करा निरसिकता निस्तृणा निस्तुषा तथा ॥१२७॥

न पिच्छिला न विशदा न क्षारा न कटुस्तथा
नावदाता न कृष्णा च नाम्ला नैव च तिक्तका ॥१२८॥

मृत्तिका लेपने शस्ता तया कार्या तु मार्जना ।
नदीकूलप्रदेशस्था श्यामा च मधुरा च या ॥१२९॥

तोयापसरणश्लक्ष्णा तया कार्या तु मार्जना ।
बधिरा ह्यवदाता तु कृष्णा कुर्वीत न स्थिरा ॥१३०॥

---

श्रुतिनियमाद्विभागमाह । मायूरीत्यादि ॥१२३॥

जात्यंशकल्पनस्थायिस्वरप्राधान्यकृत प्रधानमभिधाय स्थानस्वरकृतमपि भवति प्राधान्यमपि(मिति) दर्शयति ।

स्वराः स्थानस्थिता ये तु श्रुतिसाधारणाश्रयाः ।
त एव मार्जनकृताः ज्ञेया सञ्चारिणो मताः ॥

इति । इह *स्थितः मम । स्वर इत्यन्ये ।* स्थानस्वरोऽन्यश्चाशस्वरस्तथा च लब्धो व्यवहारो देवताप्राप्तिकक्रमणाङ्गो गीयते । इत्यादि । तेन यत्स्थानत्वेन स्वाश्रयण ग्रहण येषामित्यर्थः ॥१२४॥

अथ मार्जनासु स्वरत्वमाह । वामके चोर्ध्वके चेति । लेपत आहरणीया स्वराः कर्तव्याः । अन्यत्तु चर्मण एवायतत्वशैथिल्यकृताभ्यां चाह । ट्नन पातन बघ्नाणां वा बध्रकानांशैथिल्यगाढत्वाभ्यामपि द्वित्रि(शस्त्रि)शश्चेति । समुच्चयमाह चग्रहणेन ॥१२५-१२६॥

पि(पं)च्छिलम् । लेपार्थं मृत्तिका लक्षयति । निश्शर्करेत्यादिना ॥ १२७-१३०॥

न तुषा न स्वरकरी श्यामा स्वरकरी भवेत् ।
यवगोधूमचूर्णी(र्ण) वा तत्र बध्यात् प्रलेपने ।
एकस्तस्य तु दोषः स्यादेकस्वरकृत भवेत् ॥१३१॥

त्रिसंयोग नाम । गुरुसञ्चयो लघुसञ्चयो गुरुलघुसञ्चयश्चेति ॥१३२॥
तत्र गुरुसञ्चयो नाम । गुरुस्थितसंयोगयुक्तो यथा ।
धत्तां केतां धत्तां थेत थम तथैव केतांथम् ।
द्धद्धेंद्धांघेंतांतेंतांतेंतामिति च गुरु स्यात् ॥१३३॥

लघुसञ्चयो नाम । गुरुलघुमध्यप्रवृत्तो यथा ।
घटमटघटमघटमघटमघिद्धकगुडघकघरकृमघु ।
घटमघिघघुगुगुमघघुघकृतो लघुलघश्च ।
इति संयोगो ज्ञेयो मृदङ्गवाद्ये प्रयोगज्ञैः ॥१३४॥

गुरुलघुसञ्चयो नाम । गुरुलघुमध्यमप्रवृत्तो यथा ।
घटथिग्मधिधिधि मधित किटा ।
घटथि (मथि) टरिधमटक ।
इति संयोगो गुरुलघुप्लुतः स्यात् ॥१३५॥

---

कल्कमार्दे विधिमाह । यवगोधूमचूर्णेति । मिश्रीकृतमित्याह ॥१३१॥

अथ त्रिसंयोगं व्याचष्टे । गुरुसञ्चय इत्यादि स्पष्टम् ॥१३२-१३५॥

त्रिगतमाह । तत्त्वमित्यादिना । अनेन सह यद्गमन मिश्रता तद्गतस्य त्रिविधम् । अत एव स्वातन्त्र्येण ताण्डवादौ वाद्यप्रयोगे गानाभावे नाट्येऽपि छिद्रत्वादमारोपम् । अनुगत गाने गाध्यापतसिद्धरागभेदाद्गाने [illegible] मेलनम् कृत तत्त्वादन्यमि(दि)त्यपौनरुक्त्यम् । तत्र तत्त्वमाह ।

अक्षरसदृशं वाद्यं स्फुटपदवर्णं तथैव वृत्तसमम् ।
सुविभक्तकरणयुक्तं तत्त्वे वाद्यं विधातव्यम् ॥

इति । इह निचित्रे यथाऽक्षरसादृश्यमपि नास्ति । यदा दुष्करखादिभिरक्षरं सादृश्य तदा तत्त्वम् । यथावाद्यमतादृश्यस्य सम्भवात् सादृश्यमुक्तं न तादृप्येऽनुगतम् । यथा ।

त्रिगत नाम । तत्त्वमनुगतमोघं चेति ।

अक्षरसदृशं वाद्यं स्फुटपदवर्णं तथैव वृत्तसमम् ।

सुविभक्तकरणयुक्तं तत्त्वे वाद्यं विधातव्यम् ॥१३६॥

समपाण्यवपाणियुतं स्फुटप्रहारकरणानुगं चैव ।

गेयस्य च वाद्यस्य च सर्वेष्वभ्यातोय तदनुगतम् ॥१३७॥

नैककरणाश्रयगतं ह्युपर्युपरिपाणिकं द्रुतलयं च ।

माविद्धकरणबहुलं योज्यं वाद्यं बुधैरे(रो)घे (घे) ॥१३८॥

---

अभिहतवर गरहरणकरण

हरललाटोरितततरणिमारणि(मारण)काम

क्रमणीतिशि(तोश)ऋोधरणितम(यो)हते

कुरु त(त) कुरु त (त) मम करणगणा(णम्) ।

गिरिगुहतन्त्रहा ऊ(ब)रोद्धरण-

मि(म)हाति(वि)मलकि(री)तन्तुष्का(तन्तुषा)रवा-

यमयामहा हाथटितोविस-

कातरकोटककोटिराकर्षक

कनु(कुरु)तओ (ओ) रतमकाक्षे ॥

इत्युच्चार्यमाणा(णे) यार्थप्रतीतिः सा च तत्त्वादिः स्यात् ॥१३६॥

पदे गीयमाने यो वर्णः स्वाम्यादि(.) स स्वरानुहारेण यद् तद् स्फुटं वृत्तसमय-मित्यष्टौ शम्यानि लक्ष्यन्ते । एतच्च सुविभक्तं कृत्वा प्रहारक्रिया भवतीति गानेन सह तादृप्यम् । तत्त्वसमपाण्यवपाणियुतस्फुटप्रहारस्तु कर(र)णानुगं चैव गेयस्य वाद्यस्य वा उभयभेदपाताय स .....तत्त्वे गीतं सर्वथा प्रधानम् । इह तु वाद्यमपि तेन समैः पाणिप्रहारैरवपाणिभिः स्ववर्तनादिवैचित्र्यप्रवृत्तैर्यत्तदनुगतमेवाह । त्रिप्रहारक्रियास्फुटमहत......पाटनमनुगच्छति ॥१३७॥

ननु तासर्वात्मनाऽस्वस्कन्दतीत्युभय सा(स्या)दनुगतत्वं यस्याप्यघातक यत ।

नैककरणाश्रयगतं ह्युपर्युपरिपाणिकं द्रुतलयं च ।

माविद्धकरणं बहुलयोज्यं वाद्यं बुधैरोघे ॥

इति । नैकशब्दः प्रातिपदिकान्तरं विविधार्थं । करणं क्रियाघातः । (उ)पर्युपरिपाणे-रिति द्रुताहराणी न विभक्ततरम् । अत एवाक्षरसाधर्म्यमप्यर्थ(र्थं) दुर्लक्ष्यम् । माविद्धा

सर्वस्यापि हि वाद्यस्य अष्टौ साम्यानि भवन्ति । तद्यथा ।
अक्षरसममङ्गसमं तालसमस्तथा यतिसमक(लययतिसम) ग्रहसमकम् (म च)।

न्यासापन्याससमं पाणिसमं चेति विज्ञेयम् ॥१३६॥

यद्वृत्तं तु भवेद् गानं गुरुलघ्वक्षरान्वितम् ।
तद्वृत्तं तु भवेद् वाद्यं तदक्षरसमं भवेत् ॥१४०॥

ध्रुवाणां प्रहणेषु कलान्तरकलासु च ।
यदङ्गं क्रियते वाद्यं तदङ्गसममुच्यते ॥१४१॥

यच्छरीरं भवेद्गानं कलातालप्रमाणजम् ।
तत्प्रमाणं तु तद्वाद्यं तद्धि तालसमं भवेत् ॥१४२॥

स्थिते मध्ये द्रुते वापि लये गानं तु यद्भवेत् ।
तथा भवेत्तु तद्वाद्यं तद्धि लयसमं भवेत् ॥१४३॥

समा स्रोतोगता वापि गोपुच्छा च यतिर्यथा ।
तथा भवेत् यद्वाद्यं तद्धि यतिसमं भवेत् ॥१४४॥

ततावनद्धघनानामेकश्रुतिकृतोऽपि च ।
यदा मानेन सहितं तत् ग्रहसमं भवेत् ॥१४५॥

---

निबद्धा हि पणवदर्दुरकरटादिक्रिया हि । बहुत्वमिति द्रुतलयमिश्रयेतो पौनरुक्त्यम् ॥१३८॥

तानि साम्यानि तत्रैव सूचितान्याह । सर्वस्यापीति । पणवादेरपि ।

अक्षरसममङ्गसमं तालसमयतिसमं ग्रहसमं च ।
न्यासो(सा)पन्याससमं पाणिसमं चेति (विज्ञेयम्) ॥

इति ॥१३९॥

(अक्षरसम) पदगतं तावद्गाने गुरुलघुनी वाद्ये समम् ॥१४०॥

(अङ्गसम) ताले सामाङ्गानि तु चत्वारि सामानि। तत्काङ्ग ध्रुवाणां स्थितप्रवृत्तादौ । तेन बन्धस्फुटाविसमुदायसाम्यमङ्गसाम्यम् ॥१४१॥

तद्भागभूयांसि प्लुतमथुगुरुकलादे साम्यम् ॥१४२॥

लययतिसाम्यं व्याख्याते ॥१४३-१४४॥

न्यासापन्यासयोगस्तु स्वराणां तु भवेद्यथा ।
तद्वाद्य भवतीत्येवं न्यासापन्यासजं तु तत् ॥१४६॥
समपाणिग्रहं पाणिस्थं तथैवोपरिपाणिकम् ।
गीतवाद्यानुगं वाद्यं ज्ञेयं पाणिसमं तु तत् ॥१४७॥

अष्टादशजातिकमिति यदुक्तं तदनुव्याख्यास्यामः । तद्यथा ।

शुद्धा पुष्करकरणा विषमा विष्कम्भिनैकरूपा च ।
पार्ष्णिसमा पर्यस्ता समविषमकृता च(व)कीर्णा च ॥१४८॥
पर्यवसानोऽस्थितिका सयुक्ता सप्लुता महारम्भा ।
विगतक्रमा विगलिता वङ्क्थितिका चैकवाद्या च ॥१४९॥

एतासां जातीनां लक्षणनिदर्शनान्यभिव्याख्यास्यामः ।
एकाक्षरकृतं वाद्यं प्रयुञ्जेद् सार्वमार्गिकम् ।
नित्यं करणयोगेन सा शुद्धा नामतो यथा ॥१५०॥
घघद्रक्ललाक्षोक्षोहाणेति विहितबाक्यया ।
सा शुद्धा विज्ञेया मध्यमस्त्रीणां सदा जातिः ॥१५१॥

---

स्वरगतं द्विधा । ग्रहेण न्यासापन्यासयोरितरेतरवृत्तेन । तद्दर्शयितुमेतत् साम्यमुक्तम् । यथावौ श्रुतिस्तत्साम्यं ग्रहणम् । विपरीतं वा साम्यं वा ॥१४५-१४६॥

तत्र गीतायत्तं यद्वाद्यं तत् पाणिसमम् । इत्येतत्.. ...साङ्गसाम्यमाहुः ॥१४७॥

प्रयोक्तं पूर्वोक्ते समस्त यज्जायते । जायमानत्वात्तस्याभावप्रकृत्यादिविशेषप्रतिपत्तेर्जननहेतुत्वाज्जातिवाच्यं प्रयोगं वक्तुमुपक्रमते । अष्टादशजातिकमिति ।

शुद्धा दु(पु)ष्करकरणा विषमा विष्कम्भितैकरूपा च ।
पार्ष्णिसमा पर्यस्ता समविषमकृताऽवकीर्णा च ।
पर्यवसानोच्चितिका सयुक्ता संप्लुतिका महारम्भा ।
विगतक्रमा विगलिता वाङ्च्चितिका चैकवाद्या च ॥

इति ॥१४८-१४९॥

क्वचिल्लक्षणमेव । क्वचिदुदाहरणमेव । अन्यदूह्यम् । एकस्याक्षरस्य कृता आवृत्तिर्यत्र । सार्वमार्गिकमिति । स्वभावोचितत्वात् ॥१५०॥

मध्यमस्त्रीणां शुद्धत्वयुक्तत्वाद्विपरीतलक्षणा युक्ता ॥१५१॥

स्वस्तिकहस्तविचारा सर्वमृदङ्गप्रहारसयुक्ता ।
सा त्रिलयथाययुक्ता पुष्करकरणा भवेज्जातिः ॥१५२॥

घेताकेताखेतां दीर्घकृतैरक्षरं कृता या च ।
राज्ञा स्वभावगमने सा विषमा नामनो जातिः ॥१५३॥

गुरुयुग्म लघुयुग्म तोटक वाऽपि ।
त्रिरय यत्र तु वाद्ये विष्कम्भा नाम सा जाति. ॥१५४॥

वामोर्ध्वकप्रवृत्तावोघे क्षिप्तावकृष्टलययुक्ता ।
सा करणा स(र्वाश)प्राया जाति स्यादेकरूपा तु ।।१५५॥

धित्थं धिकट धिधिकट मटधिकरणं सपार्ष्णिकृते ।
धेवलेटाद्येप्रयिता पार्ष्णिसमा सा भवेज्जाति ॥१५६॥

तार्येतानावोधेदोल्लामित्यक्षरैस्तु सयुक्ता ।
पर्यस्ता जातिरिय मध्यमपुरुषेषु कर्तव्या ॥१५७॥

---

दु(पु)ष्करणेति । दु(पु)ष्कर चित्र स्वस्तिकादि करण यस्या । साधन...
...तद्यामित्याहु । अस्या उदाहरणमूह्यम् । घटधिग्धुघटगणणधुम् इत्यादि एव-
मन्यत्र ॥१५२॥

दीर्घाक्षररूपात् स्वभावरूपे गमने राज्ञाम् । विषमैर्युक्तत्वात् ॥१५३॥

गुरुलघुपातो (तोटकमिति) लघुयुगैकगुरुरूपा राज्ञा त्वरितगती विष्क-
म्भिता । त्वया मयि ते सरसेन विष्कम्भो माधुर्यमस्यामिति (विष्कम्भिता)
॥१५४॥

(वामेत्यादि) । ओघे इत्यादि । करणेए(णै)करूपा । एकाक्षरसूचनादिति
॥१५५॥

(दि(धि)त्थमित्यादि) । वोर्ध्वा(पार्ष्ण्य)घातकृता पार्ष्णिसमा । करणेतर-
विषयसोपग्रहणोपस्थाने (प्रयोग ) ॥१५६॥

(तार्येमित्यादि ।) गुर्वक्षरत्वेऽपि यत्र स्वरस्य नानाकारोऽनकगत्यादेर्नैकरूपत्व
सा मध्यमपुरुषेषु पर्यस्ता ॥१५७॥

कृत्वोपरिपाणिकृत वाद्य यद् द्रुतलय समारब्धम् ।
पुनरेव समलय स्यात् समविषमा सा तु विज्ञेया ॥१५८॥

अवकीर्णं यद् द्विगुणंस्त्रिगुणंर्वा करण मृदङ्गानाम् ।
पणवेषु दर्दरेष्वप्यवकीर्णा नाम सा जाति ॥१५९॥

पर्यवगच्छति पूर्वं यस्मिन् वै प्रस्तुत करणजातम् ।
त्रिविधेऽपि तु लययोगे पर्यवसाना तु सा जाति ॥१६०॥

घंटांदोह् ण ब्लुगहामेमि स्यात्स्वक्षरंर्हि सम्बद्धा ।
साम्यार्थे उच्चितिका जातिर्वाद्ये तु बोद्धव्या ॥१६१॥

घकेटांकेटांकिणामेभिर्या स्वक्षरैस्तु सयुक्ता ।
सयुक्तकृता जाति सा सा(का)घेटगतौ विधातव्या ॥१६२॥

सर्वाङ्गुलिचलनकृता सर्वमृदङ्गप्रहारसयुक्ता ।
गीतसमीपानगतौ सञ्जुलजातो विधातव्या ॥१६३॥

समपाणिकरणयुक्त कृत्वादौ मध्यलयतुल्यम् ।
वाद्य द्रुतलयमन्ते जातिः स्यात् सा महारम्भा ॥१६४॥

---

(कृत्वेति) । गुरुत्वेन परित क्षेपो यस्या स्यादिति ह्लादवात् तदेव द्रुतलयो परिपाणितया समविषमा ॥१५८॥

(अवकीर्णमिति) अधमाना (समावरमगतित्रवारेषु) तेषामेव सम्भ्रमावकीर्णं यत्र तदेव द्विगुण द्विगुणीक्रियते । स्थोत्स्थोमटमट धिधिमटधटांधिधोत्यादि ॥१५९॥

(पर्या(यव)गच्छतीति ।) प्रस्तुत करणजात युक्त यस्या पर्यवसाने क्रियते सा पर्यवसाना । तेषामेव त्रिषड्विधनयेष्विति । नृत्ताश्रियोपनय इत्यर्थ ॥१६०॥

(द्रोह्ला[घण्टादोह्ल]मित्यादि ।) उल्लसितार्ऽपि निवर्तेतन्यमस्यामिति । उदस्यते चितिका उच्चितिका ॥१६१॥

(घकेटाके इत्यादि ।) काचेटाना गतौ सयुक्ता । एकाङ्गिकमुख एव ॥१६२॥

(सर्वाङ्गुलीति) ॥१६३ १६४॥

ऊर्ध्वाङ्गुरक्षिणमुखे क्षिप्तप्रहता वितस्तमार्गा च ।
अङ्गुल्योर्ध्वकप्रवृत्ता दक्षिणवामप्रहारजाता च ॥१६५॥

प्रायेणोद्धतमार्गा वितस्तमार्गाश्रयेण दिव्यानाम् ।
घट्टा (घुघु)घट्टप्राया जातिर्विगतत्समा नाम ॥१६६॥

लघ्वक्षरभूयिष्ठा विचित्रकरणा च सर्वमार्गेषु ।
धाद्याऽविसर्शिकरणा विगलितनाम्ना तु सा जातिः ॥१६७॥

करणैर्बहुभिश्चितैः(त्रै) सर्वमृदङ्गसंहारसयुक्ता ।
स्वाभाविकोत्तमगतौ वञ्चितिका सा तु विज्ञेया ॥१६८॥

घ्रोघ्रोघ्रेघ्रेघोघं एभिर्या त्वक्षरैश्च संयुक्ता ।
सा ह्येकवाद्यजातिर्नृ(नृ)त्तगतिविधानवत् कार्या ॥१६९॥

एवमेनेन विधिना वर्तव्य वादन बुधैः ।
गतिप्रचारे गीते च दशरूपे विशेषतः ॥१७०॥

---

(ऊर्ध्वाङ्गु'ति ।) दिव्यानामिति । सार्धपार्यंशा सम्बन्धः । वितस्ता.. वेति । वाद्यग्रहण दर्शयति । अङ्गुल्योर्ध्वक इति । प्रवृत्तेति । उदाहरणदिश दर्शयति घुंघु इति ॥१६५-१६६॥

(लघ्वक्षरेति ।) चित्रलघ्वक्षरवाद्ये प्रविस्तर्पि अपुनारूपेण करण क्रिया यस्या । अपुनरुक्तवाद्येत्यर्थं । सा विगलिता नाम । विटादिपरिक्रमे विशेषेण गलितमनावृत्या प्रस्नमिवाक्षराणा यत्रेति ॥१६७॥

(करणैरिति) । चित्रप्रहारा सर्वमृदङ्गानाम् । राजोऽन्येषामुत्तमाना गतौ सा वञ्चितिका । वञ्चि(ञ्च)गताविति (पा० धातुपाठ १८६) ॥१६८॥

(घ्रोघ्रो इति) एकमेवाक्षर सयुक्त पुनरन्येन सयुक्त पुनरन्येनेति वैचित्र्येण येन वाद्यते नृत्ते (सा) एकवाद्य ॥१६९॥

एतदुपसंहरति । एवमेनेनेति । अस्य जात्यष्टादशकरूपस्य प्रयोगस्यैतिकर्तव्यता नाट्यनृत्तापेक्षयाऽभिधान(या)स्य प्रथम तावद्भयरूपतामाह । गतिप्रचारे गीते चेति । उत्तरार्धात् त्रिधाऽस्य मा(मा)र्गापेक्षया समुच्चयः । तेन लययोजना । दशरूपे च गीते ध्रुवागीतविषये ॥१७०॥

सप्तरूपविधानेन छन्दकासारितेषु च ।
तत्त्वं चानुगतं चैव तद्धो(द्वो)घो वाद्यमिष्यते ॥१७१॥

वाद्यं गुर्वक्षरकृतं तथाल्पाक्षरमेव च ।
गतिप्रचारे कर्तव्यं गाने सम्यगिहेच्छता ॥१७२॥

तत्त्वं चानुगतं चापि श्रोघश्चापि कदाचन ।
रागां ललितगाभिरत्वाह्वाय योज्यं स्वभावजम् ॥१७३॥

तत्त्वं तु प्रथमे गाने द्वितीयेऽनुगतं भवेत् ।
तृतीये त्वोघसंज्ञं तु वाद्यं गतिपरिक्रमे ॥१७४॥

ध्रुवासु च्छन्दतश्चैव शेषाणां सम्प्रयोजयेत् ।
तथा स्थितावकृष्टायां वाद्यं त्वनुगतं भवेत् ॥१७५॥

प्रावेशिकीनां कर्तव्यं तत्त्वं चानुगतं तथा ।
नैष्क्रामिक्यन्तरकृतं कार्यं त्रिलयचारितम् ॥१७६॥

---

गीतकमस्तकस्य विधाने प्रयोगे च छन्दकासारितप्रयोगे च वादनं कर्तव्यम् । विशेषतो गतिप्रचारे इति । पुनरेकार्थं गतोऽनुगमाद्य गीतवाद्ये तत्त्वादिविषयरूपं त्वाऽतन्त्वेण वाद्यमिष्यत इति सम्बन्धनीयम् । तत्र हि वाद्यस्यापि प्राधान्य प्रयोज्यत्वेन भवति । यथोक्तं तुर्याध्याये । गतया वाद्यानुसारिण्येति (अ० ना० ४ २७४) । नाट्ये गत्यपेक्षया नियतं वाद्य(द्य)म् ॥१७१॥

तदाह । वाद्यं गुर्वक्षरकृतमिति । अत एवाल्पकाल्पाक्षरम् ॥१७२॥

तत्त्वादीनां चाप्युक्तं कदाचिद्भवति ॥१७३॥

तत्रापि यदा नृत्ताङ्गे वा प्रावेशिक्यादौ वा क्रमशस्त्रयोगे वा त्रयाणामपि तत्त्वादीनां प्रयोगस्तदा क्रममाह । तत्र तु प्रथमे गाने इति ॥१७४॥

गतौ ध्रुवासु गानं गीतिक्रियाया वहावविषयं रागापित्यनुवृत्तौ (अ० ना० १४ १७३) । शेषाणामपि (च) प्रकृतीनाम् । छन्दस इति । इत्यादि । विचित्रं तत्त्वादि । (स्थितावकृष्टाया)मनुगतात्मा ॥१७५॥

प्रावेशिक्यां तत्त्वोघम् । अन्ये तु तथा नवकादौच इत्याहुः । नैष्क्रामिक्याम-ध्रुवायां च किल ॥१७६॥

द्रुते प्रासादिकीनां तु द्रुत चो(चौ)घ च वादयेत् ।
एव ध्रुवाणां कर्तव्य वाद्य प्रकरणान्वितम् ॥१७७॥

मात्राशकविकल्पस्तु ध्रुवापादेषु यो भवेत् ।
स तु भाण्डेन कर्तव्यस्तज्ज्ञैगतिपरिक्रमे ॥१७८॥

एव गतिप्रचारेषु कार्यं वाद्य प्रयोक्तृभि ।
ताण्डवे सुकुमारे च वाद्य वक्ष्यामि तत्त्वत ॥१७९॥

प्रमाण्डमेक गानस्य परिवर्तं प्रयोजयेत् ।
तस्या(था)न्त सन्निपाते च कार्यो भाण्डग्रहो बुधै ॥१८०॥

प्रयषा नृत्तशोभायमङ्गाना परिवर्तनम् ।
सङ्गीतस्य प्रकर्तव्य लयस्य च निवर्तनम् ॥१८१॥

यत्राभिनेयमङ्गे तु तत्र वाद्य प्रयोजयत् ।
यत्र पाणिवशादङ्ग भूयो भूयो निवर्तते ।
स तत्रार्थोऽभिनेयस्तु शेष नृत्तेन योजयेत् ॥१८२॥

---

द्रुतासु प्रासादिकीषु द्रुतलयेनो(नौ)घन । (प्रकरणेति) प्रकरीमुद्धतमसृणादि सयुक्त विचार्येत्यथ ॥१७७॥

प्राधान्येन ध्रुवासु तत्त्वम् । तत्राऽपि तत्त्वाऽकम्प्य लयसममक्षरसम च प्रधानमिति दर्शयति । मात्राशकविकल्पस्त्विति ॥१७८॥

एतत्त्व यविषयप्राधान्येनोक्तत्वान् नृत्तप्राधान्यमाह । ताण्डवे सुकुमारे चेति ॥१७९॥

प्रमाण्डमेकमि यदि । .. तदन्यत्र प्रयोगक्रमसम्पत्तय तूदितम् । तथा चेति यदि चेत्यथ ॥१८०॥

सङ्गादीनामपि सम्पिष्टकादीनाम् । अननैकदुक्तम् । क्वचिदुपवलनादौ शास्त्रोक्तमेव परिवतनम् । क्वचिदनुक्तमपि नृत्तशोभार्थं क्रियत इति । अत एव सकलस्यापि गीतस्य वस्तुप्रायस्य त्वविलम्बितादेर्गीतशोभाय पुनरावृत्तिभवतीति । सङ्गीतस्येति । साकल्यऽन्ययोभाव ॥१८१॥

एव स्थिते प्रकृते किमित्याह ।

यत्राधीने त्वभिनय(त्राभिनेयमङ्गे तु) तत्र वाद्य प्रयोजयेत् ।

इति ॥१८२॥

यद्वृत्तं तु पदं गाने तादृशं वाद्यमिष्यते ।
गीतवाद्यप्रमाणेन कुर्यात्स्याङ्गविचेष्टितम् ॥१८३॥

यथा गुर्वक्षरं चैव तथाल्पाक्षरमेव च ।
मुखे सोपोहने कार्यं प्रकृतेर्वर्णतस्तथा ॥१८४॥

स्थिते शुद्धप्रहारं तु मध्येऽक्षरसमं तथा ।
कार्यं तु गीतके वाद्यं द्रुते चोपरिपाणिकम् ॥१८५॥

सम रक्त विभक्त च तथा शुद्धप्रहारकम् ।
गुप्ताङ्कपाहि च तथा वाद्यं कार्यं तु ताण्डवे ॥१८६॥

तनुत्तेषु प्रयोगेषु तत्त्व ह्यनुगतं तथा ।
मनुत्तेषु प्रयोगेषु तत्त्वमोघ क्रमेण तु ॥१८७॥

स्थिते मध्ये द्रुते चापि यथा गानं तु गीयते ।
तथा गुप्ताङ्गहारेषु तेन चैव क्रमेण तु ॥१८८॥

---

ननु नास्ति भ(य)त्र वाद्यमिति मध्यममात्र तत्र वाद्यम् । न तु प्रधानमि-त्युक्तम् । तस्य विधिमाह । यद्वृत्त तु पद गाने तादृश वाद्यमिति । एतच्चेद सम्पादत इत्याशङ्क्याह ।

गीतवाद्यप्रमाणेन कुर्यात् स्याङ्गविचेष्टितम् ।

इति ॥१८३॥

गुर्वक्षरैरेव वाद्यम् । इद हि गीतप्रयोगेनावृत्त भवति । मुखोपवहनम । यन्मुख तत् । यदा प्रकृतेति यदा भावमपेक्ष्य वर्ध्यत इति ॥१८४॥

वर्णाङ्गात्मकगीतिभागमपेक्ष्य स्थित विलम्बितलय भवति । तदा शुद्धजाति-गतै. प्रहारैर्वाद्यम् । यदा मध्यमलयस्तदाक्षरसमम् । यदा द्रुतलयस्तदोपरिपाणिक कार्यमिति सम्बन्ध ॥१८५॥

सङ्क्षिप्याह । सममित्यादि । एतत्तुरीये (अ० ना० ४ २६७) व्याख्यातम् ॥१८६॥

प्रकृतलक्षणमाह । मनृत्तेष्विति । नृत्तप्राधान्ये तत्त्वमनुगत च । तदभावे तत्तत्स्वरूपोऽभीतकमन्तमोघ ॥१८७॥

यो विधिर्गानवाद्यानां पदाक्षरलयान्विता(त) ।
स तु नृत्ताङ्गहारेषु कर्तव्यो नाट्ययोक्तृभिः ॥१८९॥

एतास्तु जातयः प्रोक्ता दश चाष्टौ च षाड्जाः ।
अत ऊर्ध्वं प्रवक्ष्यामि प्रकारान् वाद्यसंश्रयान् ॥१९०॥

तद्यथा । चित्र समो विमक्तश्छिन्न(च्छिन्न)श्छिन्नविद्धो विद्धो(द्धो) वाद्यसंश्रयोऽनुसृत प्रतिविद्धतो दुर्गोऽवकीर्णोऽर्धावकीर्णः परिक्षिप्त एकरूपो नियमान्वितः साधीकृत. समवेतश्चित्रलेखः सर्वसमवाय(य)कृतो दृढ इति ॥१९१॥

तत्र ।
रिक्तितोऽकृतश्चित्रो नानाकरणभूषितः ।
प्रसन्नकरणं चैव त्रिपाणिलयसम्भवः ॥१९२॥

वर्णरूपणाक्रमङ्कुर्नानाकरणैः समनुयातः ।
तालाङ्कैश्च युक्तः स तु विज्ञेयः समो नाम ॥१९३॥

---

यदीह तद् प्रधान तत्र तदनुसारि वाद्यमित्याह ।
स्थिते मध्ये द्रुते चापि यथा गानं तु गीयते ।
तथा नृत्ताङ्गहारेषु तेन चैव क्रमेण तु ॥

अथ पुष्पपुष्कराध्यायद्वय(ये) (अ० ना० ३३ ३४) नाट्योद्देशेन यदुक्त तन्नृत्तेऽप्यतिदिशति । यो विधिर्गानवाद्यानामिति ॥१८९॥

जायत(त्य) एव प्रयोगसमवायिन्य प्रधानाः । तासामेवेद प्रयोगेतिकर्तव्यता कथितेत्याशयेन ता एवोपसंहरति । एतास्तु जातय इति । तुरप्यर्थे । न केवल स्वरजातयोऽष्टादश यावद्वाद्यजातय इत्यपि । अथ विशत्यलङ्कारयुक्तमिति निर्णेतुमाह । अत ऊर्ध्वमिति । प्रकृष्टता क्रियन्ते ये तेषु(क्रियते येषु ते) प्रकारा उत्कर्षहेतवोऽलङ्कारा इत्यर्थः । काव्यगानविषयताशङ्का शमयति । वाद्यसंश्रयानिति । वाद्य तावज् जात्यात्मकम् । तस्यैवोत्कर्षहेतव इत्यर्थ । आतोद्यान्तरमेलातिकृतो ह्युत्कर्षं ॥१९०॥

तानुद्दिशति । चित्रः समो विमक्तश्छिन्नश्छिन्नविद्धो विद्धो वाद्यसश्रयोऽनुसृतः प्रतिविद्धतो दुर्गोऽवकीर्णोऽर्धावकीर्णं परिक्षिप्त एकरूपो नियमान्वित साधीकृतः समवेतश्चित्रलेखः सर्वसमवायकृतो दृढ इति ॥१९१॥

नात्यायतस्तथा स्यादिह् सास्थानस्थितो विभक्तश्च ।
परस्परपाणिलयं च विभक्तकरणे विभक्तस्तु ॥१६४॥

वाद्य द्रुतनय यत्र सहसा विनिवर्तते ।
सर्वातोद्येषु भिन्नेषु प्रकारश्छिन्न एव स ॥१६५॥

प्रथपाणिमृदङ्गेषु पणवोपरिपाणिकः ।
यदा सर्वाणि वाद्येषु छिन्नविद्धस्तथा भवेत् ॥१६६॥

शुद्धानुविद्ध यद्वाद्य सर्वातोद्येषु दृश्यते ।
परस्परानुवेधेन सोऽनुविद्ध इति स्मृत ॥१६७॥

मृदङ्गकरणे वाद्यं पणवानुगत च यत् ।
सुचीविद्धैर्विचित्रैस्तु करणैर्विद्ध उच्यते ॥१६८॥

विशुद्धवाद्यप्रकृतिः समपाणिकृतस्तथा ।
स्वरूपानुगतश्चैव विज्ञेयो वाद्यसंश्रय ॥१६९॥

---

सप्तम(मोऽ)लङ्कार इत्यर्थं ॥१६२-१६३॥

(नात्यायत इति) अत्रान्तरपाणयश्चो स्फुटो विभाग स विभक्त । ... प कार्य-स्वातन्त्र्य(न्त्र्य)मुक्त भागा... । एव सर्वत्र ॥१६४॥

वाद्यमिति । ...अन्यत्रापि गीतादौ कालमानेऽपि मुरजवाद्यस्य मध्ये तूष्णी-भाव । तदाह । भिन्नेष्विति । अविरमस्थितस्यर्थं । स छिन्न ॥१६५॥

(ऽ)पवर्गमुक्तेषु मृदङ्गेषु पणव उपरिपाणिर्यत्रालङ्कारे स प्रथम मृदङ्गछेदविच(विद्ध)श्छिन्नविद्ध ॥१६६॥

(शुद्धेति) आदौ शुद्ध तत आतोद्यान्तरेणानुविद्ध यत्र वाद्यम् । अनुविद्ध व्याचष्टे । परस्परानुवेधेनेति । सोऽनुविद्ध ॥१६७॥

मृदङ्गेति (मृ)ङ्गक्रियाया प्रयुक्ताया पणवा यत्र वादयन्ति वाद्य कुर्वन्ति । विचित्रै सूचीविद्धैरिति । मृदङ्गमुरजरक्षरमध्ये विभागे बहि करणं क्रिया-मिस्तन्मध्ये योऽसौ विद्ध ॥१६८॥

(विशुद्धेति) गीतमनुसरद्वाद्यसंश्रय । वाद्यस्य गीतसंश्रयत्वमस्मिन्निति । स्वभावोक्तिश्चालङ्कार ॥१६९॥

सर्वातोद्यानि यत्रैकं करणं भावयन्ति तु ।
समवृत्तपदान्येवमेकरूप उदाहृतः ॥२०६॥

प्रशान्तनियमोपेतः स्फुटवाद्यसमन्वितः ।
उपयाति च गीतं यः स ज्ञेयो नियमान्वितः ॥२०७॥

चित्रं हि करणं यत्र वाद्येनैकेन वाद्यते ।
वृत्ताङ्गहारानुकृतो ज्ञेयः साचीकृतस्तु सः ॥२०८॥

कृत्वोपरिगतं वाद्यं पणवो दर्दरोऽपि वा ।
प्रयान्ति मुरजं यत्र समलेखः स कीर्तितः ॥२०९॥

चित्रं बहुविधं वाद्यं मृदङ्गपणवादिभिः ।
क्रियते यत्र सर्वत्र चित्रलेखः स उच्यते ॥२१०॥

सर्वमार्गगतो यस्तु सर्वपाणिलयाश्रयः ।
विधिश्चैव विभक्तश्च तत्सम समवायितम् ॥२११॥

यस्तु मध्यलयोपेतः सम सुविहिताक्षरः ।
गतिप्रचारे विहितः प्रकारो दृढ एव स ॥२१२॥

एवमेते प्रकारास्तु कर्तव्या वाद्यसंश्रयाः ।
गतिप्रचारे गीते वा रसभावानवेक्ष्य च ॥२१३॥

---

(सर्वातोद्यानीति)। सर्वैरातोद्यैरेकस्मिन् प्रयोगे निर्वाह्यमाणे एकरूपः ॥२०६॥

(प्रशान्तेति) प्रशान्तस्य गतिविरामस्य नियमननुवर्तमानो नियमान्वित ॥२०७॥

(चित्रमिति)। एकेनैव मुरजनणवदर्दरस्या॰न्यतमेन सर्ववाद्योचितान्यक्षराणि यदा प्रयुज्यन्ते तदाऽन्यस्य पराङ्मुखीकरणात् साचीकृत ॥२०८॥

(कृत्वेति)। यदेवमुरजेन वह्नीयस्तदेवोपरिपाणिनेति प्रथम दर्दरेण पणवेन वा क्रियते पश्चात् मुरजेन यत्र न (स)समवर्णोल्लेखात् समलेख ॥२०९॥

(चित्रमिति)। प्रयमेवहि नानाक्षरत्वे चित्रत्व चित्रलेख. ॥२१०॥

(सर्वेति)। विभक्तरूपैर्मार्गैर्मिश्रीकृत्य सर्वसमवायकृत॰ सर्वसमवायितः ॥२११॥

(गतिरिति)। स्वप्राधान्येन वर्तमानो मध्यमलयो येन तेन दृढ. ॥२१२-२१३॥

प्रकारा जानयश्चैव सर्वमार्गेषु संस्थिताः ।
ये वं गतिप्रचारेषु युद्धास्ते केवला मताः ॥२१४॥

प्रयोगमिदानीं वक्ष्यामः। तत्रोपविष्टे प्राङ्मुखे रङ्गे कुतप एव विन्यासः कर्तव्यः। तत्र पूर्वोक्तयोर्नेपथ्यगृहद्वारयोर्मध्ये कुतपविन्यासः कार्यः। तत्र रङ्गाभिमुखो मौरजिकस्तस्य पाणविकवर्दरिकौ वामतः। एवं प्रथममवनद्धकेन तस्य ततः कुतपविन्यास उक्तः। तत्रोत्तराभिमुखो गायकः। गायकस्य तु वामपार्श्वे वैणिकः। वैणिकस्य दक्षिणेन वंशवादकौ। गातुरभिमुखं गायिका। इति कुतपविन्यासः ॥२१५॥

तत्र।

प्रयोगेषु प्रणेतव्यो देशस्थानवशानुगः।
यथास्थानस्थितेष्वेषु वामकातोद्यकेषु च ॥२१६॥

एवमचलाकम्पितास्खलितासन्नो(नो)पविष्टेषु मार्दङ्गिकदार्दरिकपाणविकेषु शिथिलाञ्चितवध्रस्तनितेषु यथाग्रामरागमार्जनालिप्तेषु मृदङ्गेषूरुद्वयनिपीडने तेषु निगृहीतार्थनिगृहीतमुक्तप्रका(हा)रकृतेषु सर्ववादनविन्यस्तैर्देवतानामावाहनविसर्जनार्थं प्रथममेव तावत् त्रिसाम कर्तव्यम् ॥२१७॥

---

एवमुद्देशं परिसमाप्य प्रयोगे नाट्यपरिक्रमे जातिमार्गयुद्धे नृत्ते पुनरलङ्कारबाहुल्यमित्येतदाह। ये वं इति। प्रचारेष्विति ॥२१४॥

पूर्वरङ्गे तावत् प्रयोग दर्शयति। प्रयोगमिति। तत्र प्रत्याहार तावदाह। तत्रेति। रङ्गसामाजिकसङ्गमे प्राङ्मुखरङ्गपराङ्मुख उपविष्टे सति यवनिकादानपूर्वकं कुतपविन्यासः ॥२१५-२१६॥

तत्राऽऽसिद्धये करिष्यमाणस्य त्रिसाम्नामु(णत्रिसामो)पक्रमाय प्रथमं भाण्डानिव परीक्ष्याणीत्याह। (अचलेति)। अचले दृढे अकम्प्ये निष्क्रिये अस्खलिते उत्तानत एव आसने उपविष्टेषु मार्दङ्गिकादिषु शिथिलादिषु अञ्चितान्यायतानि वाद्यानि वध्राकोटनकल्पितस्वरे(ष्वि)त्यर्थः। यथा ग्रामरागमार्जनालिप्तेष्विति। ग्रामरागप्रयोग। तथा वाद्य आनीते। यथा ग्रामरागश्च गतिप्रधाने मार्जनासिद्धये यवादिचूर्णेषु लिप्तेषु। ऊरुद्वयेन समुत्पीडित तस्मिन् सति। मुक्तप्रहारेषु सर्वेषु। तथा ऊरुद्वयेन पीडनविधिस्त वाद्यानकस्य। किमित्युक्तम्। देवताना रङ्गे पूजितानामावाहनार्थं तन्त्रविसर्जनार्थं त्रिसाम ॥२१७॥

तत्र ।

> वामे चान्द्रमसं साम तत् प्रीणयति पन्नगान् ।
> दक्षिणे चानलं साम तद्वीन् प्रीणयत्यथ ॥२१८॥
> उदीच्यामपि चाग्नेयं तद्बृहद्देवतानि च ।
> त्रिसाम कीर्तितं सम्यक् त्रिसामत्वाद्ध्रुवेरथ ॥२१९॥
> त्रिप्रकारं त्रिगुणितं तथा चैवाद्भुताश्रयम् ।
> त्रिकलं षट्कलं चैव त्रिसाम परिकीर्तितम् ॥२२०॥
> त्रिसामाक्षरपिण्डस्तु गुरुलघ्वक्षरान्वितः ।
> यकारश्च मकारश्च त्रिकैस्त्रिगुणितो भवेत् ॥२२१॥

समुदायस्तदपेक्ष( त्रिचा साम्नः ) । त्रिचा त्रिकले ध्रुवं प्रथमं साम । त्रिचा ध्रुवं त्रिकले द्वितीयम् । तिच(त्रिचा)ध्रुवं ध्रुवं तृतीयमिति । तदन्ते पूर्वरङ्ग-विधानमनुप्राप्य ध्रुवःसमेनाङ्गरसमेन वा वाद्येन बहिर्गीतविधानमनुवर्तितव्यम् ।

---

तत्र वाम इति । गीयतीति । दक्षिण इति । नयेन । आनलं वह्न्याजानम् । ध्वनींस्तर्पयति संगायतीति ॥२१८ ।

आग्नेयं वह्निमुखवत् । तासर्वदेवतातर्पणम् । त्रीणि सामपूर्वं विसर्जनम् । क.. ...त्यत्रेति त्रिसाम । तदाह । त्रिसामत्वादिति ॥२१९॥

एक एव गुरुलघुसन्निवेशोऽक्षरवैचित्र्यान्निभिद्यते । तदाह । त्रिप्रकारमिति । क्रमेणाथ द्रुतादीत्याह । त्रिगुणितमिति । वाद्यविधिमाह । अद्भुताश्रयमिति । स्वरूपं तस्य त्रिकलं षट्कलम् । तालस्तु त्रिकलः ॥२२०॥

तान्यलक्षण्याह ।

त्रिसामाक्षरपिण्डस्तु गुरुलघ्वक्षरान्वितः ।

इति । गुरुलघुविभागमाह । यकारश्च मकारश्च त्रिकैस्त्रिगुणितमिति । यत एवं त्रिका ॥२२१॥

समुदाय इति । तदपेक्ष त्रिकैरिति बहुवचनम् । ति(त्रि)चा साम्नमिति । तद्द्वयमक्षरपरिवृत्या त्रीन् भेदानाह । .....त्रिपट् चाह । अजम्लेति स्वरवारम् । ध्रुवम् । अस्य त्रिसाम्नोऽन्ते विधिमाह । तदन्त इति पूर्वरङ्गविधिमाह । प्राप्येति । मनुक्तवाया वाद्यविधौ । बहिर्गमनमाश्रवणादावुक्तम् । तदुवाचेन गुरुलघुयोगादनु-

प्रासारितप्रयोगे च तस्यानुगतप्रायं वाद्यं विधातव्यम् । यत्र त्रिसाम स प्रत्याहाराय (रो यो) ऽऽसावपनीर्णकोटौ त(टिस्त)त्र वाद्य प्रवर्तते । तत्रादौ तावद्ग्रामोर्ध्वक-प्रहारयुतं पश्चादालिङ्गनविमर्दनकरं गोपुच्छां च त्रिसामा विचित्रकरणयुत मार्दङ्गिकसर्वभाण्डिकमपि वाद्यं पश्चात् प्रवर्तनीयम् । पूर्वं हि भाण्डवाद्येन सिद्धिरुत्पादनीया । स्त्रीबालमूर्खावकीर्णे च रङ्गे कुतूहलजननसमर्थवाद्यमुपपन्नं भवति ॥२२२॥

अपि च ।

आचार्याः समिच्छन्ति पक्षच्छेद तु पण्डिताः ।
स्त्रियो मधुरमिच्छन्ति विक(कु)ष्टमितरे जनाः ॥२२३॥

तस्य(स्यैव) चान्ते लास्यप्रयोगमधिकृत्य नर्तक्या अवतरणकाले लघुवर्ण-सञ्चयमङ्गुल्यङ्गुलिप्रचलनप्रायं वाद्यं योज्यम् । गीतकसन्निपाते च लास्या(स्य)-मनुवाद्यम् । तेन नृत्ताङ्गहारानुगत करणवाद्यं प्रयोज्यम् । आलिप्तमार्गेण जातिकरणान्वितमुत्थापने वाद्यं प्रयोक्तव्यम् । ततः परं परिवर्तनं चातुर्मार्गिकं शुद्धमास्थाय चतुर्थकारप्रवेशेषु वाद्यमङ्गुलिप्रचलनप्रायमिति । भाण्डोत्थकाकहृदयासु करणान्वित वाद्यं योज्यम् । रङ्गद्वारे प्रदोषगाथा चर्चरे त्रिगते वाद्या चाङ्कित-

---

धरणीयम् । ननु प्रत्याहारस्तु सकारणमकृतम् । कृतमित्याह । यत्रान(या चासाव)-पनीर्णकोटिस्तत्र वाद्यमिति । अवतरणस्य मार्गेऽन्तरसवभावंमिश्रवाद्यम् । अन्ये तु यावदपनीर्णकोटिकोटीति पठन्तस्त्रिसामावतरणयोर्मध्ये सर्वभाण्डे वाद्यमिति मन्यन्ते । तत्र हेतुमाह । पूर्वं हीति । सिद्ध(द्धि)श्चाचष्टे । स्त्रीबालेत्यादिना । कुतूहलजननमेव सिद्धि प्रधानमित्यर्थः ॥२२२॥

आचार्या एतत्तत्त्वविदः । पण्डिताः वैय्याकरणादयः । स्त्रिय इति अत्र मधुरम् । इतरे बालमूर्खादयो विकृष्टन्ति(मिति) प्रतिसूत्रम् ॥२२३॥

तस्यैवेति । बहिर्गीतोत्तेजितस्य वाद्यस्यान्ते । तु गीते । अङ्गुलिप्रचलनप्राय-मिति । पतीदप्रायमित्यर्थः । गीतप्रयोगाभिमये समाप्ते तदन्यसन्निपातात् प्रभृति लास्यनृत्यमनुगतवाद्य करणधातुयुक्तवीणामिथम् । अन्ये तु कृतादिषट्कमत्रेत्याहुः । एवमुत्तरत्र । उत्थापने त्वालिप्तमार्गोचितजातिक्रियावाद्यम् । परिवर्तिन्यां सर्वमार्गेषु शुद्धाया जात्या करणान्वितमिति । चातुर्थित सन्निपाताक्षरयोजना.........

मार्गाश्रित सन्निपातग्रहं प्रयोक्तव्यम् । महाधायां वितस्तिमार्गाश्रित प्रदेशिनी ग्रहम् । एवं तावत् पूर्वरङ्गे भाण्डवाद्यमुक्तम् । नायकानां तु स्वस्थगतिप्रचार वक्ष्यामि । तत्र घट्टाँ घट्टाँ इति देवतानाम् । घेंताकेंता. कृणकिटिप्राय विप्राणाम् । व्यठलकप्राय मध्यमानाम् ॥२२४॥

एवं स्वस्थावस्थागतिप्रचारे विधीयते वाद्यम् ।
द्विकलाश्च तथैकस्ताश्चतुष्कलाश्चैव पादविन्यासाः ॥२२५॥

तत्र तु साम्यं कार्यं भाण्डे च समं च गानेन ।
पुनश्चावस्थाकृतं वाद्यं वक्ष्यामि त्वरितगमने ॥२२६॥

घघघेघेट इत्येवं वाद्यं प्रयोक्तव्यम् ।
रपथिथमाथिगतमङ्गुलिप्रचयमकृतं विहितम् ॥२२७॥

(तत्रै)व पूर्वं सम्यग लिखितं गतिप्रचारे तु ।
पुनरन्यावस्थायां वाद्यविधानं प्रवक्ष्यामि ॥२२८॥

त्वरितगमनेषु ज्ञात्वा ये पूर्वोक्ता गतिप्रचारेषु ।
घघघेघेंप्राय तत्र तु वाद्यं प्रयोक्तव्यम् ॥२२९॥

नीरुग्विमानेष्वभिलाषाद्वाऽङ्गुलीचलनात् ।
कार्यं हि तच्चतुष्कोऽन्यो-यो-यसमाश्रितं वाद्यमिति ॥२३०॥

दुःखार्दितव्याधितेष्टजनवियोगविभवनाशक्षयम.न्य ।
व्रतनियमोपवासादियुक्तेष्वाक्लिष्टमागध घो विधातव्यम् ॥२३१॥

दैत्यदानवयक्षराक्षसपन्नगादीनां घट्टाघट्टाघकृताम् ।
घेघेटाप्राय सञ्जविकलपङ्गुवामनादीनाम् ॥२३२॥

टघटाघेप्राय चेटकुसत्वादीनां योक्टखुखणेरत्यादिकम् ।
यतिपाशुपतशाक्यादीनां घट्टघट्टघेघप्रायम् ॥२३३॥

---

स्येति । प्रदेशिनीपातेन यस्य ग्रहणं तत् प्रदेशिनीग्रहणम् । एवं पूर्वरङ्ग इत्युपसंहृत्य नायकविषयमाह । नायकानां त्विति । यद्यपि जातिविनियोगो गतिप्रचारे कृत स्तथापि ग्रहमोक्षे सन्धानयोगञ्चैता वक्षराणि तत्र मिश्रणीयानीत्येव योजनामाहु । अन्ये तु विकल्पमिच्छन्ति ॥२२४॥

गतिप्रचार इति गत्यध्याये (अ० १२) । चतुरश्र(स्रा) इति धाङ्गिकमुखद्वये ऊर्ध्वकालिङ्गके ॥२२५-२३३॥

> श्रोपस्थापक निर्मुण्डमवंवरादीनां
> घेटांघोटामांटाण्णाणाप्रायम ।
> वृद्धश्रोत्रियकञ्चुकिस्थूलादीनां
> खोंग्रोघोलोलो इति प्रायम् ॥
> गजवाजिखरोष्ट्ररथविमानयानेषु वकिटिप्रायम् ॥२३५॥

सर्वश्रोत्तममध्यमाधमेषु पुरुषेष्वित्थं रसभावाननिसमीक्ष्य वाद्यं प्रयोक्तव्यम् । एवं तावत् पुरुषवाद्यम् ॥२३६॥

स्त्रीणां पुनरभिव्याख्यास्याम । तत्रोत्तमस्त्रीणां मध्यानां च टोत्थमथिघो-घेटमथिके इति प्रायम् । अथ राजस्त्रीणां धकिह्लमधिधिवोह्लकखुप्रायम् । धकि-तिकिथिघटमटमटमथिये इति ब्राह्मणीनाम । अथ मध्यमस्त्रीणां वेश्याशिल्पकारीणां किटिण्णाण धकधिघटमथिट्टणकिटिकिटिप्रायम । टमथिकुण (केडखुलिखि प्राय नीच स्त्रीणाम्) । एष तावत् सामान्यतोऽभिहित स्त्रीणाम । अवस्थान्तरितानां तु त एव पौरुषा वाद्यविशेषा भवन्ति । सामान्यतोऽभिनये भयशोकक्रोधादयो हि नाना भावा समुत्पद्यन्ते । श्रासामपि रसभावाभिनयापेक्ष मार्गाश्रित वाद्य भवति ॥२३६॥

अपि च ।

> जातिमार्गप्रचारैस्तु करणैरक्षरैस्तथा ।
> वादयेद्यस्त्वसकीर्णं स श्रेष्ठो वादको मत. ॥२३७॥

अथान्तरवाद्यानि । अनुबन्धो विप्रहारित तिविर्ध(प)हप परिच्छिन्न-मिति ॥२३८॥

---

श्रोपस्थापि(प)को........ .... ....प्रतिनट । निर्मुण्डो जातिबलविः ॥२३४-२३५॥

सामान्यतोऽभिनये सामान्याभिनये क्रोधादय. । श्रासां स्त्रीणाम् । यथलिखो वाद्यो दर्शिता इति । तदनुसारेण स्त्रीणामपि वाद्य न केवल पुंसाम् ॥२३६॥

जातय। शुद्धा या इत्यादि व्याख्यातम् ॥२३७॥

गानपरिक्रम च विना यद्वाद्य तदुत्तत(वन्त)रवाद्यम् । तच्चतुर्धा ॥२३८॥

तत्रानुबन्धसंज्ञमन्तरवाद्यं यथा घोरणाघोवसथे इति । पाठ्यविरामे विप्रहारितं यथा घट्टाक्षोलोणा इति ॥२३९॥

सिद्धिरपि ।

ऐश्वर्ये विस्मृते शान्ते वस्त्राभरणसंयमे ।
सिद्धिर्वादयितव्या तु नानाकरणसंश्रया ॥२४०॥

सा च सिद्धिर्यथा समागंकरणाश्रया कार्या विचित्रकरणा पञ्चकला । प्रवस्थान्तरे पुनरेवमेव कृता भवति ॥२४१॥

अपि (च)

साम्यविरामे चाद्यं परिवर्तसाधनकृते विरामे च ।
वस्त्राभरणनिपाते प्रकुर्यादस्यङ्गमने काले ॥२४२॥

अथ परिच्छिन्नं सार्वभाण्डिकम् । ध्रुवायो( या ) ग्रहोपशमने गम्भीर-धीरप्रहारमुद्धत यथारसं च चट्कलम् । तत्रोत्समानां वितस्तमार्गाभिस ग्रंग्रंनेयेके इति ॥२४३॥

अथोत्तमस्त्रीणामङ्गहारादावाश्रवणम् । खो दो खा इति । अधमाना लञ्जमर्कुटकरणम् । यथा टेंकसाकिटिकिटिना इति ॥२४४॥

अथप्रासादिकीप्रावेशिक्याक्षेपिकावकृष्टासु । तत्र प्रासादिकीप्रावेशिक्योः समपाणौ विभक्तकरणं वाद्यम् । द्रुतायामुपरिपाणिविचित्रकरणं स्थिताविकृष्टाया-

---

अनुबन्धो नाम यदङ्गानुसारेणाभिनयं । मध्यम एव वर्तेत । प्रयोगकाल-वाद्यम् । अध्यायसमाप्ता(प्ता)ववान्तरवाक्यार्थच्छेदे विप्रहारितम् । यथा घट्टाक्षोलता मिरमथ विशेषेण प्रहारः ॥२३९॥

अथाविस्मृतविभ्रमलोभेऽभिनयपाठ्यादौ विधि स्मृत. सिद्धिः । पूरणार्थं सिद्धि-ग्रहणम् ॥२४०-२४२॥

ध्रुवगाने भविष्यति समाप्ते च यद्वाद्य ध्रुवावट्टपर्यन्तं नियतचट्कलत्वा-वधिकृतात् परिच्छिन्नम् । तदन्तरवाद्यमेवोत्तरवाद्यविषये अक्षरैर्विभजति । तत्रोत्स-मानामित्यादिना । ध्रुवाणां ग्रहणे उपशमने च यत् परिच्छिन्नं नाम चतुर्थमन्तर-वाद्यमुक्तम् ॥२४३-२४४॥

मर्यसन्निपातकृतमिति । यथा घोण्येघोघो इति ॥२४५॥

एवमेतत् प्रयोक्तव्यं वाद्यं गतिपरिक्रमे ।
प्रासादिक्यां ध्रुवायां च त्वन्तरायां तथैव च ॥२४६॥
प्रमार्ष्टमेक गीतं तु परिवर्त प्रयोजयेत् ।
सन्निपातावसानेषु भाण्डवाद्यग्रहो भवेत् ॥२४७॥

अथ द्रुतविलम्बितायां यथा । तलखो तलखो तलखो इति । प्रयाङ्कितायां यथा । घोणखोखोणके.. . . कुखणाणाणा खोदें बलखोंके इति ॥२४८॥

अथोद्धात्यम् ।

सम्भ्रमावेगहर्षार्थे विस्मयोत्साहशोकजे ।
ग्रहे गात्रस्य यद्वाद्यमुद्धात्यं सम्प्रकीर्तितम् ॥२४९॥

मोक्षमिदानीं वक्ष्यामः । तद्यथा । खेन्नातिक्रिठिदत्तकित्तकिकिवोलगोगोग-घेघोघेटघेघेरावो इति । अ(प्र)वाङ्कितायाम् । घटमथिघघखोखोणखोखोणखोखो घेण डवकणिक्कपखुड्डप्प इति । अथ मर्कटलक्षणयोः । योथत्राथत्रातक्तितांगुद्गुद् घे इति । अप्रस्थितायाम् । थथघेटमटवेनेरियमटाकटत्यिमटत्यि कटकिटोघिटी इति । अपावकृष्टायाम् । घटमटत्यिरथिगुद्घेट (घोणवथणणोणण) इति ॥२५०॥

एवमेते ग्रहा मोक्षा ध्रुवाणां गदिता मया ।
निष्क्रामे च प्रवेशे च त्वाक्षेपिक्यन्तरासु च ॥२५१॥

---

तत्र ग्रहे यद्वाद्य तदेव यद्ध्रुवाभेदेन स्फुटयितुमाह । अथ प्रासाद(दि)की-त्यादि ॥२४५-२४७॥

द्रुतायां ध्रुवायां विप्रहारितस्य ध्रुवादिविषये नामान्तरेण प्रयोगमाह । उद्धात्यम् । उत्कृष्ट हनन यत्रेति ॥२४९॥

एवमुद्दीपनापरपर्याये ग्रहेऽभिधाय प्रशमनप्रलये मोक्षे दर्शयति । मोक्षमिदा-नीमित्यादिना ॥२५०-२५१॥

तत्रास्य द्वौ सहननौ । सम्स्वरसहनन यत्र समोगाक्षराणि बाहुल्येनान्यत्वाक्षरणे समानुसरण प्रयतितव्यमिति यदुक्त तण्डुनाऽर्थवादेन तद् दर्शयितुमाह ।

अकालज्ञमतालज्ञमशास्त्रज्ञ च वादकम् ।
चर्मघातक इत्येव प्रवदन्ति मनीषिणः ॥

इति, शास्त्रज्ञत्य लक्षणज्ञता । तालज्ञता प्रयोगकौशलम् । कालो द्रुतादि । ताल-

एवं तालकलाज्ञाने मार्दङ्गिकेन प्रयतितव्यम् । भवति चात्र ।

अतालज्ञमकालज्ञमशास्त्रज्ञं च वादकम् ।
धर्मघातकमि( इ )त्येव प्रवदन्ति मनीषिणः ॥२५२॥

अनेनैवविधानेन कार्यं वाद्यं प्रयत्नतः ।
प्रथमानां मर्कटसञ्ज्ञये(भि)दात् प्रयुक्त च वर्णान्तरिका ।
अत पर प्रवक्ष्यामि त्वासोद्यानां तु लक्षणम् ॥२५३॥

त्रिधा कृतिर्मृदङ्गानां हरीतकयवाभया ।
तथा गोपुच्छरूपा च भवन्त्येषां च रूपतः ॥२५४॥

हरीतका(क्या)कृतिस्त्वङ्को यवमध्यस्तयोर्ध्वगः ।
आलिङ्गश्चैव गोपुच्छ आकृत्या सम्प्रकीर्तितः ॥२५५॥

तालत्रय तथार्धं च मृदङ्गोऽङ्किक इष्यते ।
मुख तस्य च कर्तव्य द्वादशाङ्गुलयोजितम् ॥२५६॥

ऊर्ध्वकोऽपि तथा कार्यश्चतुस्तालप्रमाणत ।
अङ्गुलानि मुख तस्य कर्तव्य तु चतुर्दश ॥२५७॥

आलिङ्गश्चैव कर्तव्यस्तालत्रयमथापि च ।
मुख तस्याङ्गुलानि स्युरष्टावेव समासतः ॥२५८॥

दैर्ध्येण पणवश्चैव कर्तव्यः षोडशाङ्गुल ।
कृशमध्याङ्गुलान्यष्टौ पञ्चाङ्गुलमुखस्तथा ॥२५९॥

---

धर्मघातुदादि । धर्मं निहन्तीति जुगुप्सोक्ता ॥१५२॥

लक्षणमित्याकार ॥२५३-२५४॥

हरीतक्याकृतिरङ्कि( ङ्कि )कः ॥२५५॥

सार्धतालत्रयो द्वादशाङ्गुलक. ॥२५६॥

ऊर्ध्वाधो यवाकृतिश्चतुस्तालश्चतुर्दशाङ्गुलमुखाकार ॥२५७॥

आलिङ्गो गोपुच्छाकृति । त्रितालोऽष्टाङ्गुलमुख ॥२५८॥

दैर्घ्येण षोडशपरिणाहेनाष्टौ मुखत पञ्चाङ्गुल पणवः ॥२५९॥

प्रोष्ठावस्य तु कर्तव्यो तज्ज्ञैरध्यर्धमङ्गुलम् ।
मध्ये च सुषिरं तस्य चत्वार्येवाङ्गुलानि च ॥२६०॥

दर्दरश्च घटाकारो नवाङ्गुलमुखस्तथा ।
विधानं चास्य कर्तव्यं घटस्य सदृशं बुधैः ॥२६१॥

द्वादशाङ्गुलविस्तीर्णं पीनोष्ठस्य समासतः ।
अतः परं प्रवक्ष्यामि चर्मलक्षणमुत्तमम् ॥२६२॥

न ज्वरोपहतं चर्म न च काकमुखाहतम् ।
नापि दोषहतं क्लिन्नं न च धूमाग्निदूषितम् ॥२६३॥

एभिर्दोषैर्विनिर्मुक्तं चर्म निर्वर्तयेत् गवाम् ।
धूम्रपल्लवसंकाशं हिमकुन्देन्दुपाण्डुरम् ॥२६४॥

प्रत्यामिषविहीनं तु क्लिन्नं वा चर्म कर्मणि ।
विधिरेव सुवर्णानि चर्माण्याहृत्य बुद्धिमान् ॥२६५॥

शीतोदके निशामेकां स्थापयित्वा समुद्धरेत् ।
वध्रं मूलसितैर्दात्रैर्गोमयैश्चतमार्जि(र्दि)तं. ॥२६६॥

चन्द्रकैस्तनुभिः पश्चात् मृदङ्गान् योजयेद् बुधः ।
पुष्पावस्ततं(तं न)त्र कुर्यात् त्रिवलि चन्द्रकाख्यया(य)म् ॥२६७॥

---

अङ्गु(प्रो)ष्ठो यत्र चर्म विश्राम्यति । तेन सोष्वौ(र्धौ)ङ्गुल्यमध्यतः । अङ्गुलद्वयस्थूलं तु काष्ठमित्यर्थः ॥२६०॥

नवाङ्गुलमुखो द्वादशाङ्गुलसुषिरः पीनोष्ठो घटाकृतिर्दर्दरः ॥२६१-२६२॥
अथ मुखोपयोगलक्षणमाह । न ज्वरोपहतमित्यादि ॥२६३-२६४॥

पूतं गोमयैर्मोक्षास्तत मुर्मदिता ॥२६६॥

चन्द्रकैरिति । वध्रा निरवद्यास्तथा कार्या यथा चन्द्रकाकारा क्वचित् क्वचि-द्बुद्बुदकुसुमवर्तनाकारा । त्रिवलिमिति । त्रयाणां वध्राणामन्योन्ययोजनार्थं वल्येण ॥२६७॥

कक्ष्यास्य वं परिकरमिति । येन स्कन्धे निवेश्यत इत्येतत् पल्लववत् प्रवेश-येत् ॥२६८॥

कक्ष्यारुय वं परिकर ग्रीवाख्य स्वास्तिक तथा ।
त्रिशत च प्रकुर्वीत पुष्करे ह्यालिकानि तु ॥२६८॥
दश तत्र हि यद्मास्तु प्रक्षेप्या वर्तिसश्रयाः ।
द्व(द्वे)हित्वा त्वालिके वध्र (घ्रे)तृतीये सम्प्रवेशयेत् ॥२६९॥
सर्वेष्वेव प्रयोगोऽयमालिकेषु विधीयते ।
तन्त्रीभि. पणव मह्यं तु सुदृढाभिः समन्ततः ॥२७०॥
वातपुष्करिका चैव योजयेत्तनुचर्मणा ।
एवं मृदङ्गपणवा कर्तव्या दर्दरास्तथा ॥२७१॥
मवे मृदङ्गे दातव्य रोहण सतत बुधै ।
गव्य घृत च तैल च तिलपिष्ट तथैव च ॥२७२॥
तथा ह्यनेन विधिना त्वाङ्गिकालिङ्गकोर्ध्वकान् ।
दैवताभ्यर्चन कृत्वा तत. स्थाप्या महीतले ॥२७३॥
चित्रायामथवा हस्ते शुक्लपक्षे शुभेऽहनि ।
उपाध्याय शुचिर्विद्वान् कुलीनो रोगवर्जित. ॥२७४॥
मतिमान् गीतितत्त्वज्ञो मधुरोऽविक्लेऽन्द्रिय. ।
सोपवासोऽल्पकेशश्च शुक्लवासा दृढव्रत ॥२७५॥

---

मसके साध्वे सति द्व वध्रे बन्धयित्वा स्वपुष्करवध्रेषु मध्ये तृतीये वध्रे (घ्र) वेशयेदिति पाठावत्वम् ॥२६९॥

सतत्रिभिर्बन्नीयात् ॥२७०॥

वातपुष्करिका चैव योजयेत्तनुचर्मणा ।
इति । धातदाढर्यं विनापि नच्चक्षरचनबलादेव यथा मधुरस्वराद्यो विचित्रा भवन्ति य(त)था कुर्यादिति ॥२७१॥

दातव्य रोहणमिति । येन चमणा(णो) वाद्य प्ररोहति तद् द्रव्यम् । घृत (त )तिलतैल तिलकल्क चेति । चर्मणि लेप ॥२७२-२७३॥

अथ मुरजपूजा यत्नेन कर्तव्य(व्या)माह । चित्रायामित्यादि । उपाध्याया- (य) इति । मौरजिक (क) ॥२७४-२७६॥

मण्डलत्रयमालिप्य गोमयेन सुगन्धिना ।
ब्रह्माणं शङ्करं विष्णुं त्रिषु तेषु प्रकल्पयेत् ॥२७६॥

प्राग्लिङ्गं स्थापयेत् पूर्वं कृते ब्राह्येऽथ मण्डले ।
उर्ध्वकं तु द्वितीयेऽस्मिन् सुनाम्नि निधापयेत् ॥२७७॥

तिर्यग्गतलिङ्गकं सम्यग् वैष्णवे मण्डले क्षिपेत् ।
बलिपुष्पोपहारैस्तु पूजयेत् पुष्करत्रयम् ॥२७७॥
पायसं घृतमध्वक्तं चन्दनं कुसुमानि च ।
शुक्लानि चैव वासांसि दत्वा लिङ्गे स्वयम्भुवः ॥२७६॥

त्र्यम्बकाय प्रदातव्यं सगणायोर्ध्वके बलिः ।
स्वस्तिकैर्लाजिकापुष्पहव्यपिण्डाष्टकैं सह ॥२८०॥

उन्मत्तकरवीरार्कपुष्पैरन्यैश्च भूषितः ।
बलिः कार्यं प्रयत्नेन रक्तकौसुम्भरैः सह ॥२८१॥

वैष्णवे मण्डले स्थाप्य सर्वबीजगतोऽङ्कुरः ।
लाक्षत्रालेपनं प्रोक्तं स्वर्णमिश्च सपायसं ॥२८२॥

वाचयित्वा द्विजं स्वस्ति रत्वा पूर्वं च दक्षिणाम् ।
पूजयित्वाखिलान्धर्मान् पश्चाद्वाद्यं समाचरेत् ॥२८३॥

दैवतानि च वक्ष्यामि येषां ते च भवन्ति हि ।
वज्रेक्षणः शङ्कुकर्णो प्रहस्ताधि तथा महान् ॥२८४॥

एतास्तु देवता विप्रा पुष्करेषु प्रकीर्तिता ।
मृण्मयत्वान् मृदङ्गा(ङ्ग)स्तु भाण्ड भ्रमयतीति च ॥२८५॥

---

प्राग्लिङ्ग(ङ्ग)म् ॥२७७-२७८॥
स्वयम्भुवः ब्रह्मणा(णः) ॥२७९-२८०॥
उन्मत्त धत्तूरम् ॥२८१-२८३॥
वज्रेक्षणादयोऽत्र पूज्या ॥२८४॥

अथ निर्वचनमाह । मृण्मयत्वात् मृदङ्ग इति । मुखे चेति मुखं मङ्गलं च करोति । भाण्डम् । भस्य डा यादेश । तदाह । भ्रमयतीति रसयतीत्यन्ये पठन्ति । एके मण्डं इति च भाण्डमाहुः ॥२८५॥

मुरजास्तूर्ध्वंकरणादातोद्य तोवनादपि ।
आङ्कस्यादौ प्रणीतोऽत्र पणवश्च विधीयते ।
द्वार शब्द दारयति तस्माद् भवति दर्दरः ॥२८६॥
सृष्ट्वा मृदङ्गान् पणवं दर्दरं च महामुनिः ।
मेघैश्च स्वरसयोग मृदङ्गानामथासृजत् ॥२८७॥
विद्युज्जिह्वो भवेद्वामे मेघ स तु महास्वनः ।
ऐरावतो महामेघस्तथा चैवोर्ध्वके भवेत् ॥२८८॥
आलिङ्गके तडित्वांश्च नाम्ना चैव बलाहकः ।
दक्षिणे पुष्करो मेघः पुष्करो वामयोजितः (कोकिलो नाम विश्रुतः)
॥२८९॥
मृदङ्गश्चैव नाम्ना तु ऊर्ध्वके नन्द्यपयोच्यते ।
आङ्किकः सिद्धिरित्येवमालिङ्ग्यश्चैव पिङ्गलः ॥२९०॥
भूतप्रियो बलिस्तेभ्यो दातव्यः सिद्धिमिच्छता ।
अपूजयित्वा ह्येतान् वै नैव प्रेक्षां प्रयोजयेत् ॥२९१॥

---

मुरजाः सर्वकरणादिषु मुरा(द् वेष्टनाद्)जाता मुरजाः । ऊर्ध्वकरणमुन्नत तोचितं च । अन्ये तु मुजि(पा० धा० २५१)ऽिक्वनति विक्रम च(मल)रूपमूर्ध्वं समनुकुर्वन्तीति प्रातिपदिकाद् कारयं(पा० धा० १८१६)णिचि टिलोपे पचाद्यच् (अ० ३०१.१३४) मुरजा इत्याहु.। आतोद्य तोदनात् । आङ्कस्यादौ प्रणीतः पणव इति । तेनैव पूर्वं व्यवहाराद् प(प)ण व्यवहारे (पा० धा० ४३९) द्रव्यनिचय । दर्दर.। तदाश्रयत्वाद् वाद्यमपि । मृणामन्तो(द् विदारणे) वयमि रूपमित्युक्तमेव (३४-८४) ॥२८६॥

अथ मेघाना तत्राधिष्ठातृत्व सूचयन् पुराकल्पमाह । मेघैश्च स्वरसंयोग इ(मि)ति । मेघगर्जितेन हेतुना तत स्वरयोजनामाश्रित्य । पुष्करपत्रैस्तु वर्णा बोडशेति भाव ॥२८७॥

तेनोर्ध्वके चैरावत.। आलिङ्गने वामेन निनाद ॥२८८॥

दक्षिणे त्वङ्किके कोकिल.॥२८९॥

ऊर्ध्वके नन्दी। आङ्किके सिद्धिः। आलिङ्ग्ये पिङ्गल॰ ॥२९०॥

इति परमेश्वरचरणविशेषाधिष्ठानद्वारेण सूचयन् तेषामप्यत्र पूज्यत्वमाह । भूतान्यन्ताद् वेदनीयानि तर्पणमनुभावनीयानि । येन तान्॰दली(तेषां प्रियो बलि॰) ॥२९१॥

करीषस्य तु सङ्घाते मृदङ्गं स्थापयेद् बुधः ।
सुमध्या(ङ्गा)तानचलिता(ना)स्तया च(चा)पतिता(न)पुनः ॥२९२॥

आतोद्यपणवेश्चैव नतकोपनतास्तथा ।
शान्तिकर्म प्रयुञ्जीत विधिदृष्टेन कर्मणा ॥२९३॥

चत्वारः पणवाः कार्या दशरूपविधौ पुनः ।
आतोद्यान्यपि तान्येव नानावस्थासु वादयेत् ॥२९४॥

नाटके सप्रकरणे भाणके(णे) प्रहसने तथा ।
मृदङ्गं पणवं चैव दर्दरं चैव वादयेत् ।
एवमेतद् बुधैर्ज्ञेयं मृदङ्गानां तु लक्षणम् ॥२९५॥

गतिवाद्यतालपाठ्यग्रहमोक्षविशारदोऽथ लघुहस्तः ।
छिद्राच्छेदविधिज्ञः सिद्धस्थाने प्रवाकुशलः ॥२९६॥

कलरिभितमधुरहस्तः सुनिविष्टो रक्तमार्जनो बलवान् ।
अवहितशरीरबुद्धिर्मृदङ्गवादी गुणैरेतैः ॥२९७॥

आलेपनप्रमाणज्ञश्चतुर्मार्गेऽकृतश्रमः ।
प्रतिग्राही च (ग्रहीता) सिद्धीनामङ्गदोषविवर्जितः ॥२९८॥

स्वभ्यस्तकरणः सामे गीतज्ञो गुणितग्रहः ।
सुसङ्गीतप्रयोगज्ञो मृदङ्गे तु भवेद् गुणः ॥२९९॥

भ्रान्तोर्ध्वहस्तः कालज्ञश्छिद्रावरणपण्डितः ।
अभ्यस्तकरणश्चैव भवेत् पाणविको गुणः ॥३००॥

निश्चलो निपुणः शीघ्रो लघुहस्तो विधानवित् ।
वादनान्तरवादी च दर्दरी तु प्रशस्यते ॥३०१॥

---

करीषस्य शुष्कगोमयद्वा(ग)शिलेपमध्ये। यत्रैषा चर्मबद्धविकृतिर्न भवति। सङ्घातानन्योऽन्यविश्लिष्टान् ॥२९२—२९६॥

कलश्चतुरो रिभितो दीप्तो मधुरः श्रुतिसुखदो हस्तो यस्येति। सुश्लिष्टो दृ(ढ)ऽङ्गो दृढा(ढो)सह ॥२९७॥

प्रतिगृ(ग्र)हीता सिद्धीनामिति ॥२९८॥

अन्तरवाद्यज्ञः। गुणिता अभ्यस्ता ग्रहा ग्रहमोक्षमन्धयो (ये)न। सुष्ठु सङ्गीतप्रयोगमेलनिका जानातीति तथोक्तम् ॥२९९॥

भ्रान्तेत्यत्र भ्रमणक्रियाचतुर ऊर्ध्वात स्थिरश्च हस्तो यस्य ॥३००॥

वादनस्य मुरजवाद्य(द्या)न्तरं मध्यान्तरं चेति विशेषश्च ॥३०१॥

एतत सर्वं नाटययोग समीक्ष्य
प्रोक्त वाद्य सर्वलोकानुभावात ॥
नोक्त यज्वेदागमाद्वस्तबुध्या
सद्भि कार्यं मार्गजातो समीक्ष्य ॥३०२॥
स्फुटप्रहार विशद विभक्त
रक्त विकृष्ट करलेपन च ॥
त्रिमार्जनापूरितरागगम्य
मृदङ्गवाद्य गुणतो वदन्ति ॥३०३॥
वाद्ये तु यत्न प्रथम तु कार्यं
शय्या हि नाट्यस्य वदन्ति वाद्य ॥
वाद्ये च गीते च हि सु(स)प्रयुक्ते(क्तो)
नाट्यप्रयोगे(गो)न विपत्तिमेति ॥३०४॥

इति भरतीये नाट्यशास्त्र पुष्करवाद्यो नामाध्यायश्चतुस्त्रिंश ॥

---

नोक्त यज्वेदितोति। हुडुक्का विसिसक्षानशङ्कामात्रमेतत्। वस्तुतस्तु न सर्वमुक्तमिति दर्शयति ॥३०२॥

विकृष्टमिति। आरा-छुवणयोग्यम ॥३०३॥

नाट्यस्य वदन्ति वाद्यमिति। पञ्चधेति साम्यात प्रतिष्ठित भवति। तदाह। गीते। वाचाऽपि तु सम्प्रयुक्तो नाट्यप्रयोगो न विपत्तिमेति। गीतातोद्याभ्या साम्यलक्षणाविक्षेपास्पर्शनेनैव रसाभावनवणौचित्यमाधीयते साम्य च यतो भवन्ति सर्वा सिद्धय इति शिवम् ॥३०४॥

नादा त्साधाशिवभक्तिधाम
सन्तानकृत्य कलिलाभिधान।
रात्रिंदिव तस्य सुतेन दृष्टा
सुपुष्कराध्यायसमाप्तिवृत्ति ॥

इति श्रीमहामाहेश्वराभि(न)वगुप्ताचार्यविरचिताया नाट्यवेदवृत्तावभिनवभारत्या
पुष्कराध्यायश्चतुस्त्रिंश।

---

# अथ चतुस्त्रिंशोऽध्यायः ।

ततातोद्यविधिस्त्वेष मया प्रोक्तः समासतः ।
अवनद्धविभागेन लक्षणं कर्म चैव हि ॥१॥

आतोद्यानां प्रवक्ष्यामि विधिं वादनमेव च ।
मृदङ्गपणवानां च दर्दरस्य तथैव च ॥२॥

गान्धर्वं चैव वाद्यं च स्वातिना नारदेन च ।
विस्तारगुणसम्पन्नमुक्तं लक्षणकर्मतः ॥३॥

अनुवृत्त्या तयोः स्वातेरातोद्यानां समासतः ।
पौष्कराणां प्रवक्ष्यामि निर्वृत्तिं सम्भवं तथा ॥४॥

अनध्याये कदाचित्तु स्वातिर्वै दुर्दिने दिने ।
जलाशयं जगामाथ सलिलानयनं प्रति ॥५॥

तस्मिन् सरोनिषण्णे च प्रविष्टे पाकशासने ।
धाराभिर्महतीभिश्च कर्तुमेकार्णवं जगत् ॥६॥

पतन्तीभिश्च धाराभिर्वायुवेगाज्जलाशये ।
पुष्करी(रा)णां कलरवं पत्राणामभवत्तदा ॥७॥

तेषां घोरकलं शब्दं निशम्य स महामुनिः ।
आश्चर्यमिति सञ्जातमवधारितवान् स्वयम् ॥८॥

केचिदेकवक्त्रजं केचित् त्रिवक्त्रजं केचिन्निर्वक्त्रजमिति । यथा
रेफः सर्ववक्त्रेषु । दका(र)धकारावालिङ्ग्यदामके । आलिङ्ग्य दक्षिणे

मुक्त इति । घत्थतित्थडितथडितक्ता खदेड खदेड् गुरुखेन्दु खेण्डभत्यिथित्य न्धित्या विघातव्य । एवं वितस्तमार्गगणे समकरवर्जिता प्रहाराः स्युः । ऊर्ध्वमार्गेण विशेषो कार्या(र्य)श्च गोमुख्याः । खगमत्थिमटटघेण्डाखुखुण खरखेण्डा खेदुङ् खुणुमा दुणकितिकिन्तिकिट्टिमा खुखुणुद्धघे धोधा विधातव्या ।

इदानीं गोमुखीवाद्यम् । डणघेण्डणखुखुन्धुलघदुलेङ् घटमटटाङ् हुणुघुणाथि घटघिटिमा कुकुटाङ्ङ्णुघेङ्किटिमाङ् घे घे खो खो च गोमुख्याः ॥१४॥

ये त्वालिप्तसमुत्थाः सर्वेमार्गैस्तु विधातव्याः ।
ग्रहणाक्षरसंस्थानेऽप्यार(दि)मृदङ्गाद् ग्रहो भवति ॥१५॥

एतेषां तु प्रवक्ष्यामि दर्शनानि यथाक्रमम् ।
चतुर्णामपि मार्गाणामक्षरग्रहणं यथा ॥१६॥

धृङ् धृङ् घट्टघङ् मत्थिटरिपमटामटत्थिविङ्मसघेङ् बलङ्क्लेङ् विघकाङ् त्वङ्डिते वाद्यम ।

मद्रा तकिताः धृङ् वृङ् खो किटि घेडाङ् गत्थि किटिकेत्या धकुताकिता किरटामिति संयोगो वितस्तेस्तु खोमाङ् गुदुघेङ् घेघेघेण्डा घेघेद्दमा ।

आलिप्ते संयोगे कार्योऽ वादने तज्ज्ञैः ॥

घैंघटत्थिकटागुदुघेङ् घेटां घेण्डा धिमितित्थियकेसरेघेगघे णोणोणमिति चैव गोमुख्याः उक्ता मार्गाः ।

एतेषां पुष्कराणां त्रिविधः प्रचारः । समो विषमः समविषमः इति । वामोर्ध्वगयोर्वामसव्ययोरङ्डितामार्गेऽपि कार्यं । समप्रचारस्त्वालिप्ते वाद्यकरणे तु वाद्यव(ग)सव्यानां ग्रहणे वामस्तु कर्तव्यः । सव्योर्ध्वगमनाना सव्यो विषमप्रचारे तु ॥१७॥

एवं स्वस्तिक योगाद् द्वाभ्यामपि यद् भवेत्तु हस्ताभ्याम् ।
माने वितस्तिसञ्ज्ञे प्रहते विषम प्रचारः स ॥१८॥
स्वच्छन्दकस्तु करयोः शेष प्रहतेषु मार्गकरणेषु ।
अङ्कितगोमुखयोगात् समविषमो हस्तसञ्चारः ॥१९॥

एकैकसम्प्रयुक्ता वर्गानुगतास्तथैव सम्प्रयोक्तव्या ।
घेंता कथ कुकुला तकिता मृदङ्गेषु ॥३३॥

अथ दरेरे वेड् द्वरेड् कुकुला मटथि पणवे च ।
थमटहिम्भ कुकुला मटत्थि देड् वेड् विमिश्रितस्तु ॥३४॥

एभ्यो येऽन्ये शेषा न मिश्रा एव नित्यशः कार्या ।
पूर्वेऽपि च मिश्रत्वं वजन्ति सर्वे यथायोगम् ॥३५॥

अथ युगपत् करणं कुकुलाणणा लुखुणोखेद्दोमादोण्णा ।
थथोधोत्थि द्वे योज्य पणवयाणम घ(घु)र्यकुन च ।
क्रमशः करणं परिवादने के(दके) न कर्तव्यम ॥३६॥

भटभेमेघोधोणाणकिरिणि किण्णाकृत चेति ।
पणवस्त्वाचारयाथे कार्यं धालुलुणेति वाद्यत्रयम् ॥३७॥

मूयं कृतं च प्रतिकृत(त) मार्दङ्गिकवादुरिकाभ्यां तु ।
यत्नान् कुर्वीत समुक्तं प्रहारजातं गतिप्रचारेषु ॥३८॥

अनुगच्छतमक्षरवृत्तं तदेव वाद्यं तु पणवेन ।
न हि चित्रं कर्तव्यं गतिप्रचारेषु वाद्य(द्ग)मनन्तज्ञैः ॥३९॥

समसङ्गि यत्र हि तत्र लक्ष्यते पादसञ्चारे ।
उपरिकरणं यथेष्टं कर्तव्यं पणवे मृदङ्गे च ॥४०॥

सहतं प्रहारकरणं मृदङ्गवाद्ये विधातव्यम् ।
प्रायेण सर्ववाद्येष्वादौ रणवग्रहा प्रयोक्तव्या ॥ ४१॥

वक्ष्याम्यतः परमहं दत्तृकं घेत्ततिता केतदेड् ।
केसदेवेदेरेभिण्णतमितातिमत्थि ॥४२॥

इति दर्दुरे प्रहरं कार्यों मुक्ते निपणे च ।
कायस्तत्र णणण्णारेद्देप्रेधिकित्थिदकिरकिरकरणे ॥४३॥

वामेन तु भित्थिक्त(ल) तत्त्वद्(ष्ट)ष्टं( )करायेण ।
मुक्ते नमिति चैव निगृह्याशोघ्रकरणानुबन्धास्थितिरेव हिलक स्यात् ॥४४॥

इति दर्दरे प्रहारे वसाम्पूर्वकरणजातम् ।
रूप कृत प्रकृति(प्रतिकृत) प्रतिभेदा रूपशेषमोघश्च ।
षष्ठो(ष्ट) वं प्रकृति(प्रति) शुष्के(ष्क) ह्येते(तज्) ज्ञया (य) (हि) कच (र)णा(प)जातम् ॥४५॥

तत्र रूपं नाम विहस्तकरणकरणम् । यथा ।
गडुगुणखुघथमयिमत्येत्तरघथ घन्तिर्मेधिघेण्टां ।
करगुडरणकिटिजखेघडचेघड घेक्कमिति रूपम् ॥४६॥

प्र(ति)कृतं नाम यत्रैकं करणं त्रिपुष्करमप्युद्भावयति । यथा । यखुवण खु धर्मात्थ वर्गेरघटा घट टिघक सां गुडु घ कुहलां ह्ला दोघोघोणा इति ॥४७॥

कृतप्रतिकृताख्य प्रतिभेदो नाम युगपत् कृते करणे मृदङ्गाना वधुपरिकरणेन गच्छति । यथा । घोघोणाखोकुङ्कलालणाणात्थ कटामदाथिट-धिघेण्टाम् ।

एभि करणविशेषै प्रतिभेदो नाम विज्ञेय ॥४८॥

विरूपशेष नाम विरामकृतं । यथा । खुखुण्णाणोमदथंघेण्टा मदघेण्टामथिय आंधोमिनि वाद्य रूपशेष तु ॥४९॥

प्रतिशुष्क नामानुस्वारो मार्दङ्गिकपाणविकदार्दुरिकाणाम् । यथा घटमटथिघुणघेङ् घिटिघेङ् घोङ् घोण्डा घोण घोण खोखो डेकुडुकुडु थिटथिट वखोत्थिणणत्थ ॥५०॥

चतुष्काष्ठे सर्वभाण्डे विरामे द्रुतपाणिनयो नयघोषा(ष)दोष । यथा । घकिटिमथिघठिकिटिघिटि घेङ् घेण्टाण्टाण घोण घोण घट घटगुडुघेङ् गघेतिरिण-गेग घो घो तघो घघु ॥५१॥

करणाना समायोग करणेषु विधीयते ।
अनेन (नैव) विधानेन योज्य वाद्यकरण बुधै ।
यतिन(र्ना)म समा स्रोतोगता गोपुच्छचे(जे)ति च ॥५२॥

यतिपाणि(णी)नां त्रिविध सयोग स च त्रिप्रकारो भवति । यथा । रुढा(ढ)विद्धा(द्ध) शम्यार(म्या)गतम । एवम् ।

त्रिप्रकार सप्रयोग करणेषु विधीयते ।
समपाणिस्तु यत्र स्यात् तथा चैव स्थिता लया ॥५३॥

गोपुच्छा च यतिर्वाद्य तद्धै शम्यागत भवेत ।
यथाऽवगीतिप्राधान्य मागध्चैव च दक्षिण ॥५४॥

प्रत्युक्त(त्त)मेषु पातेषु वाद्य शय्या(म्या)गत भवेत ।
स्रोतोगता यतिर्यत्र लतो मध्य तथैव च ॥५५॥

समपाणिस्तथा चैव विद्धं वाद्यं तु तद्भवेत् ।
स्थितालयात् प्रभृत्येषा प्रमाणं सम्प्रवर्तते ॥५६॥
कार्यहानिं कुलानां च दोषघ्वन्येषु पाणिषु ।
यथाक्रमं विकर्तव्या नाट्ययुक्तिमवेक्ष्य च ॥५७॥
तिस्रो मार्जना नाम ।
मायूरी ह्यर्धमायूरी तथा कार्मारवी पुन ।
तिस्रस्तु मार्जना ज्ञेया पुष्करेषु स्वराश्रया ॥५८॥
गान्धारो वामके कार्य षड्जो दक्षिणपुष्करे ।
ऊर्ध्वगे मध्यमश्चैव मायूर्यश्च स्वराश्रया ॥५९॥
वामके पुष्करे षड्ज ऋषभो दक्षिणो तथा ।
धैवतश्चोर्ध्वगे कार्य अर्धमायूरकाश्रया. ॥६०॥
ऋषभ पुष्करे वामे षड्जो दक्षिणपुष्करे ।
पञ्चमश्चोर्ध्वगे कार्या कार्मारव्या स्वराश्रया. ॥६१॥
एतेषामनुवादी तु जातिरागस्वरान्विता (त) ।
आलिङ्गे मार्जनं प्राप्य निषादस्तु विधीयते ॥६२॥
मायूरी मध्यमग्रामे त्वर्धा षड्जे तथैव च ।
कार्मारवी च कर्तव्या साधारणसमाश्रया (या) ॥६३॥
स्वरा ये स्थायिनो यान्ति श्रुतिसा(धा)रणाश्रया ।
त एव मार्जनं कृत्वा ज्ञेया सञ्चारिण स्मृता ॥६४॥
वामोर्ध्वगान्यामा[illegible]र्या कार्या वै लेपन स्वर ।
शैथिल्यादायतत्वाच्च कार्यस्त्वालिङ्गकालिके ॥६५॥
शैथिल्य च यत चैव वर्धापीडनमार्दवात् ।
एवं स्वरोद्भव कार्यो मार्जनासु प्रयोक्तृभि ॥६६॥
मार्जनं [illegible] मृदा कार्यं वामगोर्ध्वगयोस्तथा ।
लक्षणं मिश्रिकायास्तु गदतो मे निबोधत ॥६७॥
निःशर्करा निःसिकता निस्तृणा निस्तुषा तथा ।
न पिच्छिला न विशदा न क्षारकटुका तथा ॥६८॥

देशानुरूपजातिशृङ्गारे चोत्तरे स्त्रीणाम् ।
वामोर्ध्वगप्रवृत्ता दाद्याक्षिप्ता(प्ता) चतुष्टययुक्ता ॥९१॥
उपदेशादपेतरूपा करुणरसे सा भवेज्जाति ।

यथा—

घेद्दाद् घेघेमेभिर्जात्यक्षरैं समायुक्ता ॥९२॥
देशारपेतरूपा सा कार्या वाद्ययोगेषु ।
पर्यागच्छति पूर्वं यस्मिन् सिद्धंस्तु स करणजातम् ॥९३॥
त्रिविधेऽपि च लययोगे पर्याया नाम सा जाति ।

यथा—

घेवोड् घेवोड् गुवुघड् प्राया वामोर्ध्वगमे वामहस्तमञ्चारा ।
पर्यायकृता जातिर्वीराद्भुतरौद्रयोगेषु ॥९४॥
गुरुयुग्म लघुयुग्म तथैव च गुरुलघुनी चैव लघुश्चैव ।

यथा—

धिद्‌ माड् घटघेऽ् गुवुघेड् दघेड् दघेड् मात्यिमेत्यम् ।
विष्कम्भाख्या जाति शृङ्गारे चोत्तमस्त्रीणाम् ॥९५॥
एकैकाक्षरयोगाद यत्र स्यात् सर्वमार्गसयुक्तम ।
पर्यस्ता क्रमहस्ता जाति समहस्तविचारसयुक्ता ॥९६॥
आकाशे र(थ)विमानऋषिविद्याधरभुजङ्गमादीनाम ।
चरिते गणिविन्यासेऽथ धा(रा)या चैव पर्यस्ता ॥९७॥

यथा—

घेड् ताट् घेड् ताड् देह्लामेभिर्जात्यक्षरैं समायुक्ता ।
पर्यस्ता जातिर्वै साऽद्भुतपुरुषेषु कर्तव्या ॥९८॥
अपर्याणकरयुक्तमध्यादेषु(स्त हास्ये) मध्यमलयेन च यत्तुल्यम् ।
आरम्भ [redacted] विद्यादन्तेवासि श्रुत यस्या ॥९९॥

यथा—

मगठ खुखुकिटा एभिर्जात्यक्षरैं समायुक्ता ।
अधमस्त्रीणा योज्या सरम्भा नाम वै जाति ॥१००॥
ऊर्ध्वाङ्गदक्षिणमुखे क्षिप्ता प्रमृता वितस्तमार्ग तु ।
पार्ष्णिसमस्ता जाति कार्या शृङ्गारहास्यगतो ॥१०१॥

तलित्थकटमत्थिकरणं सपार्ष्णिनिपीडं ।
चन्द्रायुधेन्द्रडिताड् पार्ष्णि समस्त पुनर्जाति ॥१०२॥
स्थितिलयगतिविन्यासे शृङ्गारे भवति योत्तमप्रकृतौ ।
धीरोत्तमपुरुषाणामन्येषा दानवादीनाम ॥१०३॥
स्वह् (स्व) स्तिकहस्तविचारा सर्वं (र्व) मार्दङ्गप्रहारसंयुक्ता ।
सा त्रिलयवाद्ययुक्ता दुष्करकरणा भवेज्जाति ॥१०४॥

यथा—

धुणुदुणुधुणांकिथधिमघेड् मदत्थिधुधकिटिघेड् ।
एभिर्जात्यक्षरयोर्मेर्दुष्करकरणा भवेज्जाति ॥१०५॥
दैत्येन्द्रभुजगराक्षसपिशाचगन्धर्वगुह्यकादीनाम् ।
गतिविन्यासे कार्या दुष्करकरणा भवेज्जाति ॥१०६॥
ऊर्ध्वाङ्गदक्षिणयुक्तो(त) क्षिप्तप्रहिता वितस्तमार्गा च ।
मद्धोर्ध्वगप्रवृत्ता दक्षिणवामप्रवृत्ता च ॥१०७॥
प्रायेणान्तर्मार्गा वितस्तमार्गाश्रया तु विज्ञाताम ।
कबिलड् घड् घड् प्राया जातिरियमूर्ध्वकोष्ठा स्यात ॥१०८॥
सर्वैर्मार्गैः समुदपृत्य यद्वाद्य करण भवेत् ।
उच्छ्रितिका विजानीयाद् गुहगुङ्गुलिकाहत(ता)म् ॥१०९॥

यथा—

केत्ता केत्ता गदितामेभिर्जात्यक्षरं समायुक्ता ।
राज्ञा स्वभावग(मने)जाति कार्या वितस्तिकृता ॥११०॥
गोमुख्यक्षरसहिता सर्वमृदङ्गप्रहारसंयुक्ता ।
कुहकामिनये योज्या वेलाम्बितवृष्टलिङ्ग पु ॥१११॥

यथा—

घेण्डाण्डादोरकिता घट मदत्थि घटघुटुघ ।
एभिस्त्वक्षरयोर्मेरेवा.त्याद्या(च वाद्यं) भवज्जाति ॥११२॥
वामनविह्वलपञ्जग्पू(ज्जेय)धान गाथ च(गदकनवादाम) ।
गदाहतवादा(एव) वाद्य(द्या)जातिस्त्वेपा गमन तु स्नदया ॥११३॥
पृथिवी चादित यत्र पवनो न्यपु दृश्यत ।
मृदङ्गपणवादीनां सा जाति (ना जाति) मा मार्जि(र्जि)की यथा ॥११४॥

ध्रोंध्रोंठोठोभेभिर्जात्यक्षरैं समायुक्ता ।
मृदङ्गपणवा(दी)ना स्त्रीणामेया(भवेज) जाति ॥११५॥

अवतीर्णं यद वाद्य त्रिगुणैर्वाद्यकरणैर्मृदङ्गानाम ।
दर्दुरपणवोपगमादवकीर्णा नाम सा जाति ॥११६॥

यथा—

केन्ता केन्ता केतामेभिर्जात्यक्षरैस्तु सम्प्र(स)युक्ता ।
गोमुखमार्गे जाति सा चैव (च)णुष्णा विधातव्या ॥११७॥

अप्रकीर्णविविधं करणैरिह मार्गयोगसयुपुक्तं ।
दर्दुरपणवमृदङ्गैर्वाद्यं(चं)वादने कार्यम ॥११८॥

यथा—

घगघघेण्डा सेण्ड्रामेभिर्जात्यक्षरैस्तु सयुक्ता ।
सम्मतर्थामिति विज्ञेया कर्तव्या वानरे करणं ॥११९॥

दिव्यैर्नानाकरणैश्चित्रैं समृदङ्गप्रहारसयुक्तं ।
स्वाभाविकोत्तमगती विपूय जातिर्विधातव्या ॥१२०॥

यथा—

तिर्किसा भटत्थि कण कुकाभ ।
एभिस्त्वक्षरयोगैर्विपूतजातिर्विधातव्या ॥१२१॥

एता गति प्रचारेषु विज्ञेया जातयो बुधैं ।
याश्च नोक्ता मयावाऽ(चा)स्मिन ता ग्राह्या लोकतोऽर्थत ॥१२२॥

एवमेतेन विधिना कर्तव्य वादम बुध ।
गतिप्रचारे गीते च वराङ्गे तथैव च ॥१२३॥

सत्तरूपे विधाने च छन्दसा कारितेषु च ।
वाद्य गुर्वक्षरकृत तथार्थाक्षरसेव च ॥१२४॥

गतिप्रचारे कर्तव्य गानसौम्यायदर्शनात ।
तत्त्व चानुगत चैव तथौघ करणाश्रयम ॥१२५॥

रागा ललितभावत्वाद योज्य वाद्य स्वभावजम ।
तत्त्व तु प्रथमे गाने द्वितीयेऽनुगत भवेत ॥१२६॥

तृतीये स्वौघसज्ञ तु वाद्य गतिपरिक्रम ।
भेदाणा छन्दतश्चित्र ध्रुवाणा सम्प्रयोजयेत ॥१२७॥

अथ स्थितावकृष्टाना वाद्य चानुगत भवेत ।
प्रावेशिकीना कर्तव्य तत्त्व चानुगत तथा ॥१२८॥

नैष्क्रामिकयन्तरगत कार्यं त्रिलयवादिना ।
द्रुत प्रासादिकीना च ध्रुवा पञ्चविधा भवेत् ।
एव ध्रुवाणा कर्तव्य वाद्य प्रकरणाश्रयम् ॥१२९॥

यो मात्रांशविकल्पस्तु ध्रुवापादे भवेदिह ।
स तु भाण्डेन कर्तव्यस्तज्ज्ञैर्गतिपरिक्रम (मे) ॥१३०॥

एव गतिप्रचारेषु वाद्य योज्य प्रयोक्तृभि ।
अथ ऊर्ध्वं प्रवक्ष्यामि ग्रहान् भाण्डसमाश्रयान् ॥१३१॥

शम्यातालग्रहा केचित् तथाकाशग्रहा पुन ।
तत्र शम्याग्रहा ज्ञेया नित्य दक्षिणपुष्करे ॥१३२॥

वामोर्ध्वगे ग्रहाश्चापि ज्ञेयास्तालग्रहा बुधै ।
तर्जनीग्रहकादिग्य (नित्य) मालिङ्गे परिकीर्तिता ॥१३३॥

अथाकाशग्रहा प्रोक्ता निष्कामे वा प्रयोजिता ।
प्रासारितानित्यशा (नि धा) न्याद्यास्तालाद्यास्तु ध्रुवाङ्गजा ॥१३४॥

लय च न ग्रह गान तत्र स्यात् तर्जनीग्रह ।
शीर्षक चोद्धता चैव प्रदेशिन्या ग्रहा स्मृता ॥१३५॥

नर्कुटस्याडडिका(ता)यास्च प्रादेशि(सादि)कयास्तथैव च ।
सनिपातग्रहा ज्ञेयास्तयैवैककला(लो,)विधि ॥१३६॥

आकाशग्रहका ज्ञेयाश्चतुर्वि(द्वि)कलयोगजा ।
तथा चाङ्गनिबद्धानि गीतकानि यथाक्रमम ॥१३७॥
एवमेते बुधैर्ज्ञेया ग्रहा भाण्डसमाश्रया ।
ताण्डवे सुकुमारे च वाद्य वक्ष्याम्यत परम् ॥१३ ॥

अभाण्डमेक(क)गानस्य परिवर्त प्रयोजयेत ।
तस्यान्ते सन्निपातस्तु कार्यो भाण्डग्रहो बुधै ॥१३९॥

अथा(थवा) नृत्तशोमार्थमङ्गा ङ्ग(ङ्ग)परिकी(व)र्तनम् ।
गीतकस्य प्रकर्तव्य व(ल)यस्य परिवर्तनम् ॥१४०।

यत्राभिनेयमङ्गं तु न वाद्यं तत्र योजयेत् ।
यत्राङ्गहारनृत्तं तु तत्र वाद्यं प्रयोजयेत् ॥१४१॥

यदा गीतवशादङ्गं भूयो भूयो निवर्तते ।
तत्राद्यमभिनेयं तु शेषं नृत्तेन योजयेत् ॥१४२॥

यद्वत्तु पदं गाने तादृशं वाद्यमिष्यते ।
गीतवाद्यप्रमाणेन कुर्यात्त्वाङ्गविचेष्टितम् ॥१४३॥

वाद्यं गुर्वक्षरकृतं तथाल्पाक्षरयोजितम् ।
मुखोपग(व)हनं कार्यं प्रकृष्टं वर्णतस्तथा ॥१४४॥

स्थितेऽल्पाक्षं प्रहारं तु मध्येऽक्षरसमं तथा ।
कार्यं तु गीतके वाद्य(द्यं)द्रुते चोपरिपाणित(क)म् ॥१४५॥

समं रक्तं विभक्तं च स्फुटं शुद्ध(द्ध) प्रयोगजम् ।
नृत्ताङ्गग्राहि कालज्ञैर्वाद्यं योज्यं तु ताण्डवे ॥१४६॥

सनृत्तेषु प्रयोगेषु तत्त्वं ह्यनुगतं भवेत् ।
अनृत्तेषु प्रयोगेषु तत्त्वमोघं च वादयेत् ॥१४७।

स्थिते मध्ये द्रुते चापि यथामानं तु वादयेत् ।
यवनृत्ताङ्गहारेषु कृतेन वै प्र(न प्र)क्रमेण तु ॥१४८॥

यो विधिर्गानवाद्यानां पदाक्षरलयान्वितः ।
स तु नृत्ताङ्गहारेषु कर्तव्यो नाट्ययोगतः ॥१४९॥

एतास्तु जातयः प्रोक्ता दश चाष्टौ च भाण्डजाः ।
अतः ऊर्ध्वं प्रवक्ष्यामि प्रकारान् वाद्यसंश्रयान् ॥१५०॥

अथ प्रकाराः । चित्र(त्रः) सम(मो) विभक्त(क्तो) हीन(छिन्नो) भिन्न(छिन्नविद्धो) विद्ध (द्धो) (ऽनुपोढ) स्वरूप(प) स्वरूपानुगतम(तोऽ)नुगतः अ(सृतोऽ)नुस्मृत (सृत)विच्युतो दुर्गं अ(र्गोऽ)दकीर्ण अ(र्णो)र्धावकीर्ण एकरूप परिक्षिप्त सञ्चि(गाचोक्)त. समलेख चित्रलेख सर्वसमवाय(यो) दृढ इति ॥१५१॥

तत्र ।

रचितादिभिः प्रयुक्तं चित्रं करणैरनेकविधहस्तैः ।
त्र्यस्रं त्रिपाणियुक्तं चित्रं वाद्यं बुधैर्ज्ञेयम् ॥१५२॥

दर्दुरपणवमृदङ्गैर्नानाकरणैस्तु य सम्यक् ।
समयतिकालाद्वियुत स तु विज्ञेय समो नाम ॥१५३॥

एकायनस्तथा यन्या यतश्च सस्थान्सांधमत्तश्च ।
अक्षरपाणिलयेषु च दि.त्तस्तु स्व (स विज्ञेय ) ॥१५४॥

वाद्य न त्रिलय यत्र सहसा च विवधते ।
सर्वातोद्यप्रवृत्त स प्रतारश्छिन्न एव स. ॥१५५॥

अपपाणिमृदङ्गाना पणवोपरिपाणि च ।
भवतो यत्र दर्पो तु छिन्नविद्ध इति स्मृत ॥१५६॥

मृदङ्गकरण वाद्य पणवो वेधयेद् यदि ।
सूचीविधर्विविचनन्तु करणैर्विद्ध एव स ॥१५७॥

विद्धामृविद्धय द्वाभ्या (द्ध वहाद्य ) सवतोद्यपु दृश्यते ।
परस्परविरोधे तु अनुपीडस्तु सस्मृत ॥१५८॥

विशुद्धवाद्यवर् न समनालकृतस्तथा ।
स्वरूपापात र्य(नद्य)व स्वरूप इति सस्मृत ।१५९॥

मुख (खो न) पणवो यपि पणवो दर्दुरोऽपि वा ।
तयानुप्राप्तदानोत स्वरूपानुगनस्तु स ॥१६०॥

अनुगत्य मृदानाद्य गच्छेद् यत् स सम पुन ।
भूतनम् रञ्जता वाद्ये तदाऽनुसृत उच्यते ॥१६१॥

एकैकानुगत मा(गा)ड वाद्यमातिसमन्वितम् ।
कृत्वाऽथजातिक कुर्यात् तदाऽनुसृतविच्युत ॥१६२॥

यत्र प्रचारविद्म (म) सर्वमार्गप्रबोधनम् ।
प्राविभक्ताक्षकृत तद् दुर्ग वाद्यमुच्यते ॥१६३॥

समधर्तमृदङ्गस्त वाद्यते पणवैर्यदा ।
नान विचित्रकरणैरनशीर्षस्तदा स्मृत ॥१६४॥

द्रुता(त)लय समारुह्य पणवो दर्दुरोऽपि वा ।
अवधानोऽपि यत्र स्यादर्धकीर्णा तु सा सदा ॥१६५॥

सर्वातोद्यानि यत्रैक करण भावयन्ति च ।
समवृत्तपदान्येव एकरूप इति स्मृत ॥१६६॥

पणवैश्चोदितं यत्र वाद्यमल्पमृदङ्गजम् ।
सुविभक्ताक्षरपदं परिक्षिप्तं तु(प्तस्तु) स स्मृतः ॥१६७॥
चित्रं हि करणं यत्र पदेनैकेन वाद्यते ।
नृत्ताङ्गहारानुगतं ज्ञेयं साचीकृतं तु यत् ॥१६८॥
कृत्योपरिगतं वाद्यं पणवै(वो) दर्दुरैरपि हि ।
यत्रोदोश्चेत मुख्याम् समलेखस्तु स स्मृतः ॥१६९॥
चित्रं बहुविधं वाद्यं मृदङ्गपणवादिभिः ।
क्रियते यत्र सरस्यैश्चित्रलेखस्तु स स्मृतः ॥१७०॥
सर्वमार्गगमो यस्तु सर्वपाणिलयाश्रयः ।
विचित्रश्च विभक्तश्च स सर्वसमवायकः ॥१७१॥
यस्तु मध्यलयोपेतः समः स विहिताक्षरः ।
गतिप्रचारविहितः प्रचारो दृढ एव हि ॥१७२॥
एवमेते प्रकारास्तु कर्तव्या नाट्यसंश्रयाः ।
गतिप्रचारे गीते च रसभावौ समीक्ष्य तु ॥१७३॥
एते प्रकारा जातयश्च सर्वमार्गेषु ते स्मृताः ।
ते वै गतिप्रचारेषु युज्यन्ते वेधसा स्मृताः ॥१७४॥

एतेषां प्रयोगमिदानीं वक्ष्यामि । तत्रोपविष्टे प्राङ्मुखो रङ्गे कुतप(प)विनिवेशः कर्तव्यः । तत्र पूर्वोक्तयोर्नेपथ्यगृहद्वारयोर्मध्ये कुतप(प)विन्यासः । रङ्गाभिमुखा मार्दङ्गिकपाणविकदार्दरिकेषु गायकनाविकावांशिकवैणिकसहितेषु प्र(त्य)ङ्गिविन्यासगतसम्प्रोक्षयतनितेष्वातोद्येषु यथाग्रामरागमूर्च्छनां मार्जनानुलिप्तेषु मदङ्गेषु द्वाराया निपीडितेषु निगृहीतार्थनिगृहीतमुक्तप्रकारेषु वर्दरवादनमुख्यविन्यस्तहस्तेष्वेकदैवतानामावाहनविसर्जनार्थं प्रथममेव त्रिसाम कर्तव्यं । स तु तावचराचरोत्पत्तिस्थितिप्रलयकारणभूतो सुराणामिन्द्रपतेन प्रथमेन साम्ना वामपार्श्वे चन्द्र सम्प्रीणयति दक्षिणेन पवमान अथान्तरेण जलसाम्ना मुनीन् । आग्नेयेन बृहत्साम्ना दैवतेन च ॥१७५॥

एवं प्रीणयते यस्माद् दैवतानि यथाक्रमम् ।
तस्मात् त्रिसाम विज्ञेयं त्रिसामत्वाद बुधैरिह ॥१७६॥
एवं च श्रूयते यस्माद् ब्रह्माणं वेधसं शिवम् ।
तस्मादेतत् त्रिसाम तु ऋषिभिः परिकीर्तितम् ॥१७७॥

चतुर्णामपि वेदानामादावोङ्कार उच्यते ।
तथात्र सर्वगीतानां त्रिसाम परिगीयते ॥१७८॥

त्रिप्रकारं त्रिलयकं तथा चैवाड्डिताश्रयम् ।
षट्कलं त्रिकलं चैव त्रिसाम परिकीर्तितम् ॥१७९॥

त्रिविधः साक्षरविधस्तु(धो) गुरुलघ्वक्षरान्वितम् ।
यकारश्च मकारश्च त्रिकैस्त्रिगुणितं भवेत् ॥१८०॥

तस्यैव चान्ते पूर्वरङ्गविधिमनुप्रास छन्दोतमेनाक्षरसमेन च वाद्य बहिर्गीतविधानवस्तुवितय वर्तनीयम । तत्र च सा नितम्बियोग च तथानुगत वाद्य प्राय प्रयोक्तव्यम । वृत्ते वस्तुत्रिसाम्ना च प्रकृत्याहारोऽय वर्तन यो गीतिकायद वाद्य प्रवर्तते । तत्रादौ वामोर्ध्वगप्रहारयुत पक्षाश्लिङ्गनविमर्द-(र्द)नो गोपुच्छा यदि सामाद्यपि चित्रकरणयुत चतुर्मार्ग विपञ्चीवाद्य प्रवर्तयितव्यम । पूर्व भाण्डेनाभिव्यञ्जिते रङ्ग स्त्रीबालमूर्धवि(व)कीर्णे च रङ्गे कुतूहलमुत्पन्ना(त्पादना)र्थ भवति ॥१८१॥
अपि च ।

आचार्या सममिच्छन्ति पदच्छेद तु पण्डिता ।
सुकुमारा(र)स्त्र(स्त्रि)यदर्थं निकृष्टमितरे जना ॥१८२॥

तत्र भाण्डे ताण्डवप्रयोगमधिकृत्य तरणराले लयपादसञ्चयमार्दङ्गि-कैरङ्ग लिप्रबलप्राय वाद्य योज्यम । तत्रान्तराभिमुखो गायक । गायकस्य वामपार्श्वे वैणिक । वैणिकस्य दक्षिणे मृदङ्गवादक । गातुरभिमुखा गायका । नर्तक्यवतरणगीतान्ते सन्निपाता ज्ञेया । लास्यनृत्ताङ्गहारानुगत वाद्य करणधातुसयोगमित्युच्यते । तत्र रक्तमित्यादि तत इदानीं वामोध्वगप्रहारसयुक्त-मासितमार्गदेशकरसञ्चय समुत्पापन्नन(पन)केन वाद्य योज्यम् । यथा । दीर्घह् मसिसड मयावेड घिघिघि क्व सु लोकणे दधा केसा केसा किड घड् इति । पूर्वरङ्गसमपातनिर्दिष्टप्रयोगसमुत्थापनके वाद्य योज्यमिति । ततो पर यत् परिवर्तन चतुर्मार्दङ्गिक शुद्धजात्याश्रय यथा प्रोक्तम् । लोलोण लोलाणा पलोलोणा । एतदद्वयर्थवाद्य स्यात् । पुन ( )स्त्री वाद्या स्यात् । चोलोदोलो लकेणा घघेत्ता घ । नपुंसकपदे यथास्वर च दुर्माणि इति । चतुर्थकारप्रवेशे च वाद्य तूत्थापनके वापकृष्टायामर्थमपि चार्थग्रहो यथा । घेघेत्ता घे लोलोङ्गो घण

दुःखार्थव्याधितशापक्लेशनिपतितेष्टजनविभवनाशवधबन्धव्रतनियमोपवासयुक्तेषु पूर्वलिप्तमार्गाश्रितमुत्थापनवाद्यं प्रयोज्यं स्यात् । दैत्यदानवयक्षराक्षसभूतपिशाचग्रहादिनिधाघ्राड् दुड् वधसयुक्तं घुट्टकृतं तकेयोद्दाम् इत्येवमादि करणगतिवाद्यं प्रयोज्येत । खञ्जविकलवामनकुब्जादीनां प्रवृत्तगमनेषु घेंता कटकामिति वाद्यं प्रयोक्तव्यम् । यतिमुनिपाशुपताश्रमादीनां थोत्तो निरिद दुखेड कसनदोप्रन्तिकिनी वाद्यं प्रयोक्तव्यम् । विदूषकोपधापन षण्डवर्षवराशीनां घें घें त्राणोण्णा दों ण्णा ण्णा ण्णामिति वाद्यं पुनरुक्तं । अथ वृद्धश्रोत्रियकञ्चुकिस्थूलादीनां प्रप्रो प्राड् द्रो धौड् द्रोणा लो खोगाम इति वाद्यं प्रयोक्तव्यम् । अथ राजमहिषिभिर्गोक खु खु इति वाद्यं प्रयोज्यम् । अयमानां वेश्यागणिकाकारि(र)काणां नागरिकीयानां(काणा) घकुकुद्विकिटमरियतिणगोमा घो इति ।।१६०।।

एष तावत् समासाभिहितः स्त्रीणामवस्थान्तरितानां च । एत एव पौरुषवाद्यविशेषाः । तस्मात् सम्मान्यन्ते हि भयस्नेहशोकक्रोधादयो विभावाः समुत्पद्यन्ते । तत्र भ(भा)वापेक्षं नानाश्रिनशाद्य योज्यं भवति ।।१६१।।

अपि च ।

जातिमात्रप्रहारैस्तु करणैश्चाक्षरैस्तथा ।
वादयेद् वस्तु स्फुर्तोर्णं स श्रेष्ठो वादकः स्मृतः ।।१६२।।

अन्तरवाद्यानि च विप्रकारित सिद्धग्रहणं परिच्छिन्नमिति । तत्रानुबन्धसज्ञानामान्तरवाद्यम् । यथा खोखोणा तो घ इति पाठ्य(म्) । विप्रकारित (तो) यथा । घद्रा छ खाखो इति ।।१६३।।

सिद्धिरपि वा ।

ऐश्वर्ये विस्मृते श्रान्ते वस्त्राभरणसंयमे ।
सिद्धिर्वाद्यैव कर्तव्या नानाकरणसंश्रया ।।१६४।।

सा च सिद्धिर्यथा नानाकरणाश्रया कार्या विश्लरणा पञ्चपद्कला । यथ परिच्छिन्नं सर्वभाण्डिकं हतध्रुवामुपोपगमने गम्भीरधीरप्रहारमुद्दलं यथा पञ्चपदकल च स्त्रीसमानां वितरतमुजाश्रित घ घ घ क स इति । अभ्यन्तरस्त्रीणामङ्कितवाद्याश्रितं यथा । ण्णा खो खो घण्णामिति । अथाघमानां खण्डनं नत्कुटविषयं यथा । स सकेत किटि किज्जामिनि । अवस्थान्तरेषु पुनरेवार्थकृतं भविष्यति च । वाद्यविरामे वाद्यं साधनकृते विरामे च वस्त्राहरणविनिपाते सयमनकाले । अथ

प्रनादिवयां समपादो विभक्तकरणवाद्य योज्यम् । द्रुतायामुपरिपाणिकरणम् । अजितायामपकृष्टसामे(मं)एसन्निपातकृतमिति ।

एवमेतत प्रयोक्तव्य वाद्य गतिपरिक्रमे ॥१९५॥

अडडितायां च णा खो खो ण द दे दे दे दे खो खो घुण घुण् इति । अथ नस्कुटखञ्जयो( ) णण्णाखुखुणाण्णाण्णा खोणण्णा ण्णा दे दे दे खो खो खो खो घे इति । प्रयोवगास्यसम्भ्रमावेगामर्षार्थविस्मयोत्साहजो मोगाय तस्य यत् तदुद्वास्य सम्प्रक्षीतितम ॥१९६॥

मोक्षानिवानोमुपवेक्ष्याम । तत्राड्डितद्रुता प्रां तिड्ति तित्ता इति । प्रसतस्थितायां यततामिति । अपकृष्टायां वधधमिति ॥१९७॥

एवमेते प्रहा मोक्षा द्रुतपा(क्षा पा) त्राणा मविता मया ।
निष्कामे च प्रवेशे च आक्षेपिष्यन्तरासु च ॥१९८॥

एव तालकलास्वरा(र)ज्ञानेन मार्दङ्गिकेन भवितव्यम भवति चात्र श्लोक ।

अतालकमतालञ्चमयाऽत्रप्रमधावकम् ।
चमघातकमित्येव प्रवदन्ति मनीषिण ॥१९९॥
अनेनैव विधानेन योज्य वाद्य प्रयोक्तृभि ।
अत ऊर्ध्व प्रवक्ष्यामि आतोद्याना तु लक्षणम् ॥२००॥
त्रिविधा(त्रिधा) क्रिया मृदङ्गाना हरीतकियवाकृया ।
तथा गोपुच्छरूपा च भवत्येषां स्वरूपत ॥२०१॥
हरीतक्याकृतिस्त्वङ्क्या यवमध्यस्तथा स्वक ।
आलिङ्गश्चैव गोपुच्छाकृतिरेषां प्रकीर्तित ॥२०२॥
तालास्त्रयोध्व(घ)तालाश्च मृदङ्गा(ङ्गो)ङ्किक इष्यते ।
मुखे तस्याङ्गुलानि स्युस्त्रयोदश चतुर्दश ॥२०३॥
ततो(थो)र्ध्वकश्चकतथ्यश्चतुस्तालप्रमाणत ।
मुख तस्याङ्गुलानिस्युरष्टावेव समासत ॥२०४॥
पणवश्चापि कर्तव्यो दीर्घत्वे षोडशाङ्गुल ।
कृशो मध्या(ध्ये)ङ्गुलान्यष्टौ पञ्चाङ्गुलमुख त(स्त)था ॥२०५॥

ओष्ठस्तस्य च कर्तव्यस्तज्ज्ञैरध्यर्धमङ्गुलम् ।
मध्ये तु सुषिरं तस्य चत्वार्येवाङ्गुलानि तु ॥२०६॥

दर्दरस्य मुखकारो भवत्यष्टिमुखस्तथा ।
मुखं च तस्य कर्तव्यं घटस्य सदृशं बुधैः ॥२०७॥

द्वादशाङ्गुलविस्तीर्णं दीनोष्ठं च समासतः ।
अत ऊर्ध्वं प्रवक्ष्यामि चर्मलक्षणमुत्तमम् ॥२०८॥

न ज्वरोपगतं चर्म न च काकमुखाहव(वह)म् ।
न मेदोपगतं क्लिन्नं न च धूमाद्विदूषितम् ॥२०९॥

षड्भिर्दोषैर्विनिर्मुक्तं चर्म निर्वर्तितं गवाम् ।
देवताभ्यर्चनं कृत्वा ततः स्थाप्य महीतले ॥२१०॥

विश्रायःमयवा हस्तेऽह्नि पुण्ये शुभो(भे) तिथौ ।
उपाध्यायः शुचिर्भूत्वा कुलीनो रागवर्जितः ॥२११॥

घनज्ञो गीततत्त्वज्ञो मधुरो नियतेन्द्रियः ।
सोपवासोऽल्पकेशश्च शुक्लवासा दृढव्रतः ॥२१२॥

मण्डलत्रयमालिप्य गोमयेन सुगन्धिना ।
ब्रह्माणं शङ्करं विष्णुं त्रिषु तेषु प्रकल्पयेत् ॥२१३॥

आलिङ्गयं स्थापयेत् पूर्वं ब्रह्माणं पूर्वमण्डले ।
ऊर्ध्वकं तु द्वितीयस्मिन् रुद्रनाम्नि निपातयेत् ॥२१४॥

तिर्यक् कृतां ततः सम्यग् वैष्णवे मण्डले न्यसेत् ।
बलिपुष्पोपहारैश्च नानाभुर्ध्वविचित्रकैः ॥२१५॥

आलिङ्गे चञ्च(चाञ्ज)लिं दद्यात् मधुपायसमिश्रितम् ।
अपूर्व(पो)ल्लपिकामिश्रमालिङ्गे सम्प्रदापयेत् ॥२१६॥

अनन्तरं च वातव्यम् सर्वमेवोर्ध्वके बलिम् ।
स्वस्तिकाऽपूपिकापूपरूपकैश्च तिलैः सह ॥२१७॥
उन्मत्तकरवीरैश्च पुष्पैरन्यैश्च भूषितः ।
बलिं कार्यं प्रयत्नेन रक्तो रक्ताम्बरैः सह ॥२१८॥

